# SAMPŪRṆĀNANDA GRANTHAMĀLĀ

*Vol 7*

**General Editor**
Baladeva Upādhyāya
Director, Research Institute
Varanaseya Sanskrit Vishvavidyalaya
Varanasi.



# BHĀRATASYA SĀṀSKṚTIKO DIGVIJAYAḤ

by

**HARIDATTA VEDĀLAṀKĀRA**

Translated and Edited by
**KĀLIKĀ PRASĀDA ŚUKLA**
Research Institute
**Varanaseya Sanskrit University**

VARANASI
1967

सम्पूर्णानन्द-ग्रन्थमाला

( ७ )

# भारतस्य सांस्कृतिको दिग्विजयः

लेखकः

**श्रीहरिदत्तवेदालङ्कारः**

अनुवादकः सम्पादकश्च

**श्रीकालिकाप्रसादशुक्लः**

अनुसन्धानसंस्थानम्

वाराणसेयसंस्कृतविश्वविद्यालयः

वाराणस्याम्

१८८९ तमे शकाब्दे

# प्रास्ताविकम्

अथेदानीं 'भारतस्य सांस्कृतिको दिग्विजयः' इति नामधेयं भारतीयसंस्कृतिविभूतिपरायणमितिहासप्रमेयबहुलं प्रेरणाप्रदं च ग्रन्थमिमं प्रकाशयतो न स्वल्पं प्रसीदति ममान्तरात्मा। ये खलु नव्या आलोचका गीर्वाणवाणीसमुपासकाना कामण्यकर्मण्यतां मुहुर्मुहुः प्रतिपादयन्ति, कूपमण्डूकता च तारस्वरेण समुद्घोषयन्ति, ते ग्रन्थरत्नमिदं मुहुर्मुहुरनुशीलयन्तः प्रत्नैतिहासिकतथ्यमवगत्य स्वीयान् विचारानेतद्विषयकान् परिशोधयिष्यन्तीति मे दृढो विश्वासः। भारतीया संस्कृतिर्न केवल भारतवर्षस्य कोणे कोणे स्वप्रसृतिमादधानाऽवलोक्यते, यावद् निखिलेऽपि भूमण्डले स्वप्रचार विदधती विपश्चितां मनांसि रञ्जयति। अस्मिन्नेव भारते वर्षे सस्कृत्याः प्रादुर्भावः समजनि, अत्रत्या एव विद्वांसो नानादेशान् गमिकर्मीकृत्य स्वीया भौतिकाध्यात्मिकोभयविषयप्रतिपादिका संस्कृतिं तेषु प्राचारयन्। भारतभूमेर्भूयसीं प्रशस्तिपरम्परां समुद्घोषयन्तः पुराणग्रन्था नास्मात् कार्यात् कथमपि विरमन्ति। तत्र कर्मभूमिरूपाया भारतभूमेर्गौरवगाथाभिनन्दीनि कानिचित् पौराणिकानि वचनानि समुद्ध्रियन्ते—

(क) देवानामपि विप्रर्षे सदा एष मनोरथः।
अपि मानुष्यमाप्स्यामो देवत्वात् प्रच्युताः क्षितौ॥
मनुष्यः कुरुते तत्तु यन्न शक्य सुरासुरैः।

(मार्कण्डेयपु० ५७।६३–६४)

(ख) अत्र जन्मसहस्राणा सहस्रैरपि सत्तम।
कदाचिद् लभते जन्तुर्मानुष्य पुण्यसचयात्॥

(विष्णुपु० २।३।२३)

(ग) गायन्ति देवाः किल गीतकानि
धन्यास्तु ते भारतभूमिभागे।
स्वर्गापवर्गास्पदमार्गभूते
भवन्ति भूयः पुरुषाः सुरत्वात्॥

(विष्णुपु० २।३।२४)

(घ) अहो अमीषा किमकारि शोभनं
प्रसन्न एषां स्विदुत स्वयं हरिः।
यैर्जन्म लब्धं नृषु भारताजिरे
मुकुन्दसेवौपयिक स्पृहा हि नः॥

(श्रीमद्भा० ५।१९।२१)

भारतवर्षस्य नामस्वारस्ये कारणान्वेषणपरा विद्वांसः पुराणानि विलोकयन्तु, तेष्वेव तत्कारणं समुद्घुष्यते। प्रजानां भरणाद् रक्षणाच्च मानवानामादिजनको मनुरेव भरत इति प्रतिपादयति मत्स्यपुराणम् (११४।५-६)। ऐतरेयब्राह्मणे निर्दिष्टो दुष्यन्तपुत्रो दौष्यन्तिरेव भरतः, यन्नाम्ना वर्षोऽयं प्रसिद्धिमेतीत्यन्ये प्रतिपादयन्ति। वस्तुतस्तु ऋषभनाम्नो भूमण्डल-महीपतेः शतपुत्रेषु ज्येष्ठो भरतो बभूव, यन्नाम्ना वर्षमेतद् भारतमिति तत आरभ्य व्यपदिशन्ति लोकाः। अत्र विषये वायुपु० ३३।५१-५२, मार्कण्डेयपु० ५३।३९-४०, श्रीमद्भा० ५।७।१-३ पुराणाना वचनानि मननीयानि। राज्ञो भरतस्य शासनात् पूर्वं वर्षमिदम् अजनाभेति नाम्ना व्यपदिश्यते स्म (भा० ५।७।३)। अजस्य अजन्मनो विष्णोर्नाभौ नाभिकमले स्थितमिति तदर्थः। अभिधानस्यास्यैव स्वारस्य परिस्फुरति यद् भगवतो नारायणस्य नाभिकमले निवसन् ब्रह्मा यद्वर्षं सर्वप्रथमं निर्मिमीते स्म तदेव अजनाभेति अन्वर्थकेन नाम्ना व्यवह्रियते लोके। भूमण्डलेऽस्मिन्नस्यैव वर्षस्य रचना सर्वप्रथमं जाता, अस्मिन्नेव मानवस्य सृष्टिः समजनि, अत्रत्या एव मानवाः संस्कृत्या मण्डिताः प्रथमं संपन्नाः। अत एवात्रत्या एव ब्राह्मणा विश्वस्मिन् जगति स्वीयां संस्कृतिं प्रचारयन्तो निखिलान् मानवान् सभ्यान् शिष्टान् सदाचारसम्पन्नांश्च व्यदधुरिति विषये मनुरपि स्वमत समुद्घोषयति—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।
स्व स्वं चरित्रं शिक्षेरन् पृथिव्या सर्वमानवाः॥

निरन्तरं सदाचारोपदेशिनी भ्रातृभावमुपदिशन्ती भारतीया संस्कृतिरेव सर्वासु संस्कृतिषु मूर्धन्यभाव भजते, अत एव तस्याः प्रचाराय बद्धपरिकरा गीर्वाणवाणीसेवकाः समुपलभ्यन्त इति नात्र विशयस्यावकाशो लेशतोऽपि।

अन्यच्च, वेदप्रतिपादितः कल्याणसाधको निखिलैरर्थनीयो चोदनापदप्रतिपाद्यो यो धर्मः, स एव सर्वेषा मानवानामैहिकामुष्मिककल्याणराशिवितरणाय क्षमत इति विषये न विद्यते संशीतेः कणिकापि कापि। अन्येषु देशेषु, अन्यासु च जातिषु प्रचारिता धर्मा धर्माभासत्वमेवाविष्कुर्वन्ति वेदप्रतिपादितधर्माद् दूरभावित्वाद्धेतोः। अत एव ते 'मत'शब्देनैव समुचितेन स्वाभिधान धारयितुं नूनं क्षमन्ते। ग्रन्थेऽस्मिन् वैदिकधर्मस्य विपुलः प्रभावो हिब्रू-खिष्टी-मुहम्मदीयमतेषु केन मार्गेण कस्मिँश्च काले कथ प्राकट्यं भजत इति स्फुटं प्रतिपाद्यते, परन्त्विदं तु नैव विस्मरणीयं यतेदेषु मतेषु वैदिकधर्मस्य प्रभावोऽतीव गम्भीरो गहनोऽन्तरङ्गश्च विद्यते। तन्निभालयन्तु विपश्चितः। हिब्रूमते सर्वशक्तिमान् परमेश्वरो 'यह्वोवा' (Jehovah) शब्देनाभिधीयते, खिष्टीयमते च स एव 'गाड'शब्देन प्रतिपाद्यते। उभावप्येतौ शब्दौ संस्कृतमूलादेव निष्पन्नाविति तुलनात्मकभाषाविज्ञानमधीयानाना नो परोक्षं भविष्यतीति नून मन्महे। तद्यथा ऋग्वेदेषु स्थलेष्वनेकेषु अग्नीन्द्रादिदेवाना स्तुतिप्रसङ्गे 'यह्व' इति विशेषण-पदं बहुशः प्रयुज्यते। निरुक्तप्रतिपादितदिशा 'यह्व' इति महतो नामधेयम्। यः खलु महान्, स यह्वेति नामा व्यवह्रियते। अत एव हिब्रूमते परममहत्त्वात् परमेश्वरस्य तमभिधातुम् 'यह्वोवा' इति संज्ञाप्रयोगः सुतरामौचित्यमातनुत इति ध्रुवं प्रतीमः।

इत्थमेवाङ्ग्लभाषामयो गाड् ( God ) शब्दः संस्कृतमूलादेव निष्पन्नः। अयमेव जर्मनभाषायां गात्त ( Gott ), प्राचीनस्यूटानिकभाषाया 'घूतोम्' ( Ghutom ) इति रूपं धत्ते। 'घूतोम्' शब्दस्तु स्पष्टत एव 'हुतम्' 'हूतम्' वा स्वमूल वर्णसाम्यादभिव्यनक्ति। अय संस्कृतमूलनिर्देशः सम्यक् सूचयति यद् गाड्-शब्दस्तं देवमाविष्कुरुते यः सर्वैः साहाय्याय आहूयते हवि इत्यादिप्रक्षेपद्वारेण वा यं साधका जुह्वन्ति। उभयथापि संस्कृतमयोऽयं शब्दोऽतीते समये यज्ञयागादीनां प्राधान्यं प्रकटयति। तस्मिन् काले मानवा अग्निमेव परमेश्वरस्य मुखमाकलय्य तस्मिन्नेव हव्यादीना प्रक्षेपेण सर्वशक्तिमन्त भगवन्तमुपासते स्मेति सिद्धान्तो ध्रुवमुन्नेतु पार्यते।

इत्थं भारतीयायाः संस्कृतेर्बहुमुखीनः प्रचारो विश्वस्य नानादेशेषु जात इति सिद्धान्तं प्रमाणकोटौ आटीकितुमेवैष विद्वत्तामयो ग्रन्थः प्रयतते। ग्रन्थोऽयं पाण्डित्यपूर्णो नानैतिह्यसिक्तथ्यमण्डितः प्रामाणिकश्चेति नास्ति संशयस्यावकाशः। ग्रन्थरत्नस्यैतस्य निर्माणे उभयोः पण्डितयोर्निर्माणशेमुषी विषयप्रतिपादनक्षमा प्रतिभा च नूनं विराजेतेतरामिति स्फुटं वक्तुं पारयामः। गुरुकुलकांगड़ीविश्वविद्यालये प्राध्यापकेन राजनीत्यादिनानाविषयेषु भाषाग्रन्थविरचनचणेन श्रीहरिदत्तवेदालङ्कारेण ग्रन्थोऽयं हिन्दीभाषया पूर्वमुपनिबद्धः; वाराणसेयसंस्कृतविश्वविद्यालस्यानुसन्धानसंस्थानेऽनुसन्धानसहायकपदमलङ्कुर्वाणेन नानाशास्त्रालोचनपटीयसाऽनेकसंस्कृतग्रन्थसम्पादनोपलब्धप्रावीण्येन निर्मलमतिना व्याकरणाचार्येण श्रीकालिकाप्रसादशुक्लेन सरसेन संस्कृतेन स एव ग्रन्थो देववाण्यामनूदितः सम्पादितश्च जातः। इत्थ पण्डितयोरनयोः प्रतिभाजलेनासिक्तोऽय ग्रन्थतरुः कल्पद्रुमायतामित्याशासानोऽयं जनो विश्वसिति यद् भारतीयसंस्कृतेः प्रसारज्ञानविषयिणीं त्रुटिमपनयद् ग्रन्थरत्नमिदमेतद्विषये जिज्ञासूना पण्डिताना छात्राणां च संशीतिजन्य तामिस्र दूरीकर्तुं ध्रुवं प्रभविष्यतीति।

वाराणसेयसंस्कृतविश्वविद्यालयः
वाराणसी
अक्षयतृतीया सं० २०२४
( ३—५—६७ )

श्रीबलदेव उपाध्यायः
अनुसन्धानसंस्थानसञ्चालकः

# भूमिका

कविकुलगुरुः श्रीकालिदासोऽभिरूपैरभिनन्दिते निजे रघुवंशनाम्नि महाकाव्ये इक्ष्वाकुवंशावतंसस्य राज्ञो रघोर्यशःप्रसरप्रभावं वर्णयन् यदाह—

आरूढमद्रीनुदधीन् वितीर्णं भुजङ्गमानां वसतिं प्रविष्टम्।
ऊर्ध्वं गतं यस्य न चानुबन्धि यशः परिच्छेत्तुमियत्तदालम्॥
(रघुवंश० ६।७७)

तदेतत् सर्वं प्राचीनभारतीयसंस्कृतिविषयेऽपि वक्तुं सुकरम्। मन्ये श्रीकालिदासो रघोर्यशःप्रसरमिषेण चतुःसमुद्रसीमां समतिक्रामन्तं भारतीयसंस्कृति-विस्तारमेवोपश्लोकयामास। अस्मिन् ग्रन्थे मया तस्या एव भारतीयसंस्कृत्या विदेशेषु प्रसारं समासतः प्रतिपादयितुं प्रयतितम्।

पुरा किल भारतीया संस्कृतिः स्वदेशसीमां समतिक्रम्य परित एशिया-महाद्वीपस्य विविधान् देशान् प्रविवेश, येनास्य बृहत्तरभारतमिति संज्ञा संजाता। तस्मिन् काले श्रीलंका-मध्य-एशिया-अफगानिस्तान-एशिया-चीन-कोरिया-जापान-तिब्बत-साइबेरिया-मंगोलिया-बर्मा-स्याम-मलाया-जावा-सुमत्रा-बालि-बोर्नियोप्रभृतयो देशा भारतीयसंस्कृत्या समलंकृताः समजायन्त। पश्चिमदिग्वर्तिन ईरानदेशस्य प्राचीन-पारसीकधर्मेण सह वैदिकधर्मस्य महान् सम्बन्ध आसीत्। ख्रीष्टधर्मे, मोहम्मदीये मते, आधुनिके पाश्चात्त्यजगति चापि भारतीयसभ्यतायाः प्रभावो दरीदृश्यते। स एव भारतीयसभ्यतायाः प्रभावो विदेशेषु कथं जात इति प्रामाणिकैः साधनैः सुबोधरीत्या प्रतिपादनमेवास्य ग्रन्थस्योद्देश्यम्।

विदेशेषु भारतीयसंस्कृत्याः प्रसारः सांस्कृतिकदिग्विजयोऽपि वक्तुं शक्यते। इयं दिग्विजययात्रापद्धतिरतिप्राचीनकालात् प्रवर्तिताऽस्माकं देशे। यस्मिन् हि युगेऽस्माकं विजेतारो भूमिपतयः क्षत्रियाः सर्वत सेनासाहाय्येन राजनैतिकीं दिग्विजययात्रामकार्षुः, तस्मिन्नेव समये भारतीया धर्मदूताः, प्रचारकाः, ऋषिमुनयः, तपस्विनो भिक्षुकाः श्रमणाश्च सर्वासु दिक्षु विलक्षणं सांस्कृतिकं दिग्विजयं व्यधुः। तस्यैव भारतवर्षस्य पूर्वपश्चिमोत्तरदक्षिणासु दिशास्ववस्थितेषु जायमानस्य दिग्विजयस्य कालक्रमत उल्लेखोऽस्मिन् ग्रन्थे कृतः। तत्र तत्रोपलब्धानां शिलालेखानां पुरातत्त्वीयावशेषाणां प्रामाणिकेतिहासानां विविधानां विवरणानां चाधारेणेदं सर्वमुपनिबद्धम्।

न केवलमत्र ग्रन्थे विदेशेषु भारतीयसंस्कृत्याः प्रसारस्यैव वर्णनं विहितम्, परं प्रथमचरमयोरध्याययोरस्य सांस्कृतिकदिग्विजयस्य धर्मविजयस्य वा प्रक्रियाऽपि

सविस्तरं व्याख्याता। एतासु दिग्विजययात्रासु कीदृश्यो दुरतिक्रमा भयङ्करा बाधा विवृतवदनाः समुपस्थिताः, कथं चास्माकं धर्मदीक्षितैः प्राचीनैः प्रचारकैर्वणिग्भी राजकुमारैश्च ताः सर्वा अविगणय्याप्रतिहतेन साहसेन समासाधिताः, कथञ्च कैश्च कारणैस्तस्मिन् दिग्विजयकर्मणि शैथिल्यं समागतम्, कथञ्च तानि कारणानि निराकृत्य तं प्राक्तनात् कालाज्जायमानं धर्मविजयप्रसङ्गं पुनरुज्जीव्य तत्र साफल्यमवाप्तुं शक्नुम इत्यपि विवेचितम्।

अस्मिन् ग्रन्थे न केवलं प्राक्काले विहितस्य भारतीयानां सांस्कृतिकस्य दिग्विजयस्य वर्णनं विद्यते, परमधुनाऽपि येषु प्रदेशेषु भारतीयसंस्कृत्या अवशेषाः समुपलभ्यन्ते, तेऽपि वर्णिताः। तेनैव प्रसङ्गेन बालिद्वीपे, आफगानिस्तानान्तर्गत-काफिरिस्तानप्रदेशे च भारतीयसंस्कृत्या अवशेषाणां रोचकं वर्णनमपि विहितम्।

मन्येऽमुं विषयमुपजीव्य देववाच्युपनिबद्धोऽयं प्रथम एव ग्रन्थः। अस्योद्देश्यं संस्कृतभाषाध्येतॄणां छात्राणां मनसि स्वपूर्वपुरुषाणां गौरवमयं कार्यं ताः परम्पराश्चानुसर्तुं प्रेरणाप्रदानं वर्तते, येन ते वर्तमानसमयेऽपि तन्महत्कार्यं कर्तुं समर्थाः स्युः। यद्ययं ग्रन्थ एतत्कर्तुं क्षमते तन्नूनमात्मनः प्रयत्नं सार्थकं मंस्यते एष जनः।

अस्य ग्रन्थस्य प्रकाशनं लेखकस्य निवासस्थानाद् हरिद्वारात् सुदूरं वाराणस्यां समभूत्, तेन ग्रन्थस्यास्य समुचितं शोधनावसरं न लब्धवानस्मि। आशासे सहृदयाः पाठकास्तेषां समाधानं कुर्वन्तो मह्यं क्षमाप्रदानं करिष्यन्ति।

मया नव्यस्य ग्रन्थस्य संस्कृतभाषायामनुवादस्य कृते वाराणसेयसंस्कृतविश्वविद्यालयीयानुसन्धानसंस्थानसदस्याय श्रीकालिकाप्रसादशुक्लमहोदयाय महती कृतज्ञताऽनुभूयते। अस्य ग्रन्थस्य संस्कृतपाण्डुलिपेः संशोधनकर्मणि श्रीमता धर्मदेव-वेदवाचस्पतिना श्रीरामनाथमहाभागेन च बहुमूल्यं साहाय्यं प्रदत्तम्। यन्त्रालयोपयोगिप्रतिलिपिकरणे श्रीराजेन्द्रकुमारो वेदालङ्कारः, श्रीमहावीरविद्यालङ्कारश्च सहायकावभूताम्। तेषां सर्वेषां कृते मया कृतज्ञताऽनुभूयते, परं सर्वतोऽप्यधिकमनुग्रहं वाराणसेयसंस्कृतविश्वविद्यालस्य, तदुपकुलपतिमहोदयस्य, अनुसन्धानसंस्थान-सञ्चालकानां श्रीमतां बलदेवोपाध्यायानां मन्ये येषां प्रेरणया प्रयत्नेन चायं ग्रन्थः संस्कृतभाषायां प्रकाश्य पाठकानां करकमलेष्वुपस्थातुमवसरं प्राप्तवान्। तदलं पल्लवितेन।

दीपमालिका वि० सं० २०२३।
गुरुकुल-कांगड़ी, हरिद्वारम्

भवतां चरणचञ्चरीकः
हरिदत्तो वेदालङ्कारः

# विषयानुक्रमणिका



## प्रथमोऽध्यायः



## द्वितीयोऽध्यायः



## तृतीयोऽध्यायः

## चतुर्थोऽध्यायः



## पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

## सप्तमोऽध्यायः



## अष्टमोऽध्यायः

## नवमोऽध्यायः



## दशमोऽध्यायः

## एकादशोऽध्यायः



## द्वादशोऽध्यायः

## त्रयोदशोऽध्यायः



## चतुर्दशोऽध्यायः

## पञ्चदशोऽध्यायः

## षोडशोऽध्यायः





# भारतस्य सांस्कृतिको दिग्विजयः

## प्रथमोऽध्यायः

### दिग्विजयस्योपक्रमः

पुरा किल भारतीया सस्कृतिर्भारतवर्षस्य सीमाः समतिक्रम्य य विशालं प्रं व्याप्नोत्, स एव बृहत्तरभारतमिति पदेन व्यपदिश्यते। इद भारत खलु एशियाखण्ड भौगोलिकमानचित्रे तस्य एशियामहाद्वीपस्य दक्षिणे भागे केन्द्रीभूतो द्वीपकल्पोऽस्ति, य पूर्वस्मिन् भागे हिन्दचीननामधेयः, पश्चिमे च भागे अरबाभिधो द्वीपकल्पो विराजते खीस्ताब्दीयासु प्राथमिकशताब्दीषु पश्चिमाया दिशि यूनान-रोमाभिधे पूर्वस्याञ्च चीनाभि चेति त्रीणि सभ्यानि राष्ट्राण्यासन्। अतोऽस्माकमिद भारतवर्ष तत्कालप्रथितसभ्यसंस स्यान्तरवस्थितमासीत्। अनेन केन्द्रीयावस्थानेन भारतवासिभिः स्वं परितो देशेषु स्वीया सस्कृ प्रसारिता। सुप्रख्यातः फ्रासदेशवास्तव्यो विद्वान् सिल्वें लेवीमहोदयः प्रतिपादयति- 'भारतवर्षेण ईरानदेशादारभ्याचीनसमुद्रम्, साइबेरियादेशस्य तुषारावृतप्रदेशादारभ्य जाः बोर्नियोपर्यन्तम्, प्रशान्तमहासागरस्य द्वीपेभ्यो हिन्दमहासागरस्य सोकोतराद्वीप यावत् सर्व स्वकीयाः कथा धार्मिकविश्वासाः सभ्यताश्च प्रचारिताः सन्ति। अनेनानेकासा शताब्दी महतीसु परम्परासु मानवजात्याश्चतुर्थांशः स्वेनाक्षुण्णेन प्रभावेण प्रभावितो विद्यते।

**सांस्कृतिको दिग्विजयस्तत्क्षेत्रञ्च**—विदेशेषु भारतीयायाः सस्कृतेर्यः किल प्रसारोऽभूत स खलु भारतवर्षस्य सास्कृतिको दिग्विजय इति वक्तु शक्यते। एष दिग्विजयो नामास्म देशस्य चिरकालप्रवृत्ता प्राचीना परम्परा वर्तते। प्राक्तनादेव कालात् स्वगौरवाभिलाषिणः यशश्चिन पत्रो विजिगीषवोऽवनीपालाः स्वीयाभिर्महतीभिः सेनाभिश्चतसृषु दिशासु भूमिपालान् पराजि भयावह रक्तपात विदधतो दिग्विजययात्रामकुर्वन्। तस्मिन्नेव समये भारतीयया संस्कृत्य ग्यखिलास्वाशासु कोऽप्यनिर्वचनीयः सास्कृतिको दिग्विजयो व्यधायि। येन सा रक्तबिन्दुपातमन्तं चतुर्दिग्वर्तिषु देशेषु स्वकीयमक्षुण्ण प्रभाव निखातु प्रबभूव। पूर्वस्या दिशि वर्मा-स्याम-चं ( अनाम )-कम्बुज( कम्बोडिया )मलाया-जावा-सुमात्रा-बालि-बोर्नियोनामधेयेषु देशेषु भारती सस्कृतेः प्रभावोऽभवत्। प्राचीनकाले एशियामहाद्वीपस्य दक्षिणपूर्ववर्ती अय भूभा भारतस्यावयवोऽङ्गीक्रियते स्म। तदानीन्तना यूनानदेशवास्तव्या विद्वास एनं "परे भारतम्" इत्याचक्षते स्म, अद्यापि स 'परला हिन्द' इति नाम्ना स्मर्यते। दक्षिणस्या दिश्यवस्थि

श्रीलङ्कानामद्वीपो भारतीयैरेव प्रथममावासितोऽभूत्। सम्राजा अशोकेन लङ्का प्रति प्रेपितेन स्वपुत्रेण महेन्द्रेण स्वपुत्र्या सङ्घमित्रया च यस्य बौद्धधर्मस्य तत्र प्रसारः कारितः, तमद्यापि तद्देशवासिनोऽनुपालयन्ति। उत्तरस्या दिशि, यत्राद्यत्वे मोहम्मदीयानामेव सर्वतोभावेन साम्राज्य जरीजृम्भते, तत्र सम्पूर्णे मध्य-एशियाप्रदेशे अफगानिस्तानदेशे च तदानीं भगवान् बुद्धः समर्च्यते स्म। मध्य-एशियाप्रदेश इदानीं भारतीयसभ्यताया एतावन्ति स्मृति-खण्डानि समुपलब्धानि यैः स प्रदेशो भारतादुत्तरस्या दिशि न्युषितमपरं भारत( उपरला हिन्द )-मिति वक्तुं शक्यते। प्रतीच्या च ईराननामदेशस्तु भारतीयानामार्याणा सजातीयैः पारसीकैरेव प्रतिष्ठापितोऽस्ति। पाश्चात्त्यैर्देशैः सह वाणिज्यसम्बन्धसद्भावाद् बाबुल-मिश्र-यूनानाख्य-सस्कृतयोऽपि भारतेन भृश प्रभाविता अजायन्त। इत्थं सर्वासु दिक्ष्वस्माक देशः स्वसास्कृतिक-दिग्विजयस्य साम्राज्य प्रतिष्ठापितवान्। अस्माद् भारतवर्षाद् बहिरप्येकस्य सुविशालस्य बृहत्तरभारतस्य निर्माणमभूत्।

**दिग्विजये विघ्नाः**—भारतीयायाः संस्कृतेरयं प्रसारो नैकस्य दिग्विजयस्य परिणामः, इदं किलानेकशताब्दीर्यावद् महामहिमशालिनां वीर्यवतामुत्साहसम्पन्नानामावासकानामार्याणा-मेकैकशो नूतनान् प्रदेशान् वासयितु विहितस्य सुमहतः प्रयत्नस्य फलम्। प्रथममेभिरार्यैरिद भारतमधिवासितम्, पश्चाच्च यदा शनैःशनैर्देशान्तरेषु स्वकीया उपनिवेशाः प्रतिष्ठापितास्तदा तेषा प्रसारमार्गेऽनेके दुस्तरा विघ्ना समुपस्थिताः। प्राकृतिका मानवीयाश्चान्तराया. पदे पदे तेषां विस्तारमार्गमवारुन्धन्। किन्तु तैस्ता दुर्जया विपत्तयः, भीषणाः सङ्कटाः, असख्याता विघ्ना वा न गणिताः। एकतः प्रथमावासकानां संस्कृतिप्रसारकानाञ्च पुरः सम्प्राप्ता दुरतिक्रमा विघ्नबाधा विलोक्य, अपरतश्च तदुन्मूलनाय मृत्युभयमपि विहाय बद्धपरिकराणा तेषामद्भुत-मप्रतिम च साहस समीक्ष्य जडीभूतवाचामस्माक मौनमेव केवल शरणम्।

**प्राकृतिका विघ्नाः**—विदेशेषु भारतीयसंस्कृतेः प्रसारे दुस्तरा निर्जलाश्च मरुभूमयः, दुर्गमाणि हिमाच्छादितानि उन्नतानि गिरिशिखराणि, अगाधस्य जलनिधेरुच्छलदुर्मिमालाश्चेति त्रयः प्रधानाः प्राकृतिका विघ्ना आसन्।

**(क) मरुस्थलम्**—मध्य-एशियाप्रदेशस्य मरुभूमिभागान् पारयन्तः पथिका स्वमार्गात् परिभ्रष्टाः प्रायेण जल भोज्यं चालभमानाः पिपासार्दिताः क्षुत्क्षामकण्ठाः सन्तो गतासवोऽस्थिपञ्जरावशेषा एवाभूवन्। युआन-च्वांगनामैकश्चीनयात्री मोहो-येन-नामक-मरुभूमौ स्वपथच्युतश्चत्वारि दिनानि पञ्चरात्रीश्च पिपासार्तो महत् कष्ट भेजे। फाहियान-महोदयेन चित्रित गोबीनामकस्य मरुस्थलस्य भीषणमिद चित्र न वैतथ्यमावहति—"मरुभूमौ राक्षसाः पर्यटन्ति, उष्णाः समीराः ससनत्कार सरन्ति। तत्र गतः कोऽपि जनस्तेभ्यः सुरक्षितो न पर्यावर्तते, नोपरिष्टात् कश्चन पक्षी उड्डीयते, न चाधस्तात् कश्चन प्राणी पर्यवेक्ष्यते। चक्षुषी विस्फार्य परितो विलोकयतोऽपि न कुत्रापि कोऽपि मार्गो गन्तु दृष्टिपथमवतरति। काम-मन्विष्यमाणोऽपि न कश्चन पन्था आसाद्यते। केवल यत्र-कुत्रचित् पूर्वप्रस्थिनाना जनाना कङ्कालशेषा एव लभ्यन्ते"। किन्तु भारतीया आवासका धर्मदूताश्चैतान् कङ्कालान् वीक्ष्यापि न कदापि निरुत्साहा निर्विण्णा वाऽभूवन्।

(ख) पर्वतपङ्क्तयः—नगाधिराजस्य हिमालयस्योन्नतानि शृङ्गाण्यनुल्लङ्घ्यानि सन्तीति प्रायेण श्रूयते, परन्तु भारतीयाना धर्मप्रचारकाणा सास्कृतिकमभियान हिमालयस्यैताः शिखरश्रेणयोऽप्यवरोद्धु नापारयन्। ताः पर्वतपङ्क्तयो दुर्लङ्घ्याः सत्योऽपि नानुल्लङ्घ्या बभूवुः। ते धीराः कीदृश्यो भीषणा बाधाः सहमानास्ताः समुल्लङ्घयन्ति स्म तदवगन्तु फाहियान-कृतमिदं वर्णनमेवालम्—"सुङ्गलिङ्ग (पामीर) पर्वतपङ्क्तिर्ग्रीष्मकालादारभ्य हेमन्तकाल यावत् तुहिनावृता भवति। तस्या विषधरा नागाः सन्ति, कोपाकुलितास्ते विषसपृक्तान् समीरान् उद्वमन्ति, तुषारान् पातयन्ति, झंझावाताश्चालयन्ति, उपलान् प्रक्षिपन्ति च। अत्र दशसहस्रेष्वेकोऽप्यात्मानमेताभ्य आपद्भ्यः परित्रातु न क्षमते।" तथापि परःसहस्रैर्धर्मदूतैः श्रद्धाबलेनादम्येन साहसेन च दुस्तरा एताः पर्वतमालाः समुल्लङ्घ्य भारतस्य सन्देशो मध्य-एशिया-चीन-तिब्बत-मङ्गोलियापर्यन्तं नीतः।

(ग) समुद्रः—नौसञ्चालनस्य तस्मिन्नादिमे युगे स्वल्पैः प्लवैरनवगाहितपूर्वाणाम्, अज्ञातपारावाराणामतलस्पर्शिना महासागराणा पर्वतोपमा उर्मिमालाः समुल्लङ्घ्य भारतात् क्रोशसहस्रं दूरस्थितौ बालि-बोर्नियोदेशौ यावद् विविधानुपनिवेशान् स्थापयद्भिर्भारतीयैर्या यातनाः सह्यन्ते स्म, तासा स्वल्पः परिचय फाहियानस्य वक्ष्यमाणेन स्वयात्रावर्णनेन प्राप्तु शक्यते। स वर्णयति—"त्रयोदशदिवसान् रात्रिन्दिव निर्घातवाताः प्रावहन्। पुनश्च पानीयस्य पन्था अवरुद्धो जातः, जलप्रवेशच्छिद्र पिधायाग्रे प्रस्थिताः, समुद्रस्य मध्येऽनेके दस्यवो निवसन्ति, पथि सप्राप्तेभ्यस्तेभ्यो रक्षण दुश्शकम्, सुविस्तृतश्चायमुदधिः, नास्यावारपारौ दृष्टिपथमवतरतः, का नाम पूर्वा, का च पश्चिमा दिगित्यपि ज्ञान नास्ति। केवल सूर्यचन्द्रयोर्नक्षत्राणा वा समवलोकनेन स्वमार्ग आसाद्यते, न च कश्चिन्निश्चितो मार्गः। अन्धतमसाया तमिस्राया केवलमुत्तालतरङ्गाः परस्परमाहन्यमाना दृश्यन्ते, अग्निवर्णा ज्वाला उद्गच्छन्ति, ताभिः सह महान्तः कच्छपा अन्ये च जलजन्तवो बहिर्निस्सरन्तो दृष्टिमुपयान्ति। भयाद् वेपमाना वणिजो न च जानन्ति 'कुत्र प्रयान्ति ते', गभीरोऽगाधश्च समुद्रः, न च कुत्रापि नौकाबन्धनस्थानं लभ्यते। यदि कुत्रचित् समुद्रसलिलान्तः शिलोच्चयाः सन्ति, ततस्तेभ्यो रक्षितु नास्ति कश्चिदुपायः।" न जाने कियत्यो नाव एतैः शिलोच्चयैः प्रतिहताः समुद्रसलिले निमग्नाः, कियन्तश्च युवानो महासमुद्रस्य वारिराशौ विलीनाः जाताः, तथापि जलमग्ना एता नावः सलिले विलीना युवानश्च भाविना जनानामुत्साहभङ्गं कर्तु नाशकन्।

**मानवीया बाधाः**—आवासकानां पथि न केवलं प्राकृता बाधा एवासन्, पर मानवजन्योऽन्तरायोऽपि न्यूनो नासीत्। यात्राया न केवल लुण्टाकेभ्यो लुण्ठनस्य, पर प्राणहरणस्यापि भीतिः सदा सन्निहिता आसीत्। यु-आन-च्वागमहोदयस्य लोमहर्षण त प्रसङ्ग को नाम विस्मर्तु क्षमेत, यत्र स गङ्गातटे भगवत्यै दुर्गायै बलिं समर्पयितु दस्युभिर्गृहीतो रज्जुभिर्बद्धश्च। तथा च तं हन्तुं तैर्दस्युभिः स्वच्छुरिका निशिता विधातु प्रारब्धम्। न केवल परिपन्थिनः, परं यज्ञातीयान् जनान् ते भारतीयाः सभ्यान् विधातु प्रयतन्ते स्म, तेऽप्यतीव रक्तपिपासवः क्रूराश्चासन्। यैः शकैर्भारतीया सस्कृतिः स्वीकृता, तेषां पूर्वजाना विषये हिराडोट्समहोदयो वर्णयति यत् ते

शकाः समरे विजिताना शत्रूणा प्राग् रक्त पिबन्ति (४।६७)। त्रयोदश्यां शताब्द्यां बौद्ध धर्ममङ्गीकृतता मङ्गोलाना विषये कस्यचन साक्षिणो वचनमुपलभ्यते यद् विजय विदधतस्ते बाल वा वृद्ध वा कमपि न त्यजन्ति। ते त्वापन्नसत्त्वाः स्त्रीः खण्डयित्वा गर्भशय्याशयान् शिशूनपि भक्षयन्ति (यूल-मार्कोपोलो १।२६४-६६)। ईदृशीषु क्रूरकर्मासु जातिषु ये आवासका धर्मदूताश्च गतास्ते स्वप्राणानविगणय्यैव तत्र गताः। सत्स्वपि तादृशेषु भीषणेषु भयेषु भारतीया संस्कृतिः सर्वा दिशो विजयमाना सतत पुरः प्रायात्। अस्य प्रसारस्य को हेतुरासीत्? इति विचारणीयम्।

**प्रसारस्य प्रेरका हेतवः**—संस्कृतिप्रसारस्य बहवो हेतव आसन्। ते प्रधानतया द्विधा विभक्तु शक्यन्ते—सामान्या विशेषाश्च। सामान्येषु हेतुषु तासा विचारपरम्पराणा भावाना चान्तर्भावो विधायिस्यते, याभिः प्रेरिता भारतीयाः प्राक् प्रतिपादिता आपत्तीरगणयित्वा सर्वत्र प्रसरन्ति स्म। विशेषेषु हेतुषु तेषा विवेचना भविष्यति, ये खीस्ताब्दीयप्रारम्भिकशताब्दीषु भारतीयायाः संस्कृतेः प्रसारे विशेषतः साधका आसन्। अत्र सामान्याना प्रेरकहेतूनामेव विस्तृतं प्रतिपादन समीचीनं प्रतिभाति।

**सामान्यहेतवः**—अस्य विस्तारस्य प्रथमो हेतुस्ते विविधा ओजस्विनो विचारा आसन्, ये किलास्माक पूर्वजान् सतत पुरःसर्तु प्रैरयन्त। 'चरैवेति चरैवेति' इत्यैतरेयब्राह्मणोक्तं वच एव तेषा मूलमन्त्र आसीत्। इन्द्रेण मन्त्रमुपदिशता यो हि सदेशो रोहिताय दत्तस्तादृशः खलु ऊर्जस्विलः प्रेरणादायकश्च सन्देशो विश्वसाहित्ये दुर्लभ एव। तत्र देवराज इन्द्रो रोहितमाह—

नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम।
आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य चराति चरतो भगः॥
चरैवेति, चरैवेति॥
कलिः शयानो भवति सजिहानस्तु द्वापरः।
उत्तिष्ठस्त्रेता भवति कृत सम्पद्यते चरन्॥
चरैवेति, चरैवेति॥
चरन् वै मधु विन्दन्ति चरन् स्वादुमुदम्बरम्।
सूर्यस्य पश्य क्षेमाण यो न तन्द्रयते चरन्॥
चरैवेति, चरैवेति॥

[ऐतरेयब्रा० ३३।३]

हे रोहित! उद्योगिन पुरुषमेव लक्ष्मीरुपैति, पुरुषानुरूपमेव भाग्य फलति, शयानस्य पुरुषस्य भाग्यमपि शेते, आसीनस्य तस्य भाग्यमप्यास्ते, उत्तिष्ठमानस्य च तदुत्तिष्ठते, गतिमतः पुरुषस्य भाग्यमपि प्रवर्धमान जायते। कलिप्रभृतीनि चत्वारि युगान्यपि पुरुषस्य अवस्थाश्चतस्रो द्योतयन्ति। भृश परिश्राम्यन् पुरुष एव मधुर फलमश्नुते। तन्द्रा विहायाहर्निशं परिभ्रमणादेव सूर्यो ज्योतिर्विराजते। तस्माद् हे रोहित! सतत परिश्राम्य, सततं चर एव इति।

उक्तं च गोभिलगृह्यसूत्रे "कुमारान् ह स्म मातरः पाययमाना आहुः— शाक्वरीणा पुत्रका व्रत पारयिष्णवो भवतेति ।।" (३।२।७९) इति। अत्र शाक्वरी-शब्दः क्रियाशक्तिवाचको वर्तते। इद व्रतमाचरता पुरुषाणा वीरनैपोलियनस्येव नाशक्यं किमपीह विद्यत इति मन्यते स्म। महाभारते देवराजेनोपदिष्टेन पाणिवादो-पदेशेन आर्य्याणा कर्तव्यपरायणता नितान्त प्रकाशिता भवति—"यस्य पाणिरस्ति किं नाम तेनासाध्यम्। न पाणिलाभादधिको लाभः कश्चन विद्यते।" प्राचीना भारतीया आर्या स्वभुज-बलेऽतीव विश्वसन्ति स्म। निखिल वैदिक वाङ्मय कर्मण्यतायाः पौरुषस्य शौर्यस्य प्रबलाशा-वादस्य चोर्जस्वलेन भावेन पूर्णं दृश्यते। एतेन भावेन भाविता भारतीयाः "कृण्वन्तो विश्व-मार्यम्" इति जापमकुर्वन्। अयमेव प्रधानो हेतुर्भारतीयसस्कृतेः प्रसारस्य।

(ख) **लोककल्याणकामना**—विस्तारस्यास्यापरो हेतुर्लोकोपकारस्योदात्तभावनासीत्। अस्माक सभ्यतया धर्मेण ज्ञानेन भाषया कलया चाखिलस्यास्य अवनीतलस्य भद्र भवत्वित्यासीदस्माक भारतीयाना पूर्वजाना प्रबलोऽभिलाषः। अद्यत्वे यथा ईसाई-धर्म-प्रचारका वन्यप्रदेशान् गत्वा अरण्यचारिणः स्वीया भाषा धर्म सस्कृति चोपदिशन्ति, तथैव पुरातना ऋषयोऽपि वन्यजातीयाना समवाये स्वाश्रम सस्थाप्य तान् ज्ञान विज्ञान धर्म चोप-दिशन्ति स्म। विन्ध्याचल समुल्लङ्घ्य दक्षिणदिग्गामी प्रथम ऋषिरगस्त्य आसीत्। तेनैव तमिलभाषायाः प्रथम व्याकरणं निरमायि। तत्र ऋषिभिरध्वरद्वारेण त प्रदेश वैदिकधर्मस्य क्रियात्मकः सन्देशो नीतः। तथैव शैवाना वैष्णवानाञ्च हृदयेषु स्वधर्मप्रचारस्यातुल उत्साहोऽ-शिथिलोऽध्यवसायश्चासीत्। अतस्ते स्वकीयाभिर्नौकाभिर्महासागरस्य विशाल वक्षःस्थल विदार-यन्तः सुमात्रा-जावा-बोर्नियोप्रदेशान् प्राप्ताः। भगवान् गौतमबुद्धो बोधिवृक्षस्याधस्तले लोक-सन्तापविनाशन ज्ञान प्राप्य तस्य प्रचार लोककल्याणायावश्यक मन्यमानः शिष्यान् धर्ममुपदि-देश, आदिष्टवांश्च—"अपि भिक्षवः! बहुजनहिताय, बहुजनसुखाय, लोकस्य दयितुम्, देवाना मनुष्याणाञ्च प्रयोजनाय हिताय सुखाय च पादचार कुरुत। नैकत्र द्वाभ्या सम गन्तव्यम्। भिक्षवः! आदिमध्यावसानेषु कल्याणकारकमिमं धर्म सर्वस्योपदिशत"। भगवतो बुद्धस्या-देशममु शिरसा धृत्वा बौद्धभिक्षवः सासारिक सुख तृणमिव तिरस्कृत्य तुषारावृत समुन्नत गिरि-शृङ्गम्, हिंस्रजन्तुजटिल वर्त्मविहीन निर्जल निर्जन मरुस्थलप्राय शतयोजनविस्तृत कान्तारमति-क्रम्य मध्य-एशिया-चीन-जापानदेशवासिनो जनान् भारतस्य सन्देश श्रावितवन्तः, मार्गान-भिज्ञाः सन्तोऽपि स्वल्पाभिर्नौभिर्वारिधेरुत्पातमुत्सादयन्तो महात्मनो बुद्धस्य सूत्राणि लङ्का-बर्मा-पर्यन्तं नीतवन्तः। इमानि कष्टानि सोढ्वा दूरं देश गन्तु भिक्षूणामयमेक एवोद्देश आसीद् यत् ते भगवतो बुद्धस्योपदेशेन भवसन्तापसन्तप्तान् जीवान् कष्टातीतान् सुखिनश्च विधातु शक्नुयुः।

**धर्मविजयस्य नीतिः**—भारतस्य सास्कृतिकप्रसारस्य तृतीयो हेतुः सम्राजोऽशोकस्य धर्म-विजयस्य नीतिरासीत्। बलशालिना चक्रवर्तिनाऽशोकेन स्वकीयराज्याभिषेकादष्टमेऽब्दे शक्तिसम्पन्न कलिङ्गनामकं राज्यमभिषेणितम्। तुमुलेऽस्मिन् सग्रामे सार्द्धलक्ष जना निगडिताः, लक्षमेक

पलायिताः, पश्चात् ततोऽप्यधिका मृताः ( त्रयोदशः प्रधानः शिलालेखः )। भीषणेनानेन नरसंहारेणाशोकः परां निर्विण्णतां प्राप्तो भृशं परितताप। 'येन लोकानामित्थं वधो मरणं देश-निष्कासनञ्च भवेत्, तादृशो जयः पराजय एव' इत्यनुभूय सङ्कल्पितं तेन यत्-अतः परं मया तादृशो नूतनो विजयः कदापि करिष्यते। तथैव स्वपुत्रपौत्रानपि शिक्षयितुं शिलालेखेषूट्टङ्कितम्—"ते नवीनं विजयं न कुर्युः, शरैः सम्भवत्यपि विजये क्षान्तिं लघुदण्डतां चैवोपयुञ्जन्तु, धर्मेण सम्पद्यमानं विजयमेव वास्तविकं विजयं मन्वताम्" ( त्रयोदशः शिलालेखः )।

स्वशासनसमयेऽशोकेन स्वदेशे परदेशे च स्वधर्मदूतान् द्वारीकृत्य धर्मविजयं विधातुं प्रयतितम्। शाहबाजगढीप्रदेशस्य त्रयोदशप्रधानेन शिलालेखेनानुमीयते यत् तेन पश्चिमैशियादेशस्य पञ्चयवनराज्येषु तथैव दक्षिणस्यां दिशि आन्ध्र-पुलिन्द-चोल-पाण्ड्य ताम्रपर्णी-राज्येषु स्वीया दूताः प्रेषिता आसन्।

तस्यैवाशोकस्य प्रोत्साहनेन पाटलिपुत्रे बौद्धभिक्षूणां सङ्घस्य तृतीया महासभा मुद्गलिपुत्रतिष्यस्याध्यक्षतायां सम्पन्नेति महावंशग्रन्थेन ज्ञायते। समाप्तिं गताया तस्या महासभाया प्रत्यन्तदेशेषु शासनं ( बौद्धधर्मम् ) प्रतिष्ठापयितुं कार्तिके मासि तिष्यमहोदयेन नवसु देशेषु धर्मप्रचाराय स्थविराः प्रेषिताः। कश्मीरे गान्धारे च मज्झन्तिकस्थविरः प्रेषितः, अभिमहिषमण्डले महादेवः, वनवासे ( उत्तरी कनारा ) रक्षितः, अपरान्ते ( बम्बई ) धर्मरक्षितः, महाराष्ट्रे महाधर्मरक्षितः, यवनलोके ( यूनाना जगत् ) महारक्षितः, हिमालयप्रदेशे मज्झिमस्थविरः, लङ्कायां चाशोकतनयो महेन्द्रः प्रहितः, (महावंशे १२।१८)। भारतवर्षस्य राजानः कार्तिके मासि दिशो विजेतुमभियान्ति स्म। स्थविरभिक्षुभिरस्मिन्नेव कार्तिके मासि स्वीया धर्मयात्रा प्रारब्धा। इमे सर्वेऽनुपमं दिग्विजयमुद्दिश्य विष्वक् प्रयाता आसन्। विश्वस्येतिवृत्ते स्वधर्मस्य प्रचारकं प्रसारकं चेदमेव प्रथमं मण्डलमासीत्। एभिः स्वकार्ये भीषणा विपत्तयः सोढाः, परं स्वश्रद्धाबलेन ताः सर्वाः पराजिताः। यथा—यदा मज्झन्तिकस्थविरः कश्मीरदेशं प्राप्तः, तदा तत्रत्येन नागराजेन तं भीषयितुं कामं प्रयतितम्—'महान्तो झञ्झावाताः प्रादुर्भूवन्, मेघाः सतडतडाशब्दं गर्जितुं वर्षितुञ्च प्रवृत्ताः, सचाकचक्यं चपला कर्णौ स्फोटयन्ती चमत्कर्तुमारेभे, तरवो गिरिशिखराणि च प्रपतितानि, भीषणाकृतयो नागा भीषयितुमारेभिरे'। परन्तु स्थविरः स्वयोगप्रभावेण एतान् सर्वान् पराजित्य नागराजं सगर्वमाह—'यदि त्वं ससमुद्रां सकलां महीमपि मय्युत्क्षिपसि तदापि मे तस्माद् भीतिर्नास्ति' ( महावंशे १२।१८ )। स्थविरस्येदं योगबलं तु बौद्धधर्मे तस्य श्रद्धातिरेकः प्राणिमात्रस्य च दुःखोन्मूलनभावनैवासीत्। अत एव इमे धर्मप्रचारकाः महतीर्विपत्तीः सहमानाः सर्वत्र बौद्धधर्मस्य सन्देशं श्रावयन्तः प्राणिनां दुःखान्यपाकुर्वन्। एभिः स्थविरैरमृतादप्युत्कृष्टं निर्वाणसुखं परित्यज्य सुदूरेषु देशेषु भ्रामं भ्रामं सर्वाणि कष्टानि सहमानैः संसारस्य कल्याणं कृतम्, ( महावंशे १२।५५ )। भारतस्य सांस्कृतिके दिग्विजये इमान् स्थविरान् एषामुदाहरणानि श्चानुसरन्तो लोकहितादप्रमाद्यन्तो धर्मदूता बौद्धभिक्षवश्च महत्साहाय्यमाचरन्।

(४) **अर्थोपार्जनम्**—भारतीयानां विस्तारस्य चतुर्थः सामान्यः प्रेरको हेतुरर्थ आसीत्। सम्पत्समीहा जनान् दविष्ठानपि देशान् गन्तुं प्रवर्तयति स्म। धनाशया द्रव्यलोलुपव्यापारिणः

स्वानसूनपि सङ्कटसङ्कुलान् सम्पाद्य, समुल्लङ्घ्य महासमुद्रं विदेशान् गच्छन्ति स्म । जातकसाहित्यस्यानेकाः कथा एतद् विशदयन्ति । चतुर्द्वारजातके (४।२०) काचन जननी समुद्रमनेकसङ्कटसङ्कुलं समाचक्षाणा स्वपुत्रं समुद्रयात्राया निवारयितुं वाञ्छति, परन्तु धनगृध्नुः सूनुः तथा प्रतिपादयन्त्या मातुः पोतमारूढः । प्राचीने काले जनाना विश्वास आसीद् यद् बर्मा-मलाया-जावा-सुमात्राप्रभृतिदेशेषु सुवर्णं समासाद्यते । अत एव इमे प्रदेशाः सुवर्णभूमिशब्देन सुवर्णद्वीपशब्देन चाभिधीयन्ते स्म । अयस्कान्तस्तावदयः एवाक्रष्टुं समर्थः, सुवर्णे पुनः सर्वान् मनुष्यान् स्वाभिमुखमाक्रष्टुं प्रबलं सामर्थ्यमस्ति । अस्मिन् काले सुवर्णस्याकर्षणं यथा आस्ट्रेलिया—केलिफोर्निया-दक्षिणाफ्रीका-देशानामावासस्य प्रधानं कारणं सञ्जातम्, तथैव प्राचीनकाल इदं सुवर्णभूमेः सुवर्णद्वीपस्य चोपनिवेशस्य मुख्यो हेतुरासीत् ।

अस्याः संस्कृतेः प्रसारं प्रोत्साहयितुमुक्तहेतुभ्योऽतिरिक्ताः केचन विशेषहेतवोऽप्यासन् । अत्र प्रामाणिकस्यैतिहासिकस्य प्रमाणस्याभावात् सन्ति विदुषां विप्रतिपत्तयः । प्रसिद्धिं प्राप्तेन फ्रांसदेशवासिना विदुषा केदेमहोदयेन खीस्ताब्दीयारम्भिकभागे दक्षिण-पूर्व-एशियादेशे भारतीयानां प्रसारस्य त्रयो विशेषहेतवः कल्प्यन्ते—(१) विक्षुब्धा राजनैतिकस्थितिः, (२) वाणिज्यस्यावश्यकता, (३) समुद्रे नौसञ्चालनस्य समुन्नतिरिति । प्रयोजनवशान्न ते विस्तरश उच्यन्ते ।

कथं सांस्कृतिकप्रसारारम्भो जात इति विविच्येदानीं तस्य प्रसारस्य पद्धतेः क्रमस्य प्रभावितक्षेत्राणाञ्च संक्षिप्ता मीमांसा विधीयते ।

**सांस्कृतिकप्रसारस्य पद्धतिः**—भारतस्य धर्मविजयस्त्रिभिः साधनैः सम्पन्नोऽभूत्—अन्तःस्यन्देन (Infiltration), उपनिवेशनेन, धर्मप्रचारेण च । प्रायेण धर्मविजयस्य प्रारम्भोऽन्तःस्यन्देन भवति स्म, उपनिवेशनेन स बलवानभूत्, धर्मप्रचारेण च पवित्रस्यास्यानुष्ठानस्य परिसमाप्तिरजायत । लङ्कासदृशेषु कतिपयेषु स्थानेष्विमास्तिस्रः पद्धतयः स्पष्टं दृश्यन्ते, चीन-मङ्गोलियाप्रभृतिप्रदेशानां विजयः केवलेन तृतीयेन साधनेन सम्पन्नः ।

**(क) अन्तःस्यन्दः**—कस्यापि प्रभावस्याज्ञातरूपेण शनैः शनैः कुत्रचित् प्रवेश एव 'अन्तःस्यन्दः' इत्युच्यते । अद्यत्वे युद्धकलानां सैनिकसफलतायै साधनमिदमत्यन्तमावश्यकं मन्यते, द्विसहस्रवर्षाणि प्राग् भारतीयैः सांस्कृतिकविजयेऽनेन महत् साहाय्यं प्राप्तमासीत् । अन्तःस्यन्दस्य साधनस्य प्रयोक्तारः प्राधान्येन व्यापारिण आसन् । ते यस्मिन् देशे व्यापारं कर्तुं गच्छन्ति स्म, तत्र स्वकीयपण्यवस्तुभिः सह भारतीयानां संस्कृतिमपि नयन्ति स्म । कामं ते प्रचारमुद्दिश्य न किमप्याचरेयुः, तथापि तेषां सम्पर्केणारण्यवासिजातिषु ज्ञानरश्मीनामालोकः प्रवेशमलभत । प्रथमं सांस्कृतिकसुधाबिन्दुक्रमेण स्रवन्ती सती शनैः शनैः कालक्रमेण महत्या धारया समग्रं प्रदेशमाप्लावयति स्म । इत्थं लङ्काया मध्य-एशियाप्रदेशे सुवर्णद्वीपे च भारतीयसंस्कृतिर्भारतीयैर्व्यापारिभिः प्रवेशिता ।

**(ख) उपनिवेशनम्**—द्वितीयं साधनमुपनिवेशनमासीत् । अन्तःस्यन्दमाचरन्तो व्यापारिणस्तावत् स्वसंस्कृत्याः प्रभावं तत्र विसृज्य स्वदेशं निवर्तन्ते स्म । परमुपनिवेशने भारतीया

देशान्तरेषु न्युष्य तानि स्वगेहानि कृत्वा भारतीया संस्कृतिं तत्र प्रसारयन्ति स्म। उपनिवेशनद्वारा धर्मविजयकार्यं प्रधानतया भारतीयजनताया वर्गद्वयेन कृतम्—ऋषिभिः, क्षत्रियकुलोत्पन्नै राजकुमारैश्च। ऋषीणामुपनिवेशनं शान्त्या धर्मकर्माचरणेन भवति स्म, क्षत्रिया राजकुमाराश्च कतिकृत्वः शस्त्रैः प्रदेशान्तराणि विजित्य तत्र स्वीयां संस्कृतिं प्रसारयन्ति स्म।

(१) **ऋषीणामुपनिवेशनम्**—भारते उपनिवेशनस्य परम्परा अतीव प्राचीना वर्तते। अनया पद्धत्या मुनयो राजकुमाराश्च पूर्वं भारतस्य महाद्वीपप्राये विशाले भूखण्डे आवासन कृतवन्तः, पुनश्च भारताद् बाह्येषु देशेषु। मुनीनां प्राचीनतमस्योपनिवेशनस्य सर्वोत्तमा दृष्टान्ता रामायणे वर्णिता अगस्त्यशरभङ्गसुतीक्ष्णप्रभृतिमुनीनामाश्रमाः सन्ति। पुराणेषु मुनीनां तपस्या बहुशो वर्णिता। अद्यत्वे तपस्यायास्तात्पर्यमात्मपीडनं शारीरिकयातना वाऽस्तीति मन्यते, परन्तु प्राचीने काले "विक्षेपकारिणां प्रलोभनानां सुखानाञ्च त्यागं कृत्वा कस्यचिद् महत उद्देश्यस्यादर्शस्य च पूर्त्यै अनन्यनिष्ठयैकाग्रतया च घोरः परिश्रम एव तपस्योच्यते स्म"। भगवतीं श्रुतिमनुसृत्य सृष्टिरियं भगवतस्तपसः फलम्, राज्ञा भगीरथेन गङ्गायाः प्रचण्डां प्रवहन्तीं जलधारां नियन्तुमश्रान्तो यः परिश्रमः कृतः, इदानीं स लोकोक्तिविषयतां गतः। तपस्ययाऽलौकिकी असाधारणी सिद्धिः प्राप्यते स्म। राज्ञा भगीरथेन भागीरथीरूपं यत् फलं प्राप्तं तदप्यसाधारणमासीत्। ऋषीणां काननेषु तपस्याचरणस्यायमेवार्थः प्रतीयते यत् ते तत्र ज्ञानकेन्द्रं संस्थाप्याज्ञानान्धतमो विनाशयेयुः, आरण्यानसभ्यान् पुरुषान् सभ्यान् कुर्युः, तदीयाः कुरीतीरपाकृत्य तेभ्य उत्तमनीतेर्धर्मस्य च दीक्षां दद्युः। इदं कार्यं सम्पादयितुं ते तत्र आश्रमं संस्थाप्य तैः सार्द्धं वसन्ति स्म। असभ्यानां मध्ये द्वीपायमाना आश्रमा अभितो वर्तमानां स्थितिं न केवलेन यज्ञधूमेन पुनन्ति स्म, किन्तु सभ्यतया ज्ञानेन चापि प्रकाशयन्ति स्म। कतिपयैरुदाहरणैरिदं स्पष्टं भविष्यति।

चम्पायां प्राप्तेनाभिलेखेन स्पष्टं ज्ञायते यत् कम्बुजदेशे (कम्बोडिया) भारतीयानामुपनिवेशनं द्विजोत्तमः कौण्डिन्यश्चकार। कम्बोडियादेशस्य प्रसिद्धस्य राज्ञो यशोवर्मणः (८८९-९०८) मातुः कश्चन पूर्वजो वेदवेदाङ्गनिष्णात आर्यदेशवास्तव्यो ब्राह्मणोऽगस्त्य आसीत्। जावादेशस्यानेकाः कुम्भोदरमूर्तय आधुनिकैर्विद्वद्भिः कुम्भसम्भवस्यागस्त्यस्य मूर्तयः स्वीकृताः सन्ति, अस्यैव द्वीपस्य कतिपयासु जनश्रुतिष्वस्य द्वीपस्य प्रथमावावासकौ पराशरव्यासौ स्वीकृतौ स्तः। चतुर्णां वेदानां पारदृश्वा एको भारतीयो विद्वान् सर्वज्ञमुनिनामकः कम्बुजदेशमगमत्, तद्वंश्याश्च विशिष्टानि पदान्यध्यतिष्ठन्। कम्बुजराजस्य राजेन्द्रवर्मणः (९४४-९६९) कन्या राजलक्ष्मीः कालिन्दीतीरात् समागतेन भारतीयब्राह्मणेन दिवाकरभट्टेन परिणीता, अथ च तेन मथुरास्थमधुवननाम्ना कम्बुजे एक आश्रमः स्थापितः। यशोवर्मणः (८८९-९०८ ई०) राज्यकाले तु कम्बुजे मुनीनामाश्रमाणां पूर इवाभूत्। भूमिपालेनानेन स्वनाम्ना शतं यशोधराश्रमाः स्थापिताः। आश्रमा इमे हिन्दचीनदेशे भारतीयसभ्यताप्रसारे महत्साहाय्यमाचरितवन्तः।

(२) **क्षत्रियाणामुपनिवेशनम्**—उपनिवेशनेन धर्मविजयं फलयितुं राजन्यैरपि साहाय्यमाचरितम्। भारतसीमाबद्धानां कतिपयानां देशानां स्थानीयपरम्परासु क्षीणाऽस्य

स्मृतिरुपलभ्यते । बर्मादेशीयामनुश्रुतिमनुसृत्यास्य देशस्य प्रथम. शासकः कपिलवस्तु-वास्तव्यः शाक्यवंशज एकः कुलीन आसीत् । अय स्वसेनया सहामु देशमगमत् । अत्र तेन प्रथमो राजवंशः स्थापितः । अतीते किञ्चित्काले गङ्गातटादागतेन एकेनापरेण क्षत्रियदलेन प्रथमो राजवंश उन्मूलितः । अराकानेत्याख्यस्य देशस्य प्रथमः शासकः काशीनरेशस्य पुत्र आसीदित्युच्यते । कम्बुजदेशस्यैतिहासेष्वस्य प्रथमो राजा इन्द्रप्रस्थस्य राज्ञ आदित्यवंशस्य पुत्र आसीदिति प्रतिपाद्यते । जावादेशोपनिवेशनस्य यशोभाक् कतिपयानुश्रुतिभिर्हस्तिनापुर-वास्तव्योऽजिशकनामा क्षत्रियो वर्तते । कतिपयाः कथा एन सौराष्ट्रनरेशस्य प्रभुजयस्य प्रधानमन्त्रिणं प्रतिपादयन्ति । श्रीलङ्काविजेतुर्विजयस्य कथा तु सर्वविदितैवास्ति । भारते राजसिंहासनार्थं प्रायो युद्धान्यभूवन् । तत्रासन्तुष्टाना राजपुत्राणा कृते स्वकीय शौर्य साहस च प्रदर्शयितु बृहत्तरभारतस्यानेके प्रदेशा रिक्ता आसन् । श्रूयते किल यत् सिकन्दरो मनसा इद विचार्य दोदूयते स्म, यन्मम तातपादो विश्वविजय करोति चेत् , मया च किं कर्तुं परिशिष्यते । प्राचीनाना भारतीयानामीदृशी कापि चिन्ता नासीत् , विजयायानेके प्रदेशास्तेषा सविधे प्रकटा आसन् ।

भारतेन सिकन्दर-सीजर-महमूदगजनवी-तैमूर-चगेजखा-नादिरशाहसदृशा आक्रमण-कारिणो नोत्पादिताः, किन्तु आदित्यवश-विजयाजिशकसदृशा अनेके राजपुत्रा उत्पादिताः । एभिः स्वकीययोत्कृष्टया सैनिकशक्त्या आरण्यकजातिषु प्रभुत्वमासादितम् । अजिशको यदा जावादेशमगमत्तदा स देशो राक्षसैर्व्याप्त आसीत् । तान् पराजित्य स तत्र तत्र स्वाधिकार स्थापित-वान्, कम्बुजदेशे तत्रत्या जनाः प्रथम किञ्चिद् व्यरुन्धन् , किन्त्वय विरोधो झटित्येव शान्ति गतः । अस्य मुख्यं कारण भारतीयोपनिवेशकाना तत्रत्यैर्जनैः सह विवाहादि-सम्बन्धद्वारेण परस्पर-मेकीभवनमासीत् । तत्रत्या जनाः भारतीयाना सस्कृति सभ्यताञ्च स्वेच्छया ग्रहीतु प्रारभन्त, राजा प्रबलेन प्रोत्साहनेन च देशास्ते भारतीयसस्कृत्या सस्कृताः ।

**( ३ ) धर्मप्रचारः**—धर्मविजयस्य तृतीय साधन धर्मदूतैः कृतो धर्मप्रचार आसीत् । चीनदेशे भारतीयसस्कृतेः प्रसारोऽनेनैव साधनेनाभूत् । अशोकेन तृतीयबौद्ध-महासभया च देशान्तरेषु प्रहिताना धर्मप्रचारकाणामुल्लेखः प्राक् कृतोऽस्ति । विदेशेषु बौद्ध-धर्मस्य प्रसारः प्रायेण धर्मदूतैरेव कृतः ।

धर्मविजयस्योपरिनिर्दिष्टेषु त्रिषु साधनेषु हिन्दुधर्मेण प्रथमयोर्द्वयोरन्तःस्यन्दोप-निवेशनयोर्विशेषत उपयोगः कृतः, बौद्धधर्मेण च धर्मप्रचारस्य । हिन्दूधर्मस्य प्रसारः प्रधान-तया दक्षिणपूर्व-एशियादेशस्य ( सुवर्णभूमि ) कम्बुज-चम्पा-जावा बालिप्रभृतिप्रदेशेषु समभूत , बौद्धधर्मस्य च श्रीलङ्का-मध्य-एशिया-चीन-कोरिया-जापान-मंगोलियाप्रदेशेषु । इदानीं भारतसम्बद्धसीमासु वर्मा-स्याम-कम्बुज-चम्पा-प्रदेशेषु बौद्धधर्मस्य प्रचारोऽस्ति, किन्तु स धर्मस्तत्र खीष्टीयैकादशशतकानन्तरमेव प्रसृतः । इतः पूर्वं तु हिन्दूधर्मस्यैव प्राधान्यं प्रतीयते । इदमत्रा-वधेय यत् प्राचीनकाले संस्कृतिर्धर्ममूलाऽऽसीत् । वर्णमाला, भाषा, साहित्यम् , मूर्तिचित्रवास्तु-प्रभृतयः कलाः, सामाजिकमैक्यम् , रूढयः, राजनीतिकसिद्धान्तः, आदर्शः व्यवस्थाश्चेति संस्कृत्याः

सर्वाण्युपादानतत्त्वानि धर्मेण सह गाढ सम्बद्धानि तेनैवानुबद्धानि तदाश्रितानि च, अतो यत्र यत्र भारतीयो धर्मो विस्तृतस्तत्र तत्र तेन सह तस्य सस्कृतिरपि प्रसृता भवति स्म। इत्थ धर्मविजयेन सास्कृतिकविजयोऽपि सम्पन्नः॥

## धर्मविजयस्य क्रमः तत्प्रभावितं क्षेत्रञ्च

भारतवर्षस्य सीमातो बहिः सर्वप्रथमं श्रीलङ्काया भारतीयसंस्कृतेः प्रवेशो विजयश्चाभूताम्। अत्र धर्मविजयस्य त्रयाणा साधनानामन्तःस्यन्दोपनिवेशनधर्मप्रचाराणामुपयोगः कृतः। खीष्टात् शतकषट्क पूर्वमेव वणिजोऽस्याः सीम्ना गच्छन्तो देशममु भारतीयसस्कृतिप्रकाशेन प्रकाशयितु प्रारभन्त। प्रायः खीष्टाब्दात् ४८३ वर्षाणि पूर्व सोपारातः (जि० थाना बम्बई) आगतेन साहसिकेन क्षत्रियराजकुमारेणात्र स्वीया राजनीतिप्रभुता स्थापिता। तत्र न्युष्येद स्थान भारतस्य प्रथममुपनिवेश चकार। खीष्टाब्दात् शतकत्रय पूर्वमशोको द्वीपेऽस्मिन् धर्म प्रचाराय स्वपुत्रं महेन्द्र स्वपुत्रीं सङ्घमित्राञ्च प्रहितवान्। बौद्धधर्मो लङ्काया राष्ट्रधर्मोऽभूत्। दक्षिणस्या दिशि भारतीयदिग्विजयस्य चरमा सीमा लङ्काऽऽसीत्। यतो हि इतः स भारतीयमहासागरः (हिन्द महासागर) वर्तते यस्य समाप्तिर्भूमण्डलस्य समाप्तिं यावदपि न भवति।

खीष्टाब्दात् पूर्व तृतीयशतकस्य मध्ये अशोककालादुत्तरीयदेशेषु धर्मविजयः प्रारब्धः। तदात्वे उत्तरपश्चिमयोर्मौर्यसाम्राज्यस्य सीमा हिन्दुकुशपर्वत आसीत्, अतो दक्षिणाफगानिस्तान यावत् तु भारतीयसस्कृतेः प्रसारः स्वाभाविक एवासीत्, किन्तु तेन स्वकीये त्रयोदशे प्रधानेऽभिलेखे येषु देशेषु धर्मदूतप्रेषणस्य चर्चा कृताऽस्ति, तेषु कम्बोजनाभकनाभप्पतिनाम्ना देशानामुल्लेखो वर्तते। तेषु कम्बोजप्रदेशस्तु हिन्दुकुशपर्वतस्य पारे स्थितस्य पामीरबदख्शानामकस्यैकः प्रदेश आसीत्। परन्तु नाभकस्य नाभपतेश्च यथार्थपरिचय इदानीमपि न जातः। बुहलरमहोदय इमं नाभकं ब्रह्मपुराणे वर्णितमुत्तरकुरुदेशेऽवस्थित नाभिकपुरं मन्यते, उत्तरकुरुश्च मध्य-एशियादेशे थियानशानेत्यस्य दक्षिणभागे निम्नोन्नतप्रदेशे आसीत्। कुणालस्य कथयापि इदमेव प्रतीयते यदशोकसमये भारतीयैः खोतनप्रदेशे उपनिवेशः स्थापित आसीत्, अतो नेदमसम्भव यद् नाभकं नाभप्पतिश्च खोतनप्रदेशस्यैव काप्युपनिवेशौ स्याताम्। आगामिनि शतकद्वये समग्रे चीनदेशीये तुर्किस्ताने भारतीया सस्कृतिर्विस्तृताऽभूत्, प्राकृतभाषा च तत्र राजभाषाऽभूत्। खीष्टाब्दस्य प्रारम्भिकशतकेषु पश्चिमोत्तरप्रदेशाभ्यां वैदेशिकसैनिकाना भारते यदा कदा आक्रमणान्यभूवन्। किन्त्वनेन सहैव मध्य-एशियास्थवैदेशिकेषु भारतस्य सास्कृतिकमभियानमपि प्रवर्तते स्म। वैदेशिकाना प्रवाहो यैर्मार्गैर्भारतं समागच्छति स्म, तैरेव मार्गैः सास्कृतिकप्रवाहो भारताद् बहिर्निस्सरति स्म। प्रवाहोऽयं प्रथमशतकमध्ये चीनप्रदेश प्रविष्टः। अत्र मध्य-एशियास्थैर्जनैर्महत्साहाय्यमाचरितम्। आदौ तावद् भारतीया धर्मप्रचारकाः स्थलमार्गेणैव चीनदेश गताः, पश्चात् ते जलमार्गेणापि गन्तुमारेभिरे। चीनदेशात् कोरियादेश प्रविशन्ती भारतीयसस्कृतिः खीष्टाब्दीयषष्ठशतक यावद् एशियादेशस्य पूर्वोत्तरतटपर्यन्त प्रससार। तिब्बतदेशो बहुकालपर्यन्तं भारतीयसंस्कृत्याऽस्पृष्ट एवासीत्। सप्तमे शतकेऽत्र धर्मविजयः प्रारब्धः, त्रयोदशे

शतके तिब्बतदेशवास्तव्यैर्धर्मप्रचारकैर्मङ्गोलजातीया जना बौद्धधर्मे दीक्षिताः, मङ्गोलैः सह भारतीयसंस्कृतिरुत्तर-एशियादेशे विस्तारं गच्छन्ती रूसदेशस्य दोनवोल्गानद्योर्मध्यवर्तिप्रदेशमप्यात्मायत्तं चकार। इत्थमुत्तरदिशि धर्मविजयः समपद्यत।

भारतीयव्यापारिभिः सम्भवतः प्रागैतिहासिकयुगादेव पूर्वस्यां दिशि प्रस्थानं प्रारब्धमासीत्। खीष्टाब्दीयप्रारम्भिकशतकेषु तत्रानेकानि भारतीयराज्यानि स्थाप्यमानान्यभूवन्, तथानेन भारतीयसंस्कृतेः प्रसारो महता वेगेन प्रारब्धोऽभूत्। खीष्टाब्दीयप्रथमशतकं यावत् कम्बुजे मलायादेशे तथैव द्वितीयशतकान्तं यावज्जावादेशे चम्पादेशे च हिन्दुराज्यानि स्थापितान्यासन्। भारतसीमासम्बद्धप्रदेशादन्यभागेष्वपि शीघ्रमेव हिन्दुराज्यानां स्थापनाऽभूत्, राज्यानीमानि सार्द्धसहस्रवर्षपर्यन्तं स्थिराण्यासन्, ततः षोडशशताब्द्याम् इस्लामधर्मेणेमान्यन्तं नीतानि। परन्तु बर्मा-स्याम-कम्बुजचम्पाप्रदेशाः पूर्वदेशैः सह व्यापारस्य मुख्यमहापथात् पृथग्भूताः सन्तः इस्लामधर्मेण न प्रभाविताः। बर्मादेशस्य शृङ्खलाबद्ध इतिहास एकादशात् शतकात् श्यामदेशस्य च त्रयोदशात् शतकात् प्रारभते। आभ्यां द्वाभ्यां लङ्कायाः स्थविरवादिबौद्धधर्मः स्वीकृतः। अथ श्यामदेशेन कम्बुजे विजिते सति तत्रापि हिन्दुधर्मस्थाने बौद्धधर्मस्यैव प्राधान्यमभूत्।

पूर्वस्यां दिशि धर्मविजयं कुर्वद्भिर्भारतीयैः पूर्वदक्षिण-एशियादेशस्था असभ्याः सभ्या विहितास्तथा च ते संस्कृतौ कलायाञ्च तथा उन्नतिपदं नीता यथाऽद्य संसारस्तेषाम् अङ्कोरवत्-बरबुडुरसदृश्या कलाकृत्या विस्मितो मुग्धश्चास्ति। यावत् ते भारतीयैः संबद्धा आसन् तावत् ते उन्नतिमारोहमाणा आसन्। मध्ये युगे यदा भारतीयैर्विदेशगमनं तत्र च संस्कृतिप्रसारणञ्च परित्यक्तं तदा ते पुनरसभ्यताऽज्ञानान्धकारे निमग्नाः।

पूर्वदक्षिणोत्तरदिग्भागेषु भारतीया आवासकाः प्रचारकाश्च सांस्कृतिकप्रसारे सर्वत्र सफला अभूवन्। तस्मिन् समये चीनदेशं विहाय सर्वत्रासभ्या जातय आसन्, ताभिरार्यावर्त्तस्य धर्मः संस्कृतिश्च साकल्येनाङ्गीकृता। अतोऽत्र भारतस्य पूर्णविजयोऽभूत्। जूलियससीजर इवामीषां प्रदेशानां विषये भारतीया आवासका धर्मदूताश्चापीदं वक्तुं शक्नुवन्ति यत् 'तैस्तत्र गतम्, दृष्टम्, विजितञ्च।' किन्तु पश्चिमे भूभागेऽनेकेषां देशानां पार्श्वे स्वकीया विशिष्टाः संस्कृतयः प्रतिद्वन्द्विनो धर्माश्चासन्। पारसीकधर्मं ईसाईधर्मं इस्लामधर्मश्चार्यावर्तधर्मस्य प्रसारे बाधका बभूवुः। अतोऽस्यां दिशि अन्यस्यां दिशीव सम्पूर्णो विजयो नाभूत्, केवलमांशिको विजय एवाभूत्। भारतीयस्य धर्मस्य विचाराणाञ्च प्रभावः पाश्चात्त्येष्वनेकेषु दार्शनिकसम्प्रदायेषु च परिलक्ष्यते।

ग्रन्थेऽस्मिन् कालक्रमानुरूपं प्रत्येकं दिशि सांस्कृतिकदिग्विजयस्य पृथक् पृथग् विवेचनां करिष्यते। भारतीयैर्जनैः प्रथमं श्रीलङ्कायां धर्मविजयः प्राप्तोऽतः प्रथमं तस्योल्लेखो भविष्यति।



# द्वितीयोऽध्यायः

## श्रीलङ्का

**अवतरणिका**—एष श्रीलङ्काद्वीपो भारतस्य मुक्तामणिरस्तीति महात्मनो गान्धिमहोदयस्य उक्तिर्न केवल काव्यमयी, अपि त्वैतिहासिकगभीरतत्त्वयुताऽप्यस्ति। भारतीयसंस्कृतिशुक्तेर्या बौद्धधर्ममयी मुक्ता प्रादुरभूत्, तस्या इदानीं यावद् महती प्रतिष्ठा वर्तते। भारतीयसस्कृतेर्दिग्विजयेऽनेकधा श्रीलङ्काया अनन्यसाधारण महत्त्व विद्यते। भारतवर्षस्य सीमाभ्यो बहिरार्यावर्तस्य सस्कृतेरय सर्वप्रथमो विजय आसीत्। श्रीलङ्का बौद्धधर्मस्य मूलपरम्परा सहस्रवर्षद्वयाद् वैलक्षण्येनाजस्र परिपालयति। बर्मास्यामप्रभृतिभिर्बृहत्तरभारतान्तर्वर्तिभिर्देशैर्धार्मिके क्षेत्रे यदा कदापि प्रकाशस्य मार्गप्रदर्शनस्य चावश्यकताऽनुभूता तदा श्रीलङ्कैव तेषा गुरुरभूत्।

यद्यप्यत्र राजनीतिकदृष्ट्या भौगोलिकदृष्ट्या वा श्रीलङ्का भारतवर्षाद् बहिरस्ति तथापि सा सांस्कृतिकदृष्ट्या भारतस्याभिन्नमङ्गमेव। रामायणमनुसृत्य श्रीमता भगवता रामचन्द्रेण लङ्कया साक योऽयं सम्बन्ध. स्थापित आसीत्, यश्च सम्राजा अशोकेन स्वपुत्र महेन्द्र स्वपुत्रीं सङ्घमित्राञ्च प्रेष्य पोषितः, सोऽद्यापि सुरक्षितो वर्तते। नेदिष्ठत्वात् श्रीलङ्काया भारतस्य गभीरः प्रभावो विद्यते। अत्र बौद्धधर्मस्य हिन्दुधर्मस्य च प्राधान्यमस्ति, तथा च सिंहलभाषायास्तामिलभाषायाश्चाधिकः प्रचारो विद्यते। सिंहलदेशवास्तव्या जना आधिक्येन भारतीयवंशजाः सन्ति। सुदीर्घ काल यावद् भारतीयानामावासेन द्वीपोऽय दक्षिणभारतस्य भाग एव सवृत्तः।

**आर्याणां श्रीलङ्कायां प्रवेशः—व्यापारिणां राजकुमाराणाञ्चागमनं विजयश्च—** भारतीयामनुश्रुतिमनुसृत्य श्रीलङ्काया सर्वप्रथम भारतीयः प्रवेष्टा आर्यः श्रीरामचन्द्र आसीत्, किन्तु महावशादिसिंहलेतिहासग्रन्थेषु नास्य कश्चनोल्लेखो दृश्यते।

एव प्रतीयते यत् श्रीलङ्काया सर्वप्रथम प्रवेष्टार आर्याः पूर्वपश्चिमतटवासिनो भारतीया व्यापारिण आसन्। तैः खिस्ताब्दात् पूर्व षष्ठे सप्तमे वा शतके तत्र गन्तु प्रारब्धम्। जातकग्रन्थेषु भारतदेशस्य पश्चिमे तटेऽवस्थिताद् भृगुकच्छस्य (भरुच) नौकाश्रयादारभ्य अनुतट सुवर्णभूमि (बर्मा, मलाया, जावा, सुमात्रा)-पर्यन्त यात्रा कुर्वता समुद्रव्यापारिणा समुल्लेखोऽस्ति। यथाऽद्यत्वे मोहमयीतः (बम्बई) आस्ट्रेलियापर्यन्त गच्छन्तः पोताः इङ्गाल (कोयला) ग्रहीतु 'कोलम्बो'नामनगरेऽवतिष्ठन्ते, तथैव प्राचीना व्यापारिणो गुर्जरदेशात् (गुजरात) सुवर्णभूमिं गच्छन्तः पानीयमिन्धनञ्चादातु सिंहलतटेऽवतरन्ति स्म। वाराणसेया व्यापारिणोऽपि तत्स्थानपर्यन्तं गच्छन्ति स्म (जातकसख्या ३६०)। अस्य द्वीपस्य खनिजसम्पत्तिः, मणयो मुक्ता धानकजीरकादिपदार्था अपि व्यापारिणः स्वाभिमुखमाकर्षितु पर्याप्तानि प्रबलानि च

कारणान्यासन्। तस्मिन् समये द्वीपोऽयं भारतीयैर्नोवासित आसीत्। तदाऽस्य ताम्रपर्णीति ( तम्बपन्नी ) नामासीत्।

अज्ञातप्रदेशाना विषयेऽनेका विचित्राः कपोलकल्पिताश्च कथाः प्रचलिता जायन्ते। ताम्रपर्णीविषयेऽपि एवंविधा अनेकाः कथाः प्रसिद्धा आसन्। श्रूयते यत् तत्रत्ये 'सिरासवत्थु' नामके नगरे यक्षा निवसन्ति स्म। पोतभङ्गे जाते सत्यनेके यात्रिणोऽस्य द्वीपस्य तट सश्रयन्ते स्म। यक्षिण्यः स्वरूपलावण्येन तान् प्रलोभ्य विमोह्य च तटान्तःप्रदेश नयन्ति स्म। कञ्चित् काल तेषा पुरुषाणा पत्न्यो भूत्वा तैः सह निवसन्ति स्म, पुनस्तान् शापयित्वा गृहेषु पिधाय च नूतनान् पुरुषान् अन्वेष्टु निर्गच्छन्ति स्म। यदा ताभिर्नवा पुरुषा लभ्यन्ते स्म, तदा पूर्वपुरुषान् यन्त्रणागृहेषु निक्षिप्य शनैः शनैर्भक्षयन्ति स्म, पुनश्च नूतनैरपि पुरुषैः सह तथैवाचरन्ति स्म। तस्मिन् युगे श्रीलङ्काया उत्तरभूभागे नागैरधिष्ठितत्वान्नागद्वीपेति नाम्नाऽयं प्रदेशः प्रसिद्ध आसीत्। यक्षिण्यः स्वाभीष्टपुरुषाणा गवेषणाय समग्रस्य नागद्वीपस्य तटेषु विचरन्ति स्म। ( वलाहस्सजातकसख्या १९६ )।

सिंहलस्य प्राचीनेतिवृत्त प्रतिपादयतो महावशग्रन्थादप्युपर्युक्तवर्णनस्य पुष्टिर्भवति। महावशग्रन्थानुसार द्वीपस्यास्य मूलनिवासिनो राक्षसा आसन्। पुनस्तत्र यक्षाः पिशाचाश्चागमन्, पश्चाद् नागैस्ते पलायिता दक्षिणस्या दिशि। नागाश्चोत्तरस्या दिशि वसति चक्रुः। अतोऽयं प्रदेशो नागद्वीपेति नाम्ना ख्यातः। यक्षा राक्षसाश्चानेकानि रूपाणि धर्तुमशक्नुवन्। ते पोतभङ्गात् तटं सश्रितवतो व्यापारिणो विविधैः प्रकारैरपीडयन्। एते यक्षा नागा राक्षसाश्च वेदाख्याना वर्तमानारण्यकजातीना पूर्वजा आसन्, न पुनरमानुषिकजातीया इत्यत्र नास्ति सशीतिलेशोऽपि।

**राजकुमारस्य विजयस्यागमनम् ( ४८३ खि० पू० )**—लङ्कायाः प्राचीनेतिहासग्रन्थ महावशमनुसृत्य अमीषा यक्षाणा नागानाञ्च दमन भारतीयराजवशस्यादिप्रतिष्ठापको विजयो नाम कश्चित् सिंहपुरस्य ( काठियावाड़ ) राजकुमार आसीत्। प्रजापीडनाद्धेतोः स राज्ञा राज्यान्निर्वासितः सन् स्वमित्राणा सप्तशत्या सह खिस्ताब्दात् त्र्यशीत्यधिकचतुश्शत वर्षाणि पूर्व श्रीलङ्कामाससाद। अस्य हस्ते विष्णुरक्षासूत्र बद्धमासीत्। अतो यक्षिणीभिः स नाहृतः। स एव विजयः कुवर्णानाम्नीमेका यक्षिणीं परिणीय यक्षान् सजहार। ततः शनैः शनैः द्वीपेऽस्मिन् महाराष्ट्रीप्राकृतनामधेयैका भाषा प्रचलिता, पश्चादस्या एव सिंहलीभाषायां विकासोऽभूत्।

राजकुमारस्य विजयस्य सौराष्ट्राद् ( काठियावाड़ ) आगमनेन सिंहलीभाषाया महाराष्ट्रीप्राकृतभाषाया सम्बन्धेनेद प्रतीयते यद् द्वीपस्यास्य प्रथमे आवसकाः सौराष्ट्रवासिनो मराठाजातीयाश्चासन्। प्राचीने काले सौराष्ट्रस्य प्रसिद्धो नौकाशयो घोघा आसीत्। गुर्जरदेशेऽद्यापि 'लङ्कावधूर्घोघावरश्च' ( लंकानी लाडी आनि घोघाना वर ) इति किंवदन्ती श्रूयते। आदौ विजय एव कुवर्णा यक्षिणीं परिणीयेमा परिपाटीं प्रवर्तयामास। गच्छता कालेन गुर्जरदेशवासिनः श्रीलङ्कया सह व्यापार विधाय न केवल धनम्, परं स्त्रीरप्याहरन्ति स्म। इयं किंवदन्ती तामेव घटना स्मारयति। किन्तु तत्र एतदतिरिक्ता महाराष्ट्रीया आर्या अपि प्राचुर्येण न्यवात्सुः। एषा

भाषैव तत्रत्या लोकभाषाऽभूत्। पश्चाद् बौद्धधर्मेण साकं समुपस्थिता पालिभाषा धर्मभाषापदमधि-श्रयाणाऽपि लोकभाषा भवितुन्नाशकत्।

श्रीलङ्काया आरम्भिकावासनस्य कतिपयानि महत्त्वपूर्णानि मनोरञ्जकानि च तथ्यानि वयं प्रायो विस्मराम। तद्यथा श्रीलङ्काया भारतीयसभ्यतायाः प्रथमप्रवेशो न खलु बौद्धधर्मेण सह ख्रिस्ताब्दात् पूर्वं तृतीयशतकेऽभूत्, अपि तु तस्मान्न्यूनातिन्यून सार्द्धशत वर्षाणि प्राक् समवर्तत। अतस्तत्र प्राप्तप्रवेशः प्रथमो धर्मो न बौद्धधर्मः, परं हिन्दुधर्म एवासीत्, प्रथमा च भाषा न पालिभाषा, परं सिंहली भाषा आसीत्। दक्षिणभारतेन सम्बद्धस्याप्यस्य श्रीलङ्काद्वीपस्योपनिवेशनं न तामिलवासिभिः, अपि तूत्तरभारतनिवासिभिरार्यैः सम्पादितम्। अमीभिरार्यैः ख्रिस्ताब्दात् षट्शतवर्षाणि पूर्वमेव द्वीपेऽस्मिन् स्ववसतयः स्थापयितुं प्रारब्धाः।

**आदिमाः वसतयः**—तस्मिन् समये आर्यैः स्वकीया वसतयस्त्रिषु प्रदेशेषु स्थापिता आसन्। प्रथममुत्तरभूभागे, यस्य राजधानी अनुराधग्राम आसीत्। अपरं रोहणनामधेयः पूर्व-दक्षिणभागे, यस्य राजधानी महाग्राम (मागम) आसीत्। ततश्च पश्चिमदिग्वर्तिनि कैलानी-गङ्गया सिच्यमाने प्रदेशे, यस्य मुख्या नगरी कल्याणी आसीत्। नदीमातृकत्वादेते प्रदेशा अधिवस्तुं सुकरा बभूवुः।

**आर्याणामंशदानम्**—ख्रिस्ताब्दात् प्राक् पञ्चमे शतके भारतादागच्छद्भिरार्यैः श्रीलङ्काया नूतनस्यैकस्य युगस्य प्रवर्त्तनं कृतम्। बहुविधानि नूतनानि वस्तून्यानीयास्यामूलपरिवर्तनं कृतम्। आदिमैरार्यैरानीता सिंहलीभाषा समग्रस्यापि देशस्य लोकभाषा सवृत्ता। आर्याणामागमनात् पूर्वं द्वीपस्यास्य वन्यजातयः प्रस्तरशस्त्राणां प्रयोगमकुर्वन्। आर्यैः तत्र लौहायुधानि प्रवर्तितानि। आर्याणां तृतीयं महत्त्वाधायकमंशदानं मृगयाशीलानां वेद्दाख्यानामरण्यवासिनां कृषिकर्मशिक्षण-मासीत्। तदेव कृषिकर्मद्वीपवासिनामद्यापि प्रमुखं कर्म वर्तते, आर्यैः प्रथममुप्तास्तण्डुला एव, इदानीमपि श्रीलङ्कावासिनां प्रधानं भोजनमस्ति, आर्यैरत्र ग्रामाणां शासनव्यवस्थाऽपि प्रवर्तिता।

आदौ तावदुत्तरभारतस्य आर्येभ्योऽतिरिक्ता अनेका द्रविडजातयोऽप्याक्रान्तारः शान्ता आगन्तुकाश्च भूत्वा दक्षिणभारताच्छ्रीलङ्काद्वीपं समागच्छन्ति स्म। सिंहलजातिनिर्माणे तेषां गौरवास्पदं स्थानमस्ति, परं श्रीलङ्कायाः प्राचीनसभ्यतायां तेषां न कश्चनाविशिष्टप्रभावोऽभूत्। तेषां प्रभावः तदा प्रारभत यदा पल्लवनृपतिभिः षष्ठे सप्तमे वा शतके श्रीलङ्काया-माक्रमणानि प्रारब्धानि। पाण्ड्यानामाक्रमणसमये वायं प्रभावो भृशमवर्धत। त्रयोदशे शतके श्रीलङ्कायां द्रविडाः स्वतन्त्रं राज्यमस्थापयन्, चतुर्दशे शतके च तैर्दक्षिणराज्यात् करग्रहणं प्रारब्धम्। एतैर्हेतुभिर्द्वीपेऽस्मिन् हिन्दूधर्मः प्रससार, एकादशे शतके द्वीपेऽस्मिन् हिन्दूधर्मो बद्धमूलोऽभूत्, स च बौद्धधर्मेऽपि स्वप्रभावं जनयामास। सिंहलीभाषायाः शब्दा रचना च तामिलभाषया भृशं प्रभाविता बभूवुः। श्रीलङ्काया वर्णव्यवस्था दक्षिणभारतस्य वर्णव्यवस्थया कामं सादृश्यमादधाति। तथ्यद्वयमिदं सूचयति यदत्र द्वीपे आर्याणामिव द्रविडानामपि महान् प्रभावो वर्तते।

**( क ) बौद्धधर्मस्य सफलतायाः कारणानि**—महावंशयुगस्य ( ४८३ ख्रि० पू०–३६२ ई० ) सांस्कृतिकेतिहासस्य सर्वतो महती घटना श्रीलङ्कायां बौद्धधर्मस्य प्रवेश आसीत्। ख्रिस्ताब्दतृतीयशतकात् पूर्वं श्रीलङ्कायामस्य धर्मस्य प्रचारो महता वेगेन प्रारब्धः। सम्राजोऽशोकस्य समकालिको देवानांप्रियस्तिस्सेतिनामा श्रीलङ्कानृपतिः ( ४४७–२०७ ई० पू० ) भगवतो बुद्धस्य धर्ममङ्गीचकार। तृतीयस्या बौद्धमहासभाया अनन्तरं श्रीलङ्कायां बौद्धधर्मं प्रचारयितुमशोकस्य पुत्रो महेन्द्रः प्रहित आसीत्। महावंशाख्ये श्रीलङ्कायाः प्राचीनेतिहासग्रन्थेऽस्यातीव चमत्कारपूर्णं वर्णनं विद्यते, यन्महेन्द्रो वायुमार्गेण भिक्षुक ( मिहिन्तले इत्याख्य ) पर्वतेऽवतीर्णः। राजा चत्वारिंशत्सहस्रैरनुयायिभिः सह महेन्द्रस्य शिष्योऽभूत्। तिस्सस्य भ्रातृपत्नी अनुकूला देव्यपि सखीनां पञ्चशत्या सह बौद्धधर्मस्य दीक्षामैच्छत्, किन्तु स्त्रीणां दीक्षा भिक्षुण्यैव सम्भवतीत्यतस्तिस्सेनाशोकस्य सविधे पुनर्दूतः प्रहितो यदशोको महेन्द्रस्य भगिनीं सङ्घमित्रां बोधिद्रुमस्यैकां शाखां च तत्र प्रेषयेत्। सङ्घमित्रया श्रीलङ्कायाः स्त्रीषु बौद्धधर्मोऽत्यन्तं प्रचारितः। बोधिवृक्षस्य शाखा अनुराधपुरे नगरस्यैकस्मिन् विहारे आरोपिता। तस्याः समुद्भूतो वृक्षोऽद्यापि विश्वस्य वृद्धतमो विशालतमो वृक्षो गण्यते। अनया शाखया सह महेन्द्रसङ्घमित्राभ्यां समारोपितः बौद्धधर्मो बोधिवृक्ष इव विशालः समजायत।

अस्यानेकानि कारणानि आसन्। देवानांप्रियेण तिष्येन सम्राजा अशोकेन धर्मप्रचाराय प्रेषितेभ्यो जनेभ्यः सर्वात्मना राज्यसंरक्षणमदायि, स्वयञ्चापि धर्मप्रचाराय निरतिशयः प्रयत्नः कृतः। परवर्तिनो राजानोऽपि अस्मिन् कर्मणि प्रकामं साहाय्यमाचरितवन्तः। अस्माद् राज्याश्रयादतिरिक्तमन्यन्महत्कारणमिदमासीद् यत् श्रीलङ्कानिवासिनां सिंहलभाषा पालिभाषया सादृश्यमभजत। अतो महेन्द्रस्य तदनुयायिनाञ्च प्रचारकार्ये ता बाधा नासन् या भारतीयैश्चीनदेशेऽनुभूताः। तृतीयं कारणमिदमासीद् यत् तस्मिन् समये श्रीलङ्कायां न कश्चन प्राचीनो धर्मो तादृशः शक्तिशाली व्यवस्थितश्चासीद् यो बौद्धधर्मं विरुन्ध्यात्। बौद्धप्रचारकाणां सहिष्णुतासंभृता नीतिरपि तान् साफल्यं नीतवती। ते बौद्धधर्मप्रचारकाः तत्रत्यानां देवानां पूजाया विरोधमकृत्वा जनान् सङ्घे प्रवेशयितुं दत्तादरा अभूवन्। तेषां मुख्यमुद्देश्यं जनानामुत्तमजीवनाय प्रेरणमासीत्, न पुनस्तस्मिन् समये प्रचलितपूजापद्धतेस्तेषां पराङ्मुखीकरणम्।

**( ख ) बौद्धधर्मस्य प्रभावः**—बौद्धधर्मेण श्रीलङ्कायां यः स्वकीयो व्यापकः प्रबलश्च प्रभावः स्थापितः, न स इयत्तया परिच्छेत्तुं शक्यते, केवलं कतिपयेषु क्षेत्रेषु तस्योल्लेखनीयस्याशदानस्य सङ्केत एव कर्तुं शक्यते। बौद्धधर्मस्य प्रवेशात् पूर्वं श्रीलङ्कायां धर्मेऽन्धविश्वासानां बर्बरपरिपाटीनां स्वेच्छाचारिणां देवानां भूतप्रेतानाञ्चोपासनाया एव प्राधान्यमासीत्। बौद्धधर्मेणाय धर्मः कतिपयैर्नूतनैः समीचीनैश्च प्रभावैः प्रभावितः। अस्य कर्मवादसिद्धान्तेन बुद्धिमतामाश्वासनमभूद् यज्जनानां सुखं वा दुःखं वा न देवानामनुकम्पायाः कोपस्य वा परिणामः, अपि तु मनुष्याणां स्वयं कृतस्य कर्मण एव फलम्। अस्योन्नतं नीतिशास्त्रं जनेषु सदसतोर्विवेकं समुत्पादयामास। मनुष्यैः पशुभिश्च सह सानुक्रोशं व्यवहर्तुं ते शिक्षिताः। बौद्धभिक्षुभिस्ते सिंहलवास्तव्याः पारिवारिकं जातीयं च कलहं विहाय शान्त्या जीवितुं शिक्षिताः।

धार्मिकस्य नैतिकस्य च जीवनस्य समुन्नयनादतिरिक्त बौद्धैरेतद्द्वीपवासिभ्यः सांस्कृतिकक्षेत्रेऽनेकान्यमूल्यानि वस्तूनि प्रादायिषत। तथागतस्योपदेशैः साकं ते स्वधर्मग्रन्थानपि समानैषुः। इमे ग्रन्था एव श्रीलङ्काया सर्वतः प्रथमाः साहित्यिककृतय आसन्। एते ग्रन्थाः पालिभाषाया निबद्धा आसन्। सिंहलभाषया पालीतोऽनेके दार्शनिका मनोवैज्ञानिकाश्च शब्दाः सगृहीताः। अस्मिन् विषये बौद्धधर्मस्यापरमशदान लेखनकलाऽसीत्। श्रीलङ्काया दम्बुलस्थानस्य गुहासु प्राप्तानामाद्यतमानामभिलेखानामक्षरगण्यशोकस्य लेखाना ब्राह्मीवर्णैः काम सादृश्य भजन्ते। अस्मादेव सिंहललिपेर्विकासोऽभूत्। सिंहलवास्तुकलाया मूर्तिकलायाश्चाविर्भावोऽपि बौद्धधर्मस्य प्रवेशानन्तरमेवाभूत्। तत्र प्रारम्भिकाणि भवनानि प्रधानतया बौद्धविहाराः स्तूपाश्चासन्। आदौ या मूर्तयो निर्मितास्ता बौद्धधर्मस्य महापुरुषान् घटनाश्च चित्रयन्ति। वास्तुकलाया उच्चतमविकासे बुद्धादिमहापुरुषाणा पवित्रास्थ्याद्यवशेषधारकेण 'दागोबा' इति नाम्ना प्रसिद्धेन धातुगर्भात्मकस्तूपेन महत् साहाय्यं प्रदत्तम्। मूर्तिकला च तदाऽतीव प्रोत्साहन लेभे यदा प्रत्येक विहारे एकैकं मूर्तिगृहं निर्मातुमारब्धम्। बौद्धानां भारतेन सह सम्बन्धोऽक्षुण्ण आसीत्, अतः श्रीलङ्काया भारतस्य विभिन्नकलाशैलीना सांस्कृतिकान्दोलनाना च प्रभावोऽप्यभवत्। सामाजिके राजनीतिके च क्षेत्रे बौद्धधर्मस्य सर्वतो महद्दशदान परस्परं सङ्घर्षं कुर्वत्सु जनेषु मिथ एकतानुभूतेर्जननमासीत्। यद्यपि श्रीलङ्काया बौद्धसङ्घे तीव्रो मतभेद आसीत्, तेषा निश्चितं सङ्घटनं नासीत्, न च तैर्जनता कथमपि सङ्घटयितु प्रयतितम्, तथापि ते बौद्धाः सकले द्वीपे यानादर्शान् प्रचारयन्ति, ते आदर्शा विविधजातीयान् जनानेकस्मिन् सूत्रे ससीव्य तेष्वेकानुभूतिभावना समुद्बोधयन्ति स्म, सिंहलस्य राष्ट्रियतायाः विकासे च साहाय्यमादधति स्म।

बौद्धधर्मस्य प्रभावस्य सामान्यतो वर्णन विधायेदानीं कालक्रमेणास्य द्वीपस्य धार्मिकदशाया दिग्दर्शनं क्रियते।

**धार्मिकी दशा**—खिस्ताब्दात् पूर्व तृतीयशतके प्रवेशादारभ्य अद्यावधि श्रीलङ्काया स्थविरवादिनः (हीनयानस्य) बौद्धधर्मस्य प्रधानता सतत वरीवृत्यते। राजभिः प्राधान्येन तस्यैव सरक्षणं प्रदत्तम्। बहुवारं श्रीलङ्काया महायानबौद्धधर्मेण स्वप्राबल्यमधिगन्तु प्रयतितम्, परं न तेन साफल्यमवाप्तम्। तस्मात्तत्र पृथक् पृथक् प्रभूताः सङ्घाः स्थापिता अभूवन्। स्थविरवादसम्प्रदायस्य प्रधान केन्द्रमनुराधपुरस्य महाविहार आसीत्। वट्टग्रामणीनामकनृपतिसमये (२९-१७ ई० पू०) धर्मरुचिर्नाम सम्प्रदायोऽभयगिरौ स्थापितोऽभूत्। वोहारिकतिस्सस्य गोठाभयस्य च राज्ञोः समये महायानसम्प्रदायवादिना वैथुल्लकाना दमनमभूत्। गोठाभयस्य समये सागलिकसम्प्रदायोऽभयगिरिविहारतः पृथग्भूत्वा दक्षिणविहारे प्रतिष्ठा लेभे। महासेनस्य समये कञ्चन काल यावद् अभयगिरौ महायानसम्प्रदायवादिनो वैथुल्लाना प्राबल्यमभूत्। किन्त्वयमुत्कर्षोऽल्पकालिक एवासीत्। महावंशकाले तत्र बौद्धव्यतिरिक्त भारतदेशस्य निर्ग्रन्थमतमाजीवकमतञ्चाप्यासीत् साधारणजनास्तावद् भूतप्रेताना वृक्षाणाञ्च पूजामकुर्वन्।

चूलवंशसमये (खिस्ताब्दस्य चतुर्थशतकादारभ्य पञ्चदशशतकावधि) बौद्धधर्मेण सततं समुन्नतिः कृता। अस्य सुदीर्घकालस्य पूर्वार्धभागे (३६२-१०१७ खिस्ताब्दानि यावत्) महा-

यानसम्प्रदायस्य प्रभावेणायं बौद्धधर्मोऽतितरां लोकप्रियोऽभूत्। जनानां सर्वा आकाङ्क्षा बौद्ध-धर्मः सर्वतोभावेन पूरयितुं प्रवृत्तः। मन्दिराणां सङ्ख्याया मूर्तीनां प्रचारे च निरन्तरं वृद्धि-रभूत्। बौद्धभिक्षवो जनानां जीवनोपयोगिनि विषये विशेषतः सलग्ना अभूवन्। पोयाप्रभृतिषु धार्मिकेषु महोत्सवेषूपदेशो भवति स्म, भिक्षवो भूतप्रेतादीनपनेतुं पिरित-नामकादिविधीनामनुष्ठानं विधाय लोकजीवनमधिकतमं प्रविष्टाः, किन्तु राजनीतेर्विरता आसन्।

अस्मिन् काले बौद्धधर्मस्यानेके सम्प्रदायाः प्रबला अभूवन्। धर्मरुचिसागलिक-सम्प्रदायानुयायिनां जनानां सङ्ख्या वृद्धिं गता, सिगिरियामिहिन्तलेप्रभृतयो विहारास्तैः स्वाधिकारं नीताः। तदतिरिक्ता धर्मगुप्तक-महिशासक महासान्धिकप्रभृतयः सम्प्रदाया अपि तत्रासन्। तेषु प्रथमयोर्द्वयोर्भिक्षुनियमानां विषये ( विनये ) मतभेद आसीत्।

अस्मिन् समये सिंहलभिक्षवो भारतस्य बौद्धतीर्थानां यात्रामकुर्वन्। कीर्तिश्रीमेघ-वर्णनामीषां कृते बुद्धगयायां विहारं निर्मातुमनुज्ञालाभाय समुद्रगुप्तस्य सविधे दूतमण्डलमेकं प्रेषितमासीत्। सिंहलभिक्षवो न केवलं तीर्थयात्रानिमित्तं भारतमागच्छन्ति स्म, अपि त्वस्य विविधेषु प्रदेशेषु धर्मप्रचारमपि कुर्वन्ति स्म। नागार्जुनीकोंडानामके स्थाने एभिः सिंहलभिक्षुभि-रुपयुज्यमान एको विहारः सम्प्रति खननाद् भूम्या निःसृतोऽस्ति। श्रीलङ्काया बौद्धधर्मस्य ख्यातिश्चीनदेशस्य सीमामपि पस्पर्श। चीनदेशे भिक्षुणीसङ्घस्य स्थापनासमये सिंहलवर्तिनो धर्मगुप्तकसम्प्रदायस्य भिक्षुणीभिरस्मिन् कर्मणि साहाय्यं प्रदत्तम्।

अस्मिन्नेव युगे श्रीलङ्काया भगवतस्तथागतस्य दन्तः ( दलदा ) अत्र सम्प्राप्तः। फाहियान-यात्रासमयेऽस्य रथयात्रा ससमारोहा समवर्तत। अथ शीघ्रमेव श्रीलङ्काया राष्ट्ररक्षको देवोऽभूत, छत्रचामरवच्चायमपि राज्ञामनिवार्यमङ्गमजायत।

अस्मिन् समये महायानसम्प्रदायस्य विस्तारोऽभूत्। तस्य प्रसारस्य च परिणामद्वयमभूत्। प्रथमस्तावद् बोधिसत्त्वमूर्तीनां पूजायां वृद्धिः, अपरश्च संस्कृताध्ययनस्य प्रचारः। श्रीलङ्काया सप्तमेऽष्टमे च शतकेऽधिगता अभिलेखा एतत् सम्यक् प्रमाणयन्ति। तस्मिन् समये 'अभयगिरिः' संस्कृताध्ययनस्य केन्द्रमासीत्। परवर्तिभिः सिंहलग्रन्थैर्ज्ञायते यत् तत्र महायानसम्प्रदायस्यानेकेषां संस्कृतलेखकानां ग्रन्थाः पठ्यन्ते स्म। तेष्वार्यशूरस्य जातकमाला, चन्द्रगोमेर्व्याकरणम्, शान्तिदेवस्य बोधिचर्यावतारश्चोल्लेखनीयाः सन्ति। संस्कृतभाषाध्ययनस्य सिंहलभाषाया गभीरः प्रभावोऽभवत्। अनेन न केवलं सिंहलभाषायाः शब्दकोषः समृद्धोऽभवत्; अपि तु व्याकरणस्य, छन्दःशास्त्रस्य, शब्दविज्ञानस्य, शिक्षाशास्त्रस्य, ज्योतिःशास्त्रस्य, वैद्यकस्य, इन्द्रजालस्य, संगीतस्य, वास्तुविद्याया राजनीतिशास्त्रस्य च लङ्काया प्रवेशोऽभूत्।

युगस्यास्यैकं महद् वैशिष्ट्यमिदमासीद्यदस्मात् कालादत्र हिन्दुधर्मः प्रसर्तुमारेभे। संस्कृतभाषायाः प्रसारस्येदमप्येकं कारणमासीत्। श्रीलङ्काद्वीपस्य 'मन्तै' इत्याख्यस्य 'ट्रिंकोमाली' इत्याख्यस्य च प्रदेशस्यावासकास्तामिलजातीयाः स्वेन सह शैवधर्ममानैषुः। तैः शैवमन्दिराणि स्थापितानि। ७९० तमे खिस्ताब्दे कैण्डीनामधेये स्थाने 'महादेनाले' इति नाम्ना प्रसिद्धा विष्णुमूर्तिः समानायि। अस्मिन् समये हिन्दुधर्मः कथं प्रसृतो लोकप्रियश्चाभूदित्यस्य

कानिचिद् विशिष्टानि कारणान्यासन्। गुप्तवंशस्य समये प्रबल हिन्दुजागरणमभूत्। तस्य प्रभावोऽस्मिन् द्वीपेऽभवदिति स्वाभाविकमेवासीत्। इदानीं द्वाभ्यामन्याभ्यामपि कारणाभ्या द्वीपेऽस्मिन् तस्य प्रसारः सुकरोऽभूत्। प्रथम कारण श्रीलङ्काया भूमिपालाना धार्मिकी उदारता वर्तते। ते राजानो बौद्धभिक्षून् ब्राह्मणपुरोधसश्च समानभावेनाद्रियन्ते स्म। द्वितीयं कारणमिदमासीद्यद् द्वयोर्धर्मयोः कार्यक्षेत्र सर्वथा पृथगासीत्, तयोश्च न कश्चन विरोध आसीत्। विवाहादि-गृह्यसंस्कारा ब्राह्मणपुरोहितैः सम्पाद्यन्ते स्म, बौद्धभिक्षव इद स्वकार्यक्षेत्रं नामन्यन्त।

पोलोन्नरुवायुगस्य (१०१७–१२३५ खि०) अन्तिमे भागे तामिलजातीयाना राज्ञामाक्रमणैर्बौद्धधर्मोऽतीवक्षीणावस्था प्राप्तः। प्रथमस्य विजयबाहोर्नृपस्य समयेऽस्य तथा दुर्दशाऽभूद् यत्तेन सङ्घस्य शुद्धिर्विहिता, नूतनस्य सङ्घस्य च स्थापनाय बर्मातो बहवो भिक्षव आनीताः। नृपतेर्विक्रमबाहोः समयेऽस्य सङ्घस्य प्रकाम पतनमजायत। अतस्तेनायोग्या भिक्षवो बहिष्कृताः, अभयगिरि-महाविहार-जेतवनाना त्रयाणा सम्प्रदायाना मिथो मेलनमकारि। किन्तु माघेन नृपेण (१२१४–१२३५ खि०) बौद्धविहारान् विनाश्य जना हिन्दुधर्म स्वीकर्तु विवशता नीताः। सुमनःकूटस्य (आदम की चोटी) तीर्थयात्राऽस्मादेव कालात् प्रारब्धा। प्रथमेन विजयबाहुना (१०५९–१११४ खि०) सुमन.कूटस्य मार्गेऽनेका. पान्थशाला निर्मापिताः। प्रथमतोऽस्मिन्नेव युगे बुद्धदन्तस्य (दाढा) महत्त्व वृद्धिं गतम्। राजानोऽमु प्राप्तु परस्पर युध्यमाना आसन्। प्रथमो विजयबाहुः पराक्रमबाहुर्निश्शङ्कमल्लश्च राजान एतदर्थं मन्दिराणि निर्मापयामासुः।

चोलाना शासनकाले हिन्दुधर्मेण महत् प्रोत्साहन प्राप्तम्। तेषा प्रभुत्वस्यावसानेऽपि हिन्दुधर्मस्य प्रभावो न लोप जगाम। प्रथमविजयबाहोरुत्तरवर्तिनो भूमिपालाः पाण्ड्याना कलिङ्गाना वा राज्ञा सन्ततय आसन्। तैर्न केवल हिन्दुरूढय॰ पालिताः, अपि तु हिन्दुमन्दिराण्यपि निर्मापितानि। हिन्दुधर्मप्रसारेण सह वर्णव्यवस्थाया नियमानां पालनेष्वपि प्रवृत्तिरजायत। अन्त्यजा अपि पूजावसर लभेरन्निति विचार्य विजयबाहुना सुमन.कूटेऽधस्तादेको मण्डपो व्यधायि। एव बौद्धधर्मस्य भावनायाः सर्वथा प्रतिकूलाऽप्येषा जातिभेदप्रथा श्रीलङ्काया प्रचलिता बभूव।

सिंहलराज्यस्य पतनकाले (१२३५-१५०० ई०) देशस्याशान्तावस्थया बौद्धधर्मे प्रतिकूलः प्रभावो जातः, भिक्षूणामाचारः शिथिलोऽभूत्। येन चतुर्भी राजभिर्बहवोऽयोग्या भिक्षवो बहिष्कृताश्च। परं सर्वत्र दन्तप्रतिष्ठा तथैवाक्षुण्णासीत्। यथा यथा राजधानीपरिवर्तनमभूत् तथा तथा तत्र तदर्थं नूतन मन्दिरमपि निर्मीयते स्म। अस्मिन् समये महायानस्य प्रभाववृद्ध्या सहैवावलोकितेश्वरस्य (नाथस्य) बोधिसत्त्वसमन्तभद्रस्य (समनस्य) चापि पूजा प्रबलाऽभूत्।

अस्मिन् समये हिन्दुधर्मस्यापि प्रभावः समवर्द्धत। कतिपयैर्भूमिपालैर्न केवल हिन्दुधर्मः प्रोत्साहितः, अपि तु राजप्रासादेषु विविधान् धार्मिकान् विधीननुष्ठातु हिन्दुपुरोहिता अपि नियुक्ताः। हिन्दुदेवा न केवल देवालयेषु परं बौद्धविहारेष्वपि समपूज्यन्त। गम्पोलानिकटे लङ्कातिलकविहारे हिन्दुदेवाना मूर्तयः प्रत्यष्ठाप्यन्त। ग्रन्थलेखका बुद्धं धर्मं सङ्घञ्च स्तुत्वा ब्रह्मशिवप्रभृतीन् देवान् आशिषो याचितुं प्रवृत्ता अभूवन्। नाथसमनबोधिसत्त्वौ शिवलक्ष्मणौ चावाकल्प्येताम्।

शनै. शनैरागामिनि काले हिन्दुबौद्धधर्मयोः सम्मिश्रण वृद्धि जगाम। १६६० खिस्ताब्दात् १६८० खिस्ताब्दपर्यन्त कैण्डीनृपस्य कारागारे न्युषितेनैकेनाङ्गलजातीयेन राबर्टनाकृस-महोदयेन द्वयोर्धर्मयोर्भेदो नान्वभूयत, किन्तु तदा सङ्घस्य दशा शोचनीयाऽऽसीत्। १७५० तमे खिस्ताब्दे सङ्घसशोधनाय बहवो भिक्षव आहूता., तैश्च केवलमुच्चवर्णा जना एव दीक्षिताः। अमीषा शाखाऽधुना 'स्यामी' 'केलानी' चेति नाम्ना व्यवह्रियते। १८०२ तमे खिस्ताब्दे निम्नवर्णा जना अपि ब्रर्मावासिभिक्षुभ्यो दीक्षा प्राप्यामरपुरशाखा स्थापितवन्तः।

इदानीं श्रीलङ्कायां त्रयो धर्माः प्रचलिताः सन्ति—बौद्धधर्मो हिन्दुधर्मो भूतप्रेतपूजकस्तत्रत्यो धर्मश्च। वस्तुतोऽमीषामत्रात्यधिक सम्मिश्रणमभूत्। एतेषु बौद्धधर्मः स्यामी-केलानी-अमरपुर-रामन्यनामसु चतसृषु शाखासु विभक्तो दृश्यते। बौद्धधर्मावलम्बिनामर्धभागस्तावत् स्यामी-केलानीशाखासम्बद्धो वर्तते। अमरपुरसम्प्रदायादनयोर्विषयद्वये भेदो वर्तते—(१) प्रथम-शाखाद्वयावलम्बिन उच्चवर्णेभ्यो जनेभ्य एवोपसम्पदा वितरन्ति। (२) अनयोर्भिक्षव एकेनैव स्कन्धेन चीवर वहन्ति। अथ पुनरमरपुरशाखावलम्बिनो बौद्धा द्विजेभ्य एव दीक्षा ददति, उभौ स्कन्धावाच्छादयितु व्यवस्थां कुर्वन्ति। उभयोः शाखयोर्न कश्चन पारस्परिको द्वेषो विद्यते। रामन्यस्तावदाधुनिको रूढिविरोधी कार्यकालवादी सम्प्रदायोऽस्ति। स आचारशुद्धता मठाना निष्परिग्रहत्व निर्धनताव्रतधारण हिन्दुदेवानामपूजनञ्च समर्थयते। अस्य सम्प्रदायस्य भिक्षवोऽल्प-सख्याकाः सन्तोऽपि प्रभावशालिनः सन्ति।

श्रीलङ्काया मठेषु (पनसाल) निवसन्तो भिक्षवोऽद्यापि प्राचीनान् नियमान् परिपालयन्त' पात्राण्यादाय भिक्षार्थं निर्गच्छन्ति, परन्त्वनेन विधिना प्राप्तमन्न निर्धनेभ्यः पशुभ्यश्च वितीर्यते। ते भिक्षवश्च विहारे निष्पादितमन्न भुञ्जते। वर्षे सकृदेवोपसम्पदा सपद्यते, मासे च द्विः प्रातिमोक्षस्य (पातिमोक्खस्स) पाठः क्रियते। भिक्षवो मठेषु बालकान् निश्शुल्क शिक्षयन्ति, सर्वसामान्याना जनाना कृते धर्मग्रन्थपाठश्चापि भवति। गृहमेधिनो भिक्षून् पाठार्थ-मामन्त्र्य पुण्यभाजो भवन्ति।

**हिन्दुधर्मः**—अधुना श्रीलङ्कायाश्चतुर्थो भागस्तामिलप्रदेशवासिना हिन्दुधर्मावलम्बिना वर्तते। उत्तरजनपदेषु द्राविडशैलीमनुसृत्य निर्मितानि मन्दिराणि भूयासि सन्ति। परन्तु भागान्तरेष्वपि तेषा न्यूनता नास्ति। कैण्डीनगरे धातुमन्दिरस्य निकट एव द्वौ हिन्दुदेवा-लयौ स्तः। बौद्धानामत्रागमने न कोऽपि सङ्कोचः। बौद्धमन्दिरेष्वपि हिन्दुदेवाना मूर्तयः प्रतिष्ठा-प्यन्ते। इमाः प्राय एकस्मिन् विस्तृते गृहकक्षे भवन्ति। आसामेकस्मिन् भागे महात्मनो बुद्धस्यै-काऽनेका वोपवेशनमुद्राः प्रतिमा भवन्ति। वामे भागे च महाब्रह्ममहासामनकार्तिकेय-विष्णूना चतस्रो मूर्तयो भवन्ति। एतासु विष्णुमूर्तिराशय पूज्यते। अतिशयनवीनेष्वपि बौद्ध-मन्दिरेष्विमाश्चतस्रो मूर्तयो भवन्ति, विष्णोश्च पूजाया न किञ्चिच्छैथिल्य दृश्यते। बौद्धैराच-रिता विष्णुपूजा धर्मविरुद्धा न मन्यते, यतो हि बौद्धसाहित्ये विष्णुर्बुद्धभक्तः प्रतिपादितोऽस्ति।

**साहित्यम्**—पुरस्तात् प्रतिपादितमस्माभिर्यच्छ्रीलङ्कया वर्णमाला पालिधर्मग्रन्थाश्च बौद्धधर्माद् गृहीताः। ततः पूर्व श्रीलङ्कायाम् 'सिंहली' भाषा प्रचलिताऽऽसीत्। इयमपि द्वीपेऽस्मि-

न्तार्यैरेवानीताऽसीत्। प्राचीना 'सिंहली' अथवा 'एलू' इति नाम्ना प्रसिद्धोपभाषा वैदिक-संस्कृतभाषया सह गाढं सम्बन्धमादधाति। निम्नलिखितेष्वंशेषु संस्कृतभाषयैव भिद्यते दीर्घस्वराणां ह्रस्वीभावः, महाप्राणवर्णेषूष्मवर्णानामपि सन्निवेशः (सं० भार्या = सिं० बरिया), संयुक्तव्यञ्जनानामनायासेन संयोगराहित्यम्, (सं० धर्मरक्षितः = सिं० दमरकित), अनुनासिकलोपः, (सं० सङ्घः = सिं० सग)। अस्या महाराष्ट्रप्राकृतेन सह सम्बन्धोऽस्तीति पुरस्तात् प्रतिपादितमस्माभिः। प्राचीनेष्वभिलेखेष्वशोकस्य ब्राह्मीलिपिरुपलभ्यते। किन्तु प्रथमे शतकेऽस्या सहसा परिवर्तनं जायते। नूतना लिपिरान्ध्रदेशस्य लिप्या संवदति, सम्भवतस्तत एव आनीता च। अनेकेषां विदुषामिदं मतं यत् पालिभाषानिबद्धा बौद्धधर्मग्रन्थाः स्वान्तिमरूपमवन्तीनाम्नि प्रदेशे लेभिरे, लिपिश्चेयं तदानीं तत्र प्रचलिताऽऽसीत्। तत आन्ध्रदेशे प्रचलिताभूत्। खिस्तीये प्रथमे शतके वट्टग्रामणीनामकनृपतिसमये पालिभाषाया यत् त्रिपिटकं लिपिबद्धम्, तदित एव गतमासीत्। यदीदं सत्यम्, तदास्मिन् समये श्रीलङ्कायां न केवलं पालिनाम्ना नूतनाया भाषायाः प्रवेशोऽभूत्, अपि तु नूतना वर्णमालाऽपि सम्प्राप्ता।

प्रारम्भे मध्ययुगस्य (३६२–१०१७ख्रि०) पालिभाषाया उत्कर्षोऽभूत्। एतत्कालपर्यन्तं पालित्रिपिटकस्य टीकाः सिंहलभाषानिबद्धा आसन्। खिस्तीये पञ्चमे शतके बुद्धघोषेणासामनुवादः पालिभाषया कृतः। पालिभाषायाः प्रसिद्धं ऐतिहासिको ग्रन्थो 'दीपवंशः' खिस्तीये चतुर्थे शतके उपनिबद्ध आसीत्। षष्ठशतकासन्ने काले महावंशस्य निर्माणमभूत्। महावंशो नाम ग्रन्थः काव्यशैल्या निबद्ध आसीत्। अस्य भाषा शैली चेत्युभयमपि संस्कृतभाषाया गभीरं प्रभावं सूचयति। नवमे शतकेऽलङ्कारशास्त्रमुपजीव्य लिखिते 'सियबसलकर' नाम्नि सिंहलग्रन्थेऽपि संस्कृतसाहित्यस्य प्रभावः स्पष्टं परिलक्ष्यते। युगेऽस्मिन् महाकविकालिदासविरचितं रघुवंशमनुकृत्य कुमारदासेन जानकीहरणकाव्यमुपनिबद्धम्। अस्य युगस्य समाप्तिं यावत् सिंहलभाषाया संस्कृतभाषायाः पालिभाषायाश्च प्रभावः प्रारब्धोऽभूत्।

पोलोन्नरुवायुगे पराक्रमबाहुना बौद्धधर्मे पुनरुज्जीविते सत्यनेके ग्रन्थाः टीकाश्च पालिभाषया रचिता अभूवन्। एषु धर्मकीर्तेः "दाढवंशनाम्ना" "बुद्धदन्तस्येतिहासः" चूलवंशस्यारम्भिको भागश्चाग्रेष द्वितीयो ग्रन्थो महावंशस्येतिहासं स्वररचनाकालपर्यन्तं पूरयति। एष नूनं संस्कृतकाव्यालङ्कारैरत्यन्तं प्रभावितोऽस्ति। अस्य लेखकः कौटिल्यार्थशास्त्रप्रभृतीनां ग्रन्थानां ज्ञाताऽऽसीत्। एतत्कालिकी सिंहलकविता निःसंशयं कालिदासेन प्रभाविता विद्यते। अस्मिन् युगे कैश्चिद् भिक्षुभिः संस्कृतग्रन्था विरचिताः, अन्यैश्च व्याकरणकोशादिकमुपजीव्य पालिभाषया ग्रन्था उपनिबद्धाः। मोग्गालानस्य पालिव्याकरणस्योपजीव्यं किल चन्द्रगोमिव्याकरणमासीत्, अभिधानप्पदीपिका चामरकोषशैल्या लिखिताऽभूत्।

सिंहलराज्यस्य क्षयकालेऽपि (१२३२–१५०० ख्रि०) पालिभाषाया साहित्यरचनाऽविच्छिन्नाऽभूत्। एतत्कालपर्यन्तं भारते बौद्धधर्मोऽस्तं गत आसीत्। इतः कतिपयशतकेभ्यः पूर्वमेव पालिभाषाप्रचारोऽप्यस्तमित आसीत्, किन्तु श्रीलङ्कायां तस्मिन् समये थूपवंशनाम्ना 'स्तूपेतिहासः' चूलवंशस्यापरो भागश्च लिखितोऽभूत्। चूलवंशस्यायं भागः प्रथमभागापेक्षया

संस्कृतभाषया विशेषतः प्रभावितो वर्तते । तदानीन्तन्या सिंहलकवितायां सन्देशाभिधा नूतना शैली विकसिताऽभूत् । इमाः कविता महाकविकालिदासस्य मेघदूतमनुकृत्य लिखिताः सन्ति । आसु प्रायः कस्यचिद्देवस्य प्रसिद्धे स्थाने तदनुकम्पामधिगन्तु कश्चन पक्षी सन्दिश्य प्रेष्यते । कालिदासस्य मेघ इव स पक्षी सम्पूर्णं मार्गमुपदिश्यते । अनेन तदानीन्तनानां ग्रामाणां नगराणां प्रसिद्धानां प्रासादानाञ्च परिचयः प्राप्यते । कालिदासस्य प्रभावः १४७८ तमे खिस्तीये वत्सरे जाफनामहीपालस्य 'पदराजसेकरन्' इत्याख्यस्य जामात्रा अरसकेसरीत्याख्येन तामिलभाषयाऽनूदिते "रहुवसम्" इति नाम्ना प्रसिद्धे ग्रन्थे स्पष्टं दृग्गोचरीभवति ।

अस्मात् कालात् श्रीलङ्कायां कतिपयैः कारणैः सिंहलीभाषाया व्यवहारो वर्द्धितुमारेभे । भारते बौद्धधर्मस्य ह्रासेनाऽस्मिन् द्वीपे पालिभाषायाः प्रभावो ह्रासं गन्तुमारेभे । अस्याः स्थानं संस्कृतभाषा ग्रहीतुं समर्थाऽऽसीत्, किन्तु भारतवर्षस्य यवनैराक्रान्तत्वादस्या महत्त्वमपि शनैः शनैर्मन्दतां जगाम । सिंहलीभाषा द्वीपस्य मुख्या पूर्णा च भाषा संस्कृतभाषायाः साहाय्येनैव बभूव । सिंहलीभाषाया येषां शब्दानां परिभाषाणां चाभाव आसीत्, ते सर्वे संस्कृतभाषया औदार्येण तस्यै प्रदत्ताः । सिंहलीभाषाया व्याकरणम्, वाक्यरचना, शिक्षाशास्त्रं चेति सर्वं संस्कृतस्य साहाय्येन विकसितमभूत् । अद्यापि नूतनानां शब्दानामावश्यकतामनुभवन्ती सिंहलीभाषा स्वीयां मातरं संस्कृतभाषामेव शरणं गच्छति ।

## ३ वास्तुकला, मूर्तिकला चित्रकला च

( क ) **महावंशयुगम्**—श्रीलङ्कायां अमीषां कलानां विकासः परिपाकश्च भारतीयैर्विशेषतश्च बौद्धैः कृतः । वास्तुकलायाः प्रथमं उपयोगो भगवतो बुद्धस्यावशेषान् गोपितुं निर्मितेषु 'दागोबा' इत्याख्येषु धातुगर्भेषु स्तूपेषु समभूत् । श्रीलङ्कायाः प्रथमः 'दागोबा' सप्तत्युत्तरद्विशतहस्तप्रमाणः ( ४०५ फीट ) उन्नत आसीत् । दुष्टग्रामण्यो रुवनवेलीस्तूपः प्रथमं सप्तत्युत्तरद्विशतफीटप्रमाण आसीत्, आधारस्य व्यासश्चाशीत्युत्तरत्रिशतफीटप्रमाणः( ३८० फीट ) आसीत् । किन्त्वभयग्रामण्यो नृपस्य ( २९-१७ ई० पू० ) अभयगिरेः 'दागोबा' इत्याख्य इदानीं श्रीलङ्कायां सर्वतो महान् स्तूपोऽस्ति । प्रागस्य परिधिः पञ्चाशदुत्तरैकादशफीट-( ११५० फीट ) प्रमाण आसीत्, उन्नतिश्च चतुश्शतफीटप्रमाणाऽधुना शिखरभङ्गात् त्रिंशदुत्तरत्रिशतफीटप्रमाणैवावशिष्टा । अयमष्टैकड़पदवाच्यप्रमाणपरिमिते चतुरस्रे शिलातले स्थापितो वर्तते । प्राक्तना. सिंहलमहीपा अधिकाधिकविशालां 'दागोबाम्' निर्माप्य बौद्धे धर्मे स्वीयां भक्तिं प्रदर्शितवन्त. । 'दागोबा' इति स्तूपा मिश्रदेशीयेभ्यः पिरामिडनाम्ना प्रसिद्धेभ्यः स्तूपेभ्यो न्यूना न वर्तन्ते । अभयगिरेः स्तूपः 'गीजे' प्रदेशे वर्तमानात् तृतीयात् पिरामिडाद् विशालो वर्तते । सर इमर्सनटेनैण्टमहोदयेन गणितमस्ति यदेतेष्वेकस्य दागोबा इत्याख्यस्य यावतीनामिष्टकानामुपयोगः कृतोऽस्ति तावतीभिर्विंशतिफीटप्रमाणालिन्दैः सह गृहाणामष्टसहस्रं निर्मातुं शक्यते, एकञ्च समीचीनं नगरं वासयितुं शक्यते ।

श्रीलङ्कायां वास्तुकलया सह मूर्तिकलाया अपि विकासः प्रारब्धः । युगस्यास्य मूर्तयः सौधप्रस्तरेषूत्कीर्णाः सन्ति । इमा दक्षिणभारतस्य कृष्णानाम्न्या नद्यास्तटेऽवस्थि-

तयोरमरावती नागार्जुनकोण्डाख्यस्थानयोर्विकसितामान्ध्रशैलीमनुसरन्ति । इत्थ प्रतीयते यत् काश्चन मूर्तयो भारतादानीता. सन्ति । कोलम्बोसग्रहालये सगृहीताः श्रावस्तीमहाचमत्कार देव्या मायाया' स्वप्न च विभावयन्त्यः प्रतिमा ईदृश्य एव सन्ति । उपदेशमुद्रावस्थितबोधिसत्त्वसत-फणनागराजप्रभृतीना मूर्तयो जेतवनारामाख्यदागोबामलङ्कर्तु श्रीलङ्कायामुत्कीर्णा आसन् । रुवनवेलीस्तूपनिकटेऽवस्थिता दुष्टग्रामणीप्रतिकृतित्वेन प्रतिपाद्यमाना द्वितीयशतकस्य मूर्ति-रमरावत्यास्तादृशीभिः प्रतिकृतिभि सादृश्यमादधाति ।

(ख) **आरम्भिकं मध्ययुगम्**— (३०० १०१७ खि०) अस्मिन् काले दागोबा-ख्यस्याकारः शनै. शनैर्ह्रस्वता जगाम, पल्लवनृपशैलीकाः प्रस्तरगृहा निरमीयन्त । श्रीलङ्काया मूर्तिकलायाश्चित्रकलायाश्च कतिपया मनोहराः कृतयोऽस्मिन्नेव काले निर्मिता. । आसु गुप्तशैलीप्रभावः स्पष्टतया दृग्गोचरीभवति । आसु ध्यानमुद्रयोपविष्टा बुद्धप्रतिमा इसरुमुनिया-नरनारीमूर्तयश्च विशेषत उल्लेखनीयाः सन्ति । अनुराधपुरे एकस्मिन् पूर्णकलशमपरस्मिंश्च हस्ते सनालं पद्म गृह्णतो द्वारपालभूतस्य नागराजस्य पल्लवशैलीकासु मूर्तिष्वमरावतीशैल्या लालित्य चकास्ति । शनै' शनै' पल्लवप्रभाववृद्ध्या सह नागराजस्य स्थाने मकरवाहिन्यो नदीदेवता द्वारपाला भवन्ति । श्रीलङ्कायाः शिल्पिभिरत्र मकराः कमलानि चातीवसुन्दराणि चित्रितानि सन्ति । गुप्तयुगे आन्ध्रदेशस्य स्तूपानामर्धवृत्ताकाराणि निम्नानि सोपानानि पशुमूर्तयो लताश्चैव कलाभृतशैल्याऽलङ्क्रियन्ते स्म । इद सोपान चन्द्रशिलेत्युच्यते स्म । श्रीलङ्कायामस्य महान् प्रचारोऽभूत् । अनुराधपुरेऽनुश्रुत्या प्रसिद्धस्यैकस्य महिषीप्रासादस्य प्रवेशद्वारस्य चन्द्रशिला(इरिहन्द-गल) अतिरमणीया वर्तते । आन्ध्रातिरिक्तायाः पल्लवमूर्तिकलाया अन्यत्रानुसरण कृतमस्ति । इसुरुमुनियाख्ये स्थाने हस्तिना चित्राणामुत्किरणञ्च पल्लवशैलीमनुसरति ।

**सिगिरियादेवाङ्गनाः**—चित्रकलाया. सर्वोत्तमा आदर्शा. सिगिरियाख्ये स्थाने सन्ति । इमानि चित्राणि षट्शतफीटप्रमाणे उन्नते पर्वतके शिला उत्कृत्य निर्मितस्य दुर्गस्य भित्तिचित्रेषु समुपलभ्यन्ते । पञ्चदशशतेभ्यो वर्षेभ्यो निरन्तर प्रचण्डपवन धारासम्पातञ्च सहमानानि चित्राणीमान्याकाशगामिनीनामप्सरसा सन्तीत्येतत् तासा कण्ठपर्यन्त तदभितश्च वर्तमानेन मेघेन सूचित भवति । इमा मूर्तय पुष्पपूर्णानि पात्राण्याकलयन्त्यः पुष्पवृष्टि वा कुर्वन्त्यो दर्शिता. । इयमप्येका कल्पनाऽस्ति यदाकलितशोभनवस्त्रालङ्काराः काश्चन कुलवध्वः स्वीयाभिः परिचारिकाभिः सह पूजा कर्तुं बुद्धमन्दिर यान्ति । आसामाकृतिरतीवकमनीया, आलेखन चातीव रमणीयमस्ति । एतानि चित्राणि अजन्ता सित्तनवासल पनमलै काञ्चीपुराणा चित्रैः सवदन्ति ।

(ग) पोलोन्नरुवायुगे (१०२७–१२३५ खि०) बौद्धधर्मस्य पुनरुज्जीवनेन वास्तुकला मूर्तिकलाश्च प्रोत्साहिता. । अस्मिन् युगे पुनः कतिपये महान्तो दागोबा विहाराश्च निर्मिताः । एषु पराक्रमबाहुकृताः "देमलमहासाय" किरिनाम्नो विहारस्य स्तूपाः, लङ्कातिलका जेतवनारामविहाराश्च मुख्याः सन्ति । तदानीन्तनी वास्तुकला एकादशशतकीयया चोलशैल्या विशेषतः प्रभाविताऽस्ति । इद पोलोन्नरुवाशिवदेवालये (स० २) सम्यक् प्रकटीभवति ।

तदानीन्तन्यो मूर्तयोऽतीवविशालाकाराः सन्ति। विजितपुरस्य समीपे 'औकनी'-नामके स्थाने एकस्मिन् विशाले शिलातले बुद्धस्य सार्द्धपट्चत्वारिंशत्फीटप्रमाणा (अष्टपुरुषप्रमाणा इत्यर्थः) अत्युच्चा मूर्तिर्महता चातुर्येणोत्कीर्णाऽस्ति। अस्याः शिरः सार्द्धषट्फीट प्रमाण वामहस्तश्चैकादशफीटप्रमाणोऽस्ति। भगवतस्तथागतस्य चीवरस्य भङ्गिरतीवसमीचीनतया प्रदर्शितास्ति, शान्ताया मुखमुद्राया सौन्दर्य च वर्णनातीतमस्ति। पोलोन्नरुवाख्ये स्थाने बुद्धस्य निर्वाणावस्थाया शयानाया मूर्तेः पार्श्वे एका दण्डायमानमुद्रावस्थिता मूर्तिरस्ति। इय भगवतो बुद्धस्य प्रियशिष्यानन्दस्य मूर्तिः सभाव्यते। अस्या मुखे तथागतस्य निर्वाणजन्यो विषादो महता कौशलेनाभिव्यञ्जितोऽस्ति। विहाराणा सोपानेषु नागाना सिंहाना वृषभाणामश्वाना हसाना च चित्राण्यङ्कितानि सन्ति।

सिंहलराज्यस्य ह्रासकाले (१२३५-१५०९) अपि भारतीयप्रभावस्य निरोधो नाभूत्। पोलोन्नरुवादेवालयः (स०१) त्रयोदशशतकीया पाण्ड्यवास्तुशैलीमनुकृत्य निर्मितोऽस्ति। चतुर्थेन भुवनैकबाहुनाम्ना (१३४४-१३५३) नृपेण निर्मापितो गडलदेनियाविहारो विजयनगरशैलीकोऽस्ति।

**कृषिर्भूमिसेचनं च**—भारतीयैः श्रीलङ्कायै धर्मः सस्कृतिः कला एव न प्रदत्ताः, अपि तु कृषिभूमिसेचनस्य च नूतनानि साधनान्यपि प्रदाय द्वीपस्य भौतिकजीवनमत्यन्त प्रभावितम्। सिंहलवास्तव्यैः पर्वतेषु बन्धान् विधाय जलाशयनिर्माणपद्धतिर्भारतवर्षात् शिक्षिताऽऽसीत्। प्राग् यूरोपविदुषामिय धारणाऽऽसीद् यत् सिंहलिभिरिय कला मिश्रदेशवास्तव्येभ्यः शिक्षिताऽऽसीत्। किन्त्विदानीं नात्र कश्चन सशयो यत् तामिलदेशशिल्पिभिरेषा निर्माण कृतमासीत्। 'मिहिन्तले' नाम्नः स्थानात् प्राप्तस्याभिलेखस्यानुसारेण तामिलनियन्त्रितविधिमनुसृत्य विहारेषु जलं वितीर्यते स्म। श्रीलङ्काया. शिल्पिना कौशलकीर्तिर्दूरदेशेषु प्रससार। कश्मीरस्य कश्चिद् राजा स्वदेशे जलाशयान्निर्मापयितुमस्माद् द्वीपादेव शिल्पिन आकारयामास।

श्रीलङ्काया विकास एभिर्जलाशयैः सहाभूत्। एषु कतिपये दैत्याकारा जलाशया न केवल निर्मातॄणा लोकोपकारभावाना परिचाययन्ति; अपि तु शिल्पिना तादृश कौशल प्रकटयन्ति, येनाद्यतना शिल्पिन अप्याश्चर्यान्विता जायन्ते। लङ्काया बृहत्तमो जलाशयः 'मिन्नेरियत्रेवा' पञ्चदशक्रोशपरिमिते मण्डले प्रसृतोऽस्ति। अस्मिन् विंशत्यर्बुदगैलनाख्यप्रमाणपरिमितादप्यधिक जलमायाति। अद्यतना अपि शिल्पिनो बन्ध निर्मातुमस्मादधिक समीचीन स्थान विचेतु न पारयन्ति। स्थानमिदमभितः पर्वतैर्वलयित वर्तते। केवलो बन्ध एव पट्सहस्रद्विशत फीट (६२०० फीट) मितायामो वर्तते। अस्यौन्नत्य चत्वारिंशत्पञ्चाशत्फीटपरिमितमस्ति। अय बन्धस्तथा समीचीनपद्धत्या निर्मितोऽस्ति, यत् खिस्तीये तृतीये शतके महासेनद्वारानिर्माणानन्तरमेतत्कालपर्यन्तं पुनः सन्धानस्यातिन्यूनाऽऽवश्यकताऽनुभूता। श्रीलङ्काया पुरातनजलाशयानामवशेषा यत्र तत्रोपलभ्यन्ते। सर इमर्सनटेनैण्टमहोदयेनामीषा प्राचीनानां जलाशयाना विषये सत्यमेव लिखित यत् 'जलाशयानामेते महाकाया अवशेषाः श्रीलङ्कायाः प्राचीनगौरवस्यात्यन्तमभिमानार्हाः स्मारकाः सन्ति'। केनचिदपि प्राचीनेनार्वाचीनेन वा जातीयेनेदृश्यो रचना न

कृता या· श्रीलङ्काया महाकायजलाशयाना दानवाकारं प्रथिमानमतिशयितु शक्नुयुः। किन्तु प्रथिम्ना सहामीपा सा भीरताऽपि स्मर्तव्या, या श्रीलङ्कामत्यन्तमुर्वरा समृद्धा धनधान्यसम्पन्ना-मकरोत्। भारतीयशिल्पिनाममुपकार श्रीलङ्का कदापि न विस्मर्तुं शक्ष्यति।

**उपसंहारः**—श्रीलङ्का आर्याणामागमनात् पूर्वं परस्परं युध्यमानाना वन्यजातीयाना द्वीपमासीत्। आर्यै· सा समृद्धा सभ्या सस्कृता च कृता। द्वीपायास्मै तैर्धर्मः, वर्णमाला, भाषा, साहित्य कला च प्रादायिषत। कृष्या समग्रं द्वीपं सस्यश्यामल विहितम्। षोडशशताब्दीं यावत् श्रीलङ्काया एको गुरुर्भारत एवासीत्। एतदनन्तरं तया यूरोपस्य शिष्यत्वमङ्गीचक्रे। पाश्चात्यसभ्यतायास्तस्या गभीरः प्रभावोऽभवत्। किंचित्काल सा भारत विस्मृतवती। किन्तु यदा तस्या राष्ट्रियतायाः स्वचैतन्यस्य चोद्बोधोऽभूत्, तदा तया पुनर्भारते स्वदृष्टिर्निक्षिप्ता। अनागरिकधर्मपालसदृशो महापुरुषः पुनर्भारतेन सह श्रीलङ्कायाः सम्बन्ध सहितवान्। अद्य श्रीलङ्का स्वतन्त्राऽस्ति, भारतस्यामितानुपकारान् स्मरन्ती सा तेन सहाधिकाधिक सास्कृतिक-सम्पर्क स्थापयति।



# तृतीयोऽध्यायः

## उदीच्यदेशानां दिग्विजयस्योपक्रमः

### ( गन्धारे अफगानिस्ताने च भारतीयसंस्कृतेः प्रसारः )

**अवतरणिका**—भारतवर्षस्य प्राचीनेतिहासः प्रायः पश्चिमोत्तरसीमातो जायमानाना-मीरान–यूनान–ऋषिक–शक–पहलव–हूण–अरब–तुर्क–अफगान–मङ्गोल–मुगलादिजातीनामा-क्रमणरूपेण समुपस्थाप्यते, किन्तु एतद्दिशातो भारतवर्षेण देशान्तरेषु यत् सांस्कृतिकमाक्रमण विहितं तस्य क्वचनाप्युल्लेखो न क्रियते। खीस्तीये प्रथमे शतके यदा भारतदेशो वैदेशिकैरत्यन्तमाक्रान्त आसीत्, तदैव भारतीयधर्मदूता मध्य-एशियाया उत्तर-एशियायाश्च सांस्कृतिकं दिग्विजय कुर्वन्तो दृश्यन्ते। न केवलमारबेभ्यः पूर्वं भारतस्य सर्वेऽप्याक्रमणकारिणो भारतीयधर्मसंस्कृतिरागेण रक्ता अभूवन्, परमेतद्दिशातो भारतेन खिस्तीयपष्ठशतक यावत् स्वकीय सांस्कृतिकमभियानमनुवर्तित-मासीत्। इमानि भारतीयान्याक्रमणानि विलक्षणान्यासन्। तैरन्यदेशाना राजनीतिकविजया-पेक्षया धर्मविजयो विशेषतो ध्यातः। विजयोऽय वीतरागाणा तपस्विना साधकाना काषायवस्त्र-धारिणा भिक्षूणा सेनाभिः सम्पन्नोऽभूत्। इमाः सेना यत्रोपस्थितास्तत्र ताभिः संस्कृतेः सभ्यताया-श्चालोकः प्रसारितः। अमीषा प्रयत्नेन भारतीयसंस्कृत्योदीच्या दिशि मध्य-एशिया चीन-मगोलिया-कोरिया-जापानपर्यन्तप्रदेशाना धर्मविजयः सम्पादितः। साइबेरियास्थतुषारावृतप्रदेशपर्यन्त भारतीयसंस्कृतेर्विजयवैजयन्ती दोधूयमानाऽभूत्। इमा अखिला घटनास्तेषु शतकेष्वभूवन्, यदा मध्य एशियातः शकाना हूणाना तुर्काणा च सेनाभिरेशियायूरोपयोरधिकाः प्रदेशाः प्रबलैराक्रमणैराक्रान्ताः क्रियमाणा आसन्, सर्वतो विध्वसाश्च विधीयमाना अवर्तन्त। किन्त्वस्मिन्नेव काले भारतीया अमीषा मूलस्थाने समुपस्थाय इमान् सभ्यान् सम्पादयन्त आसन्, एकस्य विशालस्य सांस्कृतिकसाम्राज्यस्य मूल स्थापयन्तोऽभूवन्।

## उदीच्यदेशानां दिग्विजयस्य पद्धतिः

उदीच्यदेशाना दिग्विजयो बहूनि शतकानि भारतीयाना सततपरिश्रमस्य परिणाम आसीत्। स च शनैः शनैर्विविधानि रूपान्तराणि प्राप्नुवन् पूर्णता गतोऽभूत्। अफगानिस्तान गन्धार ( उत्तरपश्चिमसीमाप्रान्त ) कश्मीरं च केन्द्र विधाय दिग्विजयस्यास्यारम्भोऽभूत्।

एभ्यः स्थानेभ्यो भारतीया आवासका बौद्धभिक्षवश्च प्रथम खोतनकूचातारीमनदीतटेषु वसति चक्रुः, पश्चात् चीनं च ययुः। चीनाद् भारतीयसंस्कृतेः कल्याणमयः सन्देशः पूर्व कोरियादेश ततश्च जापानं प्राप्तः। सप्तमे शतके भारतीयज्ञानकिरणाः कश्मीरनेपालमार्गेण

त्रिविष्टप ( तिब्बतम् ) प्रविष्टा अभूवन्। त्रिविष्टपधर्मदूताश्च संस्कृतिमिमा मङ्गोलिया-मञ्चूरिया-पर्यन्त नीत्वा उदीच्या दिग्विजय समवशेषितवन्तः।

वर्तमानसमयेऽफगानिस्तान-गन्धार-कश्मीराणामधिका जना मुस्लिममतावलम्बिनो यवनाः सन्ति। अफगानिस्तानदेशः प्रथमत एव भारतात् पृथगासीत्; १९४७ खिस्ताब्दस्य १५ अगस्ततः पाकिस्ताननिर्माणेन पश्चिमोत्तरसीमाप्रान्तो गन्धारोऽपि पृथगभूत्, कश्मीरस्य प्रश्न एतत्कालपर्यन्तमपि सम्यक् समाहितो नाभूत्। किन्तु स्मर्तव्यमिद यत् प्राचीनकाले भारतस्य स्वाभाविकी सीमा हिन्दूकुशपर्वतमालाऽऽसीत्। इमे प्रदेशा भारतस्याङ्गान्यासन्, वंशस्य भाषायाश्च दृष्ट्याऽद्यापीमे भारतस्य भागाः सन्ति, पठानजातीया वैदिकाना पक्थाना वंशजा उच्यन्ते, पठानजातीयाना पख्तोः, काफिरिस्तानस्य काफिरी, कश्मीरस्योत्तरभागे चितरालस्योपगिरः ( बोलियॉ ) काश्मीरीभाषा चार्यभाषापरिवारस्य भाषाः सन्ति। अधुना यद्यपि इस्लामधर्मेण ते प्रदेशा भारतात् पृथक् कृताः सन्ति, किन्त्वस्मिन् विषये तथ्यद्वय स्मरणीयमस्ति। प्रथम त्विदमस्ति यद् इस्लामोऽस्मिन् प्रदेशे चिरेण प्रसृतोऽभूत्, द्वितीय चेद यदत्रैतत्काल यावत् तत्र भारतीयसंस्कृतेः समुपासका निवसन्ति। प्राय इदमवगम्यते यत् सप्तम्यामष्टम्या वा खिस्ताब्दगताब्द्यामिस्लामधर्मस्य प्रसारेण सहैवेमे प्रदेशा महात्मनो मुहम्मदस्यानुयायिन' सवृत्ताः। किन्तु स्मर्तव्यमिद यदारब्याणा याभिर्विश्वविजयिनीभिः सेनाभिरासिन्धोरास्पेनाद् विशालप्रदेशा विजिता आसन्, ताः काबुले विद्यमानं हिन्दुराज्य जेतु नाशकन्। ता असफला भूत्वा ६९८ तमे ७०० तमे वा खिस्ताब्दे प्रतिनिवृत्ताः। ९६१ तमे खिस्तीये वर्षे अलप्तगीनेनास्य प्रदेशस्य हिन्दुजनेषु प्रथम यवनराज्य स्थापितम्। महमूदगजनवीनामकेन नृपतिना काबुलस्य 'ब्राह्मणशाही' वशात् काबुलमपहृतम् ( १००३ ई० )। पर नैतन्मन्तव्य यत् ततः प्रभृति तत्र इस्लामधर्मः प्रसृत आसीत्। पञ्चदशशताब्दीपर्यन्तमत्र यवनेतरेषा बाहुल्य विशेषत आसीत्। बाबरमहोदयेन स्वकीयात्मकथाया 'तुजके बाबरी' इति प्रसिद्धाया बाजौराख्ये प्रदेशे काफिरविध्वसस्य विस्तृतं वर्णन कृतमस्ति। एतदनन्तर सर्वत्र शनैः शनैर्यवनाना प्रसारेण हिन्दुभिर्दुर्गमपर्वताः शरणीकृताः। अद्यत्वे यवना इमान् 'काफिर' इति आचक्षते, अमीषा प्रदेशश्च 'काफिरिस्तान' इति नाम्ना कथ्यते। अग्रे एतत् प्रतिपादयिष्यते यत् काफिरिस्ताने इतः सप्ततिवर्षेभ्यः पूर्वं १८९५ ईसवीत इस्लामधर्मो विस्तृतिं नीतोऽभूत्। अफगानिस्ताने गन्धारे च वैदिकयुगादेवार्यसस्कृतेः प्रभुताऽऽसीत्। भूयिष्ठाना पाश्चात्यविदुषा मतमनुसृत्य वैदिकसाहित्ये एतत्प्रदेशस्थाना कुभा ( काबुल )-क्रमु ( कुर्रम ) गोमती ( गोमल )प्रभृतिनदीना वर्णनमस्ति। ईसवीयषष्ठशतकात् पूर्वतोऽय प्रदेशो वैदेशिकैराक्रमणैराक्रान्तोऽभूत्। ५०० खिस्ताब्दात् पूर्वत. ३३१ ईसवीयपूर्वपर्यन्तमय प्रदेश ईरानसाम्राज्यस्य भाग आसीत्, पुनरय सिकन्दरेण विजितः, किन्तु चन्द्रगुप्तमौर्येण ( ३२४–३०० ई० पू० ) तस्योत्तराधिकारिण सेल्यूकस ( ३०५ ई० ) पराजित्य हिन्दूकुशपर्वतो मौर्यसाम्राज्यस्य सीमा कृतः। ईसवीयप्रथमे शतकेऽत्र बौद्धधर्मस्य तावान् प्रबलः प्रचारोऽभूत्, यद् बलखप्रदेशो लघुराजगृहपदेन व्यपदिश्यमानोऽभूत्। अत्र बौद्धधर्मस्य महाविहाराः स्थापिता अभूवन्। अत्रत्यैः पण्डितैर्मध्य एशियादेशे चीने च धर्मप्रचारः कृतः।

## उत्तरपश्चिमभारते बौद्धधर्मस्य प्रचारः

प्रदेशेष्वेषु बौद्धधर्मस्य प्रचारः सम्भवतः सम्राजोऽशोकस्य ( २७३–२३६ ई० पू० ) समये ई० पू० तृतीयशतकमध्येऽभूत् । तस्य त्रयोदशे प्रधाने शिलाभिलेखे कम्बोजेषु धर्मदूतस्य प्रेषण वर्णितमस्ति, तस्मिन् समये च सम्पन्नायास्तृतीयस्या बौद्धमहासभाया अनन्तर महावशवर्णनानुसारं ( १२।३३–४० ) स्थविरमहारक्षितो यवनदेश जगाम, तत्र च तेन भगवतो बुद्धस्योपदेश श्रावयित्वा एकलक्षसततिसहस्रसख्याका जना बौद्धाः कृताः, स्थविरमज्झन्तिकेन कश्मीर गन्धार च गत्वाऽशीतिसहस्रसख्याकेभ्यो जनेभ्यो धर्मचक्षूंषि प्रदत्तानि, एकलक्षसख्याकैश्च प्रव्रज्या ग्राहिताः ( १२।२७ ) । सख्या इमा अवश्यमतिशयोक्तिपूर्णाः सन्ति, किन्त्वत्र सशयो नास्ति यत् तदा एषु प्रदेशेषु प्रथममेव बौद्धधर्मस्य व्यापकः प्रचार आसीत् । चन्द्रगुप्तेन यूनानवास्तव्या हिन्दूकुशाख्यस्य पर्वतस्यापरस्मिन् पारे प्रक्षिप्ता आसन्, तत्र बलखाख्ये देशे ( बैक्ट्रिया = बाख्त्री ) तेषा प्रभुताऽऽसीत्, अशोकस्य शिलालेखेषु वर्णिता योनाः सभवतः बाख्त्रीस्था यवनदेशवासिन आसन् । धर्मरक्षितस्य यवनदेशोऽप्ययमेव प्रतीयते, यतो हि तदा हिन्दूकुशस्य दक्षिणभागे किञ्चन यवनराज्यं नासीत् ।

बौद्धधर्मोऽत्रागमनानन्तर राजसंरक्षणस्यानुकूलपरिस्थित्याऽभूतपूर्वमुत्कर्ष प्राप्नुवन्नभूत् । अशोकस्य निर्बला उत्तराधिकारिणो हिन्दूकुशपर्वतपर्यन्त स्वप्रभुतामक्षुण्णा स्थापयितु नाशकन् । बाख्त्रीस्थैर्यवनैर्हिन्दूकुशपर्वतमुल्लङ्घ्योत्तरपश्चिमभारते स्वकीय राज्य स्थापितम् । षोडशेऽध्याये इद प्रतिपादयिष्यते यदिमे यवनदेशवासिनो भारतीयसस्कृत्या केन प्रकारेण सस्कृता अभूवन् । प्रारम्भेऽमीभिर्यवनभूमिपालैः शैवो धर्मोऽङ्गीकृतः, पुष्करावत्याः ( पश्चिमगन्धारस्य ) यवन शासकाना मुद्रासु नन्दिमूर्तिरस्ति, किन्तु शाकलस्य (स्यालकोटस्य) यवननृपो मिनेन्द्रः (मिलिन्द.) १५५ ईसवीयपूर्ववर्षे बौद्धधर्ममङ्गीकृतवानिति, स धर्मोऽतीव प्रोत्साहनं प्राप ।

बौद्धधर्मस्य महान् संरक्षकः कुशाणसम्राट् देवपुत्रः कनिष्क आसीत् । कुशाणवशस्य सस्थापकः कदफिससः प्रथमो बौद्ध आसीत् । ईसवीयद्वितीयशतकात् पूर्वमनेन स्वदूतेन चीने बौद्धधर्मस्य प्रथम पुस्तक प्रेषितमासीत् । अस्य सूनुर्विमो द्वितीयः कदफिससः ( ६५–७५ ई० ) यद्यपि शैव आसीत्, किन्त्वस्योत्तराधिकारिणा देवपुत्रकनिष्केण ( ७८–१०१ ई० ) धर्मान्तरेषु सहानुभूतिं रक्षित्वापि बौद्धो धर्मोऽतीव प्रोत्साहितः । तदा कश्मीरस्य गन्धारस्य चाचार्य्येष्वनेके मतभेदा आसन्, तान् दूरीकर्तुमनेनोपश्रीनगर कुण्डलवने विहारे चतुर्थी बौद्धमहासभा समाकारिता । अत्राश्वघोषवसुबन्धुभ्यां विशिष्ट कार्य सम्पादितम् । मतभेदं दूरीकर्तु त्रिपिटकस्य विभाषाभिधा टीका लिखिताऽभूत्, टीकेयं ताम्रपत्र उत्कीर्य एकस्मिन् स्तूपे स्थापिता । अधुनाऽस्याः टीकायाश्चीनभाषानुवाद एवोपलभ्यते । स्तूपस्यावशेषा एतत्कालं यावन्नाज्ञायन्त ।

कनिष्केणाशोकेनैवानेके स्तूपा निर्मापिताः । पुरुषपुरे ( पेशावरे ) तेन चतुःशतफीटप्रमाणसमुन्नतस्त्रयोदशभूमिकः स्तूपः स्थापितः । कनिष्ककाले बुद्धस्य प्रथमा मानवाकारा

मूर्तिर्निर्मिताभूत्। ततः पूर्वं भगवान् बुद्धश्चरणचिह्नस्य धर्मचक्रस्य बोधिवृक्षस्य छत्रस्य वा प्रतीकैरभिव्यज्यमान आसीत्। अधुना भक्तशिल्पिभिर्बौद्धस्तूपान् भूषयितु नूतनविधा बुद्धमूर्तय उत्कीर्णाः। इमा गन्धारशैलीका मूर्तयः प्रतिपाद्यन्ते। आसा वैशिष्ट्य दक्षिणावर्ताः कुटिलाः कुन्तलाश्चीवरस्य भङ्गाश्च सन्ति। इत्थ प्रतीयते यत् कनिष्केण तदुत्तराधिकारिभिश्चासा मूर्तीना प्रभूता राशयो निर्मापिताः। उत्खननेनैतादृशमूर्तीना सहस्राण्युपलब्धानि सन्ति।

आर्तिनाशभावनाभावितैर्जनसेवाव्रतदीक्षितैरमीभिः परिव्राजकैर्महायानबौद्धधर्मस्य पूर्वमफगानिस्तान–गन्धार–कश्मीरेषु प्रसारो विहितः, पुनरितो मध्य-एशियाया अन्यदेशेषु। चतुर्थी पञ्चमीं वा शताब्दीं यावदत्र बौद्धधर्मस्यानेके प्रसिद्धा विहारास्तीर्थानि च स्थापितान्यभूवन्। श्रद्धालवो भक्ता इमानि साक्षात्कर्तु चीनत आगन्तु प्रारेभिरे। चीनयात्रिभिः फाहियान-(४००–४१४)-सुगयुन-(५१७–१८)-युआनच्वाङ्ग(६२९–६४५ ई०)महोदयैरमीषा प्रदेशाना विवरण लिखितमस्ति। इमानि यात्राविवरणानि नूतनोत्खननानि प्राचीनानि भौगोलिकनामानि चोपजीव्यात्र अफगानिस्ताने भारतीयसस्कृतेः प्रसारो वर्णयिष्यते। अस्मिन् विषये कश्मीरस्य महत्त्वाधायक कर्तृत्व प्रकाशयिष्यते।

## अफगानिस्ताने भारतीयसंस्कृतिः

भारतीयसंस्कृतेः प्रभाव परिचाययितु प्रधानतया त्रिप्रकारकाणि साक्ष्याणि सन्ति—(१) देशस्यास्य भौगोलिकानि जातिवाचकानि च नामानि, (२) चीनयात्रिणा विवरणानि, (३) आधुनिकान्युत्खननानि। यथाक्रमममीषा वर्णन निम्नलिखितमस्ति (१) सस्कृतमूलकनामानि—अफगानिस्तानस्यानेकेषा स्थाननाम्ना जातिनाम्ना च सस्कृतभाषायाः समुद्गमोऽभूत्। नामानीमानि देशयोर्द्वयोः प्राचीनसास्कृतिकसम्पर्कान् स्मारयन्ति। पूर्वमिद निवेदितमस्ति यद् हिन्दूकुशपर्वतपर्यन्तप्रदेशो मौर्यसाम्राज्यस्याङ्गमासीत्, कुषाणसाम्राज्येऽस्यानेके प्रदेशाः सम्मिलिता आसन्। गुप्तसाम्राज्ये स्कन्दगुप्तेन ४५५ तमवर्षतः ४६७ तमवर्षान्तराले हूणा अस्मिन् प्रदेशे निर्दय पराजिता आसन्। दशमीं शताब्दीं यावत् प्रदेशेऽस्मिन् हिन्दूना शासनमासीत्। अतोऽत्र सस्कृतनाम्ना समुपलब्धिः सर्वथा स्वाभाविक्येव। अपर चाफगानिस्तान प्राचीनकाले भारतात् पाश्चात्त्यदेशगामिनि चीनदेशगामिनि च महामार्गेऽवस्थितमासीत्। भारतीयाः सार्थवाहा उत्तरभारतस्य बहुमूल्यानि पण्यानि समादाय मधुपुरीं (मथुराम्), स्यालकोटम् (मद्रदेशस्य राजधानीं शाकलम्) तक्षशिलाम् (पूर्वगन्धारस्य राजधानीम्) अतिक्रम्य सिन्धुनदीं कुभासङ्गमे उद्भाण्डपुरे (ओहिन्दे) पारयन्ति स्म। तदनन्तर ते कुभातटेन कापिशीं (यूनानीकपिस्सा) समागच्छन्ति स्म। हिन्दूकुशपर्वतस्योपत्यकायामिद महत्त्वपूर्ण व्यापारकेन्द्रमासीत्, अधुनेद काबुलनगरात् पञ्चविंशतिक्रोशानुत्तरपश्चिमयोर्बेग्रामनामकवसतिरस्ति। फ्रेञ्चविद्वद्भिः कृतादुत्खननात् कुषाणस्य गुप्तस्य च युगस्य प्रथमशताब्दीतश्चतुर्थशताब्दीं यावद्धस्तिदन्तशिल्पकौशलस्यानेकानि रम्याणि प्रतिरूपाणि रोमनसाम्राज्यादागतैः कास्यवस्तुभिः सह प्राप्तानि सन्ति। इमानि द्वयोर्देशयोर्व्यापारं सूचयन्ति। अत्रत्यमृद्वीकानिष्पन्ना सुरा कापिशायिनीत्युच्यते स्म। पाणिनिनास्य निर्देशः कृतोऽस्ति (४।२।९९), कौटिल्येन च लिखितमस्ति यत् पाटलिपुत्रस्य

नृपेभ्यः सुरेय समानीयते स्म। कापिश्या अथ व्यापारमार्गो हिन्दूकुशपर्वतं पारयति स्म। अस्य पर्वतस्यौन्नत्येन यवनदेशवास्तव्या अमु परापोनिसस्( Paraponissus )पदेन व्यपदिशन्ति स्म। उपरि श्येनेति संस्कृतशब्दस्य रूपान्तरमिदमासीत्, अस्यायमर्थ आसीद् यदस्य पर्वतस्यौन्नत्य श्येनोड्डयनादधिकमस्ति। अमुमतिक्रम्यायं मार्गो बाह्लीकं ( बलख ) गच्छति स्म। बाह्लीकः ( बलखः ) प्राक् चीनादागन्तॄणा पाश्चात्यदेशमुत्तर दक्षिण च दिश गन्तॄणा चानेकेषा विशिष्टाना पथा केन्द्रमासीत्। अत्र न केवलाश्चीनदेशस्था ईरानदेशवास्तव्या रोमनिवासिनो भारतीयाश्च व्यापारिणः सङ्गच्छन्ते स्म, परममीषा देशाना सस्कृतयोऽपि सगता भवन्ति स्म। अग्रे वर्णयिष्यते यद् बाह्लीकेन भारतीयसस्कृतिप्रसारेऽत्यन्त साहाय्यमाचरितमस्ति। उत्तरापथदेशस्यास्मिन् व्यापार-महामार्गे वर्तमानत्वात् प्राचीनकालत आर्य्याणा निवासस्थानत्वाचाफगानिस्ताने निम्ननिर्दिष्टानि भौगोलिकनामानि संस्कृतमूलकानि सन्ति।

## नदीनां नामानि

अफगानिस्तानस्य प्रसिद्धा नद्यः काबुल-हरिरुद्-अरगन्दाब-हेलमन्देत्याख्याः सन्ति। मैकडानल-कीथमहोदयाना मतानुसारेण ऋग्वेदस्य ( ५।५३।९ ) मन्त्रे यस्याः कुभाया उल्लेखोऽस्ति, सा वर्तमाना काबुलनदी अस्ति ( वैदिक इडेक्स १-१६२ )। मार्कण्डेयपुराणे कुभातटनिवासिन· कुबुकपदेन व्यपदिष्टाः। काबुलनदीमुत्तरदिशात आगत्य पञ्जकोरा-नदी मिलति, अस्याः प्राचीनमभिधान गौरीति वर्तते यवनशब्देन 'गौरेओस' ( Gauraios ) इत्यनेन साम्यमादधाति। पश्चिमत आगत्य सिन्धुनदीं मिलन्त्यौ कुर्रम-गोमलेत्याख्ये अन्ये नद्यौ वैदिकसाहित्ये ( ऋ० ७।३२।२९ मन्त्रे ) प्रतिपादिते क्रमुगोमत्यौ प्रतीयेते ( वैदिक इडेक्स १।१९९।२३८ ) पूर्वतः पश्चिमदिशि प्रवहन्त्या हरिरुदनद्यास्तटे हिरातनगरमस्ति। प्राचीने कालेऽस्या नद्या नामधेय 'सरयू' इत्यासीत्, ईराननिवासिन एना 'हरयू' इति यवना एरियस ( Arius ) इति च व्यपदिशन्ति। अत एव च हिरातमेरियेति पदेन व्यपदिश्यते स्म। सरस्वतीशब्दतोऽरगन्दाबेत्यपभ्रष्टरूपनिर्माणस्योल्लेखो विद्वद्भिः कृतोऽस्ति। पश्चिमे हामूनामके सरसि पतन्ती हेलमन्दनदी प्राचीनानामीरानवासिना 'हएतुमन्त' नदी सस्कृतस्य च 'सेतुमन्त' ( मती ) सरिदस्ति। तीरबन्दे तुर्किस्तानकोहसुफैदकोहेत्यनयोः सन्धि-स्थलतो निःसरन्ती मर्वस्थानमतिक्रम्य कहाकुममरुस्थले विलीना भवन्ती मुर्गाबनदी अवेस्तेत्यस्य 'मौरु' प्राचीनेरानस्य 'मर्गु' सस्कृतस्य च 'मृग' इत्यस्ति। 'मृग' महाभारते मध्य एशियायास्तासु चतसृषु शकजातिषु सख्यातोऽस्ति, यासा मूलस्थान मध्य-एशियाप्रदेशे आसीत्।

## स्थानानां नामानि

अफगानिस्तान-ईरानयोः सीमावर्ति 'सीस्तानम्' सस्कृत-शकस्थानस्यापभ्रष्ट रूपमस्ति। खिस्ताब्दद्वितीयशतकात् पूर्व मध्य-एशियात आगताना तत्तज्जातीयानामत्र निवासात् प्रदेशेना-नेनेदमभिधानं प्राप्तमासीत्। इत्थमेव 'दरगई-जाबुलिस्तान-माल्कन्द' इमानि क्रमेण 'दार्गल-

जबल-मालावनाः' अमीषा रूपान्तराणि प्रतीयन्ते। सभापर्वणि ( ४६।२१ ), अट्टसालिनीत्याख्ये ग्रन्थे च ( पृ० ३५० ) वर्णित 'चित्रकम्' सम्भवतः चितरालमस्ति। कम्बोज- पामीरस्य 'बदख्शा' इत्यस्य च प्रदेश आसीत्। अस्य च राजधानी द्वारका ( आधुनिकं दर्वाज इति ) वस्तुतो मध्य-एशियातो भारते आगन्तृणा कृतेऽफगानिस्ताने प्रथम द्वारमासीत्। अन्यानीदृशानि नामानि श्वेतपथ ( सफेद कोहपर्वत साची, भाग १, प्लेट स० ८९ ), लम्पाक( लमगान-जलालाबादस्य मण्डलम् ), नगरहार( जलालाबाद ), बर्कण( वखान ), कोकनद ( वजीरिस्तान ) इत्यादीनि सन्ति। आधुनिकाः कन्धारा यद्यपि प्राचीनगन्धारेभ्यः ( रावलपिण्डीपेशावरमण्डलेभ्यः ) सर्वथा भिन्नाः सन्ति, तथापि द्वयोर्विलक्षण साम्यमस्ति। ईरानस्य द्वे प्राचीने सस्कृतनामधेयेऽप्युल्लेखनीये स्तः। अस्य पूर्वोत्तरकोणे स्थितस्य, उमरखय्यामस्य जन्मभूमेः 'नीशापुरस्य' उल्लेखो नैशजनपदनाम्ना पतञ्जलिना कृतोऽस्ति। कास्पियनसागरस्य दक्षिणे तटे वर्तमान—'मजन्देरान' इति प्रान्त ईरानदेशस्य प्राचीनलेखेषु लिखितो 'वर्कानः' सस्कृतस्य च वर्केन्य ( वृकाणा देशो वा ) आसीत्। अस्य ईरानीयम् 'गुरगाम' इति रूप मार्कण्डेयपुराणे 'गुर्गन' पदेन व्यवहृतमस्ति।

## जातीनां नामानि

पठान शब्दः पन्थशब्दाद् अफगानशब्दश्च अश्वकायनशब्दात् प्रादुर्भूतोऽस्तीति विद्वद्भिः प्रतिपादितमस्ति। अफगानानां विभिन्नसम्प्रदायाना ( कबीले ) वक्ष्यमाणानि नामधेयानि सस्कृतसाहित्ये समुपलभ्यन्ते—अफ्रीदी=आप्रीता', ( पाणिनिः ४।२।५३, राजन्यादिवर्गे ) मोहमन्द=मधुमन्तः, ( भीष्मपर्व, ९।५३, पा० ४।२।१३३, कच्छादिगणे, पा० ४।३।९३, सिंहादिगणे )। अफ्रीदीना प्रदेशोऽद्यत्वे 'तीराह' इत्युच्यते। प्राचीनसमयेऽय त्रिरावतिकः, अर्थात् तिसृणा नदीना देश उच्यते स्म—एका नदी कुभा ( काबुल ), द्वितीया सिन्धुः, तृतीया च वरा ( बारा–यस्यास्तटे पेशावरनगरमस्ति ) ( महाभाष्यम्, २।१।२० )। इत्थमेव मोहमन्दसम्प्रदायस्य निवासस्थानं दीरबाजौरप्रदेशो द्विरावतिकेति नाम्ना प्रसिद्धः, अर्थाद् द्वयोर्नद्योर्देशः, एका कुनारनदी द्वितीया च पञ्जकोरानदी महाभारतस्य सभापर्वणि ( ३२।४ ) सिन्धुनदीतटनिवासिनीना योद्धृजातीना स्वभावमुद्दिश्य यल्लिखितमस्ति तदद्यापि सत्य प्रतीयते—इमा गिरिगह्वरवासिन्यो महाबलाश्च सन्ति, एकनायका निवसन्ति। ( "सिन्धुकूलाश्रिता ये च ग्रामणीया महाबलाः" सभापर्व ३२।९ )। अन्यजातीनामिमा उल्लेखनीयाः सन्ति—**गोरिणः**—इमे पञ्जकोरानदीसमुद्गमसमीपे निवसन्ति, भारतीयेतिहासे शिहाबुद्दीनगोरीकृताक्रमणादमीपा नाम सुपरिचितमस्ति। महाभारते मार्कण्डेयपुराणे च घोरकनाम्ना इमे वर्णिताः सन्ति। हुञ्जा( काश्मीरपश्चिमोत्तरप्रदेश ) निवासिनः सभापर्वणि ( ४८।१३ ) निर्दिष्टा हंसकायनाः प्रतीयन्ते, किञ्च खैबरदर्रेति सज्ञा कर्त्रीणा जातीना पूर्वजा एव सभापर्वणि ( ४८।१२ ) सम्भवतः कयव्यत्वेनोल्लिखिताः सन्ति। पाणिनेरष्टाध्याय्या गणपाठेषु जातीनामेतासा निर्देशोऽस्ति—४।३।११७ सूत्रे पर्श्वादिगणे कार्षापणम् ( कर्शबन ), ४।१।११० सूत्रे अश्वादिगणे पविन्दायनम् ( पविन्दा ), काशिकाया ४।१।४८ सूत्रे भागवित्तिः ( बुगती, सिन्धबिलोचिस्तानस्य काचन

जातिः ) । सभापर्वणोऽष्टचत्वारिंशेऽध्याये प्रदेशस्यास्यानेका जातय उल्लिखिताः सन्ति—पौरकाः ( पौरे ), कर्णप्रवरणाः ( कनवारी ), कुण्डमनाः ( कुण्डूजप्रदेशवास्तव्याः ) । वङ्क्षुनद्या उपोद्गम गल्चाभाषाभाषिण्या एकस्या मुञ्जान्या जातेः प्राचीन नाम मुञ्जायनेति प्राप्यते, पञ्जकोराचितरालयोर्मध्ये सीमाप्रान्तस्थस्य कस्यचित् सम्प्रदायस्य तरखानस्य तार्क्ष्यायणेति च ।

उपरिष्टान्निर्दिष्टानि भौगोलिकानि नामानि गौरवान्वितस्य तदानीन्तनस्यातीतस्य स्मारकाणि सन्ति, यदा भारतस्याफगानिस्तानेन निकटतमः सांस्कृतिकः सम्बन्ध आसीत् । अष्टाध्याय्या वर्णनेन नामानीमानि प्राग्बुद्धकालस्य सम्पर्कं सूचयन्ति । एतदतिरिक्त तात्कालिक विस्तृतमितिहासमवगन्तुन्नास्माक पर्याप्त साधनमस्ति । फ्रेंचविद्वद्भिः कृतान्युत्खननानि चीनदेशीयानां यात्रिणा विवरणानि च खिस्ताब्दस्य प्रथमासु षट्सु शताब्दीषु प्रदेशेऽस्मिन् भारतीयायाः संस्कृतेः प्रसार सम्यक् प्रकाशयन्ति । सम्प्रति तान्युपजीव्य विषयस्यास्य समासेन प्रतिपादन कुर्वाणाः प्रदेशस्यास्य तादृशा राज्याना प्रदेशानां च वर्णन करिष्यामो यानि भारतीयस्य प्रभावस्य प्रधानकेन्द्राण्यासन् ।

## भारतीयायाः संस्कृतेः प्राचीनानि केन्द्राणि

अफगानिस्तानस्य पुरातत्त्वोत्खनननानामधिक कार्यं फ्रेंचविद्वद्भिः कृतम् । फ्रासेन १९२२ तमे ईसवीयेऽब्दे देशस्यास्य पुरातत्त्वानुसन्धानाय त्रिंशद्वर्षेभ्य एकाधिकारः सम्प्राप्तः । फ्रेंचविदुषामुत्खननैः सिद्धमिदमभूद् यदत्रानेकप्रकाराः कलाशैल्यः प्रचलन्त्य आसन्, या भारतीयासु कलासु मध्य-एशियाकलासु च सेतुबन्धरूपा अभूवन् । स्टाइनमहोदयेन हेलमन्दनाम्न्या नद्या अन्तिमे पिच्छिले भागे एकस्मिन् विहारे यूनानदेशशैलीकानि कानिचन चित्राणि समुपलब्धान्यासन् । इमानि उत्तरपश्चिमभारतस्य यवनबौद्धकलाया मध्य एशियादेशस्य बौद्धकलायाश्च मध्यवर्तीनि सन्ति । अतोऽफगानिस्तानदेशो मध्य-एशियादेशस्य सांस्कृतिकः सेतुबन्धोऽस्तीति कथन यथार्थम् ।

युआनच्वागमहोदयवर्णितक्रमेणाफगानिस्तानस्य गन्धारस्य च कतिपयानि प्रधानानि भारतीयराज्यानि समासेन वर्ण्यन्ते—

( १ ) **बलखः**—(चीनीनाम—पो-हो) हिन्दूकुशस्योत्तरस्मिन् भागे आमूनाम्न्या नद्यास्तटे बौद्धधर्मस्येदं महत्तमं केन्द्रमासीत् । अत्रास्य धर्मस्यैतादृशः प्रचार आसीत्, बौद्धधर्मस्यावशेषाश्चैतादृश्या तथा प्रभूतसंख्यायां समुपलभ्यमाना आसन्, यदिद स्वल्प राजगृह प्रोच्यते स्म । युआनच्वागस्य समयेऽत्र चत्वारः सङ्घारामास्त्रिसहस्राणि हीनयानानुयायिनो भिक्षवश्चासन् । राज्यस्यास्य सर्वतो महान् विहारो नवसङ्घारामो नवविहारो वासीत् । नवविहारस्य पुरोहितैर्यवनमत स्वीकृत्याष्टम्यां शताब्द्या बगदादं भारतीया संस्कृति नेतु महत्साहाय्यमाचरितम् । युआनमहोदयस्य कथनेन प्रतीयते यद्धिमालयादुत्तरवासिनः सर्वे बौद्धाचार्या नवविहारेण सम्बद्धा आसन् । विहारेऽस्मिन् बुद्धस्यैका रत्नजटिता मूर्तिः, भिक्षापात्रम्, मार्जनी, दन्ताश्चासन् । मूर्तिरियं बहुकृत्वोऽर्थलोलुपैर्नृपैराक्रान्ताऽऽसीत्, 'नाना-

वर्णस्य भिक्षापात्रस्य चाकचक्येन नेत्राणि चमत्कृतिं प्राप्नुवन्ति स्म, मार्जन्या मूलं रत्नजटितमासीत्, दन्तः प्रायः सार्द्धाङ्गुलिदैर्घ्यः, पादोनसार्द्धाङ्गुलिविस्तार आसीत्' अवशेषा इमे महत्या श्रद्धया पूज्यन्ते स्म। अत्र प्राचीनानां बौद्धाचार्याणामनेके स्तूपा आसन्। इदं च मन्यते स्म यद् बौद्धधर्मे सर्वप्रथमः स्तूपोऽत्रैव स्थापित आसीत्। अत्र युआनच्वाङ्ग-महोदयेन प्रज्ञाकरनामकाद् भिक्षोरभिधर्मस्य कतिपये ग्रन्था विभाषाशास्त्रं चाधीतमासीत्।

(२) बामियां—प्राचीनकालादेव प्रदेशोऽस्य स्वकीयाभिर्भीमकायाभिर्मूर्तिभि-र्विख्यातोऽस्ति। अस्य राजधान्याः पूर्वोत्तरभूभागे एकस्य पर्वतकस्यैकस्यामुपत्यकायां युआन-महोदयेन चत्वारिंशदधिकशत (१४०) फीटप्रमाणोन्नता पञ्चाशदधिकशत(१५०)फीट—प्रमाणोन्नता वा मूर्तिः साक्षात्कृताऽऽसीत्। 'इमामभितः सौवर्णो वर्णः प्रकाशते, अस्याश्च महार्हैर्भूषणैः स्वचाकचक्येन चक्षूंषि हतप्रभाणि क्रियन्ते।' भारतस्य प्रवेशद्वारि स्थिता मूर्तिरियं चीनदेशात् तीर्थयात्राप्रसङ्गेन भारतमागतानां भक्तानां चेतसि सम्मदं समुत्पादयन्ती विदेशं गमिष्यतो भारतीयान् धर्मदूतान् प्रोत्साहयन्ती चासीदित्यनुमीयते। इयं 'सुर्खबुत' नाम्ना तिष्ठन्त्यद्यापि प्रकाशते। 'इयं शिलामुत्कीर्य चूर्णकर्करलेपैः (मसाले और पलस्तर से) कमनीयतां नीतासीत्' कनकालङ्कारैर्भूषिता चासीत्। कालस्य क्रूरैराघातैः कर्करलेपः समाप्तिं नीतोऽस्ति, स्वर्णालङ्काराश्चाक्रमणकारिभिर्लुण्ठिता अभूवन्। सेनापतिटैलब्रोटमहोदयेन 'थियोडोलाइट' नामकयन्त्रमानेन त्रिसप्तत्युत्तरैकशतफीटदघ्नी (१७३ फीट) मूर्तिरियं निश्चिताऽस्ति। युआनमहोदयद्वारा पूर्वं प्रतिपादितमुन्नतत्वमानुमानिकमस्ति। युआनमहोदयेनात्रान्यैकैकशतफीट-दघ्नी (१०० फीट ऊँची) भगवतो बुद्धस्य कास्यप्रतिमा निर्दिष्टास्ति। श्रीटैलब्रोटमहोदय इमां विंशत्युत्तरैकशतफीटदघ्न्या (१२० फीट ऊँची) एकया नार्याः प्रस्तरमूर्त्या प्रमाणयति। तृतीयोल्लेखनीया मूर्तिर्निर्वाणावस्थायां शयानस्य भगवतो बुद्धस्याऽऽसीत्। युआनमहोदयेनास्या दैर्घ्यं सहस्रफीटपरिमाणं लिखितमस्ति। अद्यत्वे एकस्मिन् शिलातले शयनावस्थायामेका भीमकाया मूर्तिरुपलभ्यते। इदानीमियं महान् अजगर (अज्दहा) उच्यते। सम्भवतो युआनमहोदयेन वर्णिता मूर्तिरियमेवास्ति।

सप्तमे शतके 'बामिया' प्रदेशे दश सङ्घारामाः सहस्रं भिक्षवश्चासन्। चीनयात्रिणाऽत्र द्वौ भिक्षू महासाङ्घिकसम्प्रदायस्य साक्षात्कृतावास्ताम्, किन्तु प्रायेण बौद्धा लोकोत्तरवादिन आसन्। १९२२ तमे १९२४ तमे च खीस्ताब्दे फ्रेंचपण्डितैः 'बामिया' प्रदेशस्यावशेषाननुसन्दधद्भिः कतिपयानि भित्तिचित्राणि समुपलब्धान्यभूवन्। तान्येतानि 'अजन्ता' (नवमी दशमी च गुहा) 'यीरन' (मध्य-एशिया) इत्येतयोरनन्तरं बौद्धकलायाः प्राचीनतमान्युदाहरणानि सन्ति। ईसवीये पञ्चमे षष्ठे च शतके निर्मितानि चित्राणीमानि भारतस्य ईरानदेशस्य चीनदेशस्य च प्रभावाणां विचित्राणि सम्मिश्रणस्थानानि सन्ति, प्रकटयन्ति च यद् 'बामिया' प्रदेशो न केवलं प्रसिद्धानां वणिक्पथानां सङ्गमस्थानमासीत्, किन्त्वनेकासां संस्कृतीनां सन्धिस्थलमप्यासीत्। १९३० तमे ईसवीयेऽब्दे भीमकायानां बुद्धानां (बुद्धमूर्तीनाम्) सविधेऽन्वेषणेन काश्चन प्राचीना गुहा उपलब्धाः सन्ति, आसां प्रसाधनचित्रेषु भारत-ईरान-यूनानदेशानां प्रभावाणां

सम्मिश्रणमस्ति। पञ्चम्याः शताब्द्या ईरानकलायाः प्रभावोऽत्र तथा वृद्धिं गच्छति यत् 'बामियां' प्रदेशस्य प्राक्तनी कला 'ईरानीयबौद्धी' इति नाम्ना व्यपदिष्टास्ति। १९३७ तमे ईसवीयेऽब्दे 'बामियां' प्रदेशात् पूर्वं फोण्डुकिस्थानस्योत्खननेन प्राप्तानि सप्तमशतकस्य बौद्धविहारस्य मृण्मयमूर्तयो भित्तिचित्राणि च गुप्तयुगस्य पाल्युगस्य च कलाः स्मारयन्ति। 'बामियां' प्रदेशाद् भोजपत्रेषु लिखिताः संस्कृतग्रन्थाः प्राप्ताः सन्ति। इमे महायानसम्प्रदायस्य सर्वास्तिवादिना चाभिधर्ममहासाङ्घिकानां विनयसम्बन्धिग्रन्थाना केऽप्यंशाः सन्ति। सर्वास्तिवादिनामभिधर्मग्रन्था अन्यत्र विरला एव प्राप्ताः।

**(३) कापिशी**—(किया पी-शी) सप्तमे शतके इदमफगानिस्तानस्य प्रधानं राज्यमासीत्। समग्रं काफिरिस्थान घोरबन्दः पञ्जशीरस्य तटानि चास्मिन्नेव सम्बद्धान्यासन्। चरीकरत उत्तरस्मिन्नस्य राजधान्या बेग्रामे (काबुलतः पञ्चविंशतिक्रोशानुत्तरम्) बलखगामिनस्त्रयो मार्गाः सम्मिलिता भवन्ति स्म। अतोऽस्यासाधारणं महत्त्वमासीत्। युआनकालेऽत्रत्यो राजा त्रिरत्नपूजकस्य बौद्धधर्मस्य भक्त आसीत्। राज्ये शतं सङ्घारामाः षट्सहस्रसंख्याका महायानसम्प्रदायस्य भिक्षवश्चासन्। बौद्धधर्मातिरिक्तानां धर्माणां प्रचार आसीत्। अमीषां दशमन्दिराणि सहस्रमनुयायिनश्चासन्। एषु दिगम्बराः पाशुपताः कापालिकाश्चाप्यासन्।

युआनमहोदयेनात्रत्यानामनेकेषां सङ्घारामाणां चमत्कृतिकलितानां स्तूपानां भगवतो बुद्धस्यावशेषाणां च यद्वर्णनं कृतमस्ति तदसम्भवकपोलकल्पितकथाभिः पूर्णमस्ति। भगवान् बुद्धः कुरुक्षेत्रात् पश्चिमायां दिशि न कदापि गतः, किन्तु युआनमहोदयेनैकं तादृशं स्थानं दृष्टं यत्र भगवता बुद्धेन खदिरदन्तधावनं प्रयुक्तमासीत्। तस्य च तत्रारोपणेन घनं खदिरवनमुत्पन्नमभूत्। अन्यस्मिन् स्थाने स हस्ति (पील) रूपं धृत्वा समागत आसीत्। एकस्मिन् सङ्घारामे बुद्धस्य चतुरङ्गुलिदीर्घा (षडिंचमिता) शिखाऽऽसीत्, कर्षणेनेयं षोडशाङ्गुली (एकफीटमिता) भवति स्म। अन्यस्मिन् सपादाङ्गुलो (एकेंचमितः) दन्त आसीत्, तृतीयस्मिन् कपालास्थि आसीत्। श्रद्धावतां भक्तानां कृते कश्चनापि चमत्कारोऽविश्वसनीयो नासीत्। यदाफगानिस्ताने बौद्धधर्मस्य प्रचारोऽभूत् तदा भक्तैरैतिहासिकीं परम्परां तिरस्कृत्यास्य प्रदेशस्य प्राचीनानि तीर्थानि भगवतो बुद्धस्य कयाचिद् घटनयाऽवशेषेण वा पावयितुं प्रारब्धानि, तदर्थञ्च नवा नवा वार्ताः कल्पिता अभूवन्। अनैतिहासिक्योऽपि इमा वार्ताः प्रदेशेऽस्मिन् बौद्धधर्मस्य प्रबलं प्रभावं प्रकाशयन्ति।

१९३७ तमे ईसवीयेऽब्दे कापिश्या (बेग्रामस्य) उत्खननेन हस्तिदन्तस्यानेकानि वस्तूनि समुपलब्धानि। एषु यानि हस्तकौशलानि सन्ति, तानि कुशाणयुगस्य मथुराशैल्या संवदन्ति। प्राचीनभारतस्य हस्तिदन्तशिल्पस्यादर्शानां सर्वोत्तमः सर्वतो महांश्च संग्रहोऽस्य यावदत्रैवोपलब्धोऽस्ति।

कापिश्या (बेग्रामस्य) मूर्तिषूत्कीर्णानि तोरणद्वाराणि केशप्रसाधनानि मिथुनं मकरः कल्पवल्लीसदृशादीर्घा दोलायमाना लताः कमलानि च प्रथमाया द्वितीयस्याश्च शताब्द्या मथुरायाः कुशाणमूर्तिकलयाऽत्यन्तं संवदन्ति। अत्र युवतयो मथुराया अमरावत्याश्च कलाशैलीमनुसृत्य दर्पणान् करेषु गृहीत्वा स्वं शृङ्गारं केशविन्यासञ्च विदधत्यो दृश्यन्ते। मथुरावदत्राप्येकस्य तोरणस्य नीचैश्चित्रिता युवतयोऽवलोक्यन्ते। कापिश्यां (बेग्रामे) गुप्तमथुराऽमरावती-

शैलीवद् मञ्जीरचित्राण्यनेकत्र दृश्यन्ते, एषु प्रसाधिका स्वस्याः स्वामिन्या गुल्फस्थानाच्छिथिल मञ्जीर यथास्थान निवेशयन्ती दृश्यते। इत्थमेव कण्ठहारकुण्डलयोर्यथास्थाननिवेशस्य कापिश्याश्चित्रण मथुरानागार्जुनकोण्डास्थानेषूपलब्धदृश्यैः सादृश्य भजते। मथुराकलायां मुक्तालुब्धा हसा अनेकत्र चित्रिताः सन्ति। एषु स्नानानन्तर युवतिभिर्निष्पीडितात् सुदीर्घात् केशपाशाद् निःसृतान् जलबिन्दून् मुक्ताभ्रान्त्या विचिन्वता हसानामतीव मनोरमं चित्रणमभूत्। इद कापिश्यामपि दृश्यते। कापिश्याः कलाया नृत्यदृश्यान्यपि मथुरायाममरावत्याञ्च दृश्यन्ते, अत्र वीणाकरतालमृदङ्गाना चित्रण कृतमस्ति। अश्वमारूढाया नार्या यथा चित्रण मथुराकलाया हर्षचरिते चोपलभ्यते, तथैव कापिश्यामपि प्राप्तम्।

**काफिरिस्तानप्रदेशे यवनेतरप्रभावः**—मध्ययुगे काबुलनगरस्य महत्त्ववर्द्धनेन कपिशाया राज्यं प्रभावश्च क्षीणतामगमत्। प्रधानमार्गाद् दूरीभूतत्वेन दुर्गमेऽस्मिन् प्रदेशे इस्लामधर्मस्य प्रसारो नाभूत्। यवनाश्चात्रत्यान् निवासिनः काफिरान् प्रदेशञ्च काफिरिस्तानं कथयितु प्रवृत्ताः। पञ्चसहस्रवर्गमीलपरिमितोऽयं प्रदेशोऽफगानिस्तान-चितराल बदख्शा-कुनारतटाना मध्येऽवस्थितोऽस्ति। राबर्टसनमहोदयेन कथितं यद् यैरिस्लामधर्मो न स्वीकृतः, ते यवनैर्दशमे शतके उर्वरभूमिभूषितेभ्यः प्रदेशेभ्य एषु दुर्गमेषु तटेषु बलान्निष्कासिताः। यूलमहोदयस्य मतेनेद मार्कोपोलोद्वारा निर्दिष्टस्य काबुलकश्मीरयोर्मध्यवर्तिनो बोल्लोरनामकस्य बिल्लौरनामकस्य वा तस्य विशालस्य प्रदेशस्यैकमङ्गमासीत्, येनेस्लामधर्मो नाङ्गीकृत आसीत्। १०२० तमे ईसवीयेऽब्दे महमूदगजनवीनाम्ना नृपेण १३९८ तमे ईसवीयेऽब्दे च तैमूरेण काफिरान् नाशयितु प्रदेशोऽयमाक्रान्तः। अकबरेण जहाँगीरेणापि च प्रदेशेऽस्मिन् स्वीया दूताः प्रहिताः, परन्तु काफिरा' स्वातन्त्र्येण स्वीयान् धर्मान् पालयन्तोऽभूवन्। एषा सम्प्रदाये विभिन्नाना देवाना पूजा प्रचलिता आसीत्। अमीषा सर्वतो महान् देवः 'इम्रः' युद्धस्य च देवः 'गिशः' (अस्ति) पशुबलिः, नृत्य सगीत चामीषा धार्मिकपूजाया आवश्यकान्यङ्गानि सन्ति। एतानि प्राक्कालिकानां हिन्दूना बौद्धानाञ्च प्रभावस्यावशेषाः प्रतीयन्ते। काफिराणा विषय इदमुच्यते यत्—इमे मुण्डितशिरस्का भवन्ति, किन्तु, शिरःस्वमीषामतीव दीर्घा शिखा भवति। एषु यदि कश्चनैकदा यवनो भूत्वा पुनः स्वधर्म जिघृक्षति तदा तस्य शिखा (कारुच) धारयितु तावदधिकारो न भवति, यावत् स युद्धे एक यवन न हन्ति। इमे पितृन् मूर्तीश्च पूजयन्ति, प्रतिग्राम मन्दिराणि च निर्मान्ति।

१८८९ तमेऽब्दे वर्तमानयुगे प्रथमवारमेको वैदेशिको राबर्टसनमहोदयः प्रदेशेऽस्मिन् बहुकालमवात्सीत्। १८९५ तमे च भारतशासनेनात्राफगानप्रभुत्वमङ्गीकृतम्। तावत् कालपर्यन्तमत्रेस्लामधर्मस्य प्रवेशो नाभूत्। १८९५ तमाब्दतोऽमीरअब्दुर्रहमानेन प्रदेशेऽस्मिन् स्वीया प्रभुतां स्थिरयितु काफिरानिस्लामधर्मावलम्बिनो विधातु प्रयत्नः प्रारब्धः।

**(४) कुभा (काबुलः)**—ईसवीये सप्तमे शतक इम देश कश्चित् तुर्कजातीयो नृपः शास्ति स्म। वर्णमालाऽपि तौर्की (तुर्की) आसीत्, किन्तु भाषा भारतीयाऽभूत्। लोकास्त्रिरत्नस्य (बौद्धमतस्य) उपासका आसन्। १९३४ तम ईसवीयेऽब्दे काबुलात् पूर्वोत्तरयोः खैरखानेला-

खयस्य पर्वतस्योत्खननेन मन्दिरमेकमुपलब्धम्, रचनाऽस्य मध्यभारतस्य गुप्तकालिकेन शैवमन्दिरेण साम्य भजते। अत्र श्वेतचन्द्रकान्ताश्म(श्वेतसंगमरमर)निर्मितैका सूर्यप्रतिमा प्राप्ता। अस्या पञ्चमशतकस्येरानकलायाः प्रभावो विलोक्यते। उदाहरणाभ्यामाभ्या स्पष्टमस्ति यदत्र बौद्धेतरप्रभावोऽपि पर्याप्त आसीत्।

(५) गजनी—अस्मिन् राज्ये कन्वारमतिरिच्य समग्रो दाक्षिणात्यः पाश्चात्यश्चाफगानिस्तानप्रदेशः सम्मिलितोऽभूत्। सप्तमशतकस्य पूर्वार्द्धेऽत्र परःशताना भूतप्रेताना पूजया सह त्रिरत्नपूजको बौद्धधर्मो महतीं प्रतिष्ठामवाप। अनेकशतानि सघारामा· सहस्र भिक्षवश्चासन्। अशोकनिर्मिताः दश स्तूपा बहूनि च देवमन्दिराण्युपलब्धानि।

(६) लम्पाकः—(लमगान, चीनी–लेनपो)—युआनच्वागनामकचीनदेशीययात्रिमतानुसारमेतद्देशवास्तव्याः सगीतकलाया कुशला आसन्, किन्तु तेऽविश्वसनीया वञ्चकाश्चाभूवन्। अत्र दश सङ्घारामाः कतिपये चानुयायिनः सर्वे च महायानमतावलम्बिन आसन्। अन्येषा देवाना मन्दिराणि बहून्युपलभ्यन्ते स्म। चीनदेशे भारतीयसस्कृतेः प्रसारेऽनेन लघुना देशेनापि भागो गृहीतः। सप्तम ईसवीये शतके लम्पाकस्थेनैकेन ब्राह्मणेन चीनदेशस्य भाषाया तन्त्रशास्त्रस्यैकः सस्कृतग्रन्थोऽनूदितः।

(७) नगरम्—(ना-की-लोहो वर्तमानो जलालाबाद) सप्तमे शतकेऽत्र काश्चन जनान् विनान्ये सर्वे जना बौद्धा आसन्। सघारामा बहवः, किन्तु भिक्षवोऽल्पा अभवन्। अत्रत्ये द्वे तीर्थस्थाने बहुप्रसिद्धे आस्ताम्। नगरात् क्रोशत्रय दक्षिणपश्चिमाया दिशि गोपालनागनामधेयायामेकस्या गिरिगुहाया श्रद्धासम्पन्नाना भक्ताना भगवतो बुद्धस्यैक भास्वर प्रतिबिम्ब दृग्गोचरमभवत्। युआनमहोदयेनैतद्विषये एकातीव मनोरमा कल्पनामयी वार्ता लिखिता। फाहियानेन युआनेन चोभाभ्यामिद दृष्टमासीत्। फाहियानेन लिखित यत् "दशभ्यः पदेभ्योऽधिक दूर गत्वा दर्शनेन भास्वरप्रतिबिम्बस्य छायेव साक्षात्क्रियते, तस्य स्वर्णाभवर्णो लक्षणञ्च स्पष्टतया स्वच्छतया च दृश्यते, पर क्रमशः समीपगमने सर्व स्वप्नवद् विलीयते। सर्वेषा देशाना राजभिरस्य प्रतिबिम्बस्य प्रतिकृति निर्मातु चित्रकलाकुशलाः श्रेष्ठाः शिल्पिनः पुनः पुनः प्रहिता·। किन्तु कश्चनाप्येतच्चित्रयितु नाशकन्।" जलालाबादात् सार्द्धक्रोशद्वय दक्षिणस्या दिशि हिलो (हड्डा) इत्याख्ये स्थाने भगवतो बुद्धस्य उष्णीषास्थि कपालधातुर्वा सुरक्षितमस्तीति प्रतिपाद्यते स्म। फाहियानोऽस्यातीव हृदयग्राहि युआनश्च चमत्कृतिपूर्ण वर्णनमकरोत्। १९२५ तमे १९२८ तमे चाब्दे फ्रेञ्चपण्डितेन बारथोमहोदयेनास्य स्थानस्योत्खननेन द्व्यशीत्यधिकचतुश्शतमूर्तीनामेकत्रिंशदधिकपञ्चशतस्तूपानाञ्च ध्वसावशेषाः प्राप्ताः। इमे स्तूपा वास्तुकलादृष्ट्या भर्हुत-साञ्च्योः स्तूपेभ्यो भिन्नाः सन्ति। इमेऽतीवोन्नतास्तन्वाकाराः शोभनाश्च सन्ति।

(८) गान्धारः—(किरोन–तो–लो) अत्र पेशावरकोहाटमण्डले जनजातीय-(कबायली) भूभागस्य बाजौरोदीरस्य प्रदेशाश्च सनिविशन्ते। बहुशो रावलपिण्डीमण्डलमप्यस्मिन् सम्मिलितमभूत्। युआनच्वांगसमये राज्यमिद दुरवस्थापन्नमासीत्। सहस्रं सङ्घारामा

भग्नाया विकृतायाञ्चावस्थायामासन्। किन्तु प्राचीने काले इद बौद्धधर्मस्य महत्त्वपूर्णं केन्द्रमासीत्। अत्र नारायणदेव–असङ्ग–वसुबन्धु–मनोरथ–पार्श्वसदृशा बौद्धधर्मस्यानेके महान्त आचार्या अभूवन्। कनिष्केणास्मिन्नेव प्रदेशे पुरुषपुरं वासितमासीत्। मध्य–एशियाप्रदेशे सांस्कृतिके प्रसारे राज्येनानेन महत्साहाय्यमाचरितम्। नवमं दशमं वा ईसवीय शतकं यावद् बौद्धशास्त्राणामुच्चशिक्षणार्थं पुरुषपुरस्य सुदूरं ख्यातिरासीत्। तदा मगधाद् वीरदेवोऽत्र प्रेषितोऽभूत्, यतो हि बौद्धधर्मस्य सर्वोत्तमा आचार्या अत्रैव न्यवसन्।

गन्धारस्य सर्वोत्तमं तीर्थं पेशावरनगरे कनिष्कनिर्मापितः सुङ्गयुनवर्णनानुसारं त्रयोदशभूमिको महास्तूप आसीत् ( वाटर्स १।२०७ )। इयं तत्समयस्य तादृशी सर्वोत्तमा रचनाऽऽसीत्। फाहियानेन पञ्चशतकस्य प्रारम्भे चीनाल्लङ्कां यावत् सर्वानपि महतः स्तूपान् दृष्ट्वा लिखितम्—"यात्रायामनेके स्तूपा मन्दिराणि च दृष्टानि, परं तादृशं मनोहरं भव्यं चान्यत्रोपलब्धमिति। एवमुच्यते—यज्जम्बुद्वीपे स्तूपोऽयं सर्वोत्तमो वर्तते'। अयं काष्ठमय आसीत्, प्राक् चतुर्नवत्युत्तरचतुश्शतहस्तप्रमाणोन्नतो बभूव ( ७८२ फुट ), युआनकाले भग्नावस्थायामस्यौन्नत्यं षट्पष्ट्युत्तरद्विशतहस्तप्रमाणम् ( ४०० फुट ) अवशिष्टम्। तत्कालं यावदयं विद्युत्पातेनाग्निदाहेन च त्रिर्नष्टो भूत्वा पुनर्निर्मितोऽभूत्। युआनसमयेऽस्य पुनः परिष्कारः क्रियते स्म। वर्तमानसमयेऽस्य महास्तूपस्याधारमात्रम्, तदपि च जीर्णावस्थायामवशिष्टं वर्तते।

गन्धारस्य राजधान्यां पुष्कलावत्याम् ( चारसद्दानाम्नि स्थाने ) अपि कतिपये भव्याः स्तूपा आसन्। स्थानमिदं बौद्धधर्मस्य प्रचारस्य समीचीनं केन्द्रमासीत्। युआनो लिखति—"अनेके साधवो महात्मानश्च मध्यभारतादागत्यात्र लोकानुपदिशन्ति स्म, यथा वसुमित्र आचार्यः।"

( ९ ) **उद्यानम्**—अस्मिन् राज्ये पञ्जकोरा–स्वात–बाजौर–बुनेरप्रदेशाः सम्मिलिता आसन्। अयं स्वातनद्यास्तत्सहायकनदीनाञ्च प्रदेश आसीत्। मध्य-एशियायां बौद्धधर्मं प्रापयितुमनेन महान् भागो गृहीतः। स्वातनदीमुभयतश्चतुर्दशशती सङ्घारामाणामासीत्, अत्राशीतिसहस्राधिकलक्षं भिक्षवो निवसन्ति स्म। किन्तु युआनकाले राज्येऽस्मिन् बौद्धधर्मो ह्रासं प्राप्तः। फाहियानेनातः प्रभृत्युत्तरभारतस्य सीमायाः प्रारम्भः स्वीकृतः। प्राचीनां जनश्रुतिमनुसृत्योच्यते स्म—यदत्र बुद्ध आगतः, एतत्स्मारकमेकं बुद्धपदमासीत्।

अत्रैकस्मिन् तीर्थे सा शिला प्रदर्श्यते स्म, यस्यां तथागतेन काषायं वस्त्रं प्रक्षालितम्। फाहियानः श्रद्धामयैः शब्दैर्वदति—"काषायवस्त्रस्य तन्तूनां चिह्नानि सम्प्रत्यपि तथा दृश्यन्ते, यथा शिलायां शिल्पमाचरितं भवेत्।" अस्मिन्नेव प्रदेशे बोधिसत्त्वेन शिविवत् शरणागतं कपोतं रक्षितुं श्येनरूपाय शक्रायोत्कृत्य स्वशरीरमांसं दत्तम्।

उद्यानस्य पुरातनी राजधानी ता-ली-लो अथवा दारेलेत्यासीत्। अयं सिन्धुनद्याः पश्चिमतटस्य प्रदेशोऽस्ति। पञ्चमे शतके फाहियानेनात्राष्टाङ्गुलित्रिपञ्चाशद्धस्तोन्नता ( ८० फीटमिता ) मैत्रेयबोधिसत्त्वस्य प्रतिमा दृष्टा। सप्तमे शतके युआनमहोदयेनास्या उन्नतत्वं षोडशाङ्गुलिपट्षष्टिहस्तपरिमितं ( १०० फुट ) लिखितमस्ति—'इयमुज्ज्वलसौवर्णवर्णा चाकचक्य-

पूर्णा चकास्ति। दर्शनेन नेत्राणि चमत्कृतिं भजन्ते।' एतद्विषये प्रसिद्धमिदं यदीय माध्यान्तिके-नार्हता स्वयोगप्रभावेणैकं शिल्पिनं मैत्रेयस्य स्वर्गे तुषितलोके प्रेष्य निर्मापितासीत्। अस्य निर्माण-कालादेव पूर्वेषु देशेषु बौद्धधर्मस्याधिकः प्रचारोऽभूत्। फाहियानेन भिक्षवः पृष्टा यद् बौद्धधर्मः पूर्वदेशेषु कदा गत इति। तदा ते प्रत्यूचुर्यत्—मैत्रेयो बोधिसत्त्वस्य मूर्ति संस्थाप्य भारतस्य भिक्षुसूत्रं विनयञ्च गृहीत्वा सिन्धुनद्याः पारं गतवान्, तेन मूर्तिर्महापरिनिर्वाणात् शतत्रयवर्षानन्तरं स्थापिता। अत ईसवीयाब्दपूर्वं प्रथमे द्वितीये वा शतके भारतीयभिक्षवो मध्य-एशियाप्रदेशं गतवन्त इत्यनुमीयते।

**कश्मीरम्**—मध्य एशियाप्रदेशे सर्वप्रथमं दूतप्रेषणस्य गौरवमुद्यानेन प्राप्तम्, किन्तु प्रचारकप्रेषणस्य गौरवं कश्मीरस्यास्ति। कश्मीरस्य केन्द्रीया भौगोलिकी स्थितिस्तत्रत्यानां पण्डितानामुत्साहश्चास्य प्रधानं कारणमासीत्। प्रारम्भिकाणां प्रचारकाणां विस्तृतं वर्णनं नोपलभ्यते, किन्तु चतुर्थशतकाच्चीनदेशयायिनामनेकेषां कश्मीरवास्तव्यबौद्धविदुषामितिहासः सुविदितः। कश्मीरं कनिष्कस्य प्रोत्साहनेन चतुर्थ्या बौद्धमहासभायाः (सङ्गीतेः) अनन्तरं सर्वास्तिवादस्य प्रसिद्धं केन्द्रमभूत्। चतुर्थे शतके मध्य एशियातः कुमारजीवो बौद्धं धर्मं शिक्षितुं कश्मीरं समागमत्, सोऽत्र त्रीणि वर्षाण्यधीतवान्, काश्मीरैः पण्डितैः साकं तस्य वैयक्तिकः सम्बन्धः स्थापितः। तस्य च प्रेरणयाऽनेके पण्डिता मध्य एशियां चीनञ्च गन्तुं प्रारभन्त। एष्वेकतमः पुण्यत्रात आसीत्, अयं ४०३ तमे ईसवीयेऽब्दे चीनं प्रापत्। अनुवादकार्ये कुमार-जीवाय साहाय्यं च प्रादात्। द्वितीयः काशगरवास्तव्यो बुद्धयशोनामा काश्मीरे विद्वानासीत्। पञ्चमस्य शतकस्यान्ये विद्वांसो गौतमः, सङ्घदेवः, धर्मयशाः, गुणवर्मा, गुणभद्रः, बुद्धवर्मा चासन्। एभिर्मध्य-एशियाप्रदेशे चीने च सर्वास्तिवादसम्प्रदायस्य बौद्धधर्मग्रन्था अनूदिताः, तत्र भारतीयसंस्कृतेर्व्याख्याया प्रसारे च महत्त्वपूर्णो भागश्च गृहीतः। सप्तमे शतके तिब्बतेन स्वकीया वर्णमाला कश्मीरात् समासादिता। त्रयोदशे शतके मार्कोपोलोमहोदयेनैतद् विषयेऽक्षरशः सत्यमेव लिखितं यद् विदेशेषु बौद्धधर्मस्य (बुतपरस्ती) इत्याख्यस्य प्रसारस्या-दिमं स्रोतः कश्मीरमस्ति।

**दिग्विजयस्य बाधाः**—कश्मीरादफगानिस्तानाच्च मध्य एशियां गच्छद्भिर्बौद्ध-भिक्षुभिर्हिमालयस्य हिन्दूकुशस्य पामीरस्य चोन्नतपर्वतमालानां भीषणबाधा निराकुर्वता फाहिया-नेनामीषां पथां दुर्गमतां विवृण्वता सत्यमेव लिखितम्—"पन्था दुर्गमः, आरोहावरोहोऽधिकः, प्रान्तभागः प्रवणपाषाणभित्तिरिव स्थितो यस्यौन्नत्यमधस्ताद् दशसहस्रहस्तपरिमितम्। पथः प्रान्तेऽवस्थानेन नयनं वेपते"। सुगयुनः सर्वतोऽधिकं गिरिनदीषु निर्मितेभ्यो दोलायमानेभ्यः सेतुभ्यो भीतः, यतः पादस्खलनेन जनो झटिति दशसहस्रपादाधो नद्यां निपतति। फाहियान-महोदयेन पामीरपर्वतमुद्दिश्य लिखितं यदत्र ग्रीष्मे वसन्ते चापि तुषारः पतति, वेगवान् वायु-रहर्निशं दुःखीकरोति।

एवंविधभयङ्करकष्टपरिपूर्णं हिमालयमतिक्रम्य केनापि राज्ञा महत्या सेनया भारतभूमि-र्नाक्रान्ता। उन्नताः पर्वतास्तेषां मार्गे बाधका आसन्। किन्तु पर्वता इमे भारतीयधर्मदूतानां

भिक्षूणां चाक्रमणं रोद्धुं नापारयन्। श्रद्धा तावद् गिरीनपि शक्नोति प्रकम्पयितुम्, तत्कृते गिरिषु मार्गनिर्माणं किं कठिनम्? निखिलप्राणिनां कल्याणाय बद्धसंकल्पानां परिव्राजकानां पुरः सर्वा बाधास्तुच्छा आसन्। यथा बाणेनोक्तम्—

अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम्।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य पुरुषस्य॥

गर्वेणोन्नतशिरस्कैर्गिरिभिः कामं सेनानां कृते पन्था न प्रदत्तः, तुषारसम्पन्नाभिरगाधाभिर्नदीभिः कामं तासां चमूनां मार्गो निरुद्धः, किन्तु ता धर्मदूतेभ्यो मार्गं दातुं विवशा आसन्। वैदिके युगे यदा विश्वामित्रो विपाट्-शुतुद्रयोः संगमं समागत्य नदीः प्रार्थितवान् 'गाधा भवतेति' तदा नद्य ऋषये मार्गं दातुं तथैव नम्रा अभूवन्, यथा माता पुत्रेण दुग्धं पाययितुं रमणीवानुरक्तं जनमालिङ्गितुं नमति (ऋ० ३।३३)। ततः परेषु युगेषु यदा धृतकाषायवसनो नूतनो विश्वामित्रो भारताद् बहिर्गन्तुं प्रारभत, तदा तस्यामितश्रद्धाया अदम्यस्य साहसस्य च पुरः शैला नतमस्तकाः, नद्यश्च गाधाः सञ्जज्ञिरे। पूर्वमस्माभिर्दृष्टमेव मध्यान्तिकस्य कश्मीरागमनान्तरं झञ्झावात उदपद्यत, मेघा जगर्जुर्ववर्षुश्च, विद्युत् शब्दायिता विद्योतिता च, महान् उपद्रवोऽभूत्, प्रलय इव समयः समुपस्थितोऽभूत्, किन्तु तेन स्वश्रद्धाया योगबलेन इमानि सर्वाण्युपद्रवकारकाणि वस्तूनि विजितानि। धार्मिकोत्साहस्याऽनया भावनया भाविवतास्तस्यानुयायिनो धर्मदूताः प्रचारकाश्च सैनिकैर्दुर्जया अलङ्घ्या पर्वतमालाः सुजयाः सुलङ्घ्याश्च सम्पादितवन्तः। एता अतिक्रम्य तैः स्वीयं प्रथममावासस्थानं मध्य एशियाप्रदेशे निर्मितम्। अग्रिमेऽध्यायेऽस्य वर्णनं विधास्यते।



# चतुर्थोऽध्यायः

## मध्य-एशियाप्रदेशः

### सामान्यः परिचयः

**संस्कृतीनां प्रयागराजः**—एष मध्य-एशियाप्रदेशश्चीनदेश पाश्चात्त्यदेशाश्चान्तरा व्यापारस्य प्रधाने राजपथेऽवस्थितत्वात् प्राक्तने समयेऽनेकेषा धर्माणा संस्कृतीना च सगमस्थल साक्षात् प्रयागराज इवासीत्। प्रयागे गङ्गा, यमुना, सरस्वती एतास्तिस्र एव नद्यः सङ्गच्छन्ते, किन्तु मध्य एशियातीर्थराजे तिसृभ्योऽधिकाः सास्कृतिकधाराः सस्रज्यन्ते। वयमत्र ईरान-भारत-हियगन् शक-ऋषिक ( युइशि )-तुखार-हूण-तुर्क-चीन-तिब्बत-मङ्गोलजातीयानाम्, जरथुस्त्र-हिन्दु-बौद्ध ईसाई-मुस्लिम-मानी-चीनधर्माणाम्, यूनान-ईरान-भारत-चीनसस्कृतीना च धाराणा सङ्गम पश्यामः। अमूषा विभिन्नतायाः किञ्चिदनुमानमनेनैवैकेन तथ्येन भवति यत् स्थानादस्मात् सुग्धी-पहलवी-तुर्की तगुत-चीनी-शामी( सीरियाई )-यूनानी-तिब्बती-मङ्गोल सस्कृत-प्राकृत-भाषातिरिक्तयोः, तुखारी-( कूचीय कराशहरी वा )खोतनदेशी-सज्ञयोर्द्वयोर्नवीनयोरार्यभाषयोः श्वेतहूणानामद्य यावदपठिताना भाषाणा च चतुर्विंशत्या लिपिभिर्निबद्धा ग्रन्था उपलभ्यन्ते। तावती विविधताऽन्यत्र स्वल्पैव दृश्यते। किन्तु तावति वैविध्ये सत्यप्यष्टम शतक यावदत्र भारतीयायाः संस्कृतेः प्राधान्यमासीत्। इतोऽस्यास्तावन्तोऽधिका अवशेषा उपलभ्यन्ते यदेदम् 'उपरला हिन्द' इति कथ्यते। 'उपरला हिन्द' इत्यनेन प्रदेशमार्गेण चीने जापाने च भारतीयसस्कृतिः प्रससार। पूर्वदिश्यवस्थितेषु देशेषु आर्यावर्तसस्कृतेर्बौद्ध-धर्मस्य च प्रसारो मानवजातेर्विकासे भारतवर्षस्य महत्कार्यमस्ति। अतोऽत्र भारतीयसस्कृति-प्रसारोऽसाधारण महत्त्वमादधाति।

**उपनिवेशस्य श्रीगणेशः**—मध्य-एशियाप्रदेशे भारतीयाः सर्वप्रथमं तृतीयशतकपूर्व-खीष्टीयाब्दस्य मध्ये उपनिवेशन प्रारेभिरे। प्रदेशेऽस्मिन् भारतीयाना प्राचीनतमा वसतिः खोतनमासीत्। युआनच्वाङ्गमहोदयस्तिब्बतग्रन्थाश्च सकेतयन्ति यदस्य स्थापनाऽशोककालेऽभूत्। युआनमहोदयवर्णनानुसारेण खोतनोपनिवेशः कुणालस्य हृद्यया कथया सम्बद्धोऽस्ति। अय-मशोकस्यातीव प्रियः सुरूपः सुकुमारः पुत्र आसीत्। तस्य नयने हिमालयस्य कुणालपक्षिणोऽ-क्षिणी इवाभिरूपे आस्ताम्। अतः स तन्नाम्ना प्रसिद्धि प्राप। युवा स काञ्चनमाला परिणीतवान्। वार्द्धक्ये प्रथमाया पत्न्या दिवङ्गतायामशोकेन तिष्यरक्षिता परिणीता, सा कुणालस्य कमनीयेन कायेन देदीप्यमानाभ्या चक्षुर्भ्या च मोहिता बभूव। सा कुणाल प्रणय प्रार्थितवती। कुणालो विमा-तुस्ता प्रार्थना नाङ्गीचकार, अपि त्वधर्मोचितकार्यस्य परित्यागायाकथयत्। तिष्यरक्षिता तस्यातीव वैरिणी सवृत्ता। ततः कुणालस्तक्षशिलायाः शासको नियुक्तः। अत्रान्तरेऽशोक. केनचिद्-

व्याधिनाऽऽक्रान्तोऽभूत्। तस्य चिकित्सा तिष्यरक्षिताया हस्ते आसीत्। सा वैरनिर्यातनाय स्वर्णावसर प्राप्नोत्। तया तक्षशिलाया पौरजनाना पार्श्वे एकः कपटलेखः प्रेषित.। तस्मिन्नशोकस्येव लिखिताज्ञाऽऽसीत् यत् 'कुणालस्याक्षिणी निष्कासनीये!' तक्षशिलाप्रदेशस्य पौरजनाः कुणाले तथा स्निग्धा आसन् यत्तैरस्यादेशस्य पालन समुचित नामानि। किन्तु यदा कुणालेनेदमवगत तदा तेन सहजतः स्वनेत्रे निष्कासिते। काञ्चनमाल्या साक पाटलिपुत्र प्रत्यागतः। यदाऽशोकेनेय घटनाऽवगता तदा तेन तिष्यरक्षिता जीवन्त्येव प्रज्वालिता, ये केचनात्र सम्मिलिता आसन् ते हता निर्वासिता वा। राज्याद् बहिष्कृता जना खोतने न्युषितवन्तः। युआनस्य जीवनस्य वर्णनानुसार कुणालः स्वयमेव खोतने न्युवास।

कथायामस्या तिब्बतदेशस्य खोतनविषयिकासु तास्वनुश्रुतिषु च पर्याप्ता ऐतिहासिकी सत्यताऽस्ति। खीष्टाब्दप्रारम्भात् खोतने भारतीयप्रभावस्य प्रचुराणि प्रमाणानि समुपलभ्यन्ते। तानि चाधिककालपर्यन्त स्थितस्योपनिवेशस्य परिणामा आसन्। तथा स उपनिवेशोऽशोककाले स्थापित इति प्रतीयते। कम्बोजे तेष्व 'पामीरप्रदेशे' अशोकेनाभिलेखेषु स्वधर्मदूतस्य प्रेषण स्पष्ट वर्णितम्। एव नाभकप्रदेशो यदि मध्य एशियावसतिर्मन्येत तर्हि स खोतनप्रदेशो भवेत्। इदमपि कल्पितमस्ति यदशोकेन मृत्युदण्डो नाभिनन्द्यते स्म। तदा वध्याना राजद्रोहिणा दण्डो निर्वासनमासीत्, तदर्थ स मध्य एशियाप्रदेशान् निश्चितवान्। यदीद सत्य भवेत् तदाऽस्य वर्तमानकालिकस्य आस्ट्रेलियाप्रदेशस्योपनिवेशेन तुला भवितुमर्हति।

खीष्टाब्दस्य प्रथम शतक यावत् तारीमनद्या दक्षिणस्मिन् तीरे भारतीयोपनिवेशाना प्रभावस्तथा वृद्धिं गतो यत् पश्चिमोत्तरभारते प्रचलिता खरोष्ठीलिपिः प्राकृतञ्च प्रदेशस्यास्य राजलिपी राजभाषा चाभूत्। अनेनेद स्पष्टमस्ति यत् प्रदेशस्यास्योपनिवेशने गन्धारवास्तव्याः पर्याप्त भाग गृहीतवन्तः। कुणालस्य कथयापीदमेव सूच्यते। किन्तु तदतिरिक्ताः कश्मीर-वास्तव्या अप्यत्राधिक भागमगृह्णन्। युआनस्य सुङ्गयुनस्य च कथनानुसारेण खोतनप्रदेशे बौद्धधर्मस्य प्रथम. प्रचारको वैरोचनः कश्मीराज्जगाम। अस्य समयः ६० खीष्टाब्दपूर्व-मस्ति। सम्भवतोऽस्मिन्नेव समयेऽत्र बौद्धधर्मः प्रविवेश। इतः पूर्व वैश्रवणस्य श्रीमहादेव्याश्च हिन्दुदेवतयोः पूजा आसीत्। भारतस्य व्यापारिभिः, आवासकैर्धर्मप्रचारकैश्च खीष्टाब्दप्रथम-शतके भारतीयः प्रभावः शनैः शनैस्तथा वृद्धिं प्रापितो यत् प्रदेशस्यास्य सर्वाण्यपि राज्यानि प्रभावितान्यासन्। बौद्धधर्मोऽत्र प्रधानो धर्म आसीत्। मध्य-एशियादेशस्य विभिन्नानि काशगर-खोतन-शान-शानकुचार कराशहरराज्यानि भारतीया लिपिमग्रहीषुः। खीष्टाब्दप्रथमशतके दक्षिणस्मिन् भागे खरोष्ठीलिपेरतीवप्रचार आसीत्। चतुर्थशतकाद्दक्षिणस्मिन्नुत्तरस्मिश्चेत्यु-भयोर्भागयोरुत्तरभारतीयब्राह्मीलिपेः प्रचारोऽभूत्। समग्रस्य देशस्य साहित्यभाषा सस्कृतमासीत्। अस्मात् स्थानाद् बौद्धधर्मशास्त्रसम्बन्धिनोऽनेके ग्रन्थाः प्राप्ता बभूवुः। एषा केषुचिद् ग्रन्थेषु सस्कृतमूलेन साक स्थानीयभाषानुवादोऽपि वर्तते। अत्र भारतीयसंस्कृतेः कियान् गभीरः प्रभाव आसीत्, इद फाहियानस्य निम्नलिखितादवतरणात् स्पष्ट जायते—"अस्मात् स्थानात् (लोबझीलात्) पाश्चात्त्येषु येषु येषु देशेष्वहमगच्छ सर्वेषु तेषु तथैव (शान-शानदेशवद् भारतीय-

धर्मपालनम् अवाप्नुवम्। एतावानेव भेद आसीद् यत् प्रत्येक देशस्य भाषा भिन्ना विशिष्टा चासीत्। परन्तु सर्वे गृहत्यागिनो विरक्ता भारतीयग्रन्थान् भारतीयभाषाश्चाधीयते स्म (पृ० १)।

चतुर्थशतक यावदत्र पश्चिमात् पूर्वाभिमुख गमनेन दक्षिणस्मिन् भागे निम्नलिखितानि प्रधानानि राज्यान्यासन्। ( १ ) चोक्कुक-( चो० सोकियू , यारकन्द ), ( २ ) खोतम्न ( युतियेन खोतन ), ( ३ ) कालमदन-( चो० चे--मो-तगना, शान-शान ) इत्याख्यानि। उत्तरस्मिन् भागे ( १ ) शैलदेश. ( चो० सूली-काशगर ), ( २ ) मरुक (चो० पो ल-किया, अक्सू ), ( ३ ) कूचा कूची वा ( चो० कियू-चे, कुचार ), ( ४ ) अग्निदेश ( येन-की, कराशहर ), ( ५ ) काओ-चग ( तुरफान ) इत्याख्यानि। एषु दक्षिणस्मिन् भागे खोतनराज्यम्, उत्तरस्मिन् च कूचा-राज्य मध्य-एशियादेशे चीने च भारतीयायाः सस्कृतेः प्रसारे सर्वाधिक भागमग्रहीष्टाम्। अत्र प्रथम दक्षिणस्य पुनरुत्तरस्य च राज्याना चीनयात्रिणामाधुनिकोत्खनननाना चावलम्बनेन वर्णन भविष्यति।

## दक्षिणवसतयः

**खोतनराज्यम्**—खोतनराज्य तारीमतीरे तकलामकानमरुभूमेर्दक्षिणस्मिन् तटे क्यून-लुनपर्वतमालाया उत्तरस्मिन् भागे च विंशतिक्रोशान् विस्तृत उर्वरो भूभागोऽस्ति। युरङ्गकाश-कराकाशनदीभ्या स्वकीयाभ्यामुर्वरमृत्पानीयाभ्या भूभागोऽय तारीमतीरस्य सर्वतो महान् शाद्वलो विहितः। अतः प्राचीनकालादेवाय मध्य एशियादेशस्य मरुभूमौ विशालतमोऽयमन्नभण्डारोऽस्ति। खोतनराज्यनदीना स्वर्ण जेड( यशद )नामको महार्हो मणिश्च प्राचीने कालेऽस्योपनिवेशस्या-कर्षणायालमभूताम्। भारतस्य चीनस्य च मध्यवर्तिनि व्यापारपथेऽस्य भौगोलिकी स्थितिरत्यतीव-महत्त्वपूर्णा आसीत्। कौशेयस्य ज्ञान चीनाद्बहि सर्वत प्रथम खोतनराज्ये एवागच्छत्। ( बील २।३१८ )। खोतनदेशभूपालेन परिणीता काचन राजकुमारी कौशेयकीट स्ववस्त्रेषु वेष्टयित्वा चौर्येणात्रानीतवती। तदानीं चीनकौशेय विदेशान् खोतनद्वारा गच्छति स्म। सम्भवतः कारणैरेभिः साहसिका भारतीया व्यापारिणः सर्वप्रथममत्र प्रविविशुः। अशोकसमये भारतीया अत्रागत्यावात्सुः, ततो बौद्धप्रचारका व्यापारिणा मण्डलैः साकमत्र समागता बौद्धधर्मस्य च प्रचारं कर्तु प्रारभन्त। सुङ्गयुनस्य वर्णनानुसारेण बौद्धधर्मस्याद्यप्रचारक वैरोचन कश्चन वैदे-शिको वणिक् स्वेन साक खोतनराज्यमानैष्ट। तिब्बतस्यानुश्रुतिषु खोतनराज्यस्य स्थापनाविषये एकमतीव मनोरञ्जक विवरण समुपलभ्यते। ता अस्य राज्यस्य सस्थापनाया सर्वमपि श्रेयो मात्रा परित्यक्तायाशोकस्यैकस्मै पुत्राय तस्यैव निर्वासिताय मन्त्रिणे यशसे च ददाति। मातुरभावे परि-त्यक्तस्य पुत्रस्य पोषण पृथिवीतो निर्गतादेकस्मात् स्तनाद् बभूव, अतः स कुस्तनाभिधानोऽभूत्, तेन वासिना भूस्तन्नाम्नैव 'कुस्तन' इति ( वह-उ थन ) अथवा 'खोतन' इत्यभूत्। अनुश्रुते-रस्याश्चरम वाक्य खोतनशब्द व्युत्पादयितु कल्पितमिव प्रतीयते। किन्तु पूर्वार्द्धे तावत्सत्यमवश्य-मेवास्ति यत् खोतनस्य स्थापनाऽशोकसमये प्रवासिभिर्भारतीयैः कृता। कुणालसम्बन्धिनी अनु-श्रुतिरपीदमेव प्रतिपादयति। अस्य स्थापना सम्भवतः २२४ तमे खोष्टीयाब्देऽभूत्। अत्र सर्व-प्रथम स्थापित नगरमत्रत्वे 'योतकन' इत्युच्यते। इद वर्तमानात् खोतनराज्यात् पश्चिमेऽस्ति।

## खोतनदेशस्य सांस्कृतिक इतिहासः

**धर्मः**—प्रदेशस्यास्य प्रथमे आवासका आर्याः प्रतीयन्ते। बौद्धधर्मस्य प्राबल्यानन्तरमप्यत्र कश्चन पौराणिकः प्रभावोऽवश्यमासीत्। एन्देरस्थानाद् गणेशस्य नियास्थानाच्च कुबेरस्य गणपतेश्च मूर्तय उपलब्धाः सन्ति। किन्त्वत्र प्राधान्य महायानबौद्धधर्मस्यैवासीत्। चीनदेशीयविवरणानुसारतोऽत्र बौद्धधर्मः ८० खीष्टीयाब्दपूर्व कश्मीरवासिना वैरोचननामकेन भिक्षुणा प्रवेशितः। वैरोचनस्य कथनानुसार राजा खोतने प्रथम सङ्घाराम निर्माय धर्मपुण्ये सञ्चितवान्। अस्य विहारस्य नाम 'त्सारमा' आसीत् इत्यधुना योतकनप्रदेशात् सार्द्धक्रोश दक्षिणस्या दिशि कोसानगरेऽवस्थितेन इमाममूसाकासिमस्य शवस्तूपेन प्रमाणितमिदमस्ति। तिब्बतस्यानुश्रुत्यनुसारेण वैरोचनेन नागराजहुलोटेन च कश्मीरदेशादेक चैत्यमप्यानायितम्, यस्मिन् सप्ताना तथागताना धातव आसन्। 'त्सारमा' विहारे चैत्यप्रतिष्ठानकाले आकाशादवतरन्ती एका बौद्धमूर्तिर्दृष्टा। तत्कालादेव राजा बौद्धधर्मः प्रचारितः।

खोतनराज्यस्याष्टमस्य राज्ञो विजितवीर्यस्य समये गोशृङ्गगिरावेको विहारो निर्मितः। विहारोऽय पश्चात् खोतनस्य सर्वतो महद् बौद्धतीर्थम्, बौद्धधर्मस्य प्रचारस्य सस्कृतस्याध्ययनस्य च केन्द्रमभूत्।

गोशृङ्गपर्वत वर्तमानसमये खोतनप्रदेशात् सार्द्धपञ्चक्रोशान् दक्षिणपश्चिमाया करकाशनद्या कोहमरीगिरिशिखर सूचयति। विजितवशस्यैकादशस्य राज्ञो विजितजयस्य भारतेन सह प्रगाढः सम्बन्ध आसीत्। अय भिक्षु सङ्घघोष तत आहूय स्व 'कल्याणमित्रम्' आध्यात्मिकविषयस्य परामर्शदातार गुरु वा कृतवान्। अस्य त्रयाणा पुत्राणा श्रेष्ठो धर्मानन्द उपसम्पदा गृहीत्वा भारतमगच्छत्। अयमेव स्वदेश प्रतिनिवृत्य महासाङ्घिकनिकायस्य सिद्धान्त खोतनराज्ये प्रचारितवान्। विजितजयस्य केनचिदुत्तराधिकारिणा भारतात् स्वदेशे मन्त्रसिद्धिराहूतः, तदर्थ कश्चन विहारश्च निर्मापितः। अनेन स्थविरेण खोतने राज्ये हीनयानस्य सर्वास्तिवादिशाखायाः प्रचारः कृतः। अत्र शासक एको राजा विजयकीर्तिः कनिष्केण साक मैत्रीं सम्पाद्य साकेतम् (अयोध्याम्) आक्रान्तवान्, ततोऽनेकान् धातून् सम्पाद्य तेषु विहार निर्मापितवान्। तदैव खोतनराज्यमनेकैर्वैदेशिकैराक्रान्तम्। आक्रमणकारिभिर्विहाराणामनेके भागा दग्धाः, नूतनविहारनिर्माण स्थगितम्, ततश्चतुश्शतवर्षपर्यन्त तस्येतिहासो न ज्ञायते।

उपर्युक्तविवरणेन स्पष्टमस्ति यद् वैरोचनप्रवेशित-बौद्धधर्मानन्तर सर्वै राजभिरयं सर्वतोभावेन परिरक्षितः, खोतनभारतयोः सम्बन्धोऽक्षुण्णोऽभूत्। भारतीया विद्वासोऽत्रागत्य बौद्धधर्मस्य विभिन्नान् सम्प्रदायान् प्रचारितवन्त'। पञ्चमस्य शतकस्य प्रारम्भे फाहियानः खोतनराज्यद्वारा भारत जगाम। तदा बौद्धधर्मोऽत्र महोन्नतावस्थायामासीत्। जनपदमिद सुखप्रद सम्पन्न चास्ति। जनसख्या प्रभूता अस्ति, सर्वाः प्रजा धार्मिक्यः सन्ति, सर्वे जनाः समुदायरूपेण धार्मिकमगीतस्यानन्दमनुभवन्ति। अत्र परःसहस्राः श्रमणा निवसन्ति। प्रतिगेह द्वारि लघवः स्तूपाः सन्ति। सर्वतः कनिष्ठः स्तूपस्त्रिशद्धस्ताधिक उन्नतो वर्तते। अत्रैव गोमतीविहारे फाहियान आवासितः। तस्मिन् काले भारतीयाः पण्डिता गोमतीविहारे

न्यवसन्। धर्मपिपासवश्च चीनदेशीया अमीषा पादान्तिके समुपविश्य बौद्धधर्म संस्कृतं चाध्येतु चीनादत्रायान्ति स्म। २६०तमे खीष्टीयाब्दे एकश्चीनदेशीयो बौद्धभिक्षुः चू-शे-हिंग महोदयोऽध्ययनायात्रागतः। पञ्चमस्य शतकस्य च मध्ये स ई-क्यू किंग-शेंग-महोदयो भारतीयपण्डितेभ्यो गोमतीविहारे संस्कृतमपठत्। फाहियानकाले गोमतीविहारे महायानसम्प्रदायानुसारिणा भिक्षूणा त्रिसहस्री आसीत्। तेनामीषामनुशासनस्यातीव प्रशसा कृता। 'वादिताया घण्टाया सर्वे भोजनाय भोजनालय गच्छन्ति स्म। तत्र तेषा मुद्राऽतीव गभीरा भवति स्म। पङ्क्तिषु यथास्थानमुपविशन्ति स्म। सर्व नीरवमभूत्, पात्राणा शब्दोऽपि नाश्रूयत। भिक्षव इमे भोजनालये वाचयमा भवन्ति स्म। सत्यामावश्यकताया हस्तेन सकेतयन्ति स्म'। फाहियानेन गोमत्यतिरिक्तो राज्ञः पञ्चविंशतिहस्तोच्छ्रायो नवविहारो मुक्तकण्ठ प्रशसितः। अस्मिन् सम्यगुत्कीर्णता चित्रकर्म चास्ति। उपरि कानक राजतश्च पत्रमारोपितमस्ति। विहारोऽय विविधै रत्नैः खचितश्चकास्ति। अनेन स्तूपेन सह बुद्धदेवस्यात्यन्त रमणीय मन्दिर भिक्षूणा निवासाय भव्यश्च विहार आसीत्। स पूर्वतुर्कस्थानस्य षण्णा राज्ञा विषये इदमपि लिखति यत् 'ते स्वकीयाना बहुमूल्याना धनाना वस्त्राणा चाधिकानशान् धर्मकार्येषु वियन्ति। स्वोपयोगाय अतीवाल्प गृह्णन्ति।

तस्मिन् काले खोतनराज्यस्य सर्वोत्कृष्टो महोत्सवो रथयात्राऽऽसीत्। इद पर्व द्रष्टुमेव फाहियानमहोदयस्तस्य सहानुयायिनश्च मासत्रय खोतनराज्ये न्यवसन्। फाहियानेनेद समीचीनतया वर्णितम्। अवसरेऽस्मिन् राजपथाः शोधिता सिक्ताश्च भवन्ति स्म। प्रत्येक वीथिः सज्जिता भवति स्म, राजा राज्ञी च नगरद्वारि पूर्णत सन्नाहैनैक वितान गच्छतः स्म। प्रथम गोमतीविहारतो रथयात्रा प्रवर्तते स्म। त्रिंशद्धस्तोच्छ्रायश्चतुष्पादो भगवतो रथो निर्मीयते स्म। अय प्रचलन् प्रासाद इव प्रतीयते स्म। सप्तरत्नाना तोरणद्वय सयोज्यते, अय कौशेयध्वजेन स्वल्पवितानेन ( चादनी ) च सज्जितो भवति। रथे भगवतो मूर्तिः स्थाप्यते। उभयतो बोधिसत्त्वद्वय निवसति। सर्वा मूर्तयः सुवर्णरजतनिर्मिता भवन्ति स्म। यदा रथो नगरद्वारात् शत पदानि गच्छति, तदा राजा स्वकीय मुकुट समुत्तार्य नूतन वस्त्र परिदधाति, पुष्पधूपादिपूजासामग्रीं हस्ते गृहीत्वाऽनावृतपदो नगराद् रथ प्रत्युद्गच्छति। पङ्क्तिबद्धाः परिचारका उभयतो भवन्ति, राजा साष्टाङ्ग प्रणिपत्य पुष्प समर्पयति, धूप चाघ्रापयति। यदा रथो नगर प्रविशति, राजद्वारमुपविशती राज्ञी स्वपरिचारिकाभिः साकमुपरिष्टात् पुष्पाणि विकिरति। भूमौ पुष्पराशिः पतति। एव महता समारोहेणोत्सवः सम्पाद्यते।

वर्णनादस्मादिदमवगम्यते यद् खोतनराज्यस्य राजा प्रजाश्च भगवतो बुद्धस्यातीव भक्ता आसन्। धार्मिका उत्सवा महता समारोहेण महोत्साहेन च सम्पाद्यन्ते स्म। महायानसम्प्रदायस्य च महान् प्रचार आसीत्। गोशृङ्गमाहात्म्ये चेदमेव वस्तु महत्या मनोरञ्जकशैल्या प्रतिपाद्यते— "यदि अन्यसम्प्रदायानुयायिना सख्या कस्यचनाश्वस्य केसरा इव सन्ति, तर्हि महायानानुयायिनः शरीरस्य सम्पूर्णबाला इव सन्ति। पञ्चमशतकं यावद् खोतनराज्य बौद्धधर्मस्य तथा महत्केन्द्रमभूत्, यच्चीनदेशीयवर्णनानुसारेण तदानीं खोतने तादृशा धर्मग्रन्था आसन्, ये भारतेऽपि नोपलभ्यन्ते

स्म । ४३३ तमे खीष्टीयाब्दे चीने भाषान्तरकारको धर्मक्षेत्रनामको बौद्धो विद्वान् महायानस्य महापरिनिर्वाणसूत्रान्वेषणे खोतनराज्यं गन्तु सङ्कल्पितवान्, यतो हि ग्रन्थोऽयं केवलमत्रैवोपलब्धुं शक्यते स्म ।

पञ्चमे शतके वैदेशिकाक्रमणेन बौद्धधर्मः क्षतिग्रस्तो जातः । पूर्वोत्तरतिब्बतस्य तु युक-हुननामकजातीयैरथवा युआन इत्यनेन खोतनस्य प्राचीनो धर्मः, प्राचीना संस्कृतिर्लिपिश्च विनाशं प्रापिता । किन्त्वमीषामाक्रमणानां प्रभावोऽल्पकालिक आसीत् । ५१७–१८ तमे खीष्टीयाब्दे प्रदेशस्यास्य यात्रां कुर्वता सुगयुनेनात्र बौद्धधर्मस्य प्राधान्यं समवलोकितम् । खोतने बौद्धधर्मस्य पुनरुद्धारगौरवं सम्भवतः काशगरभिक्षुभिरेव प्राप्तमस्ति । ५८९–६१८ खीष्टाब्दमध्ये चीनभाषानूदितस्य सूर्यगर्भसूत्रस्यैकेन सन्दर्भेण युआनच्वाङ्गस्य विवरणेन चेदं पुष्यति । उक्ते सूत्रे खोतनराज्यस्याधिष्ठात्री देवता भवितुं भगवन्तं बुद्धं प्रार्थयमानो नागराजो वदति यत्—खोतनराज्ये नगराणि नगरकल्पा ग्रामाः पर्णकुट्यश्च रिक्ता निर्जनाश्च सन्ति । भगवानुत्तरति—एवं नास्ति । अधुना चतुर्णामार्यसत्यानामवगन्तॄणां श्रमणानामयुतद्वयं काशगरत आगत्यात्र खोतने न्यवसन् ( थामस-पू पु.६३ ) काशगरस्य भिक्षूणामत्रैको महत्त्वपूर्णः प्रभावोऽयमभूद् यत् प्रथमं खोतनराज्ये खरोष्ट्रीलिपेः प्राकृतस्य च प्रचार आसीत्, अधुना तयोः स्थानं ब्राह्मीलिप्या संस्कृतभाषया च गृहीतम् ।

६४४ तमे खीष्टीयाब्दे चीनं प्रति प्रतिनिवर्तमानेन युआनेन खोतनराज्ये बौद्धधर्म उत्तमायामवस्थायां दृष्टः । 'जना बौद्धधर्ममतीवाद्रियन्ते । अत्र सङ्घारामाः पञ्चसहस्राण्यनुयायिनः सन्ति । इमे महायानसम्प्रदायमेवाधीयते ।' युआनः खोतनराज्यस्य तीर्थानां वर्णनं सविस्तरं मनोरञ्जककथाभिः सह चकार । गोशृङ्ग-वैरोचन ( त्सारमा )विहारौ पूर्ववद् भक्तानां श्रद्धाकेन्द्रमासीत् । इस्लामधर्मागमनात् प्राक् प्रदेशेऽस्मिन्नियमेव स्थितिरभूत् । १००८ तमे खीष्टीयाब्दे यवनाः खोतनराज्यं विजेतुं सफला अभूवन्, अत्र च इस्लामधर्मः प्रससार ।

**भाषा साहित्यं च**—खोतनराज्ये उत्खननाल्लब्धैरवशेषैर्ज्ञायते यद् खीष्टीयाब्दस्य प्रथमे शतकेऽत्र खरोष्ट्रीलिपेः प्राकृतस्य च प्रचार आसीत् । किन्तु पञ्चमे शतके ब्राह्मीलिपेः प्रसारोऽभूत्, संस्कृतस्य प्रचार ऐधत, तेन च सह खोतनदेशीया शकखोतनीनाम्ना लोकभाषाऽपि प्रचुरतया व्यवाह्रियत ।

**खरोष्ट्रीलेखाः**—खरोष्ट्रीलिपिबद्धा लेखा 'निया' प्रदेशे विशेषतश्च इमामजाफरसादिकस्य शवस्तूपात् ( कब्र ) उत्तरस्मिन् मरुस्थले निम्नगतादेकस्मात् स्थानात् प्रचुरतया प्राप्यन्त । प्राक् प्रतिपादितात् स्थानात् स्टाइनमहोदयेनैकस्मिन्नेव दिने पञ्चाशीतिर्लेखा आसादिताः । मध्य-एशियाप्रदेशात् प्राप्तासु सामग्रीष्वद्य यावत् खरोष्ट्रीनिबद्धानाम् ७४० अनूदितानां लेखानां प्रकाशनमजायत । खोतनराज्ये न तालपत्राणि भवन्ति स्म, न च भूर्जपत्राणि । अत्र विशेषतो लेखनोपकरणानि काष्ठानि चर्माणि चासन् । बहुवारं तु कदाचित् कौशेयानां कर्गदानां च प्रयोगो भवति स्म । काष्ठानि चर्माणि च सुलभानि साधनान्यासन् । काष्ठस्य फलकानि कीलाकृतीनि, अथवा सहस्तखण्डाकृतीनि, अथवा आयताकाराणि च भवन्ति स्म । प्रथमस्य 'कीलमुद्रा' इति,

द्वितीयस्य 'स्तोवन' इति, तृतीयस्य 'लिहितक' इति च संज्ञा वर्तते। चर्मण उपयोगः प्राचुर्येण भवति स्म। अस्य संज्ञा 'अनादिलेखः' इत्यासीत्। मेषाणां संस्कृतात् चर्मणो द्वादशाङ्गुलदैर्घ्यास्य अङ्गुलविस्ताराः खण्डाः क्रियन्ते स्म। विलिख्य च ते कर्गदानां मध्ये वेष्ट्यन्ते स्म।

काष्ठानां चर्मपत्राणां च विधानपद्धतिरपि ध्यानव्या विद्यते। काष्ठस्यैकस्मिन् फलके विलिख्य तदुपरि द्वितीयं फलकं निधाय तत् फलकद्वयं च रज्ज्वा बध्यते स्म। ग्रन्थिस्थाने मृदं संस्थाप्य तत्र मुद्राऽङ्किता भवति स्म। अत्र काष्ठानां चर्मणां चोभयविधानां साधनानां पत्राणां वेष्ठनस्य बन्धनस्य च पद्धतिरतीव विलक्षणा आसीत्। इदमतीवाश्चर्यजनकं यदेषु संयोज्यमाना मुद्राः परिपक्वया यूनानकलया संवदन्ति। अमीषां पत्राणां भाषा प्राकृतमस्ति, विषयाश्च शासनाज्ञा, पत्रादि, विवादास्पदप्रश्नानां न्यायालयनिर्णयः, वादिप्रतिवादिनोः समाधानं चेति सन्ति। कीलमुद्रासु स्वल्पः शासनसन्देशः प्रदीयते स्म। प्रायेण स सन्देशः 'महानुभावः' महाराजः लिखति (महनुवः महारायः लिहति) इत्यादिना प्रारभ्यते स्म। सम्भवतोऽयं महाराजः प्रान्तपतिर्भवति स्म। अधिकारिणो विविधेषु विवादेषु स्वनिर्णयं काष्ठफलकेषु लेखयित्वा प्रेषयन्ति स्म। एषु पञ्चसु पत्रेषु तिथिमाससंवत्सरा अपि लिखिता भवन्ति।

आयताकारफलकानां विषयदृष्ट्या भेदद्वयं कर्तुं शक्यते। (१) शासनव्यवहारपत्राणि, (२) समाधानम्, प्रतिज्ञापत्रादिविविधन्यायालयपत्राणि च। प्रथमप्रकारेषु पत्रेष्वेकोऽधिकारी अन्यस्याधिकारिणः पार्श्वे स्वनिर्देशं पालयितुमादेशं प्रेषयति स्म। द्वितीयप्रकारकेषु प्रतिज्ञापत्रेषु फलकोपरि वादिप्रतिवादिनोर्न्यायालयस्याधिकारिणश्च नामानि लिख्यन्ते स्म। इत्थं प्रतीयते यत् कस्मिंश्चिद् विवादे निर्णीते समाहिते वा लिखितो मुद्रापितो वा स सुरक्ष्यते स्म, येन कश्चनापि जनस्तं परिवर्तयितुं न शक्नुयात्। स्टाइनमहोदयैरेतादृश्येवानेकानि पिहितानि फलकानि प्राप्तानि। चर्मपत्राणि केनचनाधिकारिणा कस्यचनाधिकारिणः सविधे लिखितानि सन्ति, अथवा एतेषु महाराजेन लिखितोऽधिकारिणा कृते आदेशोऽस्ति। इमे विमनादिलेखा उच्यन्ते। प्रायोऽमीषां प्रारम्भो वक्ष्यमाणैर्वाक्यैर्भवति "भवतेदं ज्ञातव्यं यदहं किं लिखामि, तथा राज्यं सञ्चालयितुं किमादिशामि। राज्यस्य कर्तव्यानां पालने एवाहर्निशं स्वशक्तिरुपयोक्तव्या। खोतनस्य समृद्धये आवश्यकमिदमस्ति यत् प्राणदानेनाप्याज्ञा परिपालनीया।"

अमीषां पत्राणां लेखनपद्धतिर्भारतीयाऽस्ति। या कश्मीरस्य 'लोकप्रकाश' प्रभृतिग्रन्थेषु वर्णितपद्धतिमनुसरति। एषु भारतीयानां शब्दानां वाक्यावलीनां च प्रचुरः प्रयोगोऽस्ति। 'महाराजः, देवपुत्रः' इत्यादिशब्दा राज्ञः कृते प्रयुक्ताः सन्ति। अस्य प्रियदर्शनः, देवमनुष्यसम्पूजितः, प्रियदेवमनुष्य' इत्यादीनि विशेषणानि सन्ति। अन्येषां भारतीयानां शब्दानां 'राजद्वारपुरस्थित'लेखक (दिविर) 'लेखहारक.' इत्यादिशब्दा उल्लेखनीयाः सन्ति।

नियाप्रदेशात् प्राप्तानां लेखानां समयो ख्रीष्टीयाब्दस्य तृतीयं शतकमस्तीति सुनिश्चितम्। नियाख्ये स्थाने कर्गदे कश्चन लेखो नासादितः, किन्तु लौलानस्थानात् कर्गदलिखिता खरोष्ट्रीलेखा उपलब्धाः सन्ति। कर्गदस्याविष्कारः प्रयोगश्च विलम्बेनाभूताम्, अतो लौलानप्रदेशस्य लेखानां समयः ख्रीष्टीयाब्दस्य चतुर्थं शतकं प्रतीयते। स्थानमिदं लोबनोरप्रदेशादुत्तरं चीनदेशसीम्नि

वर्तते, सूचयति च यच्चतुर्थ शतक यावद्भारतीयाया लिपेर्भाषायाश्च प्रभाव एतत्स्थानपर्यन्त मासीत्। फाहियानमहोदयस्य पूर्वोद्धृतवर्णनतोऽपीदमेव सिध्यति।

उपर्युक्तवर्णनादिद ज्ञायते यच्चतुर्थशतक यावत् तारीमनदीतीरस्य दक्षिणस्मिन् भागे चीनसीमापर्यन्त खरोष्ट्रीः प्राकृतश्च व्यवह्रियेते स्म। इमे तत्रत्ये राजलिपिभाषे आस्ताम्। इत उपलब्ध खरोष्ट्रीलिखित 'धम्मपद'पुस्तकमपीदमेव सूचयति। खरोष्ट्री गन्धारदेशस्य लिपिरासीत्। सम्भवतः खरोष्ट्रीं प्राकृतञ्चाशोककाले तक्षशिलाप्रदेशाद् मध्य-एशियापर्यन्त गच्छन्तो भारतीयाः सह नीतवन्तः। कुषाणाना मध्य एशिया गन्धारयोः शासनमासीत्। कनिष्कनामको राजा सम्भवतो गन्धारस्य बौद्धधर्मेण सहात्रत्यस्य भाषाया लिपेश्च राजकीय सरक्षण प्रददौ। धर्मेण सह मध्य-एशियाप्रदेशेऽनयोरपि प्रसारोऽभूत्। प्रसारस्य कारणविषये मतभेदो वर्तते, परन्त्वत्र विवादो नास्ति यच्चतुर्थशतकपर्यन्त गन्धारदेशस्य प्राकृतभाषाया लिपेश्च चीनसीमा यावत् प्रयोगो भवति स्म।

**संस्कृतं ब्राह्मी, अवतंसकसाहित्यं च**—पञ्चमशतकात् खोतनदेशे खरोष्ट्रीलिपेः पद ब्राह्मीलिप्या गृहीतम, प्राकृतस्थाने सस्कृतेन प्राधान्य प्राप्तम्। प्रथममस्य परिवर्तनस्य कारणस्य प्रतिपादनमभूत्। इदमप्यकथ्यत यत् २६० खीष्टीयाब्दपूर्वतः सस्कृतबौद्धग्रन्थाना-मध्ययनार्थ चीनभिक्षवो खोतनदेशमागन्तु प्रारभन्त ( बा० इ० से० पृ० ५८ ६१ )। प्रथममत्र भारतादागताना ग्रन्थानामध्ययनमध्यापन च भवतः स्म। प्रज्ञापारमितायाः सद्धर्मपुण्डरीकस्य च विशिष्टा प्रतिष्ठाऽऽसीत्, किन्त्वधुना खोतनदेशे स्वतन्त्रस्य बौद्धसाहित्यस्य निर्माण प्रारभ्यत। इद महायानसम्प्रदायस्यावतसक साहित्यमुच्यते। इदमद्यत्वे चीनतिब्बतभाषानुवाद-रूपेणोपलभ्यते। श्रीलेवीमहोदयेन सूर्यगर्भचन्द्रगर्भसूत्रैरिद सम्यक्तया प्रमाणीकृत यत् तदा मध्य-एशियाप्रदेशे केचन ग्रन्था लिख्यन्ते स्म। खोतनदेशस्तेषा महत्त्वपूर्ण केन्द्रमासीत्। अमीषा ग्रन्थाना वैशिष्ट्य 'धारणी' इत्यस्ति। प्रारम्भे 'धारणी' महता ग्रन्थाना सक्षेप आसीत्। यथा चतुश्श्लोकी भागवतमथवा सप्तश्लोकी गीता। प्रथमं तावदिमानि भारते निर्मितानि। ततश्चतुर्थे शतके खीष्टीयाब्दे कूचाप्रदेशस्य भारतस्य च भिक्षुभिरमीषा प्रथम चीनभाषयानुवादः कृतः। एतदनुकृत्य खोतनदेशस्य भिक्षवः सस्कृते तत्रत्यलोकभाषाया च नूतनसाहित्यरचनामकुर्वन्।

अद्यत्वे लिखिताः कतिपये ग्रन्था तिब्बतभाषानिबद्धा उपलभ्यन्ते। एषु ग्रन्थद्वय विशेषत उल्लेखनीयमस्ति। (१) गोश्रृङ्गव्याकरणम्—अत्र व्याकरणशब्दस्याभिप्रायो भविष्यद्वाण्यस्ति, भविष्यपुराण इवात्रापि भूतकालिकघटना भविष्यद्वचनतया वर्णिताः सन्ति। अत्र खोतनदेशे प्रसिद्धस्य गोश्रृङ्गतीर्थस्य माहात्म्यस्य वर्णनमस्ति। (२) विमलप्रभापरिपृच्छा—पुस्तकमिदं ७४५ तमे खीष्टीयाब्देऽलिख्यत। अत्रानेके 'धारणी' इति नामानो ग्रन्थाः सन्ति। धार्मिकेऽपि ग्रन्थेऽस्मिन् राजनीतेः सम्यक् समावेशोऽस्ति। चीनस्य तिब्बतस्य च वृद्धिं गच्छन्ती राजनीति-शक्तिः स्पष्टतया निर्दिष्टाऽस्ति।

**खोतनदेशीयसाहित्यम्**—युगेऽस्मिन् सस्कृतातिरिक्ताया खोतनदेशीय ( शकखो-तनभाषा ) भाषायामपि पर्याप्तं साहित्यमासीत्। विदुषां कृते इयमतीव नूतनास्ति। ल्युमान-

प्रभृतिकतिपयविपश्चिता मतमिदमस्ति यदिय खीष्टीयाब्दस्य द्वितीयशतकात् पूर्व भारते आक्रमणकारिणा शकाना भाषाऽस्ति । अस्याः खोतनदेशस्य शकेषु प्रचारादिय शकखोतनी प्रोच्यते । किन्तु केचन इमा कुषाणाना भाषा प्रचक्षते । इदमुच्यते यदस्या भाषाया मूलम् ईरानदेशभाषाऽस्ति । किन्त्विय भारतीयवाक्यशैलीभिर्भारतीयवाग्रीतिभिः पूर्णतया प्रभाविताऽस्ति । तारीमतीरस्य दक्षिणभागे स्थितस्य खोतनराज्यस्य स्वयमेव लोकभाषाऽऽसीत्, अतोऽस्याः खोतनदेशीपदेन वा व्यपदेश. समीचीनः प्रतीयते, बाग्चीमहोदयेनेय पूर्वईरानबोलीपदेन व्यवहृता ( बा इ० सै० पृ० १०० ) । इदमत्र प्रतीयते यद् भारतीयैर्धर्मदूतैः स्वसन्देश जनसाधारण नेतु बौद्धग्रन्था अनया भाषयानूदिताः । सुवर्णप्रभास-भद्रचर्यादेशना-अपरिमितायुस्सूत्राणि 'खोतनदेशी'भाषयाऽनूदितान्युपालभ्यन्त । अस्या भाषायामनुवाद एव नाभूत्, स्वतन्त्रा ग्रन्था अपि लिखिता अभूवन् । अध्यापकलेनमानमहोदयेन पञ्चविंशतिसर्गमेक खोतनदेशीभाषानिबद्ध महाकाव्य प्रकाशितम् । इदं पर्याप्ततया भारतीया शैलीमाश्रित्य लिखित विद्यते । अत्र भाविनो धर्मप्रवर्तकमैत्रेयस्येतिहासस्यागमनस्य वा वर्णनमस्ति । अद्य यावत् कस्याञ्चिदन्यस्या भाषायामस्य मूल नोपलब्धम्, किन्त्वत्र कश्चन सन्देहो नास्ति यदस्य निर्माणस्य प्रेरणा भारतीयबौद्धसाहित्यात् प्राप्ता । अस्या भाषाया अन्यग्रन्थेषु 'रामायणम्' रविगुप्तस्य सिद्धसारः, ज्ञानयशसो जातकस्तवश्चोल्लेखनीयाः सन्ति ।

युगेऽस्मिन् खोतने चीने वा भारतस्य प्रबलप्रभावस्यैक प्रमाणमिदमस्ति—तदा चीनतुर्कस्थानस्य शासकेभ्योऽन्यप्रतिष्ठितेभ्यो वा 'अमोचे' इतीय सम्मानपदवी प्रदीयते स्म । इद सस्कृतस्यामात्यपदस्य रूपान्तरमस्ति ।

**कलाः—मूर्तिकलाः, चित्रकलाश्च**—प्राचीने काले कला धर्मस्यानुयायिन्यासीत् । अतो भारतीयेन धर्मेण सह सापि मध्य-एशियाप्रदेश समाससाद । अधिका मूर्तयो भगवतो बुद्धस्य प्रतिमा. सन्ति, काश्चन च तस्य सेवकानाम् । चित्राण्यपि धार्मिकविषयसम्बद्धानि सन्ति । अमीषा कतिपयानि निर्देष्टव्यानि निदर्शनानि दन्दान-युइलिक-एन्देर-आक्सिपिल-मीरानेत्याख्याना स्थानानामुत्खननात् प्राप्यन्त । मध्य एशियाप्रदेशेऽश्मनामसुलभतया मूर्तयो वज्रलेपादिद्रव्यैर्निर्मीयन्ते स्म । इमा गन्धारयूनानकलाभिः प्रभाविताः सन्ति । किन्तु तेषु स्थानीयपरिस्थितीनामपि पर्याप्तः प्रभावो वर्तते । अक्सिपिलेत्याख्यस्थानादपि बुद्धस्य बोधिसत्त्वाना यक्षाणा सेवकानाञ्चानेका मूर्तयः समुपालभ्यन्त । आसु बोधिसत्त्वमूर्तिष्वलङ्कारा वस्त्राणि चातीव समीचीनतया निर्मितानि सन्ति । धौतवस्त्रमतीव स्पष्टतया प्रदर्शितमस्ति, वक्षसि भुजयोश्च मणिमाला' सन्ति । मूर्तिशैली गन्धारकलया पर्याप्त सवदति । अत्र द्वारपालाना यक्षाणा वा मूर्तिकलाः स्थानीय प्रभाव सम्यक् सूचयन्ति । इमा मूर्तयो भारतेऽप्यधिकतयोपलभ्यन्ते, किन्तु खोतनदेशस्य मूर्तयोऽलङ्कारादिषु प्रबल भेदमादधति । भारते द्वारपालोऽनावृतसर्वाङ्गो धौतवस्त्रमेव परिदधानो नग्नपादः स्थातु शक्नोति, किन्तु हिमबिन्दुमप्यतिक्राम्यति । खोतनदेशस्य शैत्ये नेद सम्भवति, अत एन्देरस्य द्वारपालानामधोवस्त्रं महता कञ्चुकेनावृत पट्टिकया बद्ध चास्ति, पादयोरुपानहौ च स्तः ।

चित्रकलाया निदर्शनानि 'दन्दान युइलिक' इत्याख्यात् स्थानात् प्राप्यन्त। अत्र कानिचन चित्राणि देहल्या निर्मितानि, कतिपयानि च भित्तिवज्रलेपेषु। प्रथमप्रकारकाणि चित्राणि पञ्च देहल्या प्राप्यन्त—एक गणेशस्य चित्रमस्ति, अपर नर्तक्याः, अवशिष्टानि बोधिसत्त्व-चित्राणि सन्ति। द्वितीयप्रकारकाणि चित्राणि अजन्ताकला स्मारयन्ति। एषु 'सरोवरस्य सुन्दर्याः' 'गुरुशिष्ययोश्च चित्र' विशेषतो वर्णनीयमस्ति। प्रथमे चित्रे काचन नारी वर्गाकारसरोवरस्य तटे स्थिताऽस्ति। तडागे कमलानि तरन्ति। नारी निर्वसनाऽस्ति, शिरसि उष्णीषसदृश किमपि परिधान परिहितवत्यस्ति। तस्या कण्ठो भुजौ मणिबन्धश्चालङ्कारैरलकृताः सन्ति। कोमलाङ्गुलिना दक्षिणेन हस्तेन वक्ष आच्छादितमस्ति। निम्नभुग्नवामहस्तः कटौ वर्तते। नितम्बे क्षुद्रघण्टिकाना चतुर्बद्धा रशना बद्धास्ति। नार्या मुख दक्षिणतो भुग्नमस्ति। तस्या दिशि जलान्निःसरन्ती पुरुषमूर्तिः प्रदर्शिताऽस्ति। चित्ररागेषु महती स्वाभाविकताऽस्ति। मुकुलितानि कमलानि घनीभूतनीलादारभ्य नीललोहितपर्यन्तं सर्वेषु प्राकृतिकेषु रागेष्वतीवसुन्दरतया चित्रितानि सन्ति। उपतडागं कश्चनाश्वारोहो विनाऽश्व तिष्ठति। एतस्य चित्रस्य विषये इदं कथ्यते यद् नारीय कामपि यूनानवीनसेत्याख्या देवीं स्मारयति। अस्या अलङ्कारा भारतीयाः सन्ति, आकृतिश्च चीनदेशीयास्ति। इत्थमत्र भारतीयाना चीनदेशीयाना च सस्कृतीना सङ्गमोऽस्ति। नारीय सम्भवतो युआनद्वारा एकदन्तकथाया वर्णिता नागराजस्य विधवा सा जलवासिनी अप्सरा अस्ति, यया सह खोतनदेशस्य केनचिन्मन्त्रिणा विवाहः कृतो यत् त प्रदेश सेक्ता जलप्रवाहोऽवरुद्धो मा भूत् ( बील ३।३१९–२२ )। आनन्दकुमारस्वामी महोदयश्चित्रमिद विशुद्धभारतीय-शैलीक मन्यते, तेन चेद लखनऊसंग्रहालयस्य एकया कुशाणमूर्त्या सह तुलितम्। स भारतीय-यक्षिणीस्मारकमिति मन्यते।

गुरुशिष्ययोश्चित्रे विद्यार्थिनो दक्षिणे हस्ते पुस्तकस्यैक पत्रमस्ति। तस्याक्षिणी तत्रैव सलग्ने स्तः। तद्दक्षिणतः पाठयतो गुरोर्वृद्धस्य मूर्तिरस्ति। तेन कन्था चीवर वा धृतमस्ति। दक्षिणहस्तस्य तर्जनी मध्यमा चाङ्गुली अध्यापनमुद्राया विस्तृते स्तः। वामे हस्ते पिहित पुस्तक-मेकमस्ति। वृद्धस्य मुखमुद्रया प्रतीयते यत् तस्य स्वाध्यापने पूर्णो विश्वासोऽस्ति। तस्य पुरः सरोवरे जलपृष्ठे विस्तृतानि विकसितानि कमलानि सन्ति। द्वौ पक्षिणौ जलक्रीडा कुरुत.। तयोर्नीलहरितौ कण्ठौ वृद्धगुरुमभिमुग्नौ स्तः। दन्दान उइलिकस्थानस्यान्यानि निर्देष्टव्यानि चित्राणि सन्ति—एकश्चतुर्भुजो वज्रधर ईरानदेशीयबोधिसत्वस्तथा सम्भवत' स्वशिरोभूषणे कौशेयकीटमपहृत्य चीनात् खोतनदेश नयन्ती काचन राजकन्याऽस्ति। यद्यप्यत्र गन्धारकलाया प्राधान्यमासीत्, परन्तु फूशेमहोदयमतानुसारेण रावकस्तूपात् प्राप्ता मूर्तिर्मथुरायाः कुशाणशैली-सादृश्यमादधाति। मीरनस्य एकस्माद् मन्दिराद् भारहुत-गन्धारशैलीभ्या वेस्सन्तरजातकस्य दृश्यं प्राप्यत। हिन्दुमूर्तिषु नन्दिवृषमारूढस्त्रिमुखो महेश्वर उल्लेखनीयोऽस्ति।

## उदीच्यवसतयः

तारीमतीरादुत्तरस्मिन् काशगर-कूचा-काराशहर-तुरफानेत्याख्यानानि स्थानान्यासन्। एषु कूचाप्रदेशो भारतीयसस्कृतिप्रसारे सर्वापेक्षया महत्साहाय्य चकार। अत्रामीषा सर्वेषा-मुल्लेखपूर्वकमाधुनिकमुत्खननमाश्रित्यामीषा भाषासाहित्यकलाः प्रकाशयिष्यन्ते।

**काशगरम्**—( चीनी शूले स० शैलदेश. ) तारीमनद्या उपकारिकायाः किजिलसूनामकनद्या अथवा काशगरनद्यास्तटे उर्वराया भूमौ स्थितः काशगरप्रदेशः पूर्वस्या पश्चिमाया दक्षिणस्या च दिक्षु ईरान-चीन भारतगामिना महापथाना केन्द्रत्वेनासाधारण महत्त्वमादधाति। खीष्टीयाब्दपूर्वे द्वितीये शतके ऋषिकनामधेया (युइशि) जना अत्र पूर्वत एव न्युपितान् शकशासकान्निष्कास्य स्वय स्वामिनः सवृत्ताः (१६३ ई० पू०), किन्तु प्रथमशतकस्योत्तरार्द्धे चीनदेशीयसेनापतेः पनचओ ( ७३–१०२ ई० ) इत्यस्य विजयैः प्रदेशोऽय चीनदेशायत्तोऽभूत्। द्वितीयशतकस्य प्रारम्भे पुनरत्र 'युइशि' जनानामधिकारो जातः। अस्मिन्नेव काले बौद्धधर्मोऽत्र प्रविष्टः। अयं गन्धारदेशस्य सस्कृतग्रन्थेषु प्रतिपादितो बौद्धधर्म आसीत्।

तदनन्तर चतुर्थशतकपर्यन्तमितिहासोऽज्ञातोऽस्ति। यदा फाहियानमहोदयोऽत्रागतस्तदाऽत्रत्यो नृपो बौद्धधर्मस्य परमो भक्त आसीत्। स प्रतिपञ्चमवर्षमामन्त्रितानां श्रमणाना परिषद करोति स्म। अत्र तेऽर्च्यन्ते स्म। अत्र भगवतो बुद्धस्य निष्ठीवनदन्ताद्यवशेषाः स्तूपेषु पूज्यन्ते स्म। एकस्मिन् सङ्घारामे सहस्र हीनयानानुयायिनो भिक्षव आसन्। ४६० तमे खीष्टीयाब्देऽस्य राजा चीनसम्राजे बुद्धद्वारैक तथाविधं परिधान प्रहित यददाह्यमासीत्। तदनन्तर काशगरं प्रथम श्वेतहूणाना ४६५ तमे खीष्टीयाब्दे पश्चिमतुर्काणामायत्तमभूत्। ६४३ तमे खीष्टीयाब्दे युआनमहोदयेनात्रत्या बौद्धधर्मेऽतीव पक्षपातिनो दृष्टाः। अत्रानेकानि शतानि सङ्घरामा दशसहस्राणि च भिक्षव आसन्। युआनमहोदयोऽत्रत्याना भिक्षूणामेका टीका कृताऽऽसीद् यत्ते ग्रन्थाना द्रुतगत्या सस्वर पाठ कुर्वन्ति, पर तेषामर्थं बोद्धु न प्रयतन्ते। एकसहस्राधिका भिक्षवः सर्वास्तिवादिन आसन्। ७८६ तमे खीष्टीयाब्दे नू कुगमहोदयेनात्र पञ्च मासा यापिताः। तदनन्तरमत्र इस्लामधर्मो वर्द्धितुमारेभे। त्रयोदशस्य शतकस्यान्ते मार्कोपोलोमहोदयस्यागमनकालपर्यन्तमत्रत्याः सर्वे यवनाः सवृत्ताः।

**कूचा**—काशगरतुरफानप्रदेशयोर्मध्ये कूचा (कूची अथवा कूचार) नाम नगर चीनदेशात् काशगरप्रदेशगामिनि महापथेऽवर्तत। केन्द्रत्वात् शाद्वलत्वाच्चास्य महन्महत्त्वमासीत्। इद महत्त्व चीनेन सर्वप्रथमं सम्राट् वूतीकाले ( १४०-८७ ई० पू० ) अवगतम्। एव प्रतीयते यत् खीष्टीयाब्दशतकात् पूर्वमेवात्र पाश्चात्त्यार्याणामेका शाखाऽवात्सीत्, यतो हि कूचाप्रदेशात् प्राप्ताना ग्रन्थाना भाषायाः शब्दसाम्यमार्यभाषाणा भारत-ईरानपरिवारापेक्षया पाश्चात्त्यलैटिनयूनान-कैल्ट-स्लेवोनिकभाषाभिरधिकमस्ति। चीनदेशो वसतिमिमा प्रथमे खीष्टीयाब्दीयशतके स्वविशालसाम्राज्येऽङ्गीचकार।

इदानीमपि कूचाख्ये स्थाने बौद्धधर्मप्रवेशस्येतिहासस्तिमिरावृतोऽस्ति। सम्भवतः सार्थवाहसमूहेन सह कूचाप्रदेश गता भारतीयव्यापारिणो धर्मदूतास्चास्य प्रथमे सन्देशवाहका आसन्। चीनेतिहासोऽस्मिन् विषये मौनमवलम्बते, किन्तु स पाश्चात्त्यत्सिन (२६५–३१७ ई०) वशसमये बौद्धधर्मस्येद केन्द्र प्रतिपादयति। एतद्वर्णनानुसारेण खीष्टीयाब्दीयचतुर्थशतकस्य प्रारम्भे देशेऽस्मिन् दशसहस्रसंख्याकानि स्तूपमन्दिराण्यासन् ( इ० २।२०३ )। इद यथानिर्दिष्टं सत्यमनन्वाऽधिकास्तेषा सख्याऽऽसीदिति मन्तव्यम्। पूर्वं त्सिनवंशस्येतिहासे कूचाराज्यस्य विविध-

मठाना विस्तृतं वर्णन समुपलभ्यते। कतिपयाना मठानामध्यक्षो बुद्धस्वाम्यासीत्, कुमारजीवस्तस्य शिष्य आसीत्।

खीष्टीयाब्दचतुर्थशतकादेव कूचाप्रदेशो मध्य एशियाख्ये प्रदेशे भारतीयबौद्धधर्मस्य प्रधानं केन्द्रमभूत्, तेन चैन चीन यावन्नेतुं महान् प्रयत्नः कृतः, अस्याधिक गौरव कुमारजीव गच्छति। अतस्तस्य जीवनस्य कार्यस्य च विहङ्गमावलोकन क्रियते—

**कुमारजीवः**—कुमारजीवस्य पिता कुमारायण आसीत्। स एकस्य भारतीयस्य राज्यस्य मन्त्रिकुले समुत्पन्न आसीत्। स स्वमन्त्रित्वावसरे सम्प्राप्ते तत्पद विहाय भिक्षुरभूत्, विदेशयात्रायै निरगच्छच्च। कूचाप्रदेशस्य भूमिपालेन सोऽतीव सत्कृतः स्वराजगुरुश्च कृतः। कुमारायणस्य भाग्ये वैखानसयोगः प्रबलो नासीत्। राज्ञः स्वसा जीवा तस्मिन्ननुरज्यति स्म। द्वयोः परिणयः सवृत्त, प्रथमापत्यं मातापित्रोर्नाम्ना कुमारजीवेत्यनेन व्यपादेशि। द्वितीयस्य पुत्रस्य पुष्पदेवस्य प्रादुर्भावानन्तरं जीवा भिक्षुकी संवृत्ता। अस्मिन्नवसरे कुमारजीवः सप्तवर्ष-वयस्क एवासीत्, किन्तु तस्य प्रतिभा मेधा चासाधारण्यौ आस्ताम्। मातुः शीघ्रमेव तेन धर्मग्रन्थाना पाठः शिक्षितः। उच्चशिक्षार्थ त भारत नेतुं मात्रोचितममानि। नववर्षवयस्कः बहुषु देशेषु पर्यटनानन्तर कुमारजीवो मात्रा सह कश्मीर प्राप्तवान्। अत्र प्रसिद्धादाचार्याद् बन्धुदत्तात् तेनागमा अधीताः। त्रीणि वर्षाणि समधीत्य कुमारजीवः स्वमात्रा सह स्वदेश प्रति-निवृत्तवान्। मार्गे काशगरे तेन चत्वारो वेदा हिन्दुदर्शन ज्यौतिषञ्चाधीतम्। तदनन्तर तौ चोक्कुक (यारकन्द) प्रस्थितौ। अत्र कुमारजीवेन महायानसम्प्रदायस्य नागार्जुनप्रभृतीना महतामाचार्याणा ग्रन्था अधीताः। ततः स कूचाख्ये स्थाने राज्ञो नवविहारे न्यवात्सीत्।

कुमारजीवस्यासाधारणस्य पाण्डित्यस्य ख्यातिः सर्वत्र प्रससार। तारीमनदीतीरस्य (पूर्वतुर्किस्तान) विविधेभ्यो दूरवर्तिभ्यः प्रदेशेभ्यो धर्मपिपासवः कुमारजीवस्य पादावुपसेव्य धर्म शिक्षितु कूचाप्रदेश समागन्तुमारेभिरे। स कूचाप्रदेशस्य महत्तमे सङ्घारामे 'त्सिओ-ली' मठे सूत्राणि पठतो जनान् तेषामर्थ बोधयति स्म। इत्थ तेन मध्य-एशियाऽऽख्ये प्रदेशे कूचाप्रदेशो भारतीयसस्कृतेः प्रसारस्यैकं प्रबल केन्द्रमकारि, अन्ते च घटनाचक्रेण स चीन जगाम।

चतुर्थशतकस्यान्तिमे भागे कूचाप्रदेशात् पाश्चात्त्यानि सर्वाणि राज्यानि चीनस्य सहायकानि वशवदानि चाभूवन्। केवलेन कूचादेशेनैवात्मसमर्पणपूर्वकपरवशतास्वीकृतिविषयकश्चीनदेशीयः प्रस्तावस्तिरस्कृतः। अतश्चीनदेशीयाः कूचामाक्रान्तवन्तः। राज्ञा शौर्येणायोधि, किन्तु नगरे आक्रमणकारिणामधिकारोऽभूत्। ३८३ तमे खीष्टीयाब्दे चीनसेनापतिः कूचाराजसिंहासन स्वाभीप्सित राजानमुपवेश्य कतिपयबन्दीभिः सह चीन प्रतिनिवृत्तः। बन्दीष्वेकः कुमारजीवोऽप्यासीत्। चीनदेशीया आचार्यकुमारजीवस्य ख्यातिं योग्यता च सम्यकतया जानन्ति स्म। कानसू-प्रदेशस्य नायकेन कु त्सगेन ३९८ खीष्टीयाब्दपर्यन्त कुमारजीवः पूर्णया प्रतिष्ठया सह स्वपार्श्वे रक्षितः। किन्तु कूचाऽऽक्रमणादुपलब्धमिद महार्घरत्न चीनस्य सम्राट् स्वपार्श्वे रक्षितुमभिलषति स्म। तेन भूयो भूयः कुमारजीव आहूतः। कानसूप्रदेशस्य नायकः त त्यक्तु नापारयत्, किन्तु

अन्ते तेन सम्राज इच्छा स्वीकृता । ४०१ तमे खीष्टीयाब्दे कुमारजीवेन सम्राजः पार्श्वे गन्तुमनुमतिः प्राप्ता । राजधानीप्राप्तिसमकालमेव सम्राजा संस्कृतग्रन्थानां चीनभाषयाऽनुवादकार्यं तस्मै समर्पितम् । कार्यस्यास्य साहाय्यायानेके विद्वांसस्तत्र नियुक्ताः । कुमारजीवस्येदं वैशिष्ट्यमासीद् यत् तस्य चीनसंस्कृतभाषयोः समं प्रभुत्वमासीत् । ततः प्राक्तना भारतीयाः पण्डिताश्चीनभाषां नैव जानन्ति स्म, चीनभिक्षवश्च स्वल्पमेव संस्कृतं जानन्ति स्म । इदमेव कारणमस्ति यत् कुमारजीवस्यानुवादः प्रामाणिकः शुद्धो निर्दोषश्चास्ति । एतत्कालपर्यन्तं चीने जापाने च तस्य महती प्रतिष्ठा विद्यते । विद्यार्थिन इदं पृच्छयन्ते यत् कुमारजीवयुआनमहोदययोः कस्य भाषा श्रेष्ठाऽस्ति, आशास्यते च यत् ते कुमारजीवस्य भाषां श्रेयसीं समर्थयिष्यन्ते । कुमारजीवेन प्राचीनानुवादानां दूषणानि दूरीकुर्वता एकादशवर्षात्मके स्वल्पे समये षडुत्तरशतसंस्कृतग्रन्थानामनुवादश्चीनभाषया विहितः । एषु बहवो बृहत्काया ग्रन्था आसन् । इमे महायानसम्प्रदायसम्बन्धिनः सन्ति । चीनेऽस्य सम्प्रदायस्य दर्शनस्य प्रथमो व्याख्याता स एवासीत् । तेन तच्छिष्यैश्च चीनदेशे यया नूतनया प्रणाल्या बौद्धधर्म उपस्थापितः, सा चीने तं लोकप्रियं कर्तुं भृशं सहायिकाऽभूत् । चीनदेशीयैरयं वैदेशिको धर्म इत्यभिनिवेशः परित्यक्तः । ४१२ तमे खीष्टीयाब्दे कुमारजीवो निर्वाणं प्राप्तः । असाधारणस्यापि विदुषस्तस्य नम्रता परां काष्ठां प्राप्ता । मृत्युशय्यामधिशयानेन तेन शिष्या उपदिष्टा यत् "मदीयान् ग्रन्थान् स्वीकुरुत, मामादर्शं न मन्यध्वम् । कमलं पङ्कादुत्पद्यते । कमलेऽनुरागो भवति, न पङ्के" ( बाग्ची—चा ) ।

कुमारजीवानन्तरं कूचावास्तव्या अन्ये भिक्षवोऽनेकेऽनुवादकार्यं पुरोऽपि प्राचालयन् । अनेके बौद्धग्रन्थाः पूर्वं संस्कृतभाषायाः कूचीयभाषयाऽनूदिताः, पुनश्च कूचीयभाषातश्चीनभाषया । चीनविवरणादिदं ज्ञायते यत् कूचाप्रदेशात् पश्चिमे संस्कृतग्रन्थानां व्यवहार आसीत्, किन्तु कूचाख्ये स्थाने भारतीया भाषाः सम्यग् न ज्ञायन्ते स्म । अत्र तादृशा अनुवादाः प्रचलन्ति स्म येषु सुबोधाः संस्कृतशब्दा अविकला एव गृह्यन्ते स्म । अधुना उत्खननैस्तादृशा अनेकेऽनुवादा उपालभ्यन्त ।

पञ्चमे शतके कूचाचीनयोः पुनः सङ्घर्षः प्रारभ्यत । ४४८ तमे खीष्टीयाब्दे एकया चीनसेनया कूचाप्रदेशे शान्तिः स्थापिता तदनन्तरं कूचाप्रदेशः चौ-( ५५७—५८१ ई० ) सुई-( ५९—६१७ ई० ) वंशीयसम्राड्भ्य उपायनानि प्रहिणोति स्म । एतस्मिन् सर्वस्मिन्नपि काले बौद्धधर्मस्यातीव समुन्नतिरजायत । कूचाभूमिपालैः स्वर्णदेव ( स्वर्णते )-हरदेव ( अर्त्ते )-सुवर्णपुष्प—हरिपुष्पप्रभृतीनि भारतीयानि नामानि स्वाभिधानत्वेन गृहीतानि । अत्र भारतीयसंगीतमपि स्थानं प्रापत्, तेन च चीनदेशः प्रभावितः ( मजू० क्ला० पृ० ६१९ ) । राजकीयभोजनावसरे चीनदेशे बुखाराप्रदेशातिरिक्तानां कूचाप्रदेशकलाकाराणामप्येका मण्डली वृन्दवादनं करोति स्म । भारतीया आवासकाः स्थानीयैर्जनैः सह विवाहादिसम्बन्धं विधाय तस्य देशस्य जनानामङ्गानि भवन्ति स्म । इत्थञ्च प्रदेशोऽयं भारतेन कामं प्रभाव्यते स्म । अस्य सर्वोत्कृष्टो दृष्टान्तः कुमारजीवोऽस्ति ।

सप्तमे शतके तांगवंशसमये प्रदेशस्यास्य यात्रां विदधता युआनमहोदयेनात्र शताधिकाः सङ्घारामाः पञ्चसहस्राधिकाः सर्वास्तिवादिनो भिक्षव उल्लिखिताः । अत्र भगवतो बुद्धस्याव-

शेषाणां मूर्तीनां च पूजा महता समारोहेणाभवत्। मुख्यनगरस्य पश्चिमे द्वारि षष्टिहस्तपरिमितं भगवतो बुद्धस्य मूर्तिद्वयमासीत्। एतत्पुरः प्रत्येकं पञ्चमे वर्षे पञ्चवर्षीयमोक्षमहापरिषदो महोत्सवोऽभवत्। बहुमूल्यैर्वस्तुभिराभूषितानां कौशेयवसनाच्छादितानां मूर्तीनां रथयात्रा महता समारोहेण सपाद्यते स्म। आश्चर्यनामको विहारो न केवलं भक्तानां केन्द्रमासीत्, किन्तु विदुषामपि महत्तरं निवेशस्थानमासीत्। विनयमध्येतुमत्र सुदूराद् विद्यार्थिन आगच्छन्। अमीषु कुमारजीवस्य शिष्यो विकलाक्षोऽतीव प्रसिद्ध आसीत् ( बी० १।१९–२४ )।

६५८ तमे खीष्टीयाब्दे चीनदेशीयाः कूचाप्रदेशं 'चारछावनिया' नामकमध्य-एशिया-प्रान्तस्य राजधानीं निर्मितवन्तः। ७८८ तमे खीष्टीयाब्देऽत्र क-कुगमहोदयः समागतः, असौ सगीतं बौद्धधर्मञ्चातीवोन्नतमपश्यत्। तेनैकस्तादृशो मठाधीशो वर्णितो यः संस्कृतं चीनभाषां तद्देशीयभाषां च समानेन प्रवाहेणावदत्। एकादशशतकपर्यन्तमत्र बौद्धधर्मप्रचलनमासीत्। १९०६ तमे खीष्टीयाब्दे कूचादूतैश्चीनसम्राजे भगवतो बुद्धस्यैका वज्रप्रतिमा उपायनीकृता ( इलि० ३।२०५ )। ततो धार्मिक इतिहासोऽज्ञातप्रायोऽस्ति।

**अग्निदेशः ( कराशहर )**—कूचासमीपे एवात्रस्थिता वसतिरियं सम्प्रति स्वकीयैः कृष्णैरसमीचीनैर्गृहैः कराशहरपदेन ( करा = काला ) व्यपदिश्यते। अस्याः प्राचीनाभिधानमग्नि-देशोऽस्ति। युआनमहोदयेन 'अकिनि' ( अग्नि ) नाम्नेदं वर्णितम्। युआनकालेऽत्र दश-सहस्रेषु सङ्घारामेषु हीनयानसम्प्रदायानुयायिनां सर्वास्तिवादिनां भिक्षूणां सहस्रद्वयं न्यवसत्। ते भारतवर्षस्य सूत्रविनयग्रन्थान् च स्वीकुर्वन्ति स्म। अमीभिः कतिपयपरिवर्तनैश्च सह स्वकीया लिपिर्भारताद् गृहीता। भक्ष्याभक्ष्यविषये युआनमहोदयस्याग्निदेशभिक्षूणां च मतभेद आसीत्। स महायानेऽतिशयपक्षपातेन भूतदयाया विश्वसन् सर्वविधमांसभक्षणस्य विरोधी आसीत्। अत्रत्या भिक्षवो भगवता बुद्धेनानुज्ञातस्य त्रिप्रकारस्य मांसस्य भक्षणे दोषं नागणयन्। अत्रत्यः सर्वप्रसिद्धः सङ्घाराम आश्चर्यविहार आसीत्। चीनं गच्छन् धर्मगुप्तः ५८५ तमे खीष्टीयाब्देऽत्र न्यवात्सीत्।

अग्निदेशे इन्द्रार्जुन-चन्द्रार्जुनप्रभृतिनामानो राजानः शासनमकुर्वन्, किन्त्वमीषां विस्तृत इतिहासो न ज्ञायते। अत्रत्या स्थानीया भाषा कूचावाचा महत् सादृश्यमादधाति। अस्य साहित्यस्याग्रे उल्लेखो भविष्यति।

**तुरफानम्**—उत्तरीयोर्द्ध्वभारतस्य ( उपरला हिन्द ) चतुर्थी प्रसिद्धा वसतिस्तुरफाने-त्यस्ति। अत्रानेकेषां नगराणां भग्नानि गृहाणि समुपालभ्यन्त। इमानि प्राचीनानां राजधानीना-मवशेषाः सन्ति। तुरफानेत्याधुनिकं नामास्ति। प्राचीनं नाम कओचगेति प्रतीयते। अस्मात् शाद्वलात् संस्कृत-चीन-ईरान-द्वितुखारभाषाणामधिका ग्रन्था समुपालभ्यन्त। अस्य स्थानस्य प्रारम्भिक इतिहास एतत्कालपर्यन्तं निश्चयेन ज्ञातो नाभूत्, किन्त्विदं निश्चितमस्ति यत् पञ्चमशतकपर्यन्त-मत्र बौद्धधर्मो निश्चितं विस्तृतोऽभूत्। ४८९ तमे खीष्टीयाब्देऽनचौनामकस्य दिवङ्गतस्य राज्ञः स्मृतावत्र मैत्रेयमन्दिरस्य निर्माणमभूत्। अष्टमे नवमे च शतकेऽत्र उईगुर-तुर्काणां शासनमभूत्। प्रायः ७५० तमे खीष्टीयाब्देऽमीषां शासकेन ( खान ) 'मानीमतम्' राजधर्मत्वेन

शक्यते यद् बुद्धमौद्गल्यायनशारिपुत्रातिरिक्तानि-एकस्तपस्वी, एको ब्राह्मणः, एका गणिका, एको विदूषकश्चाप्यस्य पात्राणि सन्ति। अन्यसंस्कृतनाटकस्येवास्यापि विदूषकोऽतीवौदरिकः स्निग्धभोजनप्रियश्चास्ति। अस्य नायकः सम्भवत एको राजकुमारः सोमदत्तो धनञ्जयो वाऽस्ति। नायिका मगधवती गणिकाऽस्ति। इमे नाटके 'लीकाक मिग ओई' इत्यत्रोपलब्धे आस्ताम्। १९११तमे च खीष्टीयाब्दे ल्यूडर्समहोदयेन चेमे प्रकाशिते आस्ताम् ( प्रो० १२ )।

खण्डितेऽपीमे नाटके कानिचिद् महत्त्वपूर्णानि तथ्यानि प्रकाशयतः। अनयोः कुषाण-लिपिरिद् बोधयति यदनयोः प्रतिलिपिर्द्वितीये शतकेऽभूत्, तत्कालपर्यन्तं च भारतीया नाट्यकला सर्वतोभावेनोन्नतिं प्राप्ता। अश्वघोषस्य परिष्कृतप्रतिभायाः परिचयः पूर्वमेव तस्य बौद्धधर्मदर्शन-ग्रन्थैर्बुद्धचरितसौन्दरानन्दकाव्याभ्याञ्च प्राप्त एवासीत्। अधुनेदमप्यज्ञायत यदयमेक उत्कृष्टो नाटककारोऽप्यासीत्। सोऽस्या कलाया तथा सफलोऽभूद् यत् तस्य नाटकानि मध्य एशियातो दूरवर्तिषु प्रदेशेषु सहस्राणि क्रोशान् दूरं गतानि।

इदं प्रतीयते यत् तदा धर्मप्रचारार्थं बौद्धैर्नाटकानि साधनत्वेनोपयुक्तानि। अधुना भगवतो बुद्धस्य रङ्गमञ्चप्रत्यानयनं तस्यापमाननं प्रतीयते, किन्तु प्रारम्भे तथा नासीत्। खीष्टीयाब्दस्य प्रथमे शतकेऽस्य प्रयोगस्य सूचनाऽस्माभिरवदानशतकस्य चीनभाषानुवादात् तिब्बतधर्मग्रन्थे-भ्यश्चोपलभ्यते। अश्वघोषस्य काव्येभ्यः स्पष्टमिदमस्ति यत् स महान् प्रचारक आसीत्। काव्यानि न तेन मनोविनोदाय लिखितानि, किन्तु धर्मप्रचाराय। 'धर्मरूपं कट्वौषधं न कश्चनापि पातुं वाञ्छतीति तेन काव्यमधुना मधुरं ह्लादकारि'। काव्यव्यपदेशेन तेन मोक्षतत्त्वं प्रतिपादि-तम्' ( सौन्दरा० १८।६३-६४ )। एवमेव नाटकेष्वपि तस्य प्रधानमुद्देश्यं धर्मस्य मनोरञ्जनरूपेण सामाजिकानां पुरः समुपस्थापनेन बौद्धधर्मसिद्धान्तानां प्रचार एव आसीत्। नाटकयोर्लोकप्रियताऽनेनापि हेतुनाऽनुमातुं शक्यते यत् तज्जीवनविषयकं नाटकद्वयं कूचीयभाषायामपि प्राप्यते।

**( २ ) संस्कृतोदानवर्गः**—भगवतो बुद्धस्य मुखादुदीर्यमाणाः सूक्तय उदानपदेन व्यपदिश्यन्ते। पालित्रिपिटके आसां सग्रहो धर्मपदे ( धम्मपदे ) उदाने चास्ति। महायान-सम्प्रदाये आसां संस्कृतरूपमत्यन्तं प्रचलितं लोकप्रियं चासीत्। एतत्कालपर्यन्तमयं सग्रहः केवलं तिब्बतचीनभाषानुवादे प्राप्यते स्म। मध्य-एशियातोऽस्य मूलं द्विधा समुपालभ्यत। अत्र पालिधर्मपदात् (धम्मपद) उदानाद् वातिरिक्तानामितिवुत्तकथेरस्य थेरगाथायाश्च सूत्रस्य ( सुत्त ) विनयपिटकस्य च गाथानां च समावेशोऽस्ति। इदं प्रतीयते यत् पूर्वमस्य मूलप्राकृतात् संस्कृ-तानुवादोऽभूत्, अनन्तरमनुवादोऽस्य परिष्कृतोऽभूत्। अत्र रामायणस्य महाभारतस्य मनुस्मृतेश्च कियन्तः श्लोका उपलभ्यन्ते। अस्य लेखको धर्मजातः पुष्कलावतीवासी सर्वास्तिवादस्य महाना-चार्य आसीत्। मध्य-एशिया प्रदेशेऽस्य ग्रन्थोऽतीव लोकप्रियोऽभूत्। अस्य चीन-तिब्बत कूची-यानुवादा एतत्कालपर्यन्तमुपालभ्यन्त। श्रीनिरञ्जनप्रसादचक्रवर्ती पेलियोसग्रहतः १९३० तमे खीष्टीयाब्देऽस्य प्रकाशनमकरोत् ( प्रो० ग्र० १२ )।

**( ३ ) कुमारलब्धस्य कल्पनामण्डितिका**—अत्र बुद्धस्य जीवनघटनाः कवि-कल्पनाभिः काव्यशास्त्रालङ्कारैश्च मण्डिताः सन्ति। अतोऽस्य ग्रन्थस्याभिधानं कल्पनामण्डिति-

काऽस्ति । काव्यमिदमश्वघोषस्य बुद्धचरितमनुकृत्य लिखितमिति प्रतीयते । अस्य लेखकः कुमारलब्धोऽस्ति । चीनग्रन्थेष्वाचार्याश्वघोषादनन्तर सर्वेभ्यो महत्स्थानमस्यास्ति । युआनमहोदयेनैतद्विषये इद लिखित यदय तक्षशिलावासी सौत्रान्तिकसप्रदायसस्थापकश्चासीद् ( बील० २।१३९, २।२१८,३०१ ) । ग्रन्थेऽस्मिन् कनिष्कस्य कियत्यो घटना लिखिताः सन्ति, अतोऽस्य समयो द्वितीय शतकमस्तीति मन्यते ।

**( ४ ) बावरपुस्तकम् ( बावरपोथी )**—कतिपयतुर्कैः १८८९ तमे खीष्टीयाब्दे भारतीयसेनाया एकमधिकारिण कर्नल्बावर प्रति एक पुस्तक विक्रीतम् । बावरमहोदयेन तत् पाठयितु 'बङ्गस्थरायल एशियाटिक सोसाइटी' इत्येतस्य पार्श्वे प्रेषितम्, अत इद बावरपुस्तकं ( पोथी ) कथ्यते । महता लघूनाञ्च पुस्तकाना सग्रहोऽयमस्ति । अस्मिन् सप्त प्रकरणानि सन्ति । प्रथमेषु त्रिषु प्रकरणेषु चिकित्सासम्बद्धान। विषयाणा निरूपणमस्ति । प्रारम्भे लशुनेनानेकेषा रोगाणा नाशो भवतीति वर्णन विद्यते । सहस्रवर्षात्मकस्यायुषः प्रापकाणा रसानामन्येषामौषधाना च प्रतिपादनमस्ति । अत्र सर्वतो महान् भागो 'नावनीतकम्' इत्यस्ति । भागेऽस्मिन् प्राचीनाना वैद्यकग्रन्थाना सक्षेपोऽथवा नवनीतमस्ति । अनेकेषा चूर्णाना घृताना तैलाना योगाना वाजीकरणप्रयोगाणा चोल्लेखो वर्तते । अस्य पञ्चमषष्ठयो: प्रकरणयोर्विषय इन्द्रजालाभिचारादि वर्तते । अशोऽयमतीव खण्डितोऽस्ति, अन्ते च सर्पदंशस्य प्रभावमुन्मूलयितु मन्त्राः सन्ति । इदमुत्तरपश्चिमगुप्ताक्षरैर्भूर्जपत्रे लिखितमस्ति । अत्राग्निवेश हारीत-जातुकर्ण क्षारपाणि-पाराशर सुश्रुतप्रभृत्याचार्याणामुल्लेखो वर्तते ।

**( ५ ) सर्वास्तिवादिनां भिक्षु ( भिक्षुकी )-प्रातिमोक्षः**—बौद्धसघे भिक्षुभिर्भिक्षुकीभिश्च पालितो नियमः प्रातिमोक्षो विनयो वोच्यते । पालित्रिपिटकस्य विनयपिटके थेरवादिना नियमाः सविस्तर विविक्ताः सन्ति । उत्तरभारतस्य सर्वास्तिवादिना विनयः सस्कृतभाषायामासीत् । चीनीयत्रिपिटकेऽस्यैवानुवादोऽस्ति । एतत्कालपर्यन्तमस्य मूल सस्कृत नोपलभ्यते स्म । मध्य-एशियाप्रदेशस्योत्खननेनास्य कश्चन खण्डितोऽशः समुपालभ्यत ( बा० इ० सै० पृ० ९४-७ ) ।

उपर्युक्तमहत्त्वपूर्णग्रन्थातिरिक्तानि हीनयानमहायानसम्बन्धीन्यन्यानि सस्कृतपुस्तकानीतः समुपालभ्यन्त । महायानसम्प्रदायस्य प्रज्ञापारमिता रत्नकूट-महासम्पत्ति-सद्धर्मपुण्डरीकसुवर्णप्रभासोत्तमानामनेकेऽशाः 'धारणिया' च मुख्याः सन्ति । अन्येषु बौद्धग्रन्थेषु मातृचेटस्य द्वे स्तोत्रे स्तः । इमे एतत्कालपर्यन्त तिब्बतीयानुवादस्वरूपे एवोपलभ्येते स्म । एतद्विषये इत्सिंगमहोदयेन सप्तमे शतके लिखित यत् 'मनोहारिणी रचनेय सौन्दर्येण स्वर्गीयकुसुमसमानाऽस्ति । ( बा इ सै० पृ० १०१-४ ) एतदतिरिक्ता अनेके सस्कृतकथाना कोशाना व्याकरणाना च खण्डिता अशा उपालभ्यन्त । ( प्रो० ग्रे० ई० रि० पृ० १०-११ ) ।

मध्य-एशियाप्रदेशस्य सस्कृतग्रन्था गुप्तकालस्य ब्राह्मया लिप्या लिखिताः सन्ति । लिपिरियं द्विधोपलभ्यते—( १ ) भारतवत् सरलतया समुन्नताभी रेखाभिरङ्किता । अस्यामतीवस्वल्पा ग्रन्था लभ्यन्ते । ( २ ) आभुग्ना कुटिला वा लिपिः । अधिका ग्रन्था अस्या लिपौ सन्ति ।

**कूचीयम् ( आर्शी ) करानगरीयं ( कराशहरी ) वा साहित्यम्**—मध्य-एशियात उपलब्धायाः पूर्ववर्णितखोतनदेशीयभाषाया अतिरिक्ताया एकस्या अन्यस्या नूतनाया आर्य-भाषाया अपि ग्रन्था उपलब्धाः सन्ति। पूर्वमिय तुखारीभाषानाम्ना व्यपदिश्यमानाऽऽसीत्, तथा अस्या द्वे वाचौ क्रमेण क-ख तुखारीपदेन व्यवह्रियेते स्म। किन्तु नाम्नाऽनेन भ्रमोऽय भवति यदिय तुखारस्थानस्य ( तुखारिस्तानस्य ) वागस्ति। प्राचीनस्तुखारदेश आधुनिकः पामीरो बदख्शा इति चास्ति। अनेन स्थानेन सहास्या भाषायाः कश्चनापि सम्बन्धो नास्ति। अनयोरेका वाणी कूचाप्रदेशे तत्समीपप्रदेशे च व्यवह्रियते स्म। कूचाप्रदेशेऽस्याः सर्वाधिका अवशेषा लभ्यन्ते स्म। अतः क तुखारी अधुना कूचीयोच्यते। द्वितीयस्याश्च वाचोऽधिका अवशेषाः कराशहरेत्यत्रोपलब्धाः सन्ति। अतः ख तुखारी कराशहरीति सज्ञा लभते। प्रथमाया व्यवहृतेः प्राचीन नाम 'आर्शी' अस्ति। द्वे अपि वाचे आर्यावर्तस्य ईरानस्य वाऽऽर्यभाषापेक्षया ताभिर्वाग्भिः काम साम्यमाधत्तः, याः प्राचीन-इटलीस्था रोमनजना आयर्लैण्डदेशस्य च कैल्टजना भाषन्ते स्म।

कूचीयवाणीग्रन्थेभ्योऽथवा आर्शीवाणीग्रन्थेभ्यो ज्ञायते यदत्रत्या सस्कृतिः सपूर्णतया बौद्धी भारतीया चासीत्। सस्कृतमत्रत्या पवित्रा भाषाऽऽसीत्। इदमवगन्तुं कातन्त्रव्याकरण-मधीयते स्म। अत्र मूल सस्कृतपुस्तक कूचीयानुवादश्चाप्युपालभ्येताम्। उपलब्धे कूचीयसाहित्ये सर्वास्तिवादिविनयस्यांशाः, सस्कृतावदानानुकृत्या लिखितानि महायानबौद्धतन्त्रवादसम्बद्धानि च पुस्तकानि, एव कतिपयानि तथाविधानि नाटकानि सन्ति येषु बुद्धोऽन्ये पौराणिका राजानश्च नायकाः सन्ति, विदूषकास्तेषा सखायः सन्ति। फ्रासदेशीयेन विदुषा लेवीमहोदयेन कूचीयसाहित्य-स्यानेकेषा ग्रन्थाना सम्पादनमनुवादश्च व्यधायिषाताम्। एषु प्रातिमोक्ष उदानसूत्र-उदानवर्ग-उदानालङ्कार कर्मविभङ्गा मुख्याः सन्ति ( प्रो० ग्रे० इ० रि० पृ० १३।१४ )। कराशहरीयसाहित्य-स्यान्वेषणप्रकाशनयोर्गौरव जर्मनविदुषामस्ति, अस्याग्रे उल्लेखो भविष्यति।

**कला**—मध्य-एशियात उदीच्यवसतीना प्राचीनासु चित्र-मूर्ति-वास्तुकलासु भारतीयः प्रभावः स्पष्टतया लक्ष्यते। मन्दिराणा भित्तिषु पटलेषु च कौशेयेषु च निर्मितानि चित्राणि मध्य-एशियाप्रदेशस्येतिहासस्य यथार्थप्रतिबिम्बमस्ति। यथा मध्य एशियेतिहासेऽनेकासा जातीना सस्कृतीना च सङ्गमोऽभूत्, तथैवैषु चित्रेषु विविधाना शैलीना कलासम्प्रदायाना च सम्मिश्रणमभूत्। स्टाइन गुइन-वेडेल-लेकाकाना सचित्रग्रन्थाना पत्राणा परिवर्तनेन यूनानीपद्धत्या मुद्रा, नग्ना योद्धारः, मिश्रस्य बाइजैन्टियमस्य च जवनिकानिर्मितचित्राणा स्मारिका रचनाः, खीष्टानुयायि-सम्प्रदायस्य साधवः, नृत्यवादनपर कृष्णचित्रम्, अजन्तासदृशानि चित्राणि च देशकालयोर्व्य-वधानमतिक्रम्यैकस्मिन्नेव स्थाने दृश्यन्ते। परन्तु प्राधान्यमत्र भारतीयबौद्धधर्मेण सम्बद्धाना गन्धारशैलीकाना चित्राणामेवास्ति। यद्यपि स्थानवशात् तेषु यत्र कुत्रचिद् ईरान-चीनीयप्रभावौ लक्ष्येते, किन्तु कारणमस्येदमासीद् यत् तत्तद्देशीयाः कलाकारा यदा चित्र निर्मान्ति स्म, तदा तेषा भारतीये विषये सत्यपि व्यक्तीनामाकृतिं परिधानं च तत्तद्देशानुकूलमेव कर्तुं ते विवशा भवन्ति स्म। द्वयोर्बोधिसत्त्वयोश्चित्रैरिदं स्पष्ट भविष्यति। अनयोः प्रथमं चित्र भारतीयशैल्या निर्मित-मस्ति, किन्तु द्वितीयस्मिन् चित्रे ईरानवास्तव्यैश्चित्रकारैरसावसितश्मश्रुरुन्नतोपानहमीरानदेशीयो राजेव

चित्रितः। दन्दान-उइलिकस्थानात् प्राप्तस्य त्रिमुखस्य महेश्वरस्यालेखने सकला मूर्तिरङ्गानि च भारतीयानि सन्ति, किन्तु मध्ये दक्षिणमुखे च चीनप्रभावोऽस्ति। भारते सौन्दर्यस्य य आदर्श आसीद् मध्य-एशियाप्रदेशे चीनदेशे च तस्माद् भिन्न एवासीत्। अतो वयं मध्य एशिया-प्रदेशस्य कलाकारान् क्रमेण उत्तरपूर्व-एशियाप्रदेशस्य सौन्दर्यानुरूपतया ह्रस्वा नासिका कुटिला भ्रुकुटिं प्लवमानानि नेत्राणि निम्नानि मुखानि च चित्रयतो विलोकयामः।

**मूर्तिकला**—मध्य-एशियाप्रदेशस्याधिका मूर्तयः प्राचीन-( एण्टीक )गन्धारशैल्या निर्मिताः सन्ति। अस्याः प्रत्नशैल्या आशयः प्राचीनयूनानकलायाः सर्वस्य उत्तरकालिकरूपेणास्ति। गन्धारे शैल्या अस्याः सम्पूर्णः प्रभाव आसीत्, तेन चेयं स्वीकृता। गन्धारदेशात् शैलीयं मध्य-एशिया प्राप्ता। अस्या विषयः, उद्गम', प्रेरणा, स्वरूप चेति भारतीयामासीत्। रावकस्तूपस्य बुद्धशीर्षस्य द्वाभ्या चित्राभ्यामिद सम्यक्तया स्पष्ट भवति।

**वास्तुकला**—यद्यपि मध्य-एशियाप्रदेशे पारसी-मानीय खीष्टानुयायिबौद्धप्रभृतयोऽनेके धर्मा आसन्, किन्तु प्रदेशादस्मात् सर्वे स्मारका बौद्धधर्मेणैव सम्बद्धाः सन्ति, तथा भारतीयस्य धर्मस्य वास्तोश्च लोकप्रियता प्रचार च सूचयन्ति। अत्रत्यानि वेश्मानि द्विधा कर्तु शक्यन्ते—( १ ) पर्वतीयशिलाश्छित्वा निर्मितानि गुहामन्दिराणि, ( २ ) आतपपक्वेष्टकाभिर्निर्मिताः स्तूपमन्दिरविहाराः। गुहामन्दिराणि अजन्ता इलोरा-कार्लेपप्रभृतिभारतीयगुहाशैलीमनुकृत्यो-त्कीर्यन्ते स्म। इमानि बल्खप्रदेशात् चीनदेशपर्यन्त समुपालभ्यन्त। अमीषा पटलानि चतुष्कोणानि, अथवा टेर ( जि० नाल्डुग, हैदराबाद द० )-चेजर्ला ( जि० कृष्णा ) चैत्याना पटलानीव वेल्लनाकाराणि भवन्ति स्म। इष्टकारचनाभिरपि भारतीयाः स्तूपा विहाराश्चानु-क्रियन्ते स्म।

**चित्रकला**—कूचाक्षेत्रे विशेषतः 'मिग-ओई' स्थाने गुहाना चित्रेषु भारतीयतत्त्व सरलतया परिचेतु शक्यते। एषु ब्रह्मण', इन्द्रस्य, चतुर्भुजस्य, एव पार्वत्या नन्दिना च सहितस्य शिवस्याकृतयो निर्मिताः सन्ति। अत्र चातकाना विशुद्धभारतीयालङ्करण प्राप्यते, अत्र पयोदात् पततो बिन्दून् पिबतश्चातका चित्रिताः सन्ति, अत्र विद्युत् सर्परूपेण चित्रिताऽस्ति। भारतीय-काव्यसाहित्ये चातकस्योपर्युक्तस्वभावस्य यथेष्ट वर्णन विद्यते। राजपूतचित्रकलास्वस्यातीव चित्रण-मस्ति। कूचाप्रदेशे किजिल्नामकस्थानाद् बुद्धजीवनस्यैक महत्त्वपूर्ण चित्रमुपालभ्यत। तादृश चित्रं भारहुतेऽमरावत्या चापि नोपालभ्यत। अत्र राज्ञेऽजातशत्रवे भगवतो बुद्धस्य निर्वाणसन्देशो विलक्षणप्रकारेण दत्तोऽस्ति। इयमाशङ्काऽऽसीद् यत् समाचारेणानेनाजातशत्रोरेतादृश आघातः स्याद् यत् स तस्य मृत्योः कारण कल्पेत, अतस्तस्य चतुरेण मन्त्रिणा वर्षकारेणैकस्मिन् महति पटे बुद्धस्य जन्म-बोध-प्राप्ति-धर्मचक्रप्रवर्तनप्रभृतीनि चित्राणि चित्रयता निर्वाणमपि तथा चित्रितं यदजातशत्रुणा घटनेय स्वाभाविकी प्रतीयेत। चित्रेऽस्मिन् भारतीयस्य ईरानीयस्य चीनीयस्य च तत्त्वस्य सम्मिश्रणमभूत्।

तुरफानप्रदेशाद् टोमोको इत्यस्माच्च स्थानाद् हारितीचित्राण्यपि प्राप्यन्त। अद्यत्वे इमानि ब्रिटिश-बर्लिनसग्रहालययो' सुरक्षितानि सन्ति। एतच्चित्राणि चीने जापाने जावाया च समुपलभ्यन्ते।

मध्य-एशियातो बौद्धचित्रकला खोतनराज्यमतिक्रम्य कोरियादेशं जापानदेशं च प्राप्ता। इमां कोरियां जापानं च नेता कलाकारो खोतनस्थो बजनासूनु वेई-ची-इसोग आसीत्। बजना चीनसम्राजः यागती (६०५-१७ ई०) इत्यस्य चित्रकार आसीत्, अस्माच्च प्राक्तनौ द्वौ भारतीयौ भिक्षू कार्यमिदं कुर्वन्तावास्ताम्। अनयोर्नामनी सम्भवतः क्रमेण कबोधो धर्मकक्ष-श्चास्ताम्। बजना तत्पुत्रश्च भारतीयपद्धत्या बौद्धचित्र निर्मातुमतीव प्रसिद्धावास्ताम्। प्रारम्भिक-जापानीयकलाया भारतीयतत्त्वस्य प्राधान्ये इदमेव कारणमासीत्। चीनीयबौद्धचित्रकलाया मूलं मध्य एशियाप्रदेशस्य भारतीया गन्धारकलाऽस्ति।

भारतीयसंस्कृतेर्विदेशयात्राया मध्य-एशियाया विशिष्ट स्थानमासीत्। अस्मात् स्थानाद् भारतीया संस्कृतिश्चीनं प्राप्ता। अग्रिमेऽध्यायेऽस्यैव वर्णनं भविष्यति।



# पञ्चमोऽध्यायः

## चीनदेशः

**प्रस्तावना**—चीने भारतीयसंस्कृतेः प्रसारोऽनेकाभिर्दृष्टिभिर्विशिष्टं महत्त्वमादधाति। चीनदेशस्य जनसंख्याया दृष्ट्या संसारस्य देशेषु प्रथमं स्थानमस्ति, समग्रस्य जगतो जनानां चतुर्थो भागश्चीनदेशे निवसति। अयं क्षेत्रफलेन (३८ लक्षवर्गमील) विश्वे रूसदेशानन्तरं द्वितीयो देशोऽस्ति। भारतेन तावती महती जनसंख्या तादृशश्च भूखण्डः स्वसंस्कृतिरागेण रञ्जिताविति तत्कृते भूरि गौरवमिदमस्ति। मिश्रदेशस्य, मेसोपोटेमियादेशस्य यूनानदेशस्य वा काचन प्राचीना सभ्या जातिस्तावति विस्तृते क्षेत्रे स्वसंस्कृतेः प्रभावं स्थापयितुं न सफलाऽभूत्। अद्यापि चीनदेशे मठेषु भिक्षूणां लक्षाणि पश्चिमाभिमुखानि भूत्वा भारतवर्षं प्रणमन्ति। कोटि-कण्ठेभ्यो नमो अमिताभाय (नमो ओमितू) इति ध्वनिर्निस्सरति।

चीनदेशे भारतीयसंस्कृतेर्बौद्धधर्मस्य च प्रसारस्येतिहासो निम्नेषु युगेषु विभज्यते—

(क) उषः कालः (खीष्टीयाब्दपूर्वतृतीयशतकाद् खीष्टीयाब्दप्रथमशतकपर्यन्तम्)।

(ख) बौद्धधर्मस्य बीजारोपणम्, शैशवावस्था च (प्रथमशतकखीष्टीयाब्दात् ३६५ खी.)।

(ग) उत्कर्षयुगम् (२६५ खीष्टायाब्दात्—६१८ खीष्टीयाब्दपर्यन्तम्)।

(घ) स्वर्णयुगम् (६१८ खी.—९०७ खी.)।

(ङ) ह्रासकालः (९०७ खी.—१९१२ खी.)।

(च) वर्तमानयुगम्।

**उषः कालः**—(खीष्टीयाब्दपूर्वतृतीयशतकाद् खीष्टीयाब्दप्रथमशतकपर्यन्तम्)।

**चीनभारतयोः प्राथमिकः सम्पर्कः**—खीष्टीयाब्दपूर्वतृतीयशतकात् प्रथमशतकं यावद् चीनभारतयोः सम्पर्कोऽस्पष्टेऽतीतस्य गर्भे तिरोहितो विद्यते। अवश्यावस्मिन् द्वयोर्देशयो-र्मध्ये चीनदेशीयानुश्रुतिभिः सम्पर्कस्याधोलिखितानि प्रमाणानि पुरस्क्रियन्ते।

(१) कथ्यते इदं यत् २१७ तमे खीष्टीयाब्दपूर्वे शीह्वांगतीनृपस्य समयेऽशोकस्य प्रचारकाश्चीनदेशं गताः। सम्राज आज्ञया इमे कारागारे न्यक्षिप्यन्त, परं कतिपयचमत्कार-प्रदर्शनान्तरं पर्यत्यज्यन्त।

(२) खीष्टीयाब्दात् पूर्वं १२१ तमे वर्षे चीनदेशीयसेनापतिः हो क्यू-पिंगमहोदयो हूणैः सह संग्रामानन्तरमेकेन स्वर्णपुरुषेण सह चीनदेशं प्रतिनिवृत्तः। स्वर्णपुरुषोऽयं बुद्धस्य स्वर्णमयी प्रतिमाऽऽसीत्।

( ३ ) खीष्टीयाब्दपूर्वे षष्ठे शतके चीनदेशे ताओधर्मस्य प्रवर्तको महात्मा 'लुट्जे' नामको बभूव। अस्य रहस्यवादिन्यः शिक्षाः बौद्धग्रन्थानामुपनिषदाञ्च सिद्धान्तैरत्यन्त साम्यमादधति। यथा लुट्जेमहात्मनः टाटेहकिङ्गनामके ग्रन्थे इद विद्यते यद् अन्यविजेता बलवानस्ति, आत्मविजेता महाबलवानस्ति ( ३३।१ )। धम्मपदे ( १०३ ) आत्मविजेता सग्रामे दशलक्षविजेतुरपेक्षयाधिको महान् विजेतास्तीति प्रतिपादित विद्यते। ग्रन्थद्वयेऽपि तृष्णालोभघृणाप्रभृतयो दुर्गुणाः समानतया निन्दनीयाः सन्ति। साम्यमिदमाकस्मिक काकतालीय वा वक्तु शक्यते, किन्तु यदा समुत्त-निकायस्य मिलिन्दस्य च प्रश्नस्य रथादयो दृष्टान्तास्तथैव टाटेहकिङ्गनामके ग्रन्थे दृश्यन्ते तदा काकतालीयत्वेन तस्य निर्धारण दुश्शक भवति। लुट्जेमहात्मनस्ताओवर्णनमुपनिषदामनि-र्वचनीयस्य तत्त्वस्य वर्णनेन काम साम्यमादधाति। लुट्जेमहात्मनो विषयेऽनुश्रुतिरियं प्रसिद्धा विद्यते यत् सोऽन्तिमे समये भारत जगाम। खीष्टीयाब्दपूर्वे चतुर्थे शतके लुट्जेमहात्मनः कस्य-चनानुयायिनः क्वागत्सेमहोदयस्य ग्रन्थेषु साम्यमिदमितोऽप्यधिक वर्तते। तेषु समावेः, ब्रह्मणि लयस्य, ऋषीणामलौकिकशक्तेश्च विचाराः समुपलभ्यन्ते। स पुनर्जन्मनः ससारत्यागस्य च सिद्धान्तं समीचीन मन्यते। एवं प्राणायाममाहात्म्यस्य वर्णनमपि विद्यते। मृत्युर्वह्निशमनम-कथ्यत। अमी सर्वेऽपि विषया भारतीयैर्विशेषतो बौद्धविचारैः सह सुतरा सम्बद्धाः प्रतीयन्ते। एतत्सर्वं तस्मिन् समये उभयोर्जात्योः सम्पर्कस्य फल भवितुमर्हति।

आधुनिका ऐतिहासिकाः प्रथमयोर्द्वयोरनुश्रुत्योः प्रामाण्य नाङ्गीकुर्वन्ति, साहित्यिक-साम्यस्य तृतीयानुश्रुतावधिकानि प्रबलानि प्रमाणानि वाञ्छन्ति। अत्र काचनापि विचिकित्सा नास्ति यदस्माकं पार्श्वे तादृशा प्रमाणानामभावोऽस्ति। वृक्षस्यातीव निम्नगामिमूलवत् तान्य-दृश्यानि सन्ति, किन्तूपर्युक्त गाढ साम्यमेव पर्याप्तं प्रमाणमस्ति। तथापि यद्यस्यावश्यकता भवेत्तर्हि सा चाङ्गकियेनमहोदयस्य विवरणेन पूर्णा भवति। हानसम्राट् वू-तीमहोदयश्चाङ्गनामक स्वदूतम् आमूनद्यास्तटे निवसता युइचीजनाना पार्श्वे प्रेषयामास। स स्वदेशस्य पट्सहस्रक्रोशान् दूर बाख्त्रीनामके दाहाना देशे हानस्य ( चीन ) वेणुदण्ड सेचुआनप्रदेशस्य च कौशेय भारतादानीय विक्रीयमाणमवलोकयामास। इद तत्रासामप्रदेशमार्गेण समायाति स्म। यदि द्वावपि देशौ परस्पर पण्यानामादानप्रदाने कुर्वन्तावास्ता तर्ह्यसम्भवमिद नास्ति यत् सांस्कृतिकविचाराणामपि विनिमयो भवेत्। खीष्टीयाब्दपूर्वद्वितीयशतकस्यैकस्य चीनदेशीयलेखकस्य हौनाइननमहोदयस्य रचना भारतीयकथाभिर्बोधिसत्त्वस्यावदानैश्चासशयं स्पष्टञ्च प्रभाविताः सन्ति। अतो नात्र कश्चन सदेहो यत् प्रथमे शतके चीनदेशे बौद्धधर्मस्य प्रवेशात् पूर्वमेवानेका भारतीयाः कथा विचाराश्च तत्रोपस्थिता आसन्। कुशाणभूमिपालस्य दूताः चीनदेशे सर्वप्रथम खीष्टीयाब्दपूर्वे द्वितीये शतके बौद्धधर्मस्य ग्रन्थान् प्रापयन्।

**बौद्धधर्मस्य प्रवेशो बीजारोपणञ्च**—चीनदेशीयैतिहासिकाश्चीनदेशे बौद्धधर्मस्य प्रवेशतिथिं ६२ तमखीष्टीयाब्द प्रतिपादयन्ति। वर्षेऽस्मिन् हानवश्यः सम्राट् मिगन्तीमहोदयः स्वप्न दृष्टवान् यत् कश्चन स्वर्णपुरुष उड्डीय तस्य प्रासाद प्रविशति। तस्य राजसभासदोऽकथयन् यदयमेको भारतीयदेवो बुद्धः ( फोतो ) अस्ति। राजा नैतावता सन्तुष्टोऽभूत् तेन देवस्यान्वे

पणायाष्टादश चीनदेशीया भारतस्य सीम्ना सम्बद्धे मुईन्त्रियोराज्ये प्रेषिताः। बौद्धमूर्तीः, ग्रन्थान् पुरोहितांश्चानेतुं ते आदिष्टाः। इमे ६४ तमे खीष्टीयाब्दे आत्मना साकं मध्य-एशियावास्तव्य कश्यपमातङ्गनामकं (किया-येह-मोतन) आनीतवन्तः, कतिपयसमयानन्तरं धर्मरो-नामको (चू-फा-लन) भिक्षुरप्यत्रागतः। स्वदेशं विहातुमयं किञ्चिद् विलम्बेनानुज्ञातः। अनयो-र्निवासाय लोयग-राजधान्याः समीपे एकः श्वेताश्वनामको (पो-मा-सी) विहारो निर्मितोऽभूत्। उभावपि धर्मदूतौ स्वयं श्वेताश्वमारुह्य समागतौ, अथवा तादृशमश्वं बौद्धमूर्तीः ग्रन्थांश्चारोप्या नीतवन्तौ, अतो विहारस्तेन नाम्ना प्रख्यापितः। अग्रे कानिचित् शतकानि यावत् विहारोऽयं चीने बौद्धधर्मस्य सर्वतो महत्केन्द्रमभूत्।

आगामिनी द्वे शतकेऽनुवादयुगं वक्तुं शक्यते। चीनदेश एकं सभ्यं संस्कृतञ्च राष्ट्र-मासीत्। अत्र स्वधर्मप्रचाराय बौद्धग्रन्थानां चीनभाषानुवाद आवश्यक आसीत्। एभिः चीनदेशे बौद्धधर्मस्य बीजारोपणाय समीचीनानि क्षेत्राणि प्रादुर्भावितानि। काश्यपमहोदयेना-नुवादः द्विचत्वारिंशत्प्रकरणानां सूत्राणां प्रारब्धः। ग्रन्थोऽयं पालित्रिपिटकमनुसृत्यास्ति। अस्मिन् महायानस्य मनागपि गन्धो नास्तीति एतत्कालपर्यन्तं प्रचलितमस्ति। द्वितीयो विख्यातोऽनुवादको लोकक्षेमनामको यूइचीभिक्षुरासीत्। अनेन १४८-१८८ खीष्टीयाब्दं यावत् महायानस्यानेके ग्रन्था अनूदिताः। लोकोत्तमनामकेन ईरानराजकुमारेणानुवादकार्यं सघटितम्। अनेन पञ्चपञ्चाशद् ग्रन्था अनूदिता उपलभ्यन्ते। अनेन च २१४ तमखीष्टीयाब्दं यावत् ३५० ग्रन्था अनूदिताः। इदमवश्यं स्मर्त्तव्यं यत् अमीषु अनुवादकेषु एकोऽपि चीनदेशीयो नासीत्। तेषामर्धं भारतीया आसन् अवशिष्टा मध्य-एशियाप्रदेशादागन्तारो यूइची ईरान सुग्धवास्तव्या आसन्।

हानवंशसमये ३५९ भारतीयग्रन्थानां चीनभाषायामनुवादोऽभूत्, एषु सम्प्रति केवलं ९५ ग्रन्था एवोपलभ्यन्ते। हानवंशस्यान्तिमे समये बौद्धधर्मः समग्रं चीनदेशं प्राप्तवान्। सम्राट् हुआगन्ती महोदयो बुद्धस्य लाओ-त्से इत्यस्य पूजां कर्तुं मठमेकं निर्मापितवान्। ततः प्रभृत्येव बौद्धमूर्तीनां बौद्धविहाराणाञ्च निर्माणमारभ्यत।

हानवंश्यबौद्धधर्मस्य मूलस्रोतो मध्य-एशियाऽऽसीत्। तस्य नेतारः प्रधानतया पार्थिया-वासिनः, ऋषिकाः सुग्धवासिनश्चासन्। चीनशासकस्य सविधे बौद्धग्रन्थान् सर्वप्रथमं युईची-राजदूता नीतवन्तः। अग्रिमे शतकेष्वपि क्रमोऽयं प्रवर्तमान आसीत्। चीनीयग्रन्थेषु द्वितीय-स्मिन् तृतीयस्मिन् च शतकयोरनेकेषां यूईचीबौद्धधर्मदूतानां वर्णनं विद्यते। अत्र षट्त्रिंशद् भाषावित् तुनह्वांगवासी धर्मरक्षः (फा हू) बौद्धो विशेषतः उल्लेखनीयो वर्तते। सुग्धवासिनः कागसेंग-हुई-महोदयस्य कूचावासिनः कुमारजीवस्य च कार्याणामग्रे उल्लेखो भविष्यति। प्राचीनेषु चीनदेशीयग्रन्थेषु पार्थिया यूईची-सुग्धकूचावासिनां भिक्षूणां नाम्नः प्रथमं स्थान-सूचकानि क्रमशो ङान-चे-कांग-पो इति पदानि सलग्नानि भवन्ति। आरम्भिकबौद्धदूतानामभि-धानस्य प्रथमं सलग्नानि पदानीमानि इदं प्रमाणयन्ति यत् चीनदेशस्यारम्भिकबौद्धधर्मस्यादिमं स्रोतो मध्य एशियाप्रदेशस्योपर्युक्ता देशा आसन्।

**त्रिराज्ययुगम्**—(२२१–२६५ खीष्टीयाब्दं यावत्) २२१ तमखीष्टीयाब्दादारभ्य २६५ तमपर्यन्तं चीनराज्यं नई-वू-शूनामकेषु त्रिषु राज्येषु विभक्तमासीत्, अत एवेदं

त्रिराज्ययुगमुच्यते। लोयङ्गस्थान वेईराज्यस्य राजधान्यासीत्। अत्र श्वेताश्वविहारेऽनुवादकार्यं प्रचलति स्म। तदा तत्र पञ्चानुवादका महान्तोऽभूवन्। एषु एकतमेन प्रातिमोक्षः (भिक्षुनियमः) अनूदितः। तत्कालपर्यन्त तादृशस्य महत्त्वपूर्णस्य ग्रन्थस्यानुवादाभावादिद प्रतीयते यत् तत्काल-पर्यन्त चीनराज्ये भिक्षवो न्यूना आसन्।

युगेऽस्मिन् दक्षिणचीनराज्ये प्रथम बौद्धधर्मस्य सन्देशो गत, अस्य नेतारौ च युइची-वासी तचेकियेनमहोदय. सुग्धवासी सेगा होई-महोदयश्चास्ताम्। प्रथमो लोकक्षेममहोदयस्य शिष्य आसीत्। अनेन राजनीतिपरिस्थितिवशाद् उदीच्यचीनदेशः परित्यक्तः (१९०–२२० खी०)। यगसीक्यागप्रदेशस्य दक्षिणस्मिन् भागे वूराज्यस्य राजधान्यां नानकिंगे २२५–५३ तमखीष्टीयाब्दपर्यन्त तेन एकोनत्रिंशदधिकशत बौद्धग्रन्था अनूदिताः। एषु अधुना नव ग्रन्था उपलभ्यन्ते। अनेन 'विमलकीर्तिनिदेश' सदृशा महायानग्रन्था विशेषतोऽ-नुवादाय परिगृहीताः। तचेकियेनमहोदय इद गौरवं प्राप्नोद् यत् तेन दक्षिणचीनराज्याया-नुवादद्वारा सर्वप्रथम भगवतो बुद्धस्य सन्देशो दत्तः, किन्तु तत्र सर्वप्रथम भिक्षुत्वसम्पादनस्य श्रेयः सेग-होई-महोदयेनैव प्राप्तम्। कियेनमहोदय उपासकत्वेनान्येभ्य उपसम्पदा दातु न शक्नोति स्म। सेगमहोदयेन स्वय भिक्षुत्वेनायमधिकारोऽधिगतः। अनेन द्वादशबौद्धग्रन्था अप्यनूदिताः। अस्य प्रयत्नेन दक्षिणे बौद्धधर्मस्य प्रभावो वृद्धिङ्गत। अस्य कालस्य नानकिंग-प्रदेशस्य पञ्चानामनुवादकानामेको युवराजस्यापि गुरुरासीत्। इदमस्य द्योतकमस्ति यद् बौद्धधर्मस्य राजकुलेऽपि प्रभावः प्रारभ्यत।

**त्रिराज्ययुगस्य वाङ्मयम्**—राजनीतिकदृष्ट्या चीनदेशोऽवश्यमेव वेईवू-शूराज्ययो-र्विभक्त आसीत्, किन्तु सास्कृतिकदृष्ट्या इद द्विराज्ययुगमेवासीत्। यतो हि वेई-वू राज्ययोरेव चीनदेशीयभाषायामनुवादोऽभूत्। उदीच्यचीनस्य शासकवेई-वशस्य राजधान्या लोयगप्रदेशे पूर्ववद् भाषान्तरं काम प्रचलति स्म। तस्मिन् काले सर्वश्रेष्ठोऽनुवादको धर्मकालनामधेय (थान-मो चियाओ-लो) आसीत्। मध्यभारतवासी श्रमणोऽयं २२२ तमे खीष्टीयाब्दे चीन प्राप्तवान्, तदा चीनदेशीयाना विनयस्य (भिक्षुनियमानाम्) ज्ञान मनागपि नासीत्। अनेन सर्वप्रथम महासाङ्घिकाना विनयस्य चीनभाषयानुवादः कृतः। अस्मिन् काले त्रयोऽन्ये भिक्षवः कागसेगकाई, धर्मसत्यः, धर्मभद्रश्चासन्। प्रथमः सुग्धदेशीयो भिक्षुः २५२ तमे खीष्टीयाब्दे चीन समागत, द्वितीयः २५४ तमे खीष्टीयाब्दे। कारामहोदयेन धर्मगुप्तसम्प्रदायस्य विनयस्य सुरतपरिपृच्छायाः महापरिनिर्वाणसूत्रस्य च भाषान्तराणि सम्पादितानि। धर्मसत्यो धर्मभद्रश्च पार्थियावासिनावास्ताम्।

अभिधर्मोऽप्यस्मिन् समये स्थविरघोषस्य अभिधर्मतारसशास्त्रद्वारा चीनदेश प्राप्तवान्। ध्याने बलप्रदातुरमिताभस्य च स्वर्गस्य मनोहारि वर्णन विधातुः सुखावतीव्यूहस्याप्यस्मिन् समयेऽनुवादोऽभूत्। अस्य सक्षिप्त बृहच्च द्वे रूपे आस्ताम्। इमे चीने तथा लोकप्रिये अभूता यत् १४८ तमखीष्टीयाब्दादारभ्य ९८२ तम यावदनयोर्द्वादश अनुवादा अभूवन्। चीने जापाने च मठेषु अद्यावधि अस्य पाठो भवति।

अधुना न केवल भारताद् बौद्धभिक्षवश्चीन समागताः, प्रत्युत चीनदेशीया अपि बौद्धधर्ममवगन्तुं भारतमागन्तु प्रारभन्त। तादृशः प्रथमश्चीनदेशीयश्चू शिह-हसिंगनामक आसीत्, अनेन २६० तमे खीष्टीयाब्दे खोतनराज्य प्रस्थितः, यतो हि तदानीं मध्य-एशियाप्रदेशे इदं भारतीयसंस्कृतेर्महत्केन्द्रमासीत्। चूमहोदयेन खोतनराज्ये षड्लक्षशब्दात्मकस्य पञ्च-विंशतिसाहस्रिकस्य प्रज्ञापारमितानामकस्य सस्कृतग्रन्थस्य नवतिखण्डानां प्रतिलिपिः कृता, सा च २८२ तमे खीष्टीयाब्दे स्वशिष्येण लोयगप्रदेशे प्रेषिता। खोतनराज्ये सहस्रक्रोशान् दविष्ठा साहसपूर्णाञ्च यात्रां विधातुरस्य मृत्युरपि विदेशेऽभूत्। एतदनन्तर फाहियान-युआनच्वाग-प्रभृतिभिरनेकैः श्रद्धालुभिश्चीनदेशीयैरयमनुसृतः।

दक्षिणचीनस्य शासकस्य वूवंगस्य (२२२–२८०) अष्टपञ्चाशद्वर्षात्मके काले १८९ संख्याका ग्रन्था अनूदिताः। एषु सम्प्रति षट्पञ्चाशदेव ग्रन्था उपलभ्यन्ते। ७३० तम-खीष्टीयाब्दपर्यन्त १२८ ग्रन्था लुप्ताः सजाताः। सम्प्रति लुप्ताना ग्रन्थाना सख्याः १३३ विद्यन्ते। तस्मिन् काले प्रसिद्धोऽनुवादकः शकोपासकस्तचे-चिह्चियेननामकः (२२५–२५३) त्रयोदशवर्षात्मके आयुषि सस्कृतादन्यासा षड्भाषाणा ज्ञानमधिगतवान्। अनेनानूदितेषु १२९ ग्रन्थेष्वस्मिन् समये ४९ एव ग्रन्था उपलभ्यन्ते। अपरावनुवादकौ विघ्ननामक' कागसेंग-हुईनामकश्चाभूताम्। विघ्नमहोदयेन धम्मपदं प्रथम चीनभाषयानूदितम्, अस्मिन् ३९ अध्यायाः ७५२२ श्लोका आसन्। अयं २८४ तमे खीष्टीयाब्दे चीन समागतवान्। स बौद्धत्वस्वीकरणात् पूर्वं सम्भवतो याज्ञिक आसीत्। कागसेंगमहोदयस्य चतुर्दशसु ग्रन्थेषु अद्यत्वे केवल जातकस्य काश्चन कथा एवावशिष्टाः सन्ति। कागसेंगहुईमहोदयो २४७ तमे खीष्टीयाब्दे चीन समागमत्। प्रथममयं बौद्धधर्ममनास्थया पश्यन्त वूराजान सुएन-किउ एन-महोदय त्रिरत्नस्य भक्तं चकार। अस्य चोत्तराधिकारिणो बौद्धधर्मस्य सुतरा भक्ता अभूवन्। हुईमहोदयस्य २८० तमे खीष्टीयाब्दे मृत्युरभूत्। सेंगहुईमहोदयश्चिह्चियेनश्च द्वावपि वशतः सुग्ध-शकदेशीयत्वाद् मध्य एशिया-वासिनावास्ताम्, परन्त्वनयोर्जन्म चीने बभूव, तौ च चीनसस्कृतिसस्कृतावास्ताम्। आभ्या स्वानुवादेषु विशुद्धचीनदेशीयाः शब्दाः परिभाषाश्च प्रयुक्ताः। ताभ्या पाश्चात्यदेशस्य बौद्धधर्मो न शिक्षितः, परं चीनसस्कृतिसंस्कृतो भारतीयो बौद्धधर्म आसीत्।

**उत्कर्षस्य युगम्** (२६५–६१८ खी०) चीनदेशीयेतिहासे तृतीयशतकखीष्टीयाब्दात् षष्ठशतक यावत् (३६५–५८९) अन्धकारयुगमुच्यते। युगमिदमत्यन्तराजनीतिकविप्लवस्या-राजकतायाश्च काल आसीत्। अस्मिन् समये शक्तिशालिनः केन्द्रस्य प्रभावाभावेन प्रायः समग्रे चीनराज्येऽनेकेषा लघूना तातारराज्याना स्थापना अजायत। चीनदेशीयाना प्रभुत्वमतीव सङ्कुचिते क्षेत्रे आसीत्। पर बौद्धधर्मस्य प्रसारदृष्ट्या प्रकाशयुगमासीत्, यतो हि तदाप्रभृत्येव बौद्धधर्मस्य चीनदेशे उत्कर्षः प्रारभ्यत, तस्य च प्रकाशः सर्वत्र प्रसर्तुमारेभे। केचन लेखका बौद्धधर्मस्य कलङ्कं स्वीकुर्वन्ति, यत् सभ्येषु चीनदेशीयेषु वुतस्य प्रसारो मन्दगत्याऽभूत्, किन्तु असभ्येषु तातारेषु स महता वेगेन प्रससार। किन्त्वेतदर्थं बौद्धधर्मो नोपालम्भनीयः, स्वाभाविक-मिदमासीत्—रागः श्वेतपट एव विशेषतो व्यज्यते। चीनदेशीयाः स्वस्य प्राचीनाया सस्कृतौ

प्राचीने धर्मे चाभिमानवन्त आसन्, ते विदेशस्य सभ्यता धर्मञ्च सशयेन पश्यन्ति स्म, तत्स्वीकारे च स्वापमान मन्यन्ते स्म। ताताराणा स्वस्य किञ्चित् साहित्यम्, धर्म. संस्कृतिर्वा नासीत्, ते सर्वत्र विजिताना सभ्यता स्वीचक्रु । तेषा पाश्चात्त्याः शाखा बौद्धधर्म प्रथममेव स्वीचक्रुः। चीनदेशवत् त स्वीकर्त्तु पूर्वशाखायाः काचन विप्रतिपत्तिर्नासीत्। अतस्तेषा समयेऽस्य धर्मस्य महानुत्कर्षोऽभूत्। तैस्तस्मै राज्याश्रयो दत्त.। बौद्धधर्मसरक्षकेषु वैदेशिकेषु ताताराज्यवशेषु पूर्ववर्ती चिंगमहोदयः ( ३५०-३९४ ) उत्तरवर्ती वेई तोबामहोदयः ( ३८६-५३४ ई० ) विशेषत उल्लेखनीयौ स्तः। उदीच्यचीने चतुर्थपञ्चमशतकयोः पूर्वार्द्धे तातारभूमिस्वामिना विंशती राज्यानि परस्परमयुध्यन्त। इद दक्षिणोत्तरचीनदेशीयाना ताताराणाञ्च सङ्घर्षयुगमासीत्। किन्तु बौद्धधर्मेतिहासदृष्ट्या परवर्ति चओराज्य, पश्चिमत्सिनराज्यम्, पूर्वत्सिनराज्यम्, पूर्वपरवर्तिनीत्सिनराज्ये, उत्तरवेईराज्यञ्चैव महत्त्वपूर्णानि सन्ति।

**परवर्ति चओराज्यम्**—अस्य सस्थापकः शिहलोनामक आसीत्। राज्यमिद उत्तरे चीनभित्तितो दक्षिणे हान हुआईप्रदेशपर्यन्त विस्तृतमासीत्। सिहलो-महोदयेन फो-तु-चेग नामकस्य ( बुद्धजङ्घाया. ) संरक्षण कृतम्। स तदानीन्तनः प्रसिद्धो मान्त्रिको बौद्धधर्मप्रचारकश्चासीत्। स 'पगोडो' इत्यस्य वातप्रकम्पितघण्टिकाना ध्वनिना भविष्यन्तीर्घटनाः सूचयति स्म, वृष्टि कारयितु मृतान् जीवयितुञ्च तस्य सामर्थ्यमासीदित्युच्यते स्म। श्रूयते यत् कदाचित् तेन रिक्ते पुष्पपात्रे धूप प्रज्वाल्य विकसित नीलकमल प्रादुर्भावितम्। तस्यैतादृशानि वैशिष्ट्यानि बौद्धधर्मस्य प्रचारपद्धतीः प्रकाम प्रकाशयन्ति। तेन ८९३ विहाराः स्थापिताः। अस्य शिष्यास्त्रीणि सहस्राण्यासन्। शिहलोमहोदयस्योत्तराधिकारी शिहचीलुगनामकः पूर्णतया बौद्ध आसीत्। तेन सर्वप्रथम श्रमणत्वाय बौद्धत्वाय वा जनेभ्य आज्ञा प्रदत्ता। तदनन्तर विहाराणा भिक्षूणाञ्च सख्या वेगेन वर्द्धितुमारेभे। चीनदेशीयेतिहासानुसारेण खीष्टीयाब्दचतुर्थशतकान्ते पश्चिमोत्तरचीनस्य प्रतिशत दशजना बौद्धा अजायन्त। अस्मिन्नेवाब्दे दक्षिणत्सिनवशस्य सम्राट् हि औ-वूमहोदयो नानकिंगस्थाने एक 'पगोडा' इत्यस्थापयत्। देशस्यास्य राजधानी पूर्वं पञ्चाशद्वर्षाणि यावत् शैन्सीप्रान्ते चागानप्रदेश. ( वर्तमान सिआनफू ) आसीत्।

पाश्चात्त्यत्सिनवशस्य ( २६५-३१६ खी० ) समये ४४७ ग्रन्था अनूदिताः। एषु १५२ ग्रन्था इदानीमुपलभ्यन्ते, तदतिरिक्ता अज्ञातनामभिर्लेखकैर्विंशतिरन्ये ग्रन्था अपि अनूदिता। एषु प्रज्ञापारमिताविषयकमहायानग्रन्थानामाधिक्यमस्ति, परमेभिः सहैव तान्त्रिकबौद्धधर्मस्य 'धारणियो' इत्यस्य मन्त्राणाञ्च साहित्यमपि चीनं प्राप्तुमारभते स्म। अष्टमशतकपर्यन्तमस्य प्राधान्य नासीत्। अस्य युगस्यानुवादका धर्मरक्षप्रभृतयो हानवशवन्मध्य-एशियाप्रदेशे निवसन्तो भारत युइच-ईरान-सुग्ध चीनदेशीया आसन्।

तदा प्रभृत्येव चीनदेशे स्त्रियो बौद्धभिक्षुण्यो भवितु प्रारभन्त। चिग-चियेन-अन-लिउग-श-इत्यभिधाने द्वे भिक्षुण्यौ प्रथमे अभूताम्। प्रथमा ३५७ तमे खीष्टीयाब्दे उपसम्पदा गृहीतवती, ३६२ तमे च खीष्टीयाब्दे दिव गता। द्वितीयस्या भिक्षुण्याः प्रथम नाम हसू इत्यासीत्, इय

तुनह्वांगप्रदेशनिवासिनी आसीत्। एका च उपसेनापतेः कन्याऽऽसीत्। बाल्यत एव तस्याः प्रवृत्तिर्वैराग्याभिमुख्यासीत्, तया बुद्धदानमहोदयात् प्रव्रज्या गृहीता। तया चओराज्यस्य राजधान्या ह्सियाग-कुओ प्रदेशे ( होपेईप्रान्ते ह्सिंगमण्डलस्य दक्षिणपश्चिमभागयोः ) चियेन ह्सियेननामको मठो निर्मितः। इय परमविदुषी 'भिक्षुणी' आसीत्।

पाश्चात्त्यत्सिनवंशसमये बौद्धधर्मस्यातीव प्रसारोऽभूत्। तदानीमत्र चत्वारिंशन्महान्तो मठा आसन्। लोयङ्गस्थाने दश प्रसिद्धा मठा आसन्।

**पूर्वत्सिनवंशः**—( ३१७-४२० ) अनेन वंशेन ३१७ तमतः ४२० तमपर्यन्तं नानकिङ्गराज्ये शासन कृतम्। अस्य सम्राट् बौद्धधर्मावलम्बिना संरक्षक आसीत्। नवमो राजा सियाओ वृतीनामकश्चीनेदेशे प्रथमः सम्राट् भिक्षुरासीत्। अस्य वशस्य प्रसिद्धेभ्यः षोडश-भारतीयेभ्योऽनुवादकेभ्योऽतिरिक्ता अनेके चीनदेशीया अनुवादका अभूवन्। एभिः २३३ ग्रन्था अनूदिताः। एषु निम्नलिखिता उल्लेखनीयाः सन्ति—

( १ ) **श्रीमित्रः**—( ३०७-२२ ) अय भारतस्य कश्चन राजकुमार आसीत्, स्वीय राजसिंहासन स्वानुजाय समर्प्य श्रमणो भूत्वा चीन जगाम। ३२२ तमख्रीष्टीयाब्दपर्यन्तमनुवादकार्यमकरोत्। अशीतिवर्षवयस्कः पञ्चत्व गतवान्। अस्यानुवादेषु केचन तन्त्रग्रन्था आसन्।

( २ ) **धर्मरक्षः**—( यन-बूलन ) अय भारतीयः श्रमणोऽस्मिन् युगे सर्वोत्कृष्टोऽनुवादक आसीत्। अनेन २८१ तमतः ३९५ तमपर्यन्त धारणीमन्त्रा महायानग्रन्थाश्चानूदिताः। एषु त्रयोविंशतिर्ग्रन्थाः सम्प्रति समुपलभ्यन्ते।

( ३ ) **संघदेवः**—( ३८४-३९८ )–कश्मीरजो भिक्षुरयमभिधर्मस्य प्रकाण्डपण्डित आसीत्। ३८४ तमे ख्रीष्टीयाब्दे चागआनप्रदेश गतः। ३९१ तमख्रीष्टीयाब्दपर्यन्तमयमुत्तरे न्यवात्सीत्। तदनन्तरमय प्रथमं लूशानप्रदेश पुनश्च नानकिंगप्रदेश जगाम। पञ्चदशवर्षपर्यन्तमनेनानुवादकार्य कृतम्। अस्यानुवादेषु मध्यमागमः (मज्झिमनिकाय.) त्रिधर्मकायशास्त्रम्, अभिधर्मज्ञानप्रस्थानशास्त्रम्, अभिधर्महृदयशास्त्रम्, ज्ञानप्रस्थानशास्त्रञ्च मुख्यानि सन्ति। अन्तिमो ग्रन्थः सर्वास्तिवादिनामभिधर्मस्य प्रधानो ग्रन्थ आसीत्। अस्मिन् १५०७२ श्लोकाः श्रूयन्ते।

( ४ ) **बुद्धभद्रः**—नगरहारवास्तव्योऽय जनो बाल्यावस्थायामेवानाथोऽभूत्, कश्मीरेऽनेन बौद्धधर्मस्य शिक्षा गृहीता। तदा फाहियानमहोदयस्य कश्चन सुहृत् कश्मीरं समागत्य कञ्चन बौद्धविद्वास चीन नेतु प्रार्थितवान्। तदा बुद्धभद्रस्तेन सह बर्मादेशमार्गात् चीनं गतवान्। यदैवानेन ज्ञातं यत् कुमारजीवः चागानप्रदेश प्राप्तस्तदा तं साक्षात्कर्तु तत्र समागतः। अयमतीव मनस्वी भिक्षुरासीत्, अय कदापि सम्राजः प्रणमनाय नागमत्। हुई–युआन-महोदयस्य प्रार्थनयाऽय लूशानप्रदेश समागतः, सम्राजा प्रार्थितोऽय ४२१ तमख्रीष्टीयाब्दात् ४२९ तमपर्यन्तं नानकिंगप्रदेशे न्युष्यानुवाद कृतवान्। अनेनानेके महान्तो ग्रन्था अनूदिताः। अस्मिन् समये चीनदेशे लघुकायाना ग्रन्थानाम्, अथवा महता ग्रन्थाना विशिष्टसन्दर्भाणामनुवादोऽभूत्। अधुना संघदेवेन बुद्धभद्रेण च महान्तोऽपि ग्रन्था भाषान्तरिता.। अय

कुमारजीवस्य फाहियानमहोदयस्य च समकालिको बौद्धशास्त्रस्य च प्रकाण्डः पण्डित आसीत्। अस्य विद्वत्तायाः प्रभावोऽतीव महानासीत्। कुमारजीवस्य सगय बुद्धभद्र एवापगमयति स्म। अस्य ग्रन्थेषु बुद्धावतसक-महावैपुल्यसूत्र महासाङ्घिकविनय-अनन्तमुख-सहायकधारणीत्येते सन्ति। विनयस्यानुवादे ४१६ तमे खीष्टीयाब्दे फाहियानमहोदयः साहाय्यमददात्।

( ५ ) **विमलाक्षः**—अयं काबुलनिवासी कराशहरस्य प्रसिद्धो विनयाध्यापकश्चासीत्। अस्यैव शिष्यः कुमारजीव आसीत्। अय ४०६ तमे खीष्टीयाब्दे चीन जगाम, कुमारजीवस्य देहत्यागानन्तरमनेन सर्वास्तिवादविनयस्यानुवादः पूर्णता नीतः।

( ६-८ ) **जिनमित्रस्य** त्रयोविंशतौ पञ्चविंशतौ वा ग्रन्थेषु अधुना द्वावेवोपलभ्येते। **गृहपतिनन्दिना** ४१९ तमे खीष्टीयाब्दे केचन ग्रन्था अनूदिताः। **धर्मबलमहोदयेन** ( फा-ली ) सुखावतीग्रन्थस्याष्टमोऽनुवादो विहितः। तदानीन्तनेभ्यो भारतीयबौद्धभिक्षुभ्योऽतिरिक्तौ द्वौ चीनदेशीयश्रमणौ उल्लेखनीयौ स्तः।

( ९ ) **फाहियानः**—तदानीन्तनेषु चीनदेशीयलेखकेषु फाहियानमहोदयो नितरा प्रसिद्ध आसीत्। चागआनराज्ये विनयपिटकग्रन्थानामङ्गभङ्गेनापूर्णतया च तस्य महत्कष्टमभूत्। ३९९ तमे खीष्टीयाब्दे स एतेषामनुसन्धानायापार कष्ट सोढ्वा भारत समागत.। पञ्चाशद्वर्षानन्तरमनेकैर्ग्रन्थैर्बुद्धमूर्तिभिश्च चीनदेश प्रतिनिवृत्तः। तदधीत्यानेकेषा चीनदेशीयतरुणाना मानसेषु भारतयात्राया आकाङ्क्षा. समुदिता.। आगामिषु सप्ताष्टशतकेषु ते भारत समागच्छन्। प्रायः फाहियानो भारतस्य प्रथमश्चीनदेशीयो यात्रिको मन्यते। परमस्या दिशि सर्वप्रथममग्रगीः चूशेहिंगमहोदय आसीत्। फाहियानमहोदयश्चीनदेशीयभाषाया निर्वाणसूत्रमनूदितवान्।

( १० ) **कुमारजीवः**—परवर्तित्सिनवशस्य ( ३८४-५१७ खी० ) बौद्धसम्राड्भिरय बौद्धधर्मोऽतीव संरक्षितः। अस्य वशस्य यओ-सिंगनामकः द्वितीयो राजा पूर्णो बौद्धः कुमारजीवस्य सरक्षकश्चासीत्। कूचावासिनः कुमारजीवस्य जीवनस्य परिचयः पूर्व लिखितोऽस्ति। ३८३ तमे खीष्टीयाब्देऽय चीनदेशीयसेनापतिना तत्र निगृहीतः। पूर्वमस्य विश्वासः सर्वास्तिवाद आसीत्। पुनश्चाय सूर्यसोमनामकस्याचार्यस्य प्रभावेण महायानसम्प्रदायानुयायी समभूत्। चीनं समागत्यानेन चाग-उवानस्थाने ४०१ तमखीष्टीयाब्दात् ४१३ तमपर्यन्त ९८ ग्रन्थाश्चीनभाषयाऽनूदिताः। अतीतानुवादेषु कुत्सितास्त्रुटय आसन्। सम्राजा तासा दूरीकरणस्य भार. कुमारजीवाय समर्पितः। अस्य च साहाय्य कर्तुमष्टशताधिका विद्वांसो नियुक्ताः। राज्ञोऽस्मिन् धर्मे एतावती रुचिरासीद् यत् स स्वय स्वीयानि प्राचीनानि पुस्तकानि समादाय विद्वत्परिषत्सूपविशति स्म, स्वहस्तेनैव त्रुटीः परिष्करोति स्म। इत्थ शतत्रयाधिका ग्रन्थाः सशोधिताः। अत्राष्टनवतिग्रन्थानामनुवादस्य गौरव कुमारजीवाय प्रदीयते। स विशेषतो महायानग्रन्थाननूदितवान्, चीनदेशाय च भारतीयबौद्धधर्मस्य ज्ञान प्रददौ। कुमारजीवेन लघुसुखावतीव्यूहोऽपि चीनदेशीयभाषयाऽनूदितः। अस्मिन् महासुखावतीग्रन्थे, ४२४ तमे खीष्टीयाब्देऽनूदितेऽमितायुर्ध्यानसूत्रे चामिताभस्य सुखावत्याख्यस्वर्गस्य अतीवाकर्षक चित्रमासीत्। चीनदेशीया अनेनातीव प्रभाविताः।

यदि बौद्धधर्मस्य तथारूप नोपस्थापितमभविष्यत्तर्हि चीनदेशीया. सम्भवतस्तस्य तथा भक्ता नाभविष्यन्। अत्राकर्षणस्य मुख्य कारणमिदमासीद् यत् कन्फ्यूशियसमते परलोकविषयको विचारो नासीत्। चीनराजस्य, चेगतूत्सुगराजस्य, जापानदेशस्य जोडोसम्प्रदायस्य च प्रधानो धर्मग्रन्थः सुखावतीव्यूहोऽस्ति। कुमारजीवेनानूदितेषु ग्रन्थेषु निम्नलिखिता विशेषतो महत्त्वपूर्णाः सन्ति—(१) पञ्चविंशतिप्रज्ञापारमिता, (२) दशसाहस्त्रिकप्रज्ञापारमिता, (३) महाप्रज्ञापारमिताशास्त्रम्, (४) वज्रच्छेदिका, (५) सद्धर्मपुण्डरीकम् (६) सर्वास्तिवादप्रातिमोक्षः, (७) ब्रह्मजालसूत्रम्, (८) शूरागमसमाधिः, (९) अश्वघोषस्य सूत्रालङ्कारः (जातकसदृशकथासग्रहः), माध्यमिकशास्त्रम्, (११) आर्यदेवस्य शतशास्त्रं तथास्य वसुबन्धुटीका, (१२) नागार्जुनस्य द्वादशनिकायशास्त्रम्। बौद्धधर्मस्य महतामाचार्याणामश्वघोषस्य, नागार्जुनस्य, वसुबन्धोः, आर्यदेवस्य च परिचयश्चीनदेशीयैः कुमारजीवस्यानुवादेभ्य एव प्राप्तः। एतत्कालपर्यन्तं चीनदेशीयभाषाया विशेषतो बुद्धस्य भौतिकोपदेशाना चमत्कारपूर्णजातकाना चैवाऽनुवादोऽभूत्। सर्वप्रथम कुमारजीवेन चीनदेशो विशिष्टान् भारतीयदार्शनिकसिद्धान्तान् प्रबोधितः। तदानीं चीनदेशीयाना सूक्ष्मदार्शनिकविचारकर्तॄणामावश्यकताऽऽसीत्। कुमारजीवेन प्रपूर्येद चीनदेशीये विद्वद्वर्गे बौद्धदर्शनस्य प्रभावः प्रतिष्ठापितः। सर्वसाधारणो जनः सुखावतीमोहकचित्रेण प्रथमत एव बौद्धधर्मेणाकृष्ट आसीत्। कुमारजीवस्येदमपि एक महत्त्वपूर्ण कार्यमासीद् यदनेनाश्वघोषस्य, नागार्जुनस्य, आर्यदेवस्य, वसुबन्धोश्च जीवनचरित्राण्यपि लिखितानि।

कुमारजीवस्य सौभाग्यमिदमासीद् यत्तस्यानेके योग्याः शिष्या अभूवन्, तैश्च तस्य कार्यमतीव वृद्धिं नीतम्। एषु ताओ-शेगनामकः सेगचओनामकश्चोल्लेखनीयौ स्तः। आभ्या कुमारजीवस्य बौद्धदर्शनस्य प्रामाणिके वास्तविकेऽनुवादे महत्साहाय्यमाचरितम्, अस्मिन् विषये च स्वतन्त्रो ग्रन्थो निबद्धः, चीने च विशिष्ट बौद्धदर्शन समुत्पादितम्। सेगचओमहोदयः प्रथम ताओ-धर्मस्यानुयायी आसीत्, परं विमलकीर्तिसूत्रपठनसमकालमेव स बौद्धभिक्षुः सवृत्तः, ४०१ तमे च खीष्टीयाब्दे चागआनप्रदेश समागत्य तेन कुमारजीवस्यानुवादकार्ये साहाय्य कृतम्। ४१३ तमे खीष्टीयाब्देऽस्य मृत्युरभूत्। अनेन निबद्धा अधिका ग्रन्था दर्शनविषयकाः सन्ति। अमीषा विशिष्टमहत्त्वमनया दृष्ट्याऽस्ति यदत्र बौद्धमतस्य ताओमतस्य च समन्वयोऽभूत्, यतो हि सेगचओमहोदयो बौद्धः सन्नपि लौट्ज़े तथा क्वागजे इत्यनयोर्महात्मनोः पर प्रशसक आसीत्। सेगचओमहोदयवत् चीनभारतीयधर्मयोः समन्वयकर्ताऽन्य एको जनो हुइयुआननामक आसीत्।

कुमारजीवातिरिक्ताना त्सिनवशजाना चतुश्चत्वारिंशद्वर्षात्मकेऽल्पकालेऽनेकैर्भारतीयश्रमणैः पञ्चदश सस्कृतग्रन्था अनूदिताः, एषु अधिका अफगानिस्तानदेशीया आसन्, एषु बुद्धभद्रस्य प्रथममुल्लेखोऽभूत्। अन्ये प्रसिद्धा अनुवादका निम्नलिखिताः सन्ति—

१. **बुद्धयशाः**—अय कश्मीरवास्तव्य आसीत्। बौद्धधर्मेऽविश्वासेनास्य पित्रा सकृत् कश्चन भिक्षुराक्रान्तस्तेन स पक्षाघातेन ग्रस्तोऽभूत्, तस्य प्रायश्चितेऽनेन स्वपुत्रो यशोनामक-

तस्मै भिक्षवे समर्पितः। अयं स्वगुरुणा साकं नानादेशेषु भ्राम्यन् बौद्धधर्मस्य प्रकाण्डो विद्वान् समजनि। कियन्तं कालं काशगरनगरे न्यवात्सीत्, अत्र कुमारजीवं साक्षात्कृतवान्, चीनदेशगतेन कुमारजीवेनायं तत्राहूतः। अनेन पालिभाषानिबद्धस्य दीर्घनिकायस्य संस्कृत-रूपस्य दीर्घागमस्य चीनदेशीयभाषानुवादः ४१२-१३ तमे खीष्टीयाब्दे चू फो नियेनमहोदयस्य साहाय्येन समाप्यत। चू-फो नियेनमहोदयेनापि ३७४ तमखीष्टीयाब्दानन्तरं द्वाविंशते-स्त्रयोविंशतेर्वा ग्रन्थानामनुवादो विहितः। कुमारजीवस्य मृत्योरनन्तरमयं कश्मीरप्रदेशं प्रत्यागतः। चीनसम्राजा यदा कदाप्यस्मै किमप्युपायनं दित्सितम्, बौद्धभिक्षूणामुपायनग्रहणेऽधिकारो नास्तीत्यनेन तन्निषिद्धम्।

२ धर्मयशाः—अयं कश्मीरनिवासी भिक्षुरासीत्। अनेन ४०७–४१५ खी० मध्ये द्वित्रा ग्रन्था अनूदिताः। अयं कुमारजीवस्य सहायकस्य कश्मीरनिवासिनः पुण्यत्रातमहोदयस्य शिष्य आसीत्। ४५३ खीष्टीयाब्दपर्यन्तं चीने न्युषितवान्, तदनन्तरं सम्भवतः कश्मीरप्रदेशं प्रतिनिवृत्तः।

**वेई (तोबा) वंशः**—(३८६–५५१ खी०) अस्य वंशस्य समये उदीच्यचीनदेशे बौद्धधर्मस्य कलायाश्च विशिष्ट उत्कर्षोऽभूत्। वेईवंशस्यैकेन संस्थापकेन शे-हूनामकेन ३३५ तमे खीष्टीयाब्दे धार्मिकसहिष्णुताविषयिका प्रसिद्धा राजाज्ञा प्रसारिता। वेईशासकाना-मनया नीत्या बौद्धधर्मस्य प्रसारेण महत्प्रोत्साहनं प्राप्तम्। अस्य वंशस्य राजकीयैतिहासिकानुसारेण 'सम्राट् वू-ती (३८६–४०७) महोदयः पञ्चदश चैत्यानि द्वौ मठौ च निर्मापितवान्, स्वहस्तेन धर्मग्रन्थानां प्रतिलिपिं कृतवान्। तेन सहस्रं स्वर्णप्रतिमाः स्थापिताः प्रतिमासञ्च त्रिसहस्रेभ्यो बौद्धभिक्षुभ्यो भोजनं दीयते स्म। सम्राजः चेंग ती-महोदयस्य समये (४५३–६५) बौद्धभिक्षवः त्रिंशत्सहस्रसंख्याका अभूवन्। हियेनवेन-ती(४६५–७६)महोदयेन ध्यानसम्प्रदायस्य बौद्धभिक्षूणां कृते चाओ यिन-स्सेमठो निर्मापितः। हिआओवेन-तीमहोदयस्य काले (४७६–४७९) बौद्धभिक्षूणां संख्या चत्वारिंशत्सहस्रपर्यन्तं गता। सिउ-ऊन वूती (४९९–५१५) महोदयो राजप्रासादे विमलकीर्तिनिर्देशस्य व्याख्यां स्वयं करोति स्म, तेन चत्वारो मठा निर्मापिताः। हिआओ-मिंगती (५१५–५२८) महोदयेन ये-मैताकिओस्सेनामको मठः स्थापितः। तस्योत्तराधिकारिभिश्चात्र पञ्चान्ये मठाः दशसहस्राणि पाषाणप्रतिमाश्च निर्मिताः। अस्य वर्णनस्यातिशयोक्तिपूर्णत्वेऽपि तदा बौद्धधर्मस्य प्रबलः प्रसारः सूच्यते।

**चीने भारतीयकलाया विकासः**—वेईवंशस्य काले बौद्धधर्मेण सह बौद्धकलापि चीनदेशं गता। प्राचीने कालेऽस्य त्रीणि प्रसिद्धानि केन्द्राण्यासन्। युनकाग(मेघमालायुताः पर्वताः)-लुगमन (नागद्वार)-तुनह्वागेति। युनकागप्रदेशस्य चित्राणां प्रतिपाद्यो विषयः प्रधानतया सद्धर्मपुण्डरीकविमलकीर्तिनिर्देशसुवर्णप्रभासप्रभृतिग्रन्थानवलम्बते, किन्तु कियत्यः पौराणिक्यो मूर्तयो—वृषारूढस्त्रिमुखः शिवो, विनायकः, पञ्चमुखो विष्णुश्चोपलभ्यन्तेऽत्र। कथ्यते यत्—आसां गुहानां निर्माणकार्यप्रारम्भात् पूर्वं भारतीया भिक्षवस्तिस्रो बुद्धमूर्तीः समादायात्र समायाताः। आसां गुहानामनेकेषु चित्रेषु मूर्तीनां शाटिकादिवस्त्रं तत्र भारतीयं प्रभावं सूचयति।

पेकिंगनगरस्य पश्चिमे शान्सीहोपेप्रान्तयोरेकविंशतिर्महत्यः कन्दराश्चीनदेशे प्राचीनतमा बौद्धसारिका मन्यन्ते। आसां मूर्तयो बामिया—अजन्ता गन्धारशैलीकाः सन्ति। इयमेव दशा कानसूप्रान्तेऽधुनैवान्विष्टाना मैत्रीगुहानामस्ति, यत्र मूर्तयः शाटिकोत्तरासङ्गञ्च विशुद्ध भारतीयं परिधानं परिदधति।

**तुनह्वांगम्**—भारतीयकलायाः प्रसिद्धमिदं केन्द्रं कानसूप्रान्ते आनशीदक्षिणपश्चिमयोः चीनराज्यात् पश्चिमाभिमुखं गच्छतः कौशेयपथाद् दक्षिणो( नानलू )त्तरराजमार्गयोः ( पेईलू ) महत्त्वपूर्णे सन्धिस्थलेऽवस्थितमासीत्। तकलामकाननामकमरुभूमेर्दक्षिणोत्तरतटाद् आगच्छन्तौ द्वावपि मार्गौ परस्परं सगच्छतः स्म। एतत्समीपे नानशानपर्वतमालायां ४७६ कन्दरा. खाताः सन्ति, अत्र बुद्धस्य बहुसंख्याका मूर्तय उपलभ्यन्ते, अत इमाः सहस्रबुद्धाना ( त्सियेन-फो-ताग ) गुहा उच्यते। एकस्या गुहाया मूर्तिकलायाः परा काष्ठाऽस्ति—त्रयो बोधिसत्त्वास्त्रिभ्यो बुभुक्षापीडितेभ्यो व्याघ्रेभ्य आत्मसमर्पणं कुर्वन्ति। अत्रत्यानि सर्वाणि चित्राणि पटलेषु भित्तिषु च लेपेन निर्मितानि सन्ति। तृतीयस्या गुहाया सहस्रहस्तावलोकितेश्वरस्यैकमनुपमं चित्रमस्ति। प्रत्येकं हस्ते एकमक्षि वर्तते। विश्वे यत्र कुत्रापि कस्यचित्कष्टं भवति, तस्य पार्श्वे एको हस्तो गच्छति, अक्ष्णा कष्टस्थानं परिचित्य तस्य समुचितं निवारणं करोति। तुनह्वागस्य चित्रकलाऽधुना साम्यवादशासने आदर्शो मन्यते, तुनह्वागस्य चित्राणामुद्धारायानुकृतीर्निर्मातुञ्च महान् व्ययः क्रियते।

वेईवंशस्य समये चीनदेशे बौद्धकलयातीव प्रोत्साहनं प्राप्तम्। ली-उङ्-ब्रिङ्महोदयेन स्वकीये चीनेतिहासे लिखितं यद् वेईवंशे कापि कन्या तावन्महाराज्ञी भवितुं न शक्नोति स्म, यावत् सा बुद्धस्य सुन्दरमूर्त्याः निर्माणं न कुर्यात्। वेईभूमिपालाना प्रोत्साहनेन लोयङ्गस्थानं चागानस्थानञ्च बौद्धधर्मस्य महत्केन्द्रमभूत्। तदैव ताओ-अनमहोदयस्य शिष्यैश्चीनस्यान्तर्भागान् बौद्धधर्मस्य सन्देशो नीतः। कुमारजीवबुद्धयशः-पुण्यत्रात-बोधिरुचिसदृशाः प्रसिद्धाश्चीनदेशीया अनुवादका अपि अस्मिन्नेव काले प्रादुरभूवन्, तैश्च चीनदेशे बौद्धधर्मं प्रतिष्ठापयितुं महत्साहाय्यं कृतम्।

तदानीं बौद्धधर्मस्य झटिति प्रसारस्य मुख्यानि कारणानि २२० तमे खीष्टीयाब्दे हानवंशस्य समाप्तौ सत्या चीनसाम्राज्यस्य विघटनं बौद्धधर्मे सौहार्दमादधतो वैदेशिका आक्रान्तारश्चासन्। चीनस्य शिक्षाप्राप्तो जनसमुदायः प्राचीनपरम्पराया धर्मस्य चात्यन्तपक्षपातित्वाद् बौद्धधर्मस्य प्रतिद्वन्द्वी आसीत्, तदा चीनसम्राजोऽभावात् तेषां क्षीणप्रभावत्वाद् बौद्धधर्मे विरोधो न्यूनतां गतः। ताओमतानुयायिनो रहस्यवादिन आसन्, तैर्बौद्धधर्मेऽनेकानि तादृशानि तत्त्वानि प्राप्तानि, यैस्ते आकृष्टा अजायन्त। तदानीं बौद्धधर्मस्य प्रामाणिकान् ग्रन्थान् प्राप्तुं चीनदेशीयानां तथाऽऽकाङ्क्षा प्रबलाऽभूद् यत् २००—६०० खीष्टीयाब्दपर्यन्तं द्व्यशीतिश्चीनदेशीया भयङ्करं कष्टं सहमाना भारतं गताः, पञ्चमे शतके इमे एकषष्ठिसंख्याका आसन्।

**ल्युसुंगवंशः ( ४२०–४८० )**—पञ्चमस्य शतकस्य प्रारम्भे दक्षिणस्मिन् भागे ल्युसुङ्ग-वंशः ( ४२०–४८० ) स्थापितोऽभूत्, उदीच्यचीनदेशः पूर्वं पट्सु ताताराज्येषु विभक्त आसीत्, ४४० तमखीष्टीयाब्दपर्यन्तमेषु वेईराज्यमेवाशिष्यत। पश्चात् शत वर्षाणि यावदस्य पूर्वपश्चिमभागौ उदीच्यचीनस्य शासन कुरुत स्म। पर दाक्षिणात्यचीनदेशः ल्युसुङ्ग चीलियाग-चेन नामकवशत्रये विभक्तोऽभूत्। सुइवशेन ( ५८९–६०५ ) सह चीनदेशस्येयमराजकता समाप्ति गता। इमे सर्वेऽपि वशा बौद्धधर्म पूर्णतया रक्षितवन्तः।

**ल्युसुंगवंशस्य साहित्यम्**—ल्युसुगवशस्य भारतीयानुवादकेषु बुद्धजीवो गुणवर्मा, गुणप्रसिद्धश्चासन्। बुद्धजीवः कुभानिवास्यासीत्, ४२३ तमे खीष्टीयाब्दे चीनदेशे समायातः, किन्तु कुभास्थभारतीयपण्डितेषु या अन्ताराष्ट्रियख्यातिर्गुणवर्मणा समासादिता, साऽन्येन केनचन विदुषा न प्राप्ता। स प्रथम ४०० तमे खीष्टीयाब्दे चो-पो ( जावा ) देशे गतः। अत्र तेन प्रथमो बौद्धविहारः स्थापितः। तस्य ख्यातिः परितः प्रसरन्ती चीनदेश यावदपि प्रसृता। पण्डितानां कथनानन्तर सम्राजा चीनमागन्तु गुणवर्माऽऽमन्त्रितः। ४३१ तमे खीष्टी-याब्देऽयं तत्रोपस्थितः। अयं तस्मिन्नेव वर्षे मृत्यु प्राप्तः। किन्त्वनेन दशग्रन्था अनूदिताः एपु पञ्चैतत्कालपर्यन्तमुपलभ्यन्ते। एपु धर्मगुप्तः, भिक्षुणीकर्म, सयुक्ताभिधर्महृदयं शास्त्राण्यासन्।

मध्यभारतनिवासी ब्राह्मणो गुणभद्रः ४३५ तमे खीष्टीयाब्दे चीन गतः। महायानस्या-गाधज्ञानेन स महायानपदेनापि व्यवह्रियते स्म। अनेनाष्टौ ग्रन्था अनूदिताः। एषु अधुनाऽ-ष्टाविंशतिरेव ग्रन्था उपलभ्यन्ते। अस्यानुवादेषु लङ्कावतारः, मिलिन्दप्रश्नः, अभिधर्मप्रकरणपादो विशेषत उल्लेखनीयाः सन्ति। अनेन महायानस्यानेकानि सूत्राणि धारपीति चानूदितानि, किन्तु हीनयानस्याप्युपेक्षा न कृता। सयुक्तागमसूत्राणि पञ्चाशत् खण्डेषु भाषान्तरितानि। तदतिरिक्त तदानीन्तनेषु भारतीयपण्डितेषु कालायसस्य, धर्ममित्रस्य, ईश्वरस्य सङ्घवर्मणश्च नामानि उल्लेखनीयानि सन्ति।

**चीवंशः**—ल्युसुंगानन्तरं त्रयोविंशतिवर्षपर्यन्तं ( ४७६–५०२ ) दक्षिणचीनदेशे चीवशेन नानकिंगप्रदेशे शासन कृतम्। एषु वर्षेषु अष्टाभिर्भिक्षुभिश्चतुर्दश संस्कृतग्रन्था अनूदिताः। एषु धर्मजातयशाः, महायानः, सङ्घभद्रः, धर्ममतिः, गुणवृद्धिश्चात्र विशेषत उल्लेखनीयाः सन्ति।

**लियांगवंशः—चीनस्याशोको वू-ती**—चीवशानन्तर दक्षिणे लियागवशेन ( ५०२–५५७ ) शासन कृतम्। अस्य प्रथमः सम्राट् वूतीनामकः ( ५०२–५४९ ) चीनदेशस्याशोक इति उच्यते। अनेन बौद्धधर्म प्रसारयितुमुन्नेतुञ्च पूर्णतया प्रयतितम्। त्रिपिटकस्य प्रथम सकलनं तस्मिन्नेव कालेऽभूत्। चीने बौद्धधर्मस्य ध्यानशाखासस्थापको बोधिधर्मोऽपि तत्समये नानकिंगप्रदेश गतवान्।

बूतीमहोदयः कन्फ्यूशियसमतानुयाय्यासीत्। ५१० तमखीष्टीयाब्दपर्यन्त चत्वारिंशद् वर्षाधिकवयस्कोऽपि सोऽस्य सम्प्रदायस्य पूर्णः समर्थकोऽभूत्। तस्य बौद्धत्वस्य गौरव त्से-

लियागनामकस्य राजकुमारस्यास्ति। तस्य प्रभावेण स बौद्धोऽभूत्, नानकिंगप्रदेशे प्रचुरस्य द्रव्यस्य महाविहारनिर्माणे व्यय कृतवान्। वू-तीमहोदयस्योपरि बौद्धधर्मस्य तावान् गभीरः प्रभावोऽभूद् यत्तेन भिक्षुवज्जीवन व्यत्येतु प्रारेभे, स निरामिषभोजनः सवृत्तः, जनेषु धर्मोपदेश कर्त्तु समारब्धवान्, कर्मकाण्डे ग्रन्थमेक लिखितवान्। स त्रिः ससार संत्यज्य कषायवस्त्र परिदधौ, किन्तु द्विर्मन्त्रिणस्तं ससार परावर्तयन्।

अशोकवद् बौद्धधर्मस्य प्रचाराय तेनानेका आज्ञाः प्रसारिताः। तत्र हिंसात्यागे विशेषतो ध्यानमदायि। स विशेषतोऽहिंसोपासक आसीत्। तेन स्वराज्ये पटेषु प्राणिना चित्रनिर्माण निषिद्धम्, यतो हि पटस्य खण्डेन प्राणिना वधो भवति स्म।

अनेनावशेषपूजा (धातु) अतीव प्रोत्साहिता। ५३८ तमे खीष्टीयाब्दे फूनानप्रदेशस्य राज्ञः पार्श्वे पुरोहित प्रेष्य भगवतो बुद्धस्याष्टहस्तदीर्घ- केशो महता समारोहेण समानायितः। अस्मात् त्रिवर्षेभ्यः पूर्वमेकस्य पगोडानामकस्य विहारस्य च निर्माणकाले एको बाल उपलब्ध आसीत्। हिन्दचीनद्वीपकल्पस्य केचन राजानोऽस्य पार्श्वे प्राचीनावशेष शरीर वा प्रेषितवन्तः। अस्य सर्वस्य पूर्णतया प्रतिष्ठाऽभूत्। ५३९ तमे खीष्टीयाब्दे अनेन सस्कृतग्रन्थान् समानेतुमेक दूतमण्डल मगधप्रदेशे प्रेषितम्। ५४६ तमे खीष्टीयाब्दे इद मण्डल स्वेन साक पुस्तकाना महान्त राशि परमार्थनामकपण्डितञ्चादाय चीन प्रत्याजगाम्।

वू-तीमहोदयस्यान्तिम जीवन विशेषतः कष्टापन्न व्यतीतम्। तदा उदीच्यचीनस्य वेईवशेन साकमस्य संघर्षः प्राचलत्। हौचिंगनामकः सेनापतिर्वेईराज्यादसन्तुष्टो भूत्वा वू-तीमहोदयस्य पार्श्वे समागतः, किन्तु पश्चादनेनासन्तुष्टो भूत्वा स वू-तीमहोदयमेवाभिययौ, नानकिंगप्रदेशमुपरुद्धवान्। तदानीं वू-तीमहोदयो निरामिषभोजननियमं त्यक्त्वाण्ड भोक्तु विवशोऽभूत्। यदा स सूचितो यद्राजधानी विजिताऽस्ति, तदा तेन महत्या शान्त्या स्थिरतया चेद प्रोक्तम्—"मया स्वप्रयत्नेन राज्यं प्राप्तमासीत्, मयैव तदपह्रियते। मया पश्चात्तापो न कर्तव्यः।"

वू-तीमहोदयस्य समये एका महत्त्वपूर्णा घटना प्रथमवार चीनदेशीयत्रिपिटकस्य सकलनमासीत्। सम्राजा ५४०० पुस्तकानि हवाहालिननामकोद्याने समाहारितानि। श्रमणेन पओचानमहोदयेन चतुष्पञ्चाशद्भागेषु अमीषा सूची कारिता। खै-यू-एन लूमहोदयस्यानुसारेणेय सूची सम्राज आदेशेन चतुर्षु भागेषु सज्जीकारिता। किन्तु ७३० तमे खीष्टीयाब्दे इयं नाश प्राप्ता। एतदनुसारेण ६५ तमखीष्टीयाब्दात् ५१८ तममध्ये १४३२ सस्कृतग्रन्थाश्चीनदेशीयभाषयाऽनूदिताः।

**बोधिधर्मस्यागमनम्**—५१० तमे खीष्टीयाब्दे भारतस्यैको बौद्धभिक्षुः कैण्टननामके पोताशयेऽवातरत्। अय ध्याने समाधौ च बल ददाति स्म। अस्य मन्तव्यमासीद् यत् सुकर्मणो नास्ति फलम्, धर्मशास्त्रपठनेन ज्ञान न प्राप्यते, किन्तु वास्तविकान्तर्दृष्टिः समाध्यनन्तर प्राप्तेन बोधेन प्रकाशेन वा प्राप्यते। पश्चाच्चीनदेशे जापानदेशे च अस्य सम्प्रदायस्य महान् प्रचारोऽ-

भूत्, किन्तु स्वजीवनकाले अस्य काचन विशिष्टा प्रतिष्ठा नाभूत्। सम्राजा वू-तीमहोदयेनास्य ख्यातिं श्रुत्वाऽयमाहूतः। सम्राजा पृष्टं यत् 'मन्दिराणां स्थापनया धर्मपुस्तकानां प्रतिलिप्या किं मया किमपि पुण्यं सञ्चितम्?' बोधिधर्मेण समाहितम्—'न किमपि'। विस्मितेन राज्ञा द्वितीयोऽस्य प्रश्नः कृतो यत् 'सर्वेभ्यः पवित्रः कः सिद्धान्तोऽस्ति'? अस्योत्तरमासीत्—सर्वस्य शून्यत्वात् किमपि वस्तु पवित्रं (शेषं) वक्तुं न शक्यते।' तदा क्रुद्धेन राज्ञा प्रतिपादितं 'मह्यमित्थमुत्तरं प्रदाता कोऽस्ति'? बोधिधर्मस्योत्तरमासीत्—'अहं न जानामि'। तादृशस्य रहस्यवादिनो बौद्धभिक्षो राज्ञः कापि आवश्यकता नासीत्। अतो बोधिधर्मो यगसीक्यागनदीं समुत्तीर्य लोयगप्रदेशं गतवान्, तत्र च शाश्वतशान्तिनामके मठे न्यवसत्। अत्रैकं वर्षं यावदेकत्र निरन्तरं भित्तिमभिलक्ष्य ध्यानेन स भित्तिप्रेक्षको ब्राह्मणः प्रथितोऽभूत्। लियागवंशेन पश्चात् तं स्वराज्ये आह्वातुं प्रयत्नः कृतः, किन्तु अयं नानकिंगप्रदेशं न गतः। अस्यागमनस्यायं प्रभावोऽभूद् यच्चीनदेशीयभिक्षव उग्राभिस्तपस्याभिः कठिनसाधनाभिश्चात्मविजयं कर्तुं प्रारभन्त। एकेन भिक्षुणा विचारितं यत् पूर्वस्मिन् काले धर्मार्थं मनुष्यैः स्वास्थीनि विभज्य मज्जा निष्कासिता, क्षुधार्तेभ्यो रक्तानि स्वभुजेभ्यः प्रवाहितानि, कर्दमे केशानास्तीर्य क्षुधाम्रियमाणाय व्याघ्राय भोजनं दातुं प्रवणभूमितः उत्प्लुतमासीत्। अहं किं कर्तुं शक्नुयाम्? तपश्चरितुम्। स भिक्षुः हिमपातसमये बहिस्तस्थौ, हिमं तस्य जानुनी व्याप्नोत्, तदैव ततो गच्छता बोधिधर्मेण स पृष्टो यदनेन त्वं किं वाञ्छसि। भिक्षुणा समाहितम्—'अहं सर्वस्यापि मानवस्य त्राणस्य मार्गमुद्घाटयितुमनुकम्पामभिलषामि। बोधिधर्मेणोक्तम्—इदं कार्यं बुद्धैः सह तुलनीयं नास्ति। अत्र न्यूनतमदृढसंकल्पस्यावश्यकताऽस्ति। अनेनोत्तरेण खिन्नेन भिक्षुणा स्वसंकल्पं दृढं दर्शयितुं निशितया शङ्कुलया स्वभुजो भिन्नः, स च बोधिधर्मस्य पुरः स्थापितः। स भिक्षुनिष्ठया प्रासीदत्, तेन स शिष्यः कृतः।

चीनदेशे केनचिदन्येन भारतीयभिक्षुणा तथाख्यातिर्न लब्धा यथा बोधिधर्मेण। चीनदेशे स तमोनाम्ना, तथा जापानदेशे दमनाम्ना प्रसिद्धोऽस्ति, तथा देशद्वयेऽपि तस्यैकं चित्रं काम लोकप्रियमस्ति, यत्र तस्य बृहत् श्मश्रुरस्ति, तेन च स्कन्धे वर्तमानायाः कस्याश्चिच्छाखायां स्वकीया एकोपानदवलम्बिताऽस्ति। तस्य जीवनेन सहैतावन्तश्चमत्काराः संयोजिताः सन्ति यत् तस्य वास्तविकजीवनस्य ज्ञानमतीव स्वल्पं विद्यते। सम्भवतः स काञ्चीनरेशस्य सूनुरासीत्, भिक्षुर्भूत्वा हिन्देशियाद्वीपेषु गतः, तत्र महायानस्य ध्यानसम्प्रदाये दीक्षितो भूत्वा तेन तावती सफलता प्राप्ता यत् तस्मै शाक्यमुनेश्चीवराणि भिक्षापात्रञ्च दत्तानि तथा स बुद्धस्य परम्परायामष्टाविंशो गुरुर्मतः। इतः स दक्षिणचीनदेशे समागतः। उपरि चीनं समागतस्यास्य ५२० तमः खीष्टीयाब्दः प्रतिपादितो विद्यते, किन्तु अस्यागमनस्य तिथयस्तदतिरिक्ताः ४८६,५२६,५२७ तमा खीष्टीयाब्दा अपि कथ्यन्ते, तथैव तस्य मृत्योरपि चत्वारस्तिथयः (४९५,५२७,५२८,५३५) प्रतिपादिताः सन्ति। अमीषां तिथीनां विवादग्रस्तत्वेऽपि खीष्टीयाब्दस्य षष्ठे शतके चीनदेशे तस्य सत्ता निर्विवादास्ति।

बोधिधर्मस्य वू-ती-महोदयेन सह जातेन उपयुक्तेन वार्तालापेन स्पष्टमस्ति यत् स नागार्जुनस्य शून्यवादे विश्वसिति स्म। तेन चीने ध्यानसम्प्रदायस्य भित्तिः स्थापिता। अस्य

सम्प्रदायस्यानुसारेण गौतमबुद्धेन ध्यानद्वारैव बोधिवृक्षस्य नीचैर्ज्ञानं प्राप्तमासीत्। प्रत्येक जनेन बाह्यवस्तुनः पराङ्मुखतया स्वीय विशुद्धस्वरूप निध्यातव्यम्, अनेन वास्तविकसत्ताया बोधो भवति। अथ शून्यताया ध्यानेनैव सम्भवति। बोधिधर्मेण किमपि पुस्तकं नालेखि, इदमावश्यकमपि नासीत्, यतो हि स ज्ञानसाधनं पुस्तकमथवा कर्म न प्रत्यपादयत्, किन्तु ध्यान समाधिञ्च। एतत्सम्प्रदायानुयायिनो लङ्कावतारसूत्रे एव श्रद्धामादधति स्म, यतो ह्यत्र ध्यानसिद्धान्ता वर्णिताः सन्ति, तथा चेद बोधिधर्मेण स्वस्मै चीनदेशीयशिष्याय हुईकेनामकायेद प्रतिपादयता दत्त यदनेन मार्गदर्शन प्राप्नुवन् विश्वं रक्ष। अत्रैव विशेषतो ध्यानेन बोधिधर्मस्तच्छिष्यश्च लङ्कावतारौ कथ्येते स्म। पश्चात् शून्यताप्रतिपादनेन वज्रच्छेदिकाऽपि सम्प्रदायस्यास्य धर्मग्रन्थोऽभूत्। द्वावपि ध्यान शून्यतामालयविज्ञानञ्च समर्थयेते।

**षष्ठशतकखीष्टीयाब्दे चीनदेशे बौद्धधर्मस्य दशा**—षष्ठे शतके समस्ते चीनदेशे बौद्धधर्मस्य प्रबला लहरिः प्रचलति स्म। उदीच्यचीनदेशस्य वेईवंशोऽस्य प्रबलः समर्थक आसीत्। अस्य पूर्वमुल्लेखोऽजायत। तदा चीनदेशे बौद्धमन्दिराणा सख्यास्त्रिंशत्सहस्राण्यासन्, विंशतिलक्षमिता बौद्धपुरोहिता आसन्। तुङ्कियेमहोदयस्य (इतिहासदर्पणः, अध्याय ३१६) अनुसारेण तदानीं प्रायः सर्वे जना बौद्धा आसन्, एतावन्तो जना भिक्षवोऽभूवन् यद् भृत्यानामभावे कृषिरुपेक्ष्यमाणाऽभूत्। इदमतिशयोक्तिपूर्णं कथन बौद्धप्रभावस्य प्रबलता सूचयति।

पर मध्ये बहुवारमन्येषा धर्माणामपि प्राधान्यमभूत्। कु-तीराज्ञः पुत्रो युआन-तीमहोदयः (५५२–५५) प्रबलताओमतानुयायी आसीत्। स धर्मस्यास्य मन्दिरेषु प्रतिवसति स्म, अस्य धर्मशास्त्राण्यधीते स्म, जनान् चैषा रहस्यमुपदिशति स्म। तेन १,४०,००० ताओग्रन्थाः सकलिताः, किन्तु तेन यदेद ज्ञात यद् वेईसेना राजधानीमभियाति, तदा तेनेमे ग्रन्था इति प्रतिपाद्य प्रज्वालिता यत् सकटकाले एभिः किमपि साहाय्यं नाचरितम्।

**लियांगवंशस्य वाङ्मयं भारतीयपण्डिताश्च**—तदानीन्तनौ प्रसिद्धौ भारतीयौ पण्डितौ बोधिधर्मनामकः परमार्थनामकश्चास्ताम्। बोधिधर्मस्य तु पूर्वमुल्लेखोऽजायत। परमार्थनामकस्तु उज्जयनीनिवास्यासीत्। वू-तीद्वारा भारतदेशे प्रेषितेन चीनदेशीयमण्डलेन सहाय५४८तमे खीष्टीयाब्दे लियागवंशस्य राजधानीं नानकिंगप्रदेशं समागतवान्। अनेन ५६९ तमखीष्टीयाब्दपर्यन्तमनुवाद. कृतः। ५५७ तमखीष्टीयाब्दानन्तर चेननामकस्य नूतनराजवंशस्य (५५७–५८९) स्थापनाऽभूत्, पर राजनीतिकपरिवर्तनेन कार्येऽस्मिन् कापि बाधा नाभूत्। अनेनानूदिता ग्रन्थाः पञ्चाशदासन्। एषु सम्प्रति द्वात्रिंशद् ग्रन्था उपलभ्यन्ते अयमभिधर्मस्य (बौद्धदर्शनस्य) प्रकाण्डः पण्डित आसीत्। पञ्चाशद्ग्रन्थेषु पञ्चचत्वारिंशद्ग्रन्था अनेन सम्बद्धा आसन्। वसुबन्धोर्दार्शनिकग्रन्थाना प्रथममेव चीनदेशीयभाषयाऽनुवादं कृत्वाऽनेन चीनदेशीयैर्भारतीयतत्त्वज्ञानिनामस्मिन् क्षेत्रेउन्नता कल्पना परिचायिता। वसुबन्धो रचनासु निर्वाणसूत्रम्, पूर्वभूतोत्पन्नाभूतगाथाशास्त्र विज्ञप्तिमात्रसिद्धिः, मध्यान्तविभङ्गसूत्रम्, तर्कशास्त्रञ्च प्रधानानि सन्ति। इमे सर्वे महायानसम्प्रदायस्य ग्रन्था आसन्। तेन तद्वृत्ति-

रिक्तस्याश्वघोषकृत-श्रद्धोत्पादशास्त्रनामकप्रसिद्धग्रन्थस्याप्यनुवादः कृतः। महायानस्योपर्युक्त दार्शनिकग्रन्थातिरिक्ताना हीनयानस्य सर्वास्तिवादस्य अभिधर्मकोष( व्याख्या ) शास्त्रस्य, वसुवर्मणश्चतुःसत्यशास्त्रस्य, गुणमतिलक्षणानुसारशास्त्रस्य, वसुमित्रस्य अष्टादशनिकायशास्त्रस्य चापि सोऽनुवादक आसीत्। किन्त्वस्य बौद्धदर्शनमेव कार्यसीमा नासीत्। तस्मिन् काले बौद्धैरन्यैर्भारतीयदार्शनिकैरपि सह सघर्षो भवति स्म। शून्यवादिना सर्वेभ्यः प्रबलः प्रतिपक्षी साख्य सिद्धान्त आसीत्। परमार्थेन ईश्वरकृष्णस्य साख्यकारिका वृत्तिसहिता चीनदेशीयभाषयाऽनूदिता। वेलबेल्वकरमहोदयोऽमु ग्रन्थ लुप्ता माठरवृत्ति मन्यते। साख्यकारिका चीनदेशे सुवर्णसप्ततिशास्त्रनाम्नापि प्रसिद्धाऽस्ति। अग्रे युआनच्वागप्रभृतिबौद्धेतरभारतीयदर्शनग्रन्थानामनुवादकाना वर्णनं भविष्यति।

**फूनानदेशीयाः पण्डिताः**—लियाग-चेनवशयो समयपर्यन्त (५०२–५८६) दक्षिण-चीने फूनान (कम्बोडिया) देशाद् मन्द्रः, सङ्घपालः, सुमतिः–त्रयो बौद्धपण्डिता समागताः। एषु सर्वप्रथमम् ५०३ तमे खीष्टीयाब्दे मन्द्र आगमत्। तेन सप्तशतिकाप्रज्ञापारमिता, धर्म धातुप्रकृत्यसम्भेदनिर्देशोऽनूदितौ, किन्तु चीनभाषाया अपूर्णज्ञानत्वात् तस्यामी अनुवादः श्रेष्ठा नाभूवन्। रत्नमेघसूत्रस्यानुवादो मन्द्रसङ्घपालाभ्या सहत्य कृतः। सुभूतिरपि तस्मिन्नेव कालेऽनुवादक आसीत्। सघपालो गुणभद्रनामकस्य भारतीयपण्डितस्य शिष्य आसीत्। अनेन ५०५–५२० पर्यन्त चीने न्युष्य नव ग्रन्था अनूदिता.। एषु अर्हत्-उपतिष्यमहोदयस्य विमोक्ष-मार्गसूत्र विशेषत उल्लेखनीयमस्ति। बुद्धघोषस्य प्रसिद्धो ग्रन्थः 'विसुद्धिमग्गो' इति अस्यैव परिष्कृत सस्करणमस्ति। सङ्घपालस्य गुरुर्गुणभद्रोऽपि ४३५ तमे खीष्टीयाब्दे चीनदेश गतः, ४४४ तमखीष्टीयाब्दपर्यन्तमनुवादे सलग्नोऽभूत्। अस्य कालस्यैकोऽपरोऽनुवादक उद्यान-प्रदेशस्य राज्ञः सूनुरुपशून्य आसीत्। ५६५ तमे खीष्टीयाब्देऽनेन 'सुविक्रान्तविक्रमीपरिपृच्छा' इत्येतस्य चीनदेशीयभाषयाऽनुवादः कृतः। अस्य मूल पुस्तकमनेन खोतनराज्यस्यैकस्मात् श्रमणात् प्राप्तम्। एतदतिरिक्तानामन्येषा त्रयाणा ग्रन्थानामप्ययमनुवादक आसीत्। यदा दक्षिणचीन-देशे लियाग-चुआनवशौ बौद्धधर्मं रक्षतः स्म, तदैवोत्तरस्मिन् वेईवशेनाय (३८६–५३४) पूर्ण-तया समर्थ्यमान आसीत्। पूर्वमेतत्कालिककलाया विचारः कृतः। अत्र एतेषा वशाना वाङ्मयस्य वर्णन भविष्यति। अस्य वशस्य सम्राड्भिःलोयगप्रदेशे महान्ति विहारमन्दिराणि स्थापितानि। वेईमहाराज्ञ्या 'हू' इत्यनया सुगयुन-हुईसागनामानौ धर्मग्रन्थमानेतुमुद्यानप्रदेशे (पश्चिमोत्तर-भारते) प्रहितौ। आभ्या ततः १७५ ग्रन्था आनीताः। तदा चीनदेशे भारतीया अधिक-सङ्ख्याया न्यवसन्। इमे त्रिशत्सहस्रसख्याका आसन्। एतेषा तत्र निवासादपि चीनदेशे बौद्धधर्मस्य प्रभावोऽवर्धत। एडकिन्समहोदयोऽमीषा बहिर्गमनस्य कारण हिन्दुधर्मस्यात्याचार-मङ्गीकृतवान्। परं गुप्तयुगस्येतिहासे एतादृशस्य कस्यचिदप्यत्याचारस्यल्लेखो नास्ति।

**वेईवंशस्य वाङ्मयंपण्डिताश्च**—उदीच्यवेईवशेऽष्टौ अनुवादकाः सप्ततिं ग्रन्थाननूदितवन्तः। एष्वद्यैकपञ्चाशदवशिष्टाः सन्ति। वेईवशस्य प्रमुखेषु भारतीयेष्वनुवादकेषु बोधिरुचिधर्मरुचिरत्नमतिबुद्धशान्ताना नामान्युल्लेखयोग्यानि सन्ति।

**पूर्वदेशीयवेईवंशश्चीवंशश्च—५३४** तमे खीष्टीयाब्दे उदीच्यवेईवशस्यान्ते जाते सति प्रथम पूर्वदेशीयवेईवशः (५३४–५५०) पुनश्च उदीच्यचीवशः (५५०–५७७) शासन कृतवन्तौ। द्वावपि बौद्धधर्मस्योपासकावास्ताम्। अनयोर्वंशयोः समये षडनुवादका एकत्रिंशदनुवादा अभूवन्। एषु प्रधानानुवादका एते आसन्—

( १ ) **गौतमप्रज्ञारुचिः**—अयमेतत्कालिकः सर्वतो महाननुवादकोऽस्ति। अयमेकत्रिंशद्ग्रन्थेषु त्रयोदशानामनुवादकोऽस्ति। अय वाराणसेयो ब्राह्मण आसीत्। ( **५३८-५४१** ) मध्येऽनेनानुदितेष्वष्टादशसु ग्रन्थेषु ७३० तमखष्टीयाब्दपर्यन्तं पञ्चदशैवावशिष्टा आसन्। अधुना त्रयोदशैव ग्रन्था उपलभ्यन्ते। एषु सद्धर्मस्मृत्युपस्थानसूत्र सर्वेभ्योऽधिकं महत्त्वमादधाति। अत्र पुण्य-जन्म-मरण-विविधनरक-प्रेत-देवादिविविधविषयाणा वर्णनमस्ति। नामार्जुनस्यासङ्गस्य च मध्यान्तानुगमशास्त्रस्याप्ययमेवानुवादक आसीत्।

( २ ) **विमोक्षसेन**. ( प्रज्ञा )—अयमुद्यानप्रदेशस्य श्रमण आसीत्। अनेन प्रज्ञारुचिनाऽन्यभिक्षुभिश्च सह वसुबन्धोस्त्रिपूर्णसूत्रोपदेशधर्मचक्रप्रवर्तनसूत्रोपदेशधर्मसिद्धिप्रकरणनागार्जुनविवादशमनसूत्राण्यनूदितानि।

( ३ ) **नरेन्द्रयशाः**—उद्यानस्य गन्धारस्य च निवासी भिक्षुरयमुदीच्यचीवशस्य ( ५५०-५७७ ) अद्वितीयो भारतीयोऽनुवादक आसीत्। अनेन वाराणसीवास्तव्यप्रज्ञारुचेः पुत्रेण **गौतमसर्वज्ञेन** सह सप्त ग्रन्था अनूदिता। एष्वभिधर्महृदयशास्त्रं प्रधानमासीत्।

**५५५** तमे खीष्टीयाब्दे उदीच्यचीवंशस्य वेनहसु-आनतीमहोदयो बौद्धानाताओमताव लम्बिकानामेक सम्मेलनमाह्वयत्। तेन प्रतिपादितमिद यद् द्वावपि धर्मौ सत्यौ भवितु नार्हतः। पक्षद्वयस्यापि युक्तीः श्रुत्वा तेन स्वनिर्णयो बौद्धधर्मानुकूलः दत्तः। ताओमतावलम्बिना पुरो भिक्षुत्व स्वीक्रियता मृत्युदण्डो वेति प्रस्तावः प्रस्तुतः। चतुर्भिरेव भिक्षुत्वं न गृहीतम्, ते च हताः।

**उदीच्यचौवंशो बौद्धधर्मस्य दमनञ्च ( ५५७–५८१ )—५८१** तमे खीष्टीयाब्दे युईवानपरिवारेण उदीच्यचौवंशः स्थापित.। प्रबलो भूत्वा चाय वंशः **५७७** तमे खीष्टीयाब्दे उदीच्यचीवश समाप्तिं नीतवान्। अस्य वशस्य प्रारम्भिके काले तु बौद्धधर्मेण राज्याश्रयः प्राप्तः, किन्तु पश्चाद् धर्मस्यास्य पुनर्भयङ्कर दमनं बभूव। उदीच्यचौवशस्यैको राजा वूतीनामकः **५७५** तमे खीष्टीयाब्दे ताओबौद्धधर्मयोर्मन्दिराणा पातनाय भिक्षूणाञ्च गार्हस्थ्यस्वीकारायाज्ञा प्रदत्तवान्। तदा नरेन्द्रयशःप्रभृतयो भिक्षवः स्वप्राणान् रक्षित्वा देशमन्यमाश्रितवन्तः, किन्तु दमनमिद बहुकालं न प्राचलत्। ५८० तमे खीष्टीयाब्दे वूतिराज्ञः पुत्रेणाज्ञेय स्थगिता।

वूतीमहोदयस्य भीषणाज्ञया पूर्वं **५५७** तमखीष्टीयाब्दात् **५७५** तमपर्यन्तमुदीच्यचौवशस्य राजधान्या चागानप्रदेशेऽनेकैर्भारतीयैः पण्डितैरनुवादः कृत.। मगधवासिना श्रमणेन जिनयशसा षड् ग्रन्था अनूदिताः। एषु महामेघसूत्र महायानाभिसमयश्चैतत्कालपर्यन्तमवशिष्टे स्तः। अस्य शिष्येण यशोगुप्तेन धारणीतस्यानुवादः कृतः। ज्ञानभद्रजिनशोभ्या सहत्य पञ्चविद्यानामको ग्रन्थोऽनूदितः, पर ग्रन्थोऽय ७३० तमखीष्टीयाब्दपर्यन्तमेव नष्टोऽभूत्।

**सूईवंशः ( ५८९–६१८ )** सूईवंशसमये चीनदेशः पुनः एकराष्ट्ररूपेण व्यवस्थितो जातः। ५८१ तमे खीष्टीयाब्दे सूईवंशसंस्थापकेन भिक्षुत्वाय जना आज्ञप्ताः, देशस्यैक्याय बौद्धधर्मोऽतीवोपयोगी वर्तत इति तेन प्रतीतम्, वार्द्धक्ये सोऽनन्यनिष्ठो बौद्धोऽभूत्। तैनैकस्यादेशस्य द्वारा बौद्धानां ताओमतानुयायिनां भूमेर्नाशो विकारो वा निषिद्ध इति समर्थितम्। तस्येतिवृत्तलेखक एकः कन्फ्यूशियसमतावलम्बी महता रोषेणेदं लिखति यत् 'वार्द्धक्ये बुद्धिवैक्लव्यादन्धविश्वासस्तमाक्रान्तवान् तेन तादृशं कार्यं कारितम्।' किन्त्वयमैतिहासिकबौद्धधर्मस्य विरोधी सन्नप्यस्योन्नतिं स्वीकरोति। तदा बौद्धग्रन्थानां संख्या कन्फ्यूशियसमतानुयायिनां पुस्तकापेक्षया दशगुणा आसीत्। सुई-इतिहासे इमानि १६५० संख्याकानि निर्दिष्टानि।

**सूईवंशीयबौद्धसाहित्यम्**—सूईवंशेन सप्तत्रिंशद्वर्षपर्यन्तं शासनमकारि, किन्तु अल्पकालेऽस्मिन् सूईसम्राजां प्रोत्साहनेन षड्भिरनुवादकैः षष्टिग्रन्थानां २६५ भागेष्वनुवादः कृतः। अनुवादाय योग्यानामध्यक्षाणां तत्त्वावधाने शासनेनानुवादकमण्डलं स्थापितम्। पूर्वमस्याध्यक्ष एको भारतीयो विद्वान् नरेन्द्रयशा आसीत्, पश्चाच्च जिनगुप्तोऽभूत्। अनेन धर्मगुप्तात् पर्याप्तं साहाय्यं प्राप्तम्। अमीषामनुवादानामितिहासोऽतीव मनोरञ्जको विद्यते। ५७५–५८१ मध्ये एकं चीनदेशीयभिक्षुमण्डलं तीर्थयात्राप्रसङ्गेन धर्मग्रन्थानामानयनाय भारतं समागमत्। ततः प्रतिनिवृत्य यदा तत् प्रतीच्यचीनसीम्नि गतम्, यदा तेन चौवंशस्य सम्राजा वूतीनामकेन कृतं बौद्धधर्मस्य प्रबलदमनं ज्ञातम्। अतश्चीनमगत्वैवेदं मण्डलं तुर्कराज्ये एव स्थितम्। अत्रानेन जिनगुप्तः प्राप्तः, अस्यागाधपाण्डित्येन इमेऽतीव प्रभाविता अभूवन्। सूईवंशसमये इदं भिक्षुमण्डलं चीनदेशे आहूयत। इदं स्वेन सह बहूनि पुस्तकान्यानयत्। उद्यानप्रदेशाद् गन्धारराज्याद्वागतं नरेन्द्रयशसमाहूय चागनाप्रदेशेऽस्मै अनुवादकार्यं समर्पयत्। साहाय्याय त्रिंशच्छ्रमणा नियुक्ताः। आगामिषु सप्तसु वर्षेषु ( ५८२–५८६ ) स्वमृत्युपर्यन्तं नरेन्द्रेणाष्टविंशतौ भागेष्वष्टौ ग्रन्था अनूदिताः। एषु सूर्यगर्भसूत्रम्, मञ्जुश्रीविक्रीडितसूत्रम्, महामेघसूत्रम् ( अस्य पूर्वमपि षड्कृत्वोऽनुवादो जातोऽस्ति ), श्रीगुप्तसूत्रम्, स्थिरधीसूत्रञ्चोल्लेखनीयानि सन्ति।

नरेन्द्रयशसोऽध्यक्षत्वे प्रथमेनानुवादकमण्डलेन प्रस्तुतेष्वनुवादेषु ताहिंगचान मन्दिरस्य भिक्षुभिः काश्चन त्रुटयः प्रतीताः। ते कमप्यन्यं योग्यं जनमध्यक्षपदे प्रतिष्ठापयितुमभिलषन्ति स्म। अत तदर्थं जिनगुप्तमाकारयामासुः। अयमस्य युगस्य सर्वोत्कृष्टोऽनुवादक आसीत्। चौवंशस्यात्याचारेणायं चीनदेशं परित्यज्य बहिर्गतः। पुनः सम्राजा विशिष्टामन्त्रणेनायमाहूतः। अवशिष्टानां ग्रन्थानामनुवादायैको भारतीयो भिक्षुर्धर्मगुप्तः, द्वौ चीनदेशीयौ भिक्षू चास्य सहायकत्वेन नियुक्ताः। अनुवादस्य शुद्धतां परीक्षितुं दशचीनदेशीयाः श्रमणा नियुक्ताः। ५८५–५९२ तमखीष्टीयाब्दपर्यन्तं जिनगुप्तेन १९२ भागेष्वेकोनचत्वारिंशद् ग्रन्थानां भाषान्तराणि कृतानि। एषु सद्धर्मपुण्डरीकम्, अभिनिष्क्रमणसूत्रम् ( बुद्धपर्वकार्यसंग्रहसूत्रम् ) चास्ताम्। पुण्डरीकानामा ग्रन्थोऽतीव लोकप्रिय आसीत्। धर्मरक्षकुमारजीवाभ्यां पूर्वमिमावनूदितौ। अनुवादेऽस्मिन् धर्मगुप्तेन जिनगुप्तस्य साहाय्यमाचरितम्। अयं दक्षिणात्य

आसीत्। पश्चिमोत्तरभारतात् चीनदेश गतः। ( ५३०–६१८ ) खी० मध्येऽनेनानेके-ग्रन्था अनूदिताः । इमे सप्तसख्याका अष्टादशसख्याका वाऽऽसन्निति कथ्यते, वर्तमाने त्रिपिटके एतन्नाम्ना दशग्रन्था उपलभ्यन्ते। एषु वज्रच्छेदिका, प्रज्ञापारमिता, असङ्गमहोदयेन लिखितास्य टीका, असङ्गस्य महायानसपरिग्रहशास्त्रटीका चासन्।

सुंगसम्राजा ५६४, ५६७ ६०३ तमेषु च खीष्टीयाब्देषु चीनलिप्या लिखिताना भारतीयपुस्तकाना तिस्रः सूच्यः संकलिताः सन्ति । चतुर्थी सूची ६०५–६१६ मध्ये सम्राज आज्ञया श्रमणेन ची-कुओमहोदयेन निर्मिता । एतदनुसारेण भारतीयाना ग्रन्थाना संख्या निम्नलिखिता सन्ति—

| | सूचीनिर्माणकालः | पुस्तकसंख्या | खण्डसंख्या |
|---|---|---|---|
| प्रथम सूची | ५६७ खी० | १,०७६ | ३, २२५ |
| द्वितीया सूची | ६०३ खी० | २,१०९ | ५, ०५८ |
| तृतीया सूची | ५९४ खी० | २,२५७ | ५, ३१० |
| चतुर्थी सूची | ६०५–६१६ खी० | १,६६२ | ६, १९८ |

इमा. सूच्योऽतीव व्यवस्थिताः क्रमबद्धाश्चासन्। महायानसूत्रविनयस्याभिधर्मस्य च हीनयानसूत्रविनयस्याभिधर्मस्य च ग्रन्था पृथक् गणिता आसन्। अस्याः सूच्या अनुसारेण महायानस्य ५५१ हीनयानस्य च ३२५ ग्रन्थाः आसन्। शाखाद्वयस्यापि ग्रन्थाः सस्कृतभाषया लिख्यन्त। प्राय इदमवगम्यते यद्धीनयानस्य ग्रन्थाः पालिनिबद्धाः सन्ति। किन्त्विद तस्य थेरवादशाखायाः कृते सत्यमस्ति। अन्यासा शाखाना ग्रन्थाः सस्कृते आसन्। अस्याऽनेके अंशा लोपं गताः सन्ति, कतिपये चीनदेशीयभाषानुवादरूपेणावशिष्टाः सन्ति ।

**साहित्ये चीनदेशाय भारतस्योपायनम्**—तदा चीनदेशो भारतेन धर्मक्षेत्र एव न प्रभावितः, किन्तु लिपौ, साहित्ये, ज्योतिषे चापि किमपि नूतनं सदेश चीनदेशो भारतात् प्राप्तवान्, चीनलिपिरक्षरात्मिका नास्ति । तस्या सज्ञाना क्रियाणा विभिन्नविचाराणाञ्च प्रकटीकरणाय निश्चिताः सङ्केता सन्ति। इमेऽनेकसहस्रसख्याकाः सन्ति। अतो चीनदेशीयभाषाऽतीव क्लिष्टास्ति । अक्षराभावात्तस्यामन्यस्या भाषायाः संज्ञाना प्रकटीकरणमतिदुष्करमस्ति । भारतीयैरनुवादकैः सस्कृतग्रन्थाना चीनदेशीयभाषानुवादे आसा संज्ञाना चीनदेशीयानामपरिचितविचाराणामनुवादे महत्काठिन्यमनुभूतम्। तद्दूरीकर्तुं प्रायोऽर्थतो भारतीयाः संज्ञा अनूद्य चीनदेशीयभाषया लिख्यन्ते स्म। इत्थमशोकोऽश्वघोष उद्यानश्च क्रमेण वू-यूः ( अपगतशोकः ) मामिंग (अश्वस्य ध्वनिः) युआन (उद्यानं) अभूवन्। भारतीयग्रन्थान् स्वलिप्या लिखितुं तैः पञ्चदशवर्णविन्यासपद्धतयो निर्मिताः, किन्त्वासा प्रचारोऽधिको नाभूत्। सप्तचत्वारिंशतो भारतीयाना वर्णाना ध्वनयः चीनीयत्रिसहस्रचिह्नैः प्रकटयन्ते स्म । किन्तु सस्कृतस्य प्रभावेण चीनदेशीयाः स्वङ्केताना भारतीयाक्षरवद् विश्लेषणमकुर्वन् । तेषु संस्कृतवर्णाना स्वरविज्ञानस्य च प्रगाढः प्रभावोऽभूत्। इदन्तु सम्भव नासीद् यन्मध्य-एशियावज्जावासुमात्रावद्वा चीनवास्तव्या भारतीया वर्णमाला गृह्णीयुः, किन्तु भारतीयसपर्केण तेषु स्वलिपिसङ्केतविभागस्य स्वरैरर्थनिश्चयस्य च नवा पद्धतिः प्रारब्धा । अनेन चीनसाहित्यस्य विकासे महत् साहाय्य-

मभूत्। षोडशे शतके कस्याश्चिद् बौद्धमूर्त्तेरभ्यन्तरादुपलब्धेन केनचन पुस्तकेनेद ज्ञायते यद् भारतीयाश्चीनदेशे दशाशगणनापद्धतिमप्यनैषुः ।

**बौद्धधर्मस्य स्वर्णसमयः ( ६१८–९०७ )**—तागवंशसमयः ( ६१८–९०७ ) चीन देशे बौद्धधर्मस्य स्वर्णसमय आसीत् । तदा तस्य प्रभावश्चरमसीमामवाप्नोत् । यद्यपि कन्फ्यूशियसमतवादिभिस्ताओमतानुयायिभिश्च सम्राज. पर्याप्त प्रभाविताः, बौद्धमतस्य दमनायानेके प्रयत्नाः कृताः किन्तु पुनरप्येभिरस्य प्रभावे काचनापि न्यूनता नायाता । इद सर्वमपि दमन स्वल्पकालिकमासीत् ।

तागवशस्य समाप्त्या सह सम्राजा धर्ममम्मु प्रति भक्तिः परा काष्ठामवाप । चीनेऽमीषा बुद्धिभक्तिरेकं विशेषवचनं समभूत् । यदा कस्मिंश्चिज्जने तागफो ( तागस्य बुद्धः ) इति पद व्यवाह्रियत, तदा तस्यामर्थो भवति यत् सोऽस्य धर्मस्य तादृश एव दृढो भक्तोऽस्ति, यादृशस्तागवश आसीत् ।

**तांगवंशस्य भारतीयं वाङ्मयम्**—तागवशो भारतीयग्रन्थानामनुवादस्य स्वर्णसमयोऽस्ति। तदानीं युआनच्वागसदृशा प्रकाण्डपण्डिताःसस्कृतग्रन्थाना केवलं प्रामाणिकमनुवाद न कृतवन्त·, किन्तु तेषा ग्रन्थाना विभिन्नप्रतिलिपीनामन्वेषणस्य तत्तुलनाकरणस्य, तासु प्रामाणिकप्रतिलिपीनामनुवादकरणस्य च समालोचनात्मकपद्धतेरपि श्रीगणेशमकुर्वन् । तदानीं सप्तविंशतिरनुवादकाः ३८० ग्रन्थाननूदितवन्त । अष्टमशतकस्य पूर्वार्धं यावत् कियद् भारतीयसाहित्य चीनदेशं प्राप्तमासीदित्यस्य किञ्चिदनुमानम् ७३० तमे खीष्टीयाब्दे खै-यु-एन-लूनामकसूचीपत्रात् कर्तुं शक्यते । अत्र १७६ भारतीयाना चीनदेशीयानाञ्चानुवादकाना २२७८ ग्रन्थाना विवरणमस्ति तदतिरिक्त एतादृशाना ७४१ ग्रन्थानामपि परिचयनमस्ति, येषामनुवादकाना नाम ज्ञातु नाशक्यत । इत्थं ६५ तमखोष्टीयाब्दात् ७३० तमपर्यन्त ३०१६ ग्रन्थानामनुवादोऽभूत् । एषु ११४८ ग्रन्था अलुप्यन्त ।

तागवंशस्य प्रधाना अनुवादका निम्नलिखिताः सन्ति—

**( १ ) प्रभाकरमित्रः ( ६२७-३७ )**—अय मध्यभारतवासी क्षत्रियो भिक्षुरासीत्, ६४ वर्षवयस्क· ६२७ तमे खीष्टीयाब्दे चीनदेश जगाम । अनेन मरणपर्यन्त ५३३ तमखीष्टीयाब्द यावत् केचन महत्त्वपूर्णा ग्रन्था अनूदिताः । तेष्वश्वघोषस्य सूत्रालङ्कारः, तथा तस्यैव असङ्गमहोदयस्य टीका, नागार्जुनस्य प्रज्ञाप्रदीपशास्त्रम्, रत्नताराधारिणीसूत्रञ्चासन् ।

**( २ ) युआनच्वांगः ( ६००–६६४ खी० )**—अयमस्य युगस्य महापण्डित आसीत् । अस्य जन्म कस्मिंश्चित् कन्फ्यूशियसमतावलम्बिकुले ६०० तमे खीष्टीयाब्देऽभूत् । बाल्यत एवायमतीव सल्लक्षण आसीत्, सप्तविंशतिवर्षवयस्कोऽय श्रमणोऽभूत्। योग्यस्य गुरोरन्वेषणाय चागानप्रदेशं गतवान् । तदानीं तस्य चित्ते बौद्धधर्मविषयेऽनेकाः शङ्का उदभूवन् । तस्य चीनदेशीयानुवादकैः सन्तोषो न समजनि । स तेषा मूलपुस्तकानि प्राप्तुमैच्छत् । तस्य मनसि अयमप्यभिलाष आसीद् यत् स भारतीयाना पण्डिताना चरणेषूपविश्य स्वीय संशय निरस्येत् ।

फाहियानमहोदयस्य यात्राविवरण पठित्वा तेन सकल्पिता भारतयात्रा। ६२९ तमे खोष्टीयाब्दे षड्विंशतिवर्षवयस्कः स भारतदेशं प्रस्थितः, मध्य-एशियाप्रदेशस्योत्तरमार्गात् तुरफान-काराशहर कूचा-सुग्ध-कुन्दुज-बलख-बामियानामकानि स्थानान्यतिक्राम्यन् भारतमाजगाम। नालन्दानगरे पञ्चवर्षाणि न्युष्य शीलभद्रनामकादाचार्यात्तेन विज्ञानवादस्य महायानस्य च दर्शनस्योच्चशिक्षा प्राप्ता। भारतस्य प्रमुखबौद्धतीर्थाना यात्रा कुर्वन् स बौद्धपुस्तकानि पवित्रावशेष न् च समगृह्णात्। षोडशवर्षानन्तर द्वाविंशतितुरङ्गानारोप्य ६५७ पुस्तकानि, तथागतस्य १५० शरीरावशेषान् ( पवित्रधातून् ) सुवर्ण-रजत-चन्दनमयीमूर्तीश्चादाय यदा स चीनदेश गतवान् तदा सम्राजा तस्य महता समारोहेण स्वागत कृतम्। स तस्मै समुन्नत राजकीयं पदं दातुमैच्छत्, परं युआनमहोदयः श्रमणत्व विहातु नाभिलषितवान्। स सम्राज आज्ञया स्वीय यात्राविवरण सी-युकीनामक ग्रन्थं ( पश्चिमजगत इतिहास. ) लिलेख। तत्र १३८ देशाना विवरणमस्ति, तेषु ११० देशाना स्वय तेन यात्रा कृता।

युआनमहोदयेनावशिष्टं जीवन भारतादानीताना ग्रन्थानामनुवादे व्यतीतम्। सम्राज अस्य कार्यस्य साहाय्यार्थं तत्रानेके जना नियुक्ता.। नवाना भिक्षूणा मण्डलमेक चीनीयानुवादाना परिष्काराय सस्थापितम्, द्वादशभिक्षवश्चानुवादे तस्य सहायका अभूवन्। एकोनविंशतिवर्षाणि यावत् स महता परिश्रमेण निरन्तराध्यवसायेन च सहास्मिन् कार्ये व्याप्रतोऽभूत्। यदा स पञ्चषष्टितमे वर्षे (६६४ खो० ) परलोक जगाम, तदा तदनूदिता ग्रन्थाः पञ्चसप्ततिसख्याका आसन्।

युआनमहोदयेन बौद्धदर्शनस्य ग्रन्थानामनुवादो विशेषतयाऽवध्यातः। ७५ ग्रन्थेषु चत्वारिंशद् ग्रन्था अभिधर्मविषयकाः सन्ति। असङ्गो वसुबन्धुश्च विज्ञानवादियोगाचारसम्प्रदायस्य प्रमुखा आचार्या आसन्। युआनमहोदयेन प्रथमस्य चत्वारो द्वितीयस्य च सप्त-ग्रन्थाश्चीनभाषयाऽनूदिताः। चीने योगाचारसम्प्रदायस्य स एव सस्थापक आसीत्। तस्मिन् काले भारते महायानस्य सर्वप्रसिद्धो महाश्च सर्वास्तिवाद आसीत्। इत्सिंगमहोदयस्य कथनानुसारेणानयोः त्रिपिटके श्लोकाना लक्षत्रयमासीत्। साहित्यमिद दशशतकानि यावन्महतः प्रयत्नस्य परिणाम आसीत्। भारतेऽस्य सम्प्रदायस्य सम्पूर्णाः सस्कृता ग्रन्था लोपं प्राप्ताः। अधुना युआनेन कृतोऽभिधर्मसम्बधिना सप्ताना ग्रन्थाना चीनभाषानुवाद एव लुप्तस्य साहित्यस्य परिचय ददाति। युआनमहोदयेन बौद्धदर्शनान्येव नानूदितानि। इदं पूर्वं प्रतिपादितमस्ति यद् बौद्धदर्शनस्यान्यभारतीयदर्शनैः सह प्रगाढः सम्बन्ध आसीत्, तदाऽमीषामध्ययनमप्यावश्यकं मन्यते स्म। युआनमहोदयेन वैशेषिकेण सम्बद्ध दशपदार्थशास्त्र तथा दर्शनसम्बद्ध दिङ्नागस्य हेतुविद्यान्यायप्रवेशशास्त्रं न्यायद्वारतर्कशास्त्रमपि चीनभाषयाऽनूदितम्। तस्मिन काले चीनदेशे भारतीयन्यायस्य महान् प्रभाव आसीत्, भारतादस्यानेके ग्रन्था नीता.। जापानदेशस्य ओलनीनामकपुस्तकालये चीनजापानभाषया लिखितानि च प्रकाशितानि १२० पुस्तकानि न्यायदर्शनविषयकाणि सन्ति, इद चीनदेशस्य जापानदेशस्य च विषयेऽस्मिन्नभिरुचेः प्रबल प्रमाणमस्ति।

( ३ ) **पुण्योपायो नन्दी वा**—अय ६५५ तमे खीष्टीयाब्दे चीन प्राप्तः, किन्तु तत्र गमनात् पूर्वं भारतस्य लङ्कायाश्च भ्रमणं कृत्वा महायानस्य हीनयानस्य च सम्प्रदाययोः १५००

पुस्तकानि समाहृतवान्, तथा तानि चीनदेशस्य कस्मिंश्चिद् विहारे सुरक्षितवान्। अस्य त्रिष्वनुवादेषु पारपृच्छाद्वयमेतत्कालपर्यन्तमुपलभ्यते। अयं द्रव्यगुणयोः पूर्णज्ञाताऽऽसीत्। ६५६ तमे ख्रीष्टीयाब्दे सम्राट् चीनसागरस्यैकस्मिन् द्वीपे किमप्यद्भुतमौषधमन्वेष्टुमिमं प्रेषयामास। ६६३ तमे ख्रीष्टीयाब्देऽय पुनश्चीन प्रत्यागतः। (४–६) तागयुगे युआनानन्तर **बलबद्धर्मेण, अतिगुप्तेन, ज्ञानभद्रेण** च एकैको ग्रन्थोऽनूदितः।

( ७ ) **दिवाकरः**—मध्यभारतस्यानेन श्रमणेन ६७६ तमात् ६८८ तमख्रीष्टीयाब्द-पर्यन्तं चीनदेशे एकोनविंशतिर्ग्रन्था अनूदिताः। एषु ललितविस्तरोऽतीव प्रसिद्धोऽस्ति।

( ८–६ ) कुभानिवासिभ्या **बुद्धत्रात-बुद्धपाल**नामकाभ्यामाचार्याभ्या द्वौ ग्रन्थौ अनूदितौ।

( १०–११ ) **देवप्रज्ञः शिक्षानन्दश्च**—द्वाविमौ खोतननिवासिनावास्ताम्। देवप्रज्ञेन अनूदितेषु षट्सु ग्रन्थेष्वेको ग्रन्थो महायानाभिधर्मसंयुक्तसंगीतिसूत्रमासीत्। इयं स्थिरमतेरभिधर्मविषयिणी कृतिरासीत्। शिक्षानन्देन 'वू' इत्याख्यया महाराज्ञ्या प्रेषितेन विशिष्टेन दूतेन खोतनराज्यादानीताना बुद्धावतंसक-वैपुल्यसूत्र-लंकावतारसूत्र-श्रद्धोत्पाद-शास्त्राणां चीनभाषयाऽनुवादः कृतः।

( १२-१४ ) उत्तरभारतस्यैकेन **ब्राह्मणेन** ६०० तमे ख्रीष्टीयाब्देन धारणीत्यस्यानुवादः कृतः। तुखारदेश ( कूचा )वासी **मित्रसेन**नामकश्रमणेऽपि एकस्य धारणीत्यस्यानुवादक आसीत् ( ७०५ ख्री० )। **रत्नचिन्ताख्येन** कश्मीरस्य श्रमणेन ६९३–७०६ इत्येतदन्तराले सप्तानुवादाः कृताः। अयं शताधिकवर्षवयस्को भूत्वा ७२१ तमे ख्रीष्टीयाब्दे दिवंगतोऽभूत्। अस्यापि सर्वे ग्रन्था धारणीत्याख्याः सन्ति।

( १५ ) **इत्सिंगः**—अयं चीनदेशीयो यात्री विनयविषयकान् ग्रन्थान् गवेषयितुं ६७१ तमे ख्रीष्टीयाब्दे चीनदेशाद् भारतदेशाय प्रस्थितः। ६७३ तमे ख्रीष्टीयाब्दे भारत गतः। पञ्चविंशतिवर्षाणि ( ६७१–६९५ ) अयं कतिपयान् देशान् अटितवान्। तस्मिन् काले सुमात्रादेशे श्रीविजयस्थानं हिन्दुसंस्कृतेरेकमुत्तमं केन्द्रमासीत्। तत्र स बहुकालं न्युषितवान्, भारते नालन्दाविश्वविद्यालयेऽपि पपाठ। ६९५ तमे ख्रीष्टीयाब्दे चीनं प्रतिनिवर्तमानेन तेन स्वेन सह पञ्चलक्षश्लोकान्विताश्चतुश्शतसंस्कृतग्रन्था नीताः। अनेन स्वयात्राविवरणं लिखितम्, तथा ७०० तमतः ७१२ तमख्रीष्टीयाब्दान्तराले षट्पञ्चाशद् ग्रन्था अनूदिताः। अस्यानुवादेषु अधिका संख्या मूलसर्वास्तिवादिना विनयस्यास्ति। संस्कृते इमे ग्रन्था निश्शेषतयाऽलुप्यन्त।

( १६ ) **बोधिरुचिः**—दक्षिणभारतवासिना श्रमणेनानेन रत्नकूटसाहित्यं चीनभाषानुवादेन सुरक्षितं कृतम्। ६९३–७१३ तमपर्यन्तमनेन त्रिपञ्चाशद् ग्रन्था अनूदिताः।

( १७–१८ ) मध्यभारतस्यैकेन श्रमणेन **पारमितेन** उद्यानप्रदेशस्य मेघशिखस्य चीनदेशीयस्य कस्यचित् श्रमणस्य साहाय्येन ७०५ तमे ख्रीष्टीयाब्दे शूरङ्गमशास्त्रमनूदितम्।

**तान्त्रिकसाहित्यम्**—अष्टमस्य शतकस्य प्रारम्भे वज्रबोधि ( ७१६–७३२ )-अमोघवज्रयोश्चीनागमनेन चीनदेशे तन्त्रवादस्य प्रचारोऽवर्धत। चीनदेशे अस्य प्रथमः प्रचारकः

स्थविरः श्रीमित्र आसीत्। अथ ३०७ तमे खीष्टीयाब्दे चीनदेशं समागतः। अनेनानेकधारणीनामनुवादः कृतः, किन्तु अष्टमशतकपर्यन्तमस्याधिको विकासो नाभूत्। वज्रबोधिना चीनदेशेऽस्य व्यापकरूपेण प्रचारः कृतः। स चण्डीदेवी-वज्रशेखरयोगतन्त्राद्येकादशतन्त्रग्रन्थानामनुवादक आसीत्।

**अमोघवज्रः**—वज्रबोधिना स्वमरणसमये (७३२) स्वशिष्योऽमोघवज्र आदिष्टो यत् स भारतं लङ्काञ्च गत्वा ग्रन्थसंग्रहं करोतु। ७४१ तमे खीष्टीयाब्देऽय भारतं समाजगाम। ७४६ तमे खीष्टीयाब्देऽय ग्रन्थपञ्चशतीमादाय चीनं प्रतिनिवृत्तः। ७७४ तमे खीष्टीयाब्दे स्वमृत्युपर्यन्तमय ग्रन्थानामष्टोत्तरशतमनूदितवान्।

वज्रयानस्याचार्यैः स्वज्ञानं रहस्यमिति यत्नतो रक्षितम्, तथा तत् कतिपयेभ्यो जनेभ्यो दत्तम्, अतः चीनेऽस्य सम्प्रदायस्याधिकः प्रचारो नाभूत्।

(१९) **शुभाकरसिंहः**—७१६ तमे खीष्टीयाब्दे मध्यभारतस्य श्रमणोऽयं बहुभिः संस्कृतपुस्तकैः सह चीनं समागतः। अथ नालन्दायां न्युषितवान्। अस्य पञ्चस्वनुवादेषु महावैरोचनाभिसंबोधि-सुसिद्धिकरमहातन्त्रे प्रसिद्धे स्तः।

(२०) **प्रज्ञा**—७८१ तमेऽय मञ्जुश्रियं साक्षात्कर्तुं चीनं जगाम। अनेन चत्वार्येव पुस्तकानि अनूदितानि।

**भारतस्य चीनदेशीया यात्रिणः**—सप्तमाष्टमशतकेऽनया दृष्ट्याऽपि महत्त्वपूर्णे स्तः, यदनयोरनेके चीनदेशीया भिक्षवो भारतस्य तीर्थयात्रां कर्तुं समागताः। युगेऽस्मिन् अस्माभिस्तादृशाश्चतुष्पञ्चाशद् भिक्षवः परिचीयन्ते। तस्मिन् समये मार्गाणां काठिन्ये विचार्यमाणे संख्येयं न्यूना नास्ति, तथा भारतं प्रति चीनदेशीयानामतिशयश्रद्धायाः पर्याप्तः परिचयोऽपि भवति। एषु युआनच्वागस्तथा इत्सिगो मुख्यौ स्तः। अनयोः परिचयः पूर्वं लिखितोऽस्ति।

**भारतीयकलानां भारतीयविद्यानाञ्च प्रवेशः**—तत्कालपर्यन्तं चीनदेशे या भारतीयकला भारतीयविद्याश्च समागताः, तासु मूर्ति-चित्र-वास्तु-संगीत-ज्योतिष-गणितायुर्वेदा उल्लेखनीयाः सन्ति। चित्रकलायाः सर्वोत्तममुदाहरणं युनकाग-लुङ्मन-तुनह्वागप्रदेशानां गुहासूपलभ्यते, तासां पूर्वमुल्लेखोऽजायत। अत्र गन्धारशैल्या गुप्तशैल्याश्च स्पष्टः प्रभावो संलक्ष्यते। वास्तुकलायां पगोडाशैलीकानि मन्दिराणि भारतीयस्तूपानुकृतीनि निर्मीयन्ते। लोयागप्रदेशस्य श्वेताश्वविहारः कोसलप्रदेशस्यानाथपिण्डारामसदृशो निर्मित आसीत्। चीनयात्रिणो भारतात् प्रतिनिवर्तमानाः पुरुषपुरप्रदेशे कनिष्कनिर्मितस्य प्रसिद्धस्तूपस्यान्यस्तूपानाञ्च लघुमूर्तीः स्वेन साकं नयन्ति स्म। ५१६ तमे खीष्टीयाब्दे वेईवंशस्य महाराज्ञ्या एकं नौभूमिकं मन्दिरं निर्मितमासीत्। अस्य स्तम्भेषु मूर्तय उत्कीर्णा आसन्, स्वर्णजलैश्च रञ्जिता आसन्, अस्य घण्टाः कलशाकारा आसन्। सम्भवतो मन्दिरमिदं भारतीयशैलीकमासीत्। सुङ्गयुगे स्थापत्यस्यैका शैली भारतीया इत्युच्यते, जापानदेशे च सैव 'तेञ्जीकुषो' इत्युच्यते स्म। एतत्प्रकारकेषु मन्दिरेषु तेषां शिखराण्यनेकभागेषु विभक्तान्यासन्, इमे खण्डा मुख्यभागाद् बहिर्निःसृताना

प्राकारशीर्षाणा द्वारप्रकोष्ठकानाञ्च परस्परमारूढाः शृङ्खला भवन्ति स्म। एतत्कालं यावत् चीने एतादृशाः पगोडापदवाच्या अत्यधिकसंख्याकाः वास्तुकृतयः समुपलभ्यन्ते।

भारतीयसगीत मध्य-एशियाद्वारा चीनदेश गतम्। कूचाराज्ये त्साओनामक एको ब्राह्मणपरिवारः सगीतेऽतीव निष्णात आसीत्। अस्यैको जनो मिआ-ओतानामकः ५५०-५७७ मध्ये चीन गतवान्। तस्य सगीतकौशलेन भारतीयसगीत चीनदेशे तथा लोकप्रियता प्राप्त यत् चीनदेशीयसम्राट् काओत्सूमहोदयः (५८१–९५) तन्निरोद्धु राजाज्ञा प्रसारिता। परं तस्योत्तराधिकारिणे सगीतमिदं तथा रोचते स्म यत् तेन पो मिंग ताद्वारा तस्यानेकतालनिर्माण कारितम्। ५६०–५७८ तमान्तराले चीनराजसभाया सुजीवनामकः कश्चन गायकः कूचाराज्या-दागमत्। स चीनदेशे या सगीतपद्धतिमानीतवान् तस्या सप्त स्वरा आसन्, तेषु त्रीणि नामानि भारतीयसगीतस्य षड्ज-पञ्चम-ऋषभै संवदन्ति, तथा सगीतस्यास्य भारतीयत्व प्रमाणयन्ति। ५८१ तमे खीष्टीयाब्दे राजभोजनसमारोहावसरे चीनदेशे भारत-कूचा-बुखारा-समरकन्द-कम्बोडियाराज्याना गायकाना दलमगच्छत्। चीनदेशीयेतिहासस्तदानीन्तनभारतीयसगीतज्ञाना विस्तृतं वर्णन करोति। अष्टमे शतके चीनदेशात् चम्पादेशात् कम्बोडियादेशाद्वा भारतीय सगीतं जापानदेश प्रापत्। एकस्याः प्राचीनजापानानुश्रुतेरनुसारेण बोधिनामको भारतीयः ७३६ तमे खीष्टीयाब्दे बोधिसत्वनामकं बैरोनामकञ्च सगीतस्य प्रकारद्वय चीनदेशाद् जापानदेश नीतवान्। बोधिसत्वनाम्ना द्योत्यते यदिद किमपि धार्मिक सगीत भवेत्। बैरो इति युद्ध विषयक प्रोच्यते, अन्या काचनानुश्रुतिस्तस्य जापानदेशे आनयनस्य श्रेयो हन-रो-तोकु (ची०-पन-लग-तो) नामकाय पुरुषाय ददाति। बाग्चीमहोदयेन इद भारतीयनाट्यशास्त्रप्रणेतुः भरतस्य चीनीयरूपमिति मन्यते, तथा बैरो इति शास्त्रीयसगीतस्य भैरवरागः।

भारत इव चीनदेशेऽपि फलितज्योतिषशास्त्रानुसारेण ग्रहाणा प्रभावेषु महान् विश्वास आसीत्, पञ्चाङ्गनिर्माणाय सम्राजा निर्मिता व्यवस्थिता काचन समितिरासीत्। सप्तमे शतके चागानप्रदेशे भारतीयज्योतिषस्य त्रयः सम्प्रदाया गौतम. काश्यपः कुमारश्चासन्। ६८४ तमे खीष्टीयाब्दे गौतमसम्प्रदायस्य लोनामकेन जनेन 'वू' इत्याख्यायै सम्राज्ञ्यै कुआगल्से ली-नामक पञ्चाङ्गमुपायनीकृतम्. इद वर्षत्रय प्राचलत्। सिता-नामकेनैकेनान्येन जनेन ७१८ तमे खीष्टीयाब्दे एक नूतन पञ्चाङ्ग क्यू-चे-ली (नवग्रहसिद्धान्तः) नामक सम्राजः पुरः समुपस्थापितम्। इद चत्वारि वर्षाणि प्राचलत्। तृतीय पञ्चाङ्ग बौद्धभिक्षुणा मिहिंगेन ७२१ तमे खीष्टीयाब्दे निर्मातुं प्रारब्धम्। यद्यपि ७२७ तमे खीष्टीयाब्देऽस्य मृत्युरभूत्, किन्तु कार्यमिद तथैव प्रचालितम्, तथा ७२९ तमे खीष्टीयाब्दे पूर्ण जातम्। अस्मिन् भारतीयपद्धत्या राहुकेतुभ्या सहिताना नवाना ग्रहाणां वर्णनमासीत्। सुईवशस्येतिवृत्तेषु भारतीयगणितस्य ज्योतिषस्य च केषाञ्चिद् ग्रन्थानामनुवादस्य वर्णनमस्ति। तागवशकालेऽनूदितेषु चतुर्षु बौद्ध-ग्रन्थेषु ज्योतिषशास्त्रस्य वर्णनमस्ति। एषु वाराणा ग्रहाणाञ्च नामानि सस्कृतभाषातिरिक्त-सुग्धी-ईरानी-भाषाभ्यामपि लिखितानि सन्ति। सम्भाव्यते यद् भारतीयस्य ज्योतिषस्य केचनाशा-श्चीनभाषानिबद्धाः सुग्धवासिभिरत्रानीताः।

आयुर्वेदस्य केचन ग्रन्थाश्चीनीयत्रिपिटके लभ्यन्ते। एकस्मिन् लघुग्रन्थे गर्भवतीना स्त्रीणा रोगा वर्णिताः सन्ति। सम्भवतोऽयमशः काश्यपसहितायाः विद्यते। पञ्चमे शतके किगशेगनामकश्चीनदेशीयो जनो बौद्धभिक्षुर्भूत्वा खोतनराज्य गतवान्, तेन च सस्कृतग्रन्थेभ्यः सकलय्य रोगचिकित्साविषयकमेक पुस्तक लिखितम्, ४५५ तमे खीष्टीयाब्देऽस्य चीनभाषानुवादः समजनि। अत्र वातसस्थानस्य वर्णन हृद्रोगस्योल्लेखश्चास्ति। एकादशशतकखीष्टायाब्दे मन्त्रतन्त्रद्वारा बालरोगनिवारणप्रतिपादकस्य रावणकुमारतन्त्रस्य चीनभाषयाऽनुवादोऽभूत्। तागवशकाले सम्राजो धनिकाश्च भारतीयान् तान्त्रिकान् योगिनश्च चीनदेशे आकारयितुमतिव्यग्रा भवन्ति स्म। यतो हि तेषा विश्वास आसीद् यत् ते वार्द्धक्यापनयनायोपाय चिकित्साञ्च जानन्ति। भारतीयौषधे विश्वासे सति एकश्चीनदेशीयः सम्राट् हिउ-आन-चाओनामक जन दुर्लभाना भारतीयानामौषधाना सग्रहणाय भारते प्रेषितवान्।

**बौद्धधर्मस्य ह्रासकालः** ( ९०७–१९१२ खी० )—तागवशस्य समाप्त्या सह न केवल प्राचीनचीनदेशस्य किन्तु चीनदेशीयबौद्धधर्मस्यापि स्वर्णयुगस्यान्तोऽभूत्। ९०७–९६० तमखीष्टीयाब्दपर्यन्त चीनदेशस्य पञ्चभिर्निर्बलै राजवशैः शासन कृतम्। अमीषा प्रभुत्वमल्पल्पेषु प्रदेशेष्वासीत्, प्राय. सर्वत्र स्वतन्त्राणि राज्यान्यासन्। ९६० तमे खीष्टीयाब्दे सुङ्गवशेन सकलोऽपि चीनदेश. एकस्मिन् सूत्रे स्यूतः। किन्तु अस्मिन् चीनदेशे पूर्वोत्तरतः खितानतातराणामाक्रमणं प्रचलति स्म। सुङ्गराजभि. किनाना स्वर्णतातराणा वा साहाय्येन खितानतातराणामन्तः कृतः, किन्तु चीनदेशस्य कृते साहाय्यमिद महार्घमभूत्। किनाख्यैः यगसीक्यागादुत्तरः सर्वोऽपि चीनो विजितः। अस्य सुङ्गवशस्य चान्तो मगोलैः कृतः। मगोलाना युआनवशेन प्रायः शत वर्षाणि शासन कृतम् ( १२८०–१३६८ )। तदनन्तर मिंगवशाना ( १३६८–१६४४ ), मञ्चूवशाना ( १६४४–१९१२ ) च चीनदेशे आधिपत्यमभूत्। सकलेऽस्मिन् समये बौद्धधर्मस्यावस्था शनैः शनैरवनताऽभूत्। बौद्धधर्मस्य शुद्ध रूप समाप्तिं गतम्, तस्य च स्थाने तन्त्रवादस्य प्राबल्यमभूत्। सुङ्गसमयस्तस्यापवाद आसीत्, किन्तु तदनन्तर मगोलैर्यो बौद्धधर्मो राजधर्मो विहित., स मन्त्रतन्त्रप्रधानस्तिब्बतदेशस्य लामावाद आसीत्। चीने मगोलाना प्रभुत्वेऽन्त गतेऽपि सति चीनदेशीया. स्वाक्रमणकारिभिर्मङ्गोलैः साक धर्ममभू घृणादृष्ट्याऽपश्यन्। दशमशतकानन्तर चीनदेशे बौद्धधर्मस्याध.पतनस्य कारणं भारतेन सह तस्य सम्बन्धविच्छेद आसीत्। बुद्धगयायां चीनयात्रिणा लेखाः १०२२ तमखीष्टीयाब्दपर्यन्तं तथा १०३३ तमपर्यन्तमेवोपलभ्यन्ते। भारते बौद्धधर्मस्याधःपतनेन तथा यवनानामाक्रमणेन भारतीया आचार्याश्चीन गन्तुं नापारयन्। चीनदेशीया अपि ११ शतकानन्तर भारत नागतवन्तः। पूर्व देशद्वयस्य सम्बन्धस्य वर्तमानत्वेन चीनस्य बौद्धधर्मोऽतीव शुद्धावस्थायामासीत्। भारतेन सह सम्बन्धस्य विच्छेदेन तिब्बतदेशस्य च प्रभाववर्द्धनेन तत्र विकृतिरागन्तु प्रारेभे। चीनेऽस्य ह्रासः प्रारभ्यत। अस्य कालस्य प्रमुखघटनानामेवोल्लेखोऽत्र समीचीनः प्रतीयते।

**सुंगवंशः** ( ९६०–१२८० )—सुङ्गवशस्य प्रारम्भः तांगवंशवद् बौद्धाना दमनेन साकमभूत्। ततः पूर्व सम्राजा ताईसुगेनेयमाज्ञा प्रसारिता यद् येषा मन्दिराणा पार्श्वे

प्राक्तनाना सम्राजामुत्कीर्णाना दानपट्टानाममावोऽस्ति, तानि सर्वाणि पिधातव्यानि। इत्थं त्रिंशत्सहस्राधिकानि मन्दिराणि समाप्तिं गतानि, २६९४ सख्याकानि बौद्धस्थानान्येवावशिष्यन्त। तदानीं बोद्धास्तपस्या कुर्वन्तः स्वशरीराणि अनेकप्रकारैः क्षतविक्षतानि कुर्वन्ति स्म। तयैवाज्ञया श्रमणानामुपासकानाञ्च स्वहस्तपादच्छेदनस्य, अङ्गुलीना दाहस्य, मांसे प्रवेशितेन कीलेन सह प्रदीपाना समवलम्बनस्य एव शरीरे लोहकीलकस्य प्रवेशस्य निषेधः कृतः। सुगसम्राजो बौद्धधर्मस्य विरोधिनो नासन्, किन्तु सर्वत्र मध्यममार्ग स्वीकुर्वन्ति स्म। यदि बौद्धविरोधिनोऽभविष्यन् तर्हि ९७२ तमे खीष्टीयाब्दे त्रिपिटकं प्रकाशयितु नानुमतिमदास्यन्। ससारे सर्वप्रथम मुद्रणसौभाग्य बौद्धग्रन्थैरेव प्राप्तम्। इद तस्मिन् काले बौद्धधर्मस्य लोकप्रियतायाः प्रबल प्रमाणमस्ति। सम्राजास्य भूमिका लिखिता, त्रिपिटकस्य प्रकाशनात् परतोऽपि चीनानुवादस्यान्तो नाभूत्। पाश्चात्त्याः २७५ सख्याका अनुवादाश्चीनभारतयोर्धार्मिकं सम्पर्क सूचयन्ति। पुनरपि ९०० तमखीष्टीयाब्दपर्यन्त सर्वेषा मुख्यग्रन्थाना चीनदेशीयभाषायामनुवादे सजाते सत्यग्रे कार्येऽस्मिन् विशिष्टोन्नतिर्नाभूत्।

बौद्धधर्मस्य दमनम्—हुईत्सुङ्गसम्राट् (११०१–११२६) केनचन ताओमतावलम्बिना पुरोधसा लिनलिंगसूनामकेन प्रभावितो भूत्वा बौद्धधर्म विचित्रेण प्रकारेणोन्मूलयितु प्रायत। एतत्कालपर्यन्त राजाज्ञाभिरनेकान् प्रतिबन्धान् सयोज्य तस्योन्मूलनस्य यत्नो भवति स्म, अनेन राजकीयाज्ञया द्वावपि धर्मौ बलात् समील्य बौद्धधर्मस्य दमन चिकीर्षितम्। सम्राज आज्ञया बुद्धोऽर्हद् वा ताओमतानुयायिना देवानामैक्य प्रापितः। बौद्धमन्दिराणि विहाराश्च आत्मान ताओमतानुयायिनो वदन्त एवात्मान रक्षितु शक्नुवन्ति स्म। किन्तु झटित्येव सम्राजो दृष्टिकोणे परिवर्तनमभूत्। तेन बौद्धधर्मस्य दमन विहाय ताओमतस्य दमन प्रारब्धम्। सम्राजोऽस्यान्तोऽतीव दुःखदोऽभूत्। अनेन सहोदीच्यसुङ्गवशस्य (९६०–११२६) अन्तोऽभूत्। आगामिसार्द्धशतवर्षाणि यावदुदीच्यचीनदेशस्तातारैराक्रान्तोऽभूत्। धार्मिकदृष्ट्या कालस्यास्य वैशिष्ट्यमिदमासीद् यत् बौद्धधर्मस्य पूर्णतो विरोधिनः कन्फ्यूशियसमतावलम्बिनः स्वधर्म लोकप्रिय कर्तुं नवीनया प्रणाल्या समुपस्थापयन्ति स्म। अत्र महान् बौद्धधर्मप्रभाव आसीत्। इद चू-हसी (११३०–१२००) महोदयस्य रचनाभिः स्पष्टं भवति। 'मन्त्रः स एवास्ति यः शिरस्यारुह्य वदेत्'। बौद्धधर्मस्य प्राधान्य तदा तेषा प्रतिद्वन्द्विभिरपि स्वीकृतमासीत्। यगसीक्यागनद्या दक्षिणे भागे दक्षिणसुगवशो राज्य करोति स्म (१२२६–१२८०)। १२८० तमे खीष्टीयाब्दे कुबलैखाँ-महोदयः सकलस्य चीनदेशस्य सम्राडभूत्।

**सुंगवंशीयं साहित्यम्**—सुङ्गवशस्य समयो बौद्धधर्मदृष्ट्यातीव महत्त्वपूर्ण आसीत्। तदा त्रिपिटकस्य मुद्रण बहुवारमभूत्। उदीच्यसुङ्गाना २६७ वर्षेषु २७५ ग्रन्थानामनुवादोऽजायत। युगेऽस्मिन् अतीतयुगवदनेके भारतीयाः पण्डिताश्चीन गच्छन्ति स्म। चीनयात्रिणश्च भारतमागच्छन्ति स्म। बौद्धधर्मस्यानेकेषा सम्प्रदायाना विकासोऽभूत्। चीनकलायाञ्च गभीरो भारतीयः प्रभावोऽभूत्।

**त्रिपिटकस्य संकलनम्**—९७१ तमे खीष्टीयाब्दे सम्राजा ताईमहोदयेन पूर्वन्तु चीनदेशेऽनूदितस्य सकलस्य सस्कृतसाहित्यस्य सौवर्णवर्णै राजतवर्णैश्च पुस्तकद्वय लेखितम्। सम्राज

आदेशेन कृतेषु त्रिपिटकसंग्रहेषु अष्टमोऽयमासीत्। अस्य मुद्रणाय १,३०,००० मुद्रा निर्मापिताः। ९६०–१३६८ मध्ये अस्य विंशतिः सस्करणान्यभूवन्।

**भारतीयाः पण्डिताश्चीनदेशीया यात्रिणश्च**—समयेऽस्मिन् भारतीयाः पण्डिताः सस्कृतपुस्तकान्यादाय चीनदेश गच्छन्ति स्म, तत्र च चीनभाषयानुवाद कुर्वन्ति स्म। एव चीन-देशीयास्तीर्थयात्रायै प्रचुरसख्याया भारतमागच्छन्ति स्म। चीनगन्तृषु भारतीयपण्डितेषु निम्नलिखिता उल्लेखनीयाः सन्ति।

**(१) समन्तः**—अय ९५१ तमे खीष्टीयाब्दे प्रतीच्यभारतस्य षोडशकुटुम्बसम्बद्धै-रनेकैर्जनैः सह चीन प्रययौ।

**(५) धर्मदेवः ( फा-तियेन )**—अय मगधवास्यासीत्, नालन्दाविहारात् ९७३ तमे खीष्टीयाब्दे चीन प्राप्तवान्। स्वमृत्युपर्यन्त १००१ तमखीष्टीयाब्द यावदयमनुवादकार्य-मकरोत्। अस्य ११८ सख्याका अनुवादाः। अय चीनस्यैकः श्रेष्ठो भारतीयोऽनुवादकोऽ-वगन्तव्यः। ११८ सख्याकेषु पुस्तकेषु ७८ पुस्तकानि नूतनान्यासन्, अवशिष्टेषु च पुस्तकेषु कतिपयानि पूर्व द्विस्त्रिश्चतुरनूदिताना ग्रन्थाना संशोधितानि सस्करणानि आसन्। नवेषु पुस्तकेषु अधिका अशा धारणीत्याख्यानि स्तोत्राणि चासन्। एषु निकायसस्कृत मञ्जुश्रीबोधिसत्त्व श्रीगर्भम्, आर्यवज्रपाणिबोधिसत्त्वनामाष्टशतकसस्कृतम्, घटिकासस्कृतस्तोत्रञ्च मुख्यान्यासन्। अमीषा सस्कृतमूलग्रन्था अनश्यन्। अमीषामनुवादश्चीनदेशे सस्कृतस्य वर्धमान प्रभाव सूचयति। ९८२ तमे खीष्टीयाब्दे सम्राजा धर्मदेवो राजकीयेनोपाधिना विभूषितः। स एकमनुवादकमण्डल निर्मितवान्, केचन सस्कृतज्ञाश्चीनदेशीया भिक्षवोऽमीषामनुवादाना शुद्धतापरीक्षणार्थ नियुक्ताः। केचन भारतीयाश्चीनदेशस्य सूक्तिभिः सविशेष परिचिता आसन्, अतस्तेषु अमीषामनुवादानां भाषा सूक्तिमयीं विधातुं भारोऽध्यारोपितः।

**(३) फीसियाङ्गः**—९७७ तमे खीष्टीयाब्दे भारतादय श्रमणः स्वेन सह तालपत्राङ्कित सस्कृतपुस्तकमानीतवान्। 'महायानस्य तान्त्रिकप्रार्थनाना सग्रहसूत्र' नाम्नाऽस्य कल्पितोऽनुवादः सम्राजे समर्पितः। धर्मदेवेनास्य कृत्रिमताया समुद्घोषिताया सम्राजा पुस्तकमिद प्रज्वालितम्।

**( ४ ) मञ्जुश्रीः**—चीनदेशीयेतिहासानुसारेणायमुत्तर भारतस्य कस्यचन राज्ञः कनिष्ठः पुत्र आसीत्। प्रचलितपरम्परानुसारेणानेन भिक्षुत्वं जगृहे। ९७१ तमे खीष्टीयाब्देऽय चीनदेश गच्छ-द्भिः कैश्चिद् भिक्षुभिः सह चीन प्राप्तः। स्वेनोत्तमाचरणेन चीनेऽयमतीव लोकप्रियः सवृत्तः। चीनभिक्षवः ईर्ष्यया बलात् तं भारत प्रत्यावर्तितवन्तः।

**( ५–६ ) की-त्सोगः पोनामोश्च**—प्रथमः प्रतीच्यभारतवासी एकः श्रमण आसीत्, स कतिपयैः स्वमित्रैः सह चीनमागतः। अय स्वेन सह कानिचिद् संस्कृतपुस्तकानि, बुद्धस्यैक-मवशेषम्, बोधिवृक्षपत्राणि, तथाऽन्यानि विचित्राणि वस्तूनि चीन नीतवान्। द्वितीयो मध्यभारतस्य श्रमण आसीत्, अनेनापि चीनस्य सम्राजे तादृशान्येव वस्तून्युपायनीकृतानि।

(७) तियेन-सी-तसाई—अयं जालन्धरस्य कश्मीरस्य वा श्रमण आसीत्। अस्य भारतीयं नामाज्ञातमस्ति। ९८० तमे खीष्टीयाब्देऽयं चीनं प्राप्तवान्। विंशति वर्षाणि महता परिश्रमेणानुवादकार्यमकरोत्। अस्यानुवादा अष्टादशसंख्याका उच्यन्ते। एषु करण्डव्यूहः, अल्पाक्षरप्रज्ञापारमिता, मञ्जुश्रीमूलतन्त्रम्, बोधिचर्यासूत्रम्, धर्मसंग्रहः, महार्थगाथासूत्रम्, अथवा धम्मपदं मुख्यमासीत्। चीनभाषाया धम्मपदस्याय चतुर्थोऽनुवाद आसीत्। सम्राजा तियेनमहोदयेन स जीवनकाले मृत्योरनन्तरञ्च राजकीयैः सम्मानैर्विभूषित.।

(८) दानपालः—अयमुद्यानप्रदेशवासी श्रमण आसीत्, तथा ९८० तमे खीष्टीयाब्दे धर्मदेवेन तियेन-तसाईमहोदयेन च साकं चीनमागतवान्। स्वमित्रवदयमपि सम्राजा प्रदत्तमुपाधिं प्राप्तवान्। अनेन १११ ग्रन्था चीनभाषयानूदिताः। एष्वधिका अंशा धारणीत्याख्या आसन्। एभिश्चीने तान्त्रिकस्य बौद्धधर्मस्य प्रचारोऽतीव वृद्धिं प्रापितः। अस्यानुवादेषु बोधिहृदयरूपविमुक्तशास्त्रं महायानभवभेदशास्त्रमित्येतत् पुस्तकद्वयं प्रधानमासीत्। अस्य लेखको नागार्जुनः प्रतिपाद्यते स्म।

(९) धर्मरक्षः (फ-हू)—अयं मगधवास्तव्य आसीत्। दानपालस्य मृत्योर्वर्षत्रयानन्तरं (१००४) चीनं प्राप्तवान्। फ-यूनामकेन चीनदेशीयभिक्षुणाऽऽनीतानां ग्रन्थानां चीनभाषयानुवादं स्वजीवनपर्यन्तम् (१०५८ खी०) अकरोत्। तदायं षण्णवतिवर्षवयस्क आसीत्। वृद्धावस्थायामनुवादस्य भगीरथप्रयत्नोऽतीव श्लाघ्य आसीत्। सम्राजा १०५४ तमे खीष्टीयाब्देऽयं विशिष्टेनैकेनोपाधिना सम्मानितः।

**भारतदेशस्य चीनदेशीयतीर्थयात्रिणः**—भारतस्य यावती तीर्थयात्रा चीनदेशीयैः सुङ्गयुगे सम्पादिता, न तावती पूर्वं केष्वपि युगेषु। फ्रेंचविदुषो मोशावन्तीमहोदयस्य कथनानुसारं ९६४–९७६ मध्ये त्रीणि शतानि चीनदेशीयाः श्रमणा भारतमागतवन्तः। इमे महता समुदायेनात्रागच्छन्ति स्म। ९६६ तमे खीष्टीयाब्दे सम्राज आज्ञां प्राप्य १५७ संख्याकानां चीनदेशीयानां मण्डलं तीर्थयात्रां कर्तुं तथा धर्मग्रन्थान् संग्रहीतुं भारताभिमुखं प्रतस्थे। इदं काशगर-खोतनराज्यमतिक्राम्यत् पेशावरमाजगाम। अत्र गतेषु यात्रिषु केषाञ्चिद् महत्त्वपूर्णानामागन्तुकानामेवोल्लेखो भविष्यति।

(१) तान-यु-एनः—अयं चीनदेशीयः श्रमणो यात्रया द्वादशवर्षाण्यतीत्यावशेषैस्ताम्रपत्राङ्कितैश्चत्वारिंशता ग्रन्थैः सह ९६५ तमे खीष्टीयाब्दे चीनदेशं प्रतिनिववृते। अनेन सम्राजा स्वयात्राविवरणं संस्कृतपुस्तकानि च प्रदर्शितानि। अयं षड्वर्षाणि भारते न्यवात्सीत्।

(२) फ-यू—अयं भारते धर्मग्रन्थानन्वेष्टुमाजगाम। ९८३ तमे खीष्टीयाब्दे चीनं प्रतिनिवृत्तवान्। अनेन सन-फी-त्सीस्थाने (कम्बोडियासीमावर्ती देशः) विमलश्रीनामको भारतीयो भिक्षुः प्राप्तः। स चीनं गत्वा धर्मग्रन्थाननुवदितुमभिलषति स्म। अनेन सम्राजः सविधे सूचनेयं प्रेषिता तेन चायं भिक्षुश्चीनदेशे आकारितः।

(३) **बुद्धगयातीर्थयात्रिणः**—एतत्कालपर्यन्त चीनतीर्थयात्रिणा परिचय इतिहास-माश्रित्य लिखितोऽस्ति, किन्तु कैश्चिच्चीनवास्तव्यैर्भारतस्यागमनस्मृतिर्बुद्धगयाशिलातले उत्कीर्णा। अत्रामीषा पञ्चाभिलेखा. प्राप्यन्ते। ते चीनदेशीयाना बुद्धभक्ति सम्यक्तया प्रकाशयन्ति। एषु अन्त्याश्चत्वारः सुङ्गयुगस्य तीर्थयात्रिणः सन्ति। द्वितीयस्तृतीयश्चतुर्थश्च लेखाः १०२२ तम-खीष्टीयाब्दस्य सन्ति, अन्त्यश्च १०३३ तमखीष्टीयाब्दस्य। द्वितीयस्मिन् लेखे होमाननामकेन चीनदेशीयपुरोहितेन बुद्धगयाया पवित्रावशेषाणा कृता पूजाऽङ्किता विद्यते। तृतीयस्मिन् लेखे इद विद्यते यत् पूर्वीयचीनस्य राजधान्या इत्सिंग-इलिन-नामकौ द्वौ भिक्षू सौवर्णमञ्जूषापिहित-काषायवस्त्रैः सह बुद्धगयाया प्रेषितौ। ताभ्या तानि वस्त्राणि बोधिद्रुममारोपितानि। चतुर्थे लेखे सैव घटनाऽस्ति। किन्तु वस्त्रसमर्पको भिक्षुश्चाओ-पिननामकोऽस्ति। पञ्चम लेखमनुसृत्य हो आई-वेननामको भिक्षुश्चीनदेशस्य सम्राजः सम्राज्ञ्याः प्रतिनिधिः बुद्धगया समागतस्तथा तेनात्रैक. स्तूपो निर्मापितः।

अभिलेखा इमे चीनभारतयोर्मध्ये प्रथमशतकात् प्रवहन्त्याः सम्बन्धशृङ्खलाया अन्त्यः सन्धिरस्ति। इद बौद्धोत्कर्षयोरन्तिम चिह्न प्रतिपाद्यते। ततस्तातारमङ्गोलाना चीनस्य तुर्काणाञ्च भारतस्याक्रमणेन द्वयोरपि देशयो' सम्पर्कः सर्वथा समाप्ति गतः।

**मङ्गोलवंशः** (१२८०-१३६८)—त्रयोदशे शतके मङ्गोलैर्विश्वसाम्राज्य स्थापितम्। इद पश्चिमे मध्ययूरोपस्य दक्षिणयूरोपस्य च हंगरी-बल्गेरिया-सर्बियाराज्यपर्यन्त तथा रूसराज्य-पर्यन्तं पूर्वस्मिन् प्रशान्तमहासागरपर्यन्त दक्षिणे तिब्बतस्य भारतस्य च सीमापर्यन्तं विस्तृत-मासीत्। समग्रस्य चीनस्य वर्तमानसोवियतरूसस्य च समग्रा एशियाप्रदेशास्तत्र सम्मिलिता आसन्। अस्य स्थापनायाः श्रेयः चंगेजखाँमहोदयस्यास्ति। तेन १२०६ तमे खीष्टीयाब्दे मङ्गोलाना विभिन्न मण्डलमेकेन सूत्रेण बद्ध्वा विश्वविजयः प्रारब्धः। १२२७ तमे खीष्टीयाब्दे तस्य मृत्योरनन्तरम् ओगोताईमहोदयो मङ्गोलाना नेताऽभूत्। अनेनोदीच्यचीनदेशो विजितः। १२४१ तमे खीष्टीयाब्दे अस्य मरणानन्तरं मनकूनामको मङ्गोलाना महान् नेता (होना या खानः) निर्वाचितः। अस्य शासनसमये अस्यानुजः कुबलैनामको दक्षिणे युन्नानप्रदेशपर्यन्त चीन विजितवान्।

**मङ्गोलानां धार्मिकनीति धर्मपरिषदश्च**—मङ्गोला धार्मिकदृष्ट्या अतीवोदारा आसन्। पर्याप्त विमृश्य तैर्बौद्धधर्ममङ्गीकर्तु निश्चितम्, त स्वीकृत्य तदुन्नतयेऽनेके प्रयत्ना आचरिताः। मनकूखानेन स्वशासनस्य प्रारम्भकाले लितचेलच्यिांगनामकस्ताओसम्प्रदायस्य हैमुनमहोदयश्च बौद्धधर्मस्याध्यक्षत्वेन नियुक्तौ। (११५१) अग्रिमे वर्षे तेन नमोनामक एको बौद्धः साम्राज्ये बौद्धधर्मप्रबन्धाय नियुक्तः, किन्तु तदा चीनदेशे ताओसम्प्रदायस्यानुयायिना महत्प्राबल्यमासीत्। ते बौद्धाना मठान् मन्दिराणि च हस्तगतानि कर्तु प्रारभन्त। एतदन्तराले ३० मई १२५४ तमे खीष्टीयाब्दे स्वराजधान्या कराकुरमस्थाने विविधधर्माणा सत्यासत्यविवेचनाय मनकूखानेन बौद्धाना यवनाना खीष्टीयधर्मावलम्बिना प्रतिनिधीना सभा आकारिता। अत्र बौद्धविरुद्धा खीष्टीय-यवनैरेकेश्वरस्य सत्ता साधिता। १२५५ तमे खीष्टीयाब्दे मनकूखानस्य प्रतिष्ठिताना

पुरुषाणाञ्च समुपस्थितौ एक सर्वधर्मसम्मेलनमभूत्। अत्र बौद्धधर्मस्य प्रतिनिधिः फ्फूयू-महोदय आसीत्। ताओसम्प्रदायानुयायिनोऽत्र नोपस्थिताः। मनकूखानेन इद तेषा दौर्बल्यमस्तीत्यवधारितम्, तथा बौद्धधर्मस्य श्रेष्ठतानेन प्रकटिता—"बौद्धधर्मः करतल-वद् वर्तते। यथा करतलात् पञ्चाङ्गुलयो निःसरन्ति तथैव बौद्धधर्मात् सर्वे धर्मा निःसृताः सन्ति"।

**कुबलै इति नाम्नः सम्राजो धर्मपरिषद्**—परमेतत्काल यावत् शास्त्रार्थद्वारा धर्माणा श्रेष्ठताया निर्णयो नाभूत्। मनकूखानस्तैर्धार्मिकविवादैरुद्विग्न आसीत्। तेनास्यान्त्यनिर्णयभारः स्वानुजस्य कुबलै इति नाम्नो हस्ते समर्पितः। १२५८ तमे खीष्टीयाब्दे तेन शागतोनस्थाने (ओलोननोरात् उ० पू०) एकस्या विशालाया धर्मपरिषद आयोजन कृतम्। अत्र शतत्रयी बौद्धपण्डिताना शतद्वयी च ताओमतानुयायिना विदुषाञ्चोपस्थिता। द्वे शते कन्फ्यू-शियसमतावलम्बिनो निर्णायका आसन्। बौद्धविद्वत्सु पाश्चात्यदेशाना राजगुरुनमोस्तथा तिब्बतभिक्षुः फग्स-पा (१२३९–१२८०) नाम च मुख्यावास्ताम्। फग्स-पामहोदयो यद्यपि तदानीमेकोनविंशतिवर्षवयस्क एवासीत्। किन्तु तस्य व्याख्याभिर्बौद्धा विजयिनोऽभूवन्, ताओ-मतानुयायिनः पराजय प्राप्तवन्तः, तेषा सप्तदश नेतारः शास्त्रार्थपणमनुसृत्य शिरासि मुण्डयित्वा बौद्धा अभूवन्। बौद्धैस्ताओमतानुयायिभिर्गृहीतानि २३७ मन्दिराणि विहाराश्च प्राप्तानि, बौद्धधर्मनिन्दकानि ताओमतप्रतिपादकानि पुस्तकानि प्रज्वालयितुमाज्ञा प्रदत्ता।

**कुबलैखाननामकेन सम्राजा बौद्धधर्मस्य संरक्षणम्**—तदनन्तर मङ्गोलाः पूर्णतया बौद्धा अभूवन्। चीनदेशस्य प्राचीनानि राष्ट्रियमन्दिराणि बौद्धधर्मस्थानानि सम्पादितानि। कुबलैखानमहोदयेनेद पूर्णतया ध्यात यत् पेकिंगप्रदेशस्य सर्वेषु मठेषु बौद्धा धर्मग्रन्था भवेयुः, पुरोहिताश्च नियतेषु दिवसेषु तेषा पाठ कुर्युः। अस्याज्ञया १२८५–८७ तमे खीष्टीयाब्दे त्रिपिटकस्यैकस्य नूतनस्य सस्करणस्य प्रकाशनमभूत्। आत्रानूदिताः १४४० सख्याका ग्रन्था आसन्। १९४ जनैः १२१९ वर्षेषु ६७–१२८५ तमखीष्टीयाब्दपर्यन्तमिमे अनूदिता आसन्। एतदतिरिक्तास्तदानीं चीनदेशे भारतीयैर्विषयै. सम्बद्धाः ९५ भारतीयास्तथा ११८ चीनदेशीय-ग्रन्था आसन्। त्रयोदशस्य शतकस्यान्ते सम्राज आज्ञया चीनदेशस्य बौद्धमन्दिराणा भिक्षूणाञ्च गणना कृता। अनयोर्द्वयोः सख्याः क्रमेण ४२,३१८ तथा २,१३,१४८ आसन्। १२९४ तमे खीष्टीयाब्दे कुबलैखानमहोदयाय सस्कृत-तिब्बतीत्रिपिटकस्य मङ्गोलीभाषानुवाद उपायन-रूपेण समर्पितः। अनेन प्रचारार्थममीषा काष्ठमयी मुद्रा निर्मापिता।

**वर्तमानं युगम्**—१९१२ तमे खीष्टीयाब्दे वैदेशिकस्य मचूवशस्य विरोधार्थ क्रान्तिरभूत्, चीने प्रजातन्त्रस्य स्थापना बभूव। स्वातन्त्र्यप्राप्त्यनन्तर चीनदेशीयेषु नूतना जागराऽभूत्। अनेन बौद्धधर्मोऽतीव प्रोत्साहितः। वर्तमाने काले चीनदेशीया अन्याभ्या द्वाभ्या धर्माभ्या सह बौद्ध-धर्मस्याप्युपासकाः सन्ति। ते भारतादागतान् देवान् मन्दिरेषु पूजयन्ति, भिक्षवः सङ्घस्य नियमान्

पालयन्ति। प्रायः सार्द्धैकशतवर्षपर्यन्त भारतीयपण्डितैरनूदितं बौद्धसाहित्यमधीयते। जनता बौद्धविधिषु कर्मकाण्डेषु चास्थामादधाति।

**देवता**—चीनदेशे महायानसम्प्रदायस्य बुद्धाना बोधिसत्त्वाना चोपासना भवति, यद्यपि इमे असंख्याः सन्ति, किन्तु श्रद्धावन्तो भक्ता मुख्यतया चतुर्णा बुद्धाना षण्णा बोधिसत्त्वाना-मुपासना कुर्वन्ति। तैरमीषा सर्वेषा नामानि स्वभाषाप्रकृत्यनुसारेण नूतनपद्धत्या निर्मितानि सन्ति। बुद्ध चीनदेशीयाः फो इति ( अस्य शुद्धमुच्चारण फो तथा फा इत्यनयोर्मध्येऽस्ति ) कथयन्ति। एतत् चीनदेशीयलिप्या मनुष्य इति तथा नेति द्वाभ्या सकेताभ्या लिख्यते, यत् तस्यालौकिकत्व सूचयति। बोधिसत्त्वस्योच्चारणमपि चीनदेशीयाना कृतेऽतीव कठिनमस्ति, ते तत् पऊसा अथवा पूसा इति कथयन्ति।

अत्र चीनदेशे पूजनीयाना प्रमुखाणा बुद्धाना बोधिसत्त्वानाञ्च तथा भारतीयाना देवाना सक्षिप्तः परिचय एव दास्यते।

**( १ ) चत्वारो बुद्धाः**—बुद्धेषु सर्वाधिकमहत्त्व बौद्धधर्मस्य प्रवर्तकस्य शाक्यमुनि-बुद्धस्य ( शिह-चियामुनि फो अथवा शिह-चिया फो ) विद्यते। अयं कदाचित् जूलै ( रूलै ) तथा कियाओ-त-मो ( गौतमः ) इत्यप्युच्यते। अस्य मूर्तयो भूमिस्पर्शमुद्राया ( अत्र दक्षिणो हस्तोऽग्रे प्रसृतो भवति, करतलञ्चाभ्यन्तराभिमुखम्, अङ्गुल्यो भूमिं स्पृशन्ति, मन्ये बुद्धः स्वमारविजयार्थ भूमिं साक्षिणीं करोति ) तथा धर्मचक्रप्रवर्तनमुद्राया ( हस्तौ वक्षः-स्थलपर्यन्तमुर्ध्वमुत्थितौ, द्वयोर्हस्तयोस्तर्जन्यौ परस्पर स्पृशतः ) वा मूर्तय उपविशन्त्यस्तिष्ठन्त्यो वा भवन्ति, तथा बहुवारं निर्वाणदशायाः शयनावस्थायाम्।

**( २ ) ओमी-तो ( अमिताभः )**—सुखावतीनामकस्य पाश्चात्त्यप्रदेशस्य स्वर्गस्या-ध्यक्षस्यामिताभस्य लोकप्रियता प्रतिष्ठा च चीनदेशे शाक्यमुनेरप्यधिकास्ति। अस्य मूर्तयः पद्मासनमुद्रायामवस्थिता ध्यानमुद्राया ( द्वौ हस्तौ अङ्के भवतः, करतलमुपरि भवति, वामहस्तो-परि दक्षिणहस्तो भवति ) वा भवन्ति।

**( ३ ) भैषजगुरुः ( यओ शिह फो )**—अनेन पूर्वजन्मनि सर्वेषा मनुष्याणा शरीरपीडानिवारणस्य व्रतं गृहीतम्। अय महाचिकित्सको गण्यते। मूर्तिषु प्रायोऽस्य हस्ते लघुकुम्भो भवति।

**( ४ ) वैरोचनः ( पी-लो-फो-पी-लो-चे-ना )**—अयं तियेनताई–चेनयेन (शिंगोन)-सम्प्रदाययोरेव विशेषतः पूज्यते। साधारणेषु मन्दिरेषु अस्य प्रतिमा न्यूनैवोपलभ्यते, चीनदेशे केवलं बुद्धस्यास्य शिरसि मुकुट भवति।

**बोधिसत्त्वः ( पूसा )—( १ ) अवलोकितेश्वरः ( क्वान यिन )**—अयं करुणाया देवोऽस्ति, पौराणिको भगवानिव भक्ताना प्रार्थनया तेषा कष्टं दूरीकर्तुं धावन्नागच्छति। भारतीयमहायाने अवलोकितेश्वर. पुरुष आसीत्, पर चीनदेशेऽनेन नारीरूपं धृतम्। करुणार्थं मातुरधिकायाः समुचितव्यक्तेः कल्पना नैव भवितुमर्हति। सम्भवतोऽस्य नारीत्वकल्पनाया इदमेव

कारण भवेत्। क्वानयिनोऽनेन नारीरूपेण भक्तेषु पीडितेषु स्निह्यन्ती तेषा दुःखं निवारयन्ती जननी अस्ति। प्रार्थनाया कृताया सा भक्तान् सर्वेभ्यः सकेटेभ्यो रक्षति। चीन प्रत्यावर्तमान फाहियानमहोदय समुद्रिय उपद्रवोऽभिक्रान्तवान्। तदानीं तस्योद्धारोऽवलोकितेश्वरस्य स्मरणेनाभूत्। क्वानयिनस्य चीनदेशे तदेव स्थानमस्ति यत् कैथोलिकजगति मैडोन्ना (मेरी) इत्यस्यास्ति। अस्य मूर्तिरनेकधा निर्मीयते। कदाचिदिय पद्मे तिष्ठति, कदाचिच्च लक्ष्मीवदुपविशति। प्रायोऽस्या बाह्वोर्बालको भवति, योऽस्याः सन्तानदातृत्वसामर्थ्यं सूचयति। अस्या हस्ते माला, कमलपुष्प पुष्पपात्र वा भवति। पुष्पपात्रेणेद प्रतीयते यत् सा भक्तेषु स्वीया करुणा प्रस्रावयितु वाञ्छति। तस्याः शिरसि बोधिसत्त्वस्य मुकुट भवति। बहुधा तस्य अनेकानि शिरासि अनेके हस्ताश्च प्रदर्श्यन्ते। प्रथम तु नह्वागप्रदेशस्य सहस्रहस्तावलोकितेश्वरस्योल्लेखोऽजायत। प्राय इय मेघ समुद्रस्य लहरि वा आरूढा चित्रिता भवति।

(२) क्षितिगर्भः (ती-त्सिंग)—अयमपि पीडिताना त्राताऽस्ति। अनेकेषु पूर्वजन्मसु अनेन व्रतमिद धृतमासीत् यद् यावत् स आर्तिपीडिताना दुःखेभ्यः परित्राण न करिष्यति, तावद् बुद्धो न भविष्यति। नरकाणा दुःखैः सह तस्य विशेषतः सम्बन्धोऽस्ति। तत्र यन्त्रणा भुञ्जता समुखं विविधरूपेणायमुपस्थितो भवति, तस्य द्वाराणि भिनत्ति, नरकगामिना स्वर्गे जन्म दापयति। प्रारम्भेऽयं भक्ताना केवलमाह्वाने तेषामुद्धाराय कदाचिन्नरकमपि गच्छति स्म। तेषाञ्च नरकाणा स्वामिनो यमात् (येन-लो) तथाऽन्यदेवताभ्यः कष्टपीडितान् मोचयति स्म, पर पश्चात् ताओमतानुयायिभिर्लेखकैरय नरकाध्यक्षत्वेन स्वीकृतः। तत्रत्याना भीषणाना कष्टाना त्रातृत्वेन अस्य महती पूजा भवति। अवलोकितेश्वरानन्तरञ्च चीनदेशेऽस्याधिका प्रतिष्ठाऽस्ति। अस्य मूर्तिः प्रायः उत्तिष्ठन्ती भवति, भिक्षुवद् मुण्डितशिर आह्लादेन देदीप्यमान वर्तुलं मुखमण्डलमस्ति। हस्ते नरकस्य द्वाराणा भेदको वर्तुलो दण्डस्तथा तमोवृत्तकोणप्रकाशकशुद्धतामणिर्भवति। तस्य रूपमिदं साधारणेभ्यो जनेभ्योऽतीव रोचते। बहुवार स नरकस्य दशभिर्नृपैः सहापि प्रदर्श्यते।

(३) मञ्जुश्रीः (वेनशू)—अय ज्ञानस्य तर्कशास्त्रस्य च देवताऽस्ति। शान्सी प्रान्तस्य यून्ताईनामके पर्वतेऽस्य सर्वेभ्यो महद् मन्दिरमस्ति। अष्टमे शतके भारतेऽस्य पूजायाः स्रोतश्चीनदेश एव मन्यते स्म। अन्ये बोधिसत्त्वाः पूर्वजन्मसु मानवयोनिषु समुत्पन्ना आसन्, किन्तु अय बुद्धस्य शिरसः प्रादुर्भूतप्रकाशकिरणजनितात् पद्मपुष्पात् प्रादुरासीत्। मूर्तिषु प्राय स्तस्य एकस्मिन् हस्ते ताडपत्रलिखितमेक पुस्तकम्, द्वितीयस्मिन् अज्ञानान्धकारविदारककाष्ठमयासिश्च भवति, तथा शिरसि बोधिसत्त्वाना मुकुट भवति।

(४) समन्तभद्रः (पू-हियेन)—अय सुखस्य सार्वभौमानुकम्पायाश्च देवोऽस्ति। ओ-मी तू इत्यनेन तथा वेनश इत्यनेन सहास्य मूर्तय उपलभ्यन्ते। चतुर्णां बोधिसत्त्वानां पृथक् पृथग् वाहनानि सन्ति। इमे विशेषभूतानामधिष्ठातारः सन्ति, अमीषा पृथक् पृथक् तीर्थस्थानानि च सन्ति।

चीनभाषयाऽनूदिताः। तत्र भारतीयदर्शनस्य सर्वासां शाखानामध्ययनं भाषान्तरञ्चाभूताम्। तत्र सांख्यविषयिका साख्यकारिका, सुवर्णसप्ततिः, वैशेषिकदर्शनस्य दशपदार्थसूत्रनामको ग्रन्थश्चोपलभ्यन्ते। अश्वघोषनागार्जुनप्रभृतिप्रसिद्धबौद्धविदुषामितिवृत्तस्यापि विस्तृतः परिचयः त्रिपिटकादस्मात् समुपलभ्यते। सस्कृतवाङ्मयस्य तिमिरतिरोहिता अनेके धार्मिकाः दार्शनिकाश्च विषयाश्चीनीयत्रिपिटकेन प्रकाश्यन्ते। सस्कृतधार्मिकबौद्धसाहित्यस्य ज्ञानस्यापि मुख्य स्रोत इदमेवास्ति। जापानदेशीयेन बुनयिउनानजिओनामकेन विदुषा १८९३ तमे खीष्टीयाब्दे आक्सफोर्ड विश्वविद्यालयाद् मिङ्गवशीयस्य त्रिपिटकस्य विस्तृता सूची प्रकाशिता। तत्र १६६२ ग्रन्थाना विवरणमस्ति, किन्त्वत्र सर्वेषा ग्रन्थाना समावेशो सजात इति न मन्तव्यम्। तदनन्तर जापानदेशे चानेकेषा नवाना संस्कृतग्रन्थाना बोधोऽजायत। भारतीयेन विदुषा श्रीप्रबोधचन्द्रबागचीत्यनेनाष्टमे शतके चीनदेशाद् जापानदेशं प्राप्तौ द्वौ कोषौ प्रकाशितौ। अस्य मूल संस्कृतरूप विलय प्राप्तमस्ति। मध्य-एशियाप्रदेशस्योत्खनेन चीनभाषयाऽनूदिताः केचन सस्कृतग्रन्थाः प्राप्यन्त। नानजिओ-महोदयस्य उपर्युक्तग्रन्थस्य प्रकाशनानन्तरमनेकानि नूतनानि सस्करणानि समुपालभ्यन्त। श्रीबागचीमहोदयेन साइनोइण्डिकानामके ग्रन्थेऽस्य प्रकाशन प्रारब्धम्। तस्मिन् पूर्णता प्राप्ते चीनीयसंस्कृतसाहित्यस्य पूर्णरूपेण परिचयो भविष्यति। किन्तु नानजिओ-महोदयस्य सूचीपत्रस्य सकृद् दर्शन विशाल सस्कृतसाहित्य परिचाययितुं पर्याप्तमस्ति।

सूचिपत्रेऽस्मिन् १६६२ ग्रन्थाः सूत्र-विनय-अभिधर्मविविधनामकेषु चतुर्षु विभागेषु विभक्ताः सन्ति। प्रथमे भागे सूत्रे ( किग ) १०८१ ग्रन्थाः सन्ति। इमे च समग्रस्य त्रिपिटकस्य द्वौ तृतीयाशौ स्तः। अस्य निम्नलिखिता उपविभागाः सन्ति–( क ) ५४१ महायानसूत्राणि, ( ख ) २४० हीनयानसूत्राणि, ( ग ) ९६०–१३६८ तम खीष्टीयाब्दमध्ये सुंग-युआनवंशसमये स्वीकृतानि हीनयानसूत्राणि महायानसूत्राणि च। लुईत्सगे विनयपिटके वा सर्वास्तिवादि-मूलसर्वास्तिवादि-धर्मगुप्तवादि-महीशासक-महासाङ्घिकनाम्ना पञ्चाना सम्प्रदायाना ग्रन्था उपलभ्यन्ते। अमी भारते लुप्ताः सन्ति। अभिधर्मपिटकमपि हीनयान-महायानवर्गाभ्या विभक्तमस्ति। अत्र योगाचार–माध्यमिकसम्प्रदाययोः साहित्यमस्ति, अश्वघोषनागार्जुन–वसुबन्धुप्रभृतिदार्शनिकाना ग्रन्थाः सन्ति। सस्कृतग्रन्थेषु बौद्धधर्म–प्रचारकाणामितिहासो बुद्धचरितम्, अश्वघोष-वसुबन्धु-नागार्जुनप्रभृतीना जीवनेतिवृत्तानि सन्ति। चीनभाषाग्रन्था द्विशतसख्याकाः सन्ति। इमाः १०२ लेखकानां कृतयः सन्ति। इमे ग्रन्था ऐतिहासिकाः, आलोचनात्मका विवादात्मका उपदेशकात्मकाश्च सन्ति।

तेभ्यः १६२२ ग्रन्थेभ्योऽतिरिक्ता अनेके ग्रन्था अनश्यन्त। १९६२ तमे खीष्टीयाब्दे मुद्रितं त्रिपिटकमुपजीव्य नानजिओमहोदयस्य सूची निर्मिता विद्यते। किन्तु चीनदेशे ५१८-१७३५-३७ खीष्टीयाब्दपर्यन्तं तादृश्यो द्वादश सूच्य एकत्र कृता आसन्। अत्रोपवर्णिता शतानि ग्रन्था अधुना चीनेऽपि नोपलभ्यन्ते।

सम्भवतीदं यद् लोयाग ( होनानप्रान्तः )-चागान( सियान ) नानकिंग-लशानप्रभृति-प्राचीनसास्कृतिककेन्द्राणा पुरातत्त्वीयानुसन्धानेन नूतना ग्रन्थाः प्राप्येरन्। किन्तु एतदर्थं भारताद्

नूतनस्य कुमारजीवस्य, गुणवर्मणः परमार्थस्य च गमनमावश्यकम्, चीनदेशीया भारत न विस्मरेयुः। तेऽद्यापि 'नमोऽमिताभाय बुद्धाय' इत्यस्य पाठ कुर्वन्ति, पश्चिमदिशाभिमुखा भारतं प्रणमन्ति। किन्तु भारतीयाः सस्कृतज्ञाश्चीन सर्वथा विस्मृतवन्तः। प्राचीनैर्भारतीयैर्विद्वद्भिश्चीने द्वादशशतकानि यावद् भारतीयसस्कृतेः प्रसाररूपं गौरवास्पद कर्म कृतम्। किन्तु तेषा वश्या वर्तमाना विद्वासस्तेन नितान्तमपरिचिताः सन्ति। अद्यत्वे पूर्वजाना समुज्ज्वलायाः कीर्तेः स्मरण पर्याप्त नास्ति, किन्तु तेषामुदात्तानामुदाहरणानामनुकरणमावश्यक विद्यते। कुमारजीवप्रभृतेरस्मासु आर्षमृणमस्ति। अस्यापाकरणमस्माक पवित्रं कर्तव्यं वर्तते॥



# षष्ठोऽध्यायः

## कोरिया

**कोरियादेशस्य महत्त्वम्-संस्कृतेः सेतुबन्धः शरणस्थलं च**—पूर्वोत्तर-एशिया-मध्ये भारतीयसंस्कृतेः प्रसारे कोरियादेशस्य विशिष्टं महत्त्वमस्ति । बौद्धधर्मेण सह भारतीय-संस्कृतेरालोकः चीनवद् जापानेऽपि प्रससार । अस्याः प्रसारस्यैकं महत् केन्द्रं कोरिया-एवासीत् । कोरियाभिधो मनोरमो देशः 'प्रातःकालिकप्रशान्तिप्रदेशः' इति रमणीयेन पदेनोच्यते । किन्तु अयं संस्कृतेः सेतुबन्धोऽपि वक्तुं शक्यते । चीनाज्जापानं यावद् बौद्धधर्मं नेतुं कोरिया द्वारमिवाभवत् । पूर्वमस्य धर्मस्य सन्देशश्चीनात् कोरिया गतः, पुनस्ततो जापानम् । इदं सर्वथा स्वाभाविकमासीत् । एशियामानचित्रे दृष्टिनिक्षेपेण प्रतीयते यत् कोरिया-द्वीपकल्पस्याग्रभागो जापानद्वीपकल्पपार्श्वपर्यन्तं विद्यते । इमौ द्वावपि कोरियासंकीर्णं जल डमरुमध्य पृथक्करोति । एशियातो जापानस्य प्रधानो मार्गः कोरियाद्वारैवास्ति, किन्तु धर्मस्य प्रसारकेन्द्रमतिरिच्येदमस्य सुरक्षितं शरणस्थलमप्यासीत् । अस्य दुर्गमासु विविक्तासु च पर्वतमालासु निर्मितेषु सङ्घारामेषु भारतीया संस्कृतिः चिरकालं सुरक्षिता अक्षुण्णा च बभूव । पञ्चानां वंशाना युद्धसमये यदा चीने तियेन तै नामको बौद्धसम्प्रदायः सर्वथैव लुप्तोऽभूत्, तदाऽयं कोरियास्थेनैवैकेन पुरोहितेन पुनरुदजीव्यत । चीनीयत्रिपिटिकस्य प्राचीनतमस्य रूपस्य परिचयोऽस्माभिः कोरिया देशे सुरक्षितेन पश्चाच्च ततः जापानं नीतेन पुस्तकेन प्राप्यते ।

**कोरियादेशे बौद्धधर्मस्य प्रवेशः पञ्च युगानि च**—चीनकोरियादेशयोरनुश्रुति-मनुसृत्य कोरियादेशे सभ्यतायाः प्रसारकस्तृतीयस्य चीनीयराजवंशस्यान्तिमस्य सम्राजो मन्त्री 'कीत्से' नामाऽभवत् । स च ११२२ तमे खीष्टीयाब्देऽनेकैश्चीनीयावासकैः सार्कं देशेऽस्मिन् प्राविशत् । ते च कीत्सेनामकममुं स्व राजानं चक्रुः । अमीषामागमनात् पूर्वमत्र गुहासु भूमिकन्दरासु निवसन्त आरण्यका आसन् । 'कीत्से' इत्यनेन राज्यमिदं च-ओइ-सीन (चोजन) इति संज्ञया प्रख्यापितमत्र च शान्तिः समीचीना व्यवस्था च कृता । ई० प्रथमे शतकेऽत्र बौद्धधर्मस्य भारतीयसंस्कृतेश्च प्रवेशोऽभूत् । अनयोः प्रवेशस्य प्रारम्भिक इतिहासस्तिमिरावृतोऽस्ति । इदं प्रतीयते यद् हानवंशस्य पतनानन्तरं यदा चीने बौद्धधर्मः प्रससार उत्तरतो दुष्टा आक्रमणकारिण आक्रमणं चाकुर्वन् तदा कतिपये धीरा बौद्धभिक्षव-श्चीनस्य विशालां भित्तिं समुल्लङ्घ्य मञ्चूरियाविस्तृतेषु क्षेत्रेषु बौद्धमूर्तीः सूत्रग्रन्थांश्चादाय जनकल्याणाय विचेरुः । ते चोत्तरस्यां दिशि गच्छन्तो मार्गवर्तिनश्चीनराज्यजनान् बौद्धान् विदधतः परिनिर्वाणं प्रापुः । तेषामनुयायिनश्च केचनादम्येनोत्साहेन तेभ्यो राज्येभ्योऽप्यग्रेऽनेकान् देशान् व्यतीयुः । अन्ते सुन्दोनामकेनैकेन भिक्षुणा स्वमूर्तिभिर्ग्रन्थैश्च सार्कं यलूनदीं समुत्तीर्य

'प्रात:कालिकप्रशान्तिप्रदेशे' अथवा 'तापसराज्ये' बौद्धधर्मः प्राचार्यत ( ३९६ ई० )। बौद्धधर्मस्य प्रवेशकालतो वर्तमानकालपर्यन्तं कोरियादेशस्य सांस्कृतिकेतिहासः पञ्चसु युगेषु विभक्तुं शक्यते—

( १ ) त्रिराज्यम् ( ५७ ई० पू०—६६८ ई० )
( २ ) सिल्लाराज्यम् ( ६६८—९१८ ई० )
( ३ ) कोर्येराज्यम् ( ९१८—१३९२ ई० )
( ४ ) चोजनराज्यम् ( १३९२—१९१० ई० )
( ५ ) जापानप्रभुत्वकालः ( १९१०—१९४५ ई० )

**( १ ) त्रिराज्ययुगम्**—( ५७ ई० पू० ६६८ ई० )-युगेऽस्मिन् कोरियादेशः त्रिषु स्वल्पेषु राज्येषु विभक्त आसीत्। उत्तरस्मिन् कोगुर्युराज्यमासीत्। दक्षिण-पश्चिमयोः पक्चे ( हियक्त्सै ) तथा दक्षिणपूर्वयो: सिल्ला। ३७२ तमे खीष्टीयाब्दे उत्तरतः ( मचूरियातः ) कोगुर्यु-राज्ये ( कोरेया कोमा ) बौद्धधर्मः प्रविवेश। ३७४ तमखीष्टीयाब्दपर्यन्त पयेंगयागे ( पिंगयाग ) द्वौ बौद्धौ सङ्घारामौ स्थापितावास्ताम्। अनयो: प्रचारका: कोगुर्यु शीघ्रमेव बुद्धस्योपासक कृत-वन्तः। बौद्धधर्मस्तत्रत्यो राजधर्म: सवृत्तः। कतिपयवर्षानन्तर दक्षिणत पक्चे इत्यत्र बौद्धप्रभाव: गतः। ३८४ तमे खीष्टीयाब्दे पक्चे इत्यनेन चीनतो बौद्धप्रचारका आनीता:। अत्रापि धर्मोऽय कोगुर्युवत् शीघ्रमेव प्रसृत:। किन्तु सिल्लेत्यत्र बुद्धवाणी ४२४ तमखीष्टीयाब्दपर्यन्त न गता। तस्मिन्नब्दे तत्र प्रथमवारमेव बौद्धभिक्षवो गताः। पक्चे इत्यत्र सिल्ला इत्यत्र च बुद्धस्य सदेशवाहकौ मारानन्दो मुकोचश्च भिक्षू भारतीयावास्ताम्, अथवा मध्य-एशिया निवासिनावास्ताम्। देशेऽस्मिन्न-नयोरागमनं चीनदेशादजायत। सिल्ला इत्यस्य प्रारम्भिकी कला शैलीतो भारतीयैवास्ति। तथ्यमिद देशेऽस्मिन् भारतस्य गभीर प्रभाव सूचयति। ई० ५५२ तमे पक्चे जापानेत्युभावपि देशौ सिल्ला इत्यनेन साकमयुध्येताम्। तदा पक्चे भूमिपालेन जापानसम्राजा सह मित्रत्वं स्थापयितुं तस्मै कश्चनोपहारः समर्पितः। तस्मिन् बौद्धधर्मस्य ग्रन्था बुद्धमूर्तयश्चासन्। ई० ५७२ तमेऽयमुपहारः पुनः प्रेषितः। इत्थ कोरियाद्वारा जापाने बौद्धधर्मस्य चीनसस्कृतेश्च प्रवेशोऽजायत। जापानस्य कलाया धर्मस्य च विकासे कोरियाभिक्षुभिरतीव साहाय्यमाचरितम्। किन्तु पश्चाद् यदा जापानेनेद ज्ञात यदस्य धर्मस्य मूलस्रोतः चीनदेशोऽस्ति तदा तेन धर्मस्य प्रकाशस्तत एव प्राप्तुमारेभे।

**( २ ) सिल्लाराज्यम्**—( ६६८-९१८ ई० )—सप्तमे शतके कोरिया इत्यत्र सिल्लाराज्य प्रधानशक्तिरभूत्। इद ५२४ तमे खीष्टीयाब्दे बौद्धधर्ममङ्गीचकार। अस्य चीनस्य तागवंशेन साकं सौहार्दमासीत्। तदा कोरियादेशेन जापानवत् चीनीयसभ्यता पूर्णतया स्वीचक्रे। चीने षष्ठे शतके बौद्धधर्मस्य महान् प्रभाव आसीत्। अतः कोरियादेशे चीनदेशीय-सभ्यतया सहाय धर्मः प्रससार। अष्टमे शतके कोरियादेशे बौद्धधर्मस्य प्रबलः शत्रुः कन्फ्यूशियसधर्म प्राविक्षत्, किन्तु त्रयोदशशतकपर्यन्त तेन प्राधान्यं नावाप्यत। षष्ठशतकात् त्रयोदशशतकपर्यन्त कोरियादेशे बौद्धधर्मस्य स्वर्णयुगमासीत्। किन्तु इदं स्वर्णयुगमन्ततो बौद्धधर्मस्य विनाशस्य

कारणमभूत् । तदानीं सङ्घारामा विहाराश्चातीव समृद्धाः प्रभावशालिनश्चाभूवन्, जनेषु सङ्घस्य वैभवं रक्षितु तथा ऐश्वर्यपूर्णं कर्मकाण्डमनुवर्तितु शासनेन कर आरोपितः, यूना भिक्षुत्वेन देशस्यार्थिकमुत्पादन न्यूनान्न्यूनतरमजायत । अग्रे च बौद्धधर्मविरोधिभिरस्या परिस्थितेः पूर्णो लाभोऽलभ्यत ।

व्यापारः सस्कृतिश्च सहैव प्रगतिं कुरुतः । सप्तमे शतके कोरिया बौद्धसस्कृतिमतिरिच्य व्यापारस्यापि महाकेन्द्रत्वमाससाद । प्रतिपाद्यते यदस्य राज्यस्य वणिक्समुदाये भारतात्, तिब्बताद् ईरानतश्च व्यापारिण आगच्छन्ति स्म । अमीभिः साकं कतिपये कोरियावासिनो भारतस्य बौद्ध-तीर्थाना यात्रां कर्तुमगच्छन् ।

( ३ ) **कोर्येराज्यं वाङ्गवंशो वा** ( ९१८–१३९२ )—९१८ तमे खीष्टीयाब्दे वाग-वशेन सिल्लाराज्यस्य तत्सबद्धस्य प्राचीनस्याभिजातवर्गस्य चान्तश्चक्रे । अय वंश उत्तरवासिन एकस्माद् निम्नकुलपरिवारात् प्रादुरभूत् । अमीभिश्चीनपद्धत्या नूतनस्य कुलीनवर्गस्य सघटन-मकारि । चीनपरीक्षाणा पद्धतिश्च प्राचाल्यत । विदुषामेका नूतना काचन श्रेणी सजघटे । एत-स्मिंश्च काले समाजे दासाना सख्याऽतीव वृद्धिं जगाम । अन्येऽनेके विकाराः प्रादुरभूवन्, किन्तु सर्वस्मिन्नप्येतस्मिन् बौद्धधर्मोऽतीव पुष्पितः फलितश्च । राजसभाद्वारा सर्वाणि पर्वाणि महता समा-रोहेण समपाद्यन्त, महान्तः सङ्घारामा बौद्धमठाश्च सस्थापिताः, बौद्धभिक्षुभिः स्वकीया सेना ररक्षे, राजधानीं च सशस्त्राः प्रविविशुः । युवराजस्य महतामधिकारिणाञ्च शिक्षकाः प्रायो बौद्ध-सङ्घस्यैव सदस्या बभूवुः । एवमभिधीयते च यत् तदा तथाविध एको नियमोऽपि कृतो यद् यदि कस्यचन जनस्य त्रयः पुत्रा भवेयुस्तर्हि तेष्वेकतमेनोपसम्पदा गहीतव्या भिक्षुणा च भवितव्यमेव ।

१२५० तमतः खीष्टीयाब्दात् पश्चाद् बौद्धप्रभुत्वमुपशमितुमारेभे । अस्य मुख्यं कारण राजसभाया कन्फ्यूशियसमतावलम्बिना प्राबल्यमभवत् । देशश्च तदा विविधविपत्तिमेघाच्छन्न आसीत् । प्रजाः सतत सघर्षैर्हत्याभिरुत्पीडनैश्च त्रस्ता बभूवुः । कन्फ्यूशियसमतावलम्बिनोऽस्य सर्वस्य कारणं बौद्धान् कथितवन्तः । अत एवामीषा प्रभावः क्षीणो भवितुमारेभे ।

त्रयोदशे शतके मङ्गोलैः कोरियाख्यो देशो विजितः । महत्सु नगरेषु स्वेच्छया कोरिया-वासिनः शासका नियुक्ताः । ते मङ्गोल्युवतीः परिणेतु बाधिताः । कुबलैखामहोदयेन कोरियाद्वारा जापानमभियातु सेना प्रेषिता । जापानवास्तव्या इदं प्रतिकर्तुं चतुर्दशे शतके कोरियोपरि निरन्तर-मभियानं चक्रुः । यावत् कोरियादेशे मङ्गोलजातीयाना प्रभुताऽऽसीत् तावत् तत्र बौद्धधर्मो राज-धर्मोऽभूत्, यतो हि मङ्गोला बौद्धधर्मस्य सरक्षका आसन् । किन्तु चीने यदा मङ्गोलाना युआनवंशो मिंगवशेन पराजितस्तदा कोरिया इत्यत्रापि मङ्गोलाना वश्यताङ्गीकर्तुर्वागवशस्यान्तः कृतः ( १३९२ ) ।

( ४ ) **चोजनस्य राज्यम्** ( १३९२–१९१० )—अस्य विद्रोहस्य नेता नीतईजो अथवा लितननामक आसीत् । मङ्गोलानामाक्रमणैर्विघटितस्य राष्ट्रस्य पुनरनेन सङ्घटनं कृतम् । तदा मङ्गोला देशस्य शत्रवो घोरघृणाभाजन चामन्यन्त । तैः सह कमपि सम्बन्ध न स्थापयतानेन स्वकीयः सम्बन्धः सिल्लाप्राचीनराजवंशेन सह स्थापितः । तथा देशः चोजनेति प्राचीनेन नाम्ना

विख्यापितः। विद्रोहोऽयं कन्फ्यूशियसमतावलम्बिनामाभीराणां सहयोगेन समपद्यत। अतोऽमुं धर्मं नूतनो वंशो महतीं प्रतिष्ठां नीतवान्। तदा कोरियावासिनां देशभक्तानां समीचीनव्यवस्था-कारकाणाञ्च कृते स्वाभाविकमेतदासीद् यत् ते स्वशत्रुभिर्मङ्गोलैः समर्थितः पोषितश्च बौद्धधर्मः स्वदेशस्याधःपतनस्य कारणमस्तीति मन्यन्ताम्। लितनेन कन्फ्यूशियसधर्मो राजधर्मोऽमानि। आगामिसार्द्धैकशतवर्षपर्यन्तं चोजनराजेन बौद्धधर्मोऽनेकधा प्रतिबद्धः। बहुवारमयं प्रतिबन्धोऽत्याचारसीमां प्राप्नोत्। द्वाभ्यां राजभ्यां सङ्घारामं निर्मातुं बौद्धभिक्षूंश्चानुग्रहीतुमभिलषितम्, किन्तु उभावपि सिंहासनात् प्रच्युतौ बभूवतुः। मूर्तयो द्राविताः, बौद्धग्रन्थानां पठनं पाठनञ्च निषिद्धम्। विवाहोऽन्त्येष्टिश्च बौद्धेतरविधिभिः समपाद्येताम्।

चजननामकभूपतिकाले इदं निश्चितमभूद् यत् शासने प्रबन्धे च बौद्धभिक्षूणां हस्तक्षेपः सर्वतोभावेन परिसमापनीयः। अतः प्रथमन्तु भिक्षवो राजधान्याः सिओलप्रदेशान्निर्वासिताः, अनन्तरं चान्यान्यनगरेभ्योऽपि निर्वासस्यारम्भो जातः। षोडशशतकस्य प्रारम्भे राजाज्ञाभी राजधान्यां नगराणां च सङ्घारामा अवारुध्यन्त। इदमेव कारणमस्ति यद् वर्तमाने काले कोरियास्थाः प्रायः सर्वेऽपि सङ्घारामा ग्रामेषु दुर्गमपर्वतेषु वा सन्ति।

अस्मिन् सर्वस्मिन् समये बौद्धधर्मोऽतीवाक्रान्तोऽभूत्। केवलम् ई० १५९२ तमस्यैकस्यां प्रसिद्धायां घटनायां बौद्धानां विशेषेणोल्लेखः प्राप्यते। तस्मिन् वर्षे जापानतो हिदेयोशी-नृपतिना सेनानां लक्षत्रयं कोरियामाक्रमितुं प्रेषितम्। अवसरेऽस्मिन् चीनेन कोरियासाहाय्यार्थं षष्टिसहस्राणि जनाः प्रेषिताः। षड्वर्षाणि युद्धमिदमभूत्। समग्रोऽपि कोरियादेश उद्विग्नोऽजायत, कोरियावास्तव्यानां सौभाग्येन १५९८ तमे ख्रीष्टीयाब्दे हिदेयोशीनृपतेः मृत्योरनन्तरं जापानसेना प्रत्यावर्तिता, द्वयोर्देशयोः सन्धिरभूत्। सङ्ग्रामेऽस्मिन् बौद्धभिक्षवः स्वमठाधिपतीनामाध्यक्ष्ये देश-रक्षार्थं महतोत्साहेनायुत्सत। कोरियापक्षस्थेन जापानपक्षस्थेन चैकैकेन भिक्षुणा द्वयोर्देशयोः सन्धिः सम्पादितः। आगामिषु त्रिसहस्रवर्षेषु बौद्धधर्मः क्षीणतां गतः। राजाश्रयाभावेन बौद्धधर्मस्य पुरोहितानां कर्मकाण्डस्य मन्दिराणाञ्च शोचनीयायामवस्थायामिव क्षीणता स्वाभाविक्यासीत्।

**(५) बौद्धधर्मस्य पुनरुज्जीवनं जापानप्रभुताया युगम् (१९१०-४५)**—१९१० तमे जापानः कोरियां विजित्य स्वराज्याङ्गं कृतवान्। अनेन कोरियादेशः पराधीनता-पाशेनावश्यं यन्त्रितः, किन्तु बौद्धधर्मस्य पुनरुत्कर्षो भवितुमारेभे। नगरेष्वपि बौद्धमन्दिराणां निर्माणं प्रारब्धम्। अतीतेषु त्रिशतवर्षेषु कोरिया 'एकान्तसेवितापसराज्यम्' (हर्मिटकिंगडम) व्यपदिश्यते स्म। जापानेनास्य विश्वेन साकं सम्पर्कः स्थापितः। बौद्धधर्मः प्रोत्साहितोऽभूत्। प्राचीनानां धर्मग्रन्थानां सङ्ग्रहः प्रकाशनञ्च प्रारब्धम्। बौद्धसङ्घारामाः पुनः सङ्घटिताः, बौद्धधर्मस्य शिक्षादानायैको विद्यालय उद्घाटितः। पत्रिकाणाञ्च प्रकाशनं प्रारब्धम्। अधुना यद्यपि कोरियादेशे कन्फ्यूशियसमतावलम्बिनो जना भूतप्रेतेषु विश्वासं कुर्वन्ति, तान् वशीकर्तुं मान्त्रिकेभ्यः प्रतिवर्षं सार्द्धद्वाविंशतिकोटिरूप्यकाणामुपायनं च भवति, किन्तु तथापि तत्र बौद्धधर्मरूपेण भार-तीयः प्रभावोऽद्यापि जीवति। कोरियानिवासिभिः भगवतस्तथागतस्य सदेशो न विस्मृतः। अत्र १,८,५००० तोऽधिका जना बौद्धाः सन्ति। दुःखग्रस्ता जना बौद्धमन्दिरेषु पूजापाठैर्बौद्धपुरोहित-

द्वारा प्रार्थनाभिश्च कष्टानि मोचयितु प्रयतन्ते। नूतनवर्षे नार्य. भिक्षुभ्यो रूप्यकाणि फलान्युपानीय वार्षिकीं समृद्धिं याचन्ते तान्। इत्थ पुत्रप्राप्तये दिवङ्गतस्य स्वर्गप्राप्तये च तान् प्रार्थयन्ते। इमाः प्रार्थना भगवन्तं बुद्धमुपगच्छन्ति। सा प्रार्थना प्रायोऽस्माद्वाक्यात् प्रारभ्यते— हे दयालो! बुद्ध! भक्ताना प्रार्थना शृणु, तेभ्यः समृद्धिं देहीति।

## बौद्धधर्मस्य वर्तमानावस्था

(क) **बौद्धमन्दिरम्**—अधुना कोरियादेशे बौद्धधर्मस्य महाकेन्द्राणि जनाकीर्णस्थानाद् दूर निविडवनाच्छादिताना पर्वताना प्रवणभूमौ उपत्यकासु च वर्तन्ते। अत्र प्राचीनतीर्थेषु बौद्धपुरोहितैर्धर्मस्य दीपशिखा प्रचण्डे झञ्झावातेऽपि देदीप्यमाना सुरक्षिता। अमीषा महाकेन्द्र कोरियात उत्तरपूर्वभागे कोगोसानाख्य( वज्रपर्वतो )मस्ति। अय शिलाना प्रपाताना नदीनाञ्च प्रदेशो विद्यते। प्राकृतिकशोभा विविक्तस्थान च पश्यता विहारान् स्थापयन्त. भिक्षवः ५१५ तमे विजने प्रदेशेऽस्मिन् बौद्धमन्दिराणा स्थापनामकुर्वन्। अधुनाऽत्र एकोनविंशतिर्मन्दिराणि चत्वारिंशद् विहाराश्च सन्ति। अमी सर्वे प्राय. संकीर्णायामुपत्यकाया फेनायमानाना जलधाराणा समीपे सुरम्येषु पर्वतकुञ्जेषु न्युषितवन्तः। सम्भवतोऽत्रारम्भिका बौद्धप्रचारकाः स्वीया दीर्घयात्राः परिसमाप्य 'पगोडा' इति निर्मितवन्तः। तदेवैतत्कालपर्यन्तं पूजास्थानमस्ति। एतेषा सर्वेषा प्रवेशद्वारस्यान्तः प्रथम प्राङ्गणे कांस्यस्यैका महती घण्टा विद्यते। प्रत्येक मठस्य भिक्षवः प्रायः स्वघण्टा कोरियाद्वितीया सर्वतो महतीं घण्टा कथयन्ति। प्रायः प्रत्येक सहेय मर्मस्पर्शिनी कथा सम्बद्धाऽस्ति, यदस्या घण्टाया निर्माताऽऽरम्भे कैश्चन कारणैरस्या मधुरमभीष्ट ध्वनिमुत्पादयितु तथा ता प्रस्रावयितु नाशकत्। पुनः पुनः प्रयत्नं कुर्वन्नपि स सफलो न जातः। अन्ते एकस्मिन् दिने तत् सफलयितुं तस्य रूपवती कन्या द्रुतधातौ उत्प्लुता, तस्या अनुपमबलिदानेन पित्रा स्वोद्देश्ये सफलता प्राप्ता। घण्टाया मधुरो ध्वनिः स्वीयं लघुजीवनमुद्दिश्य विलपन्त्या दिवङ्गतायाः कन्यायाः कोमला वाणी विद्यते (प्राट-पृ० ४२३–७)। घण्टास्थानात् परतो द्वितीयस्मिन् प्रवेशद्वारे चीनवद् दिक्पालानां वक्रा भ्रुकुटीमारोपयन्त्यो मूर्तयो भवन्ति। इमाश्चतुर्दिग्भ्यो दुरात्मभ्यो मन्दिर रक्षन्ति। स्वयमुत्तमात्मानः सन्ति। अतो निश्शङ्क तृतीयस्मिन् कक्षे प्रविश्य केन्द्रीयमन्दिरस्य सम्मुखे उपगच्छन्ति। अत्र मनोहराणि तक्षणकर्माणि भवन्ति। इद चित्रैरलंकृतद्वारैश्च सुसज्जित भवति। अस्य पटल कलया चीनभाषायामुत्कीर्णलेखैर्युक्त भवति। अत्र त्रिभूमिको नवभूमिको वा त्रिंशत्फीटसमुन्नतः पगोडाख्यो देवालयो भवति। मन्दिरस्यान्तरालो भाग उन्नतोऽन्धकारपूर्णः, चित्रैः सज्जितो भवति। पटलतो द्वौ नागौ शिरः स्वमुन्नयतः। केन्द्रे एकस्य बुद्धस्य कतिपयाना बुद्धाना बोधिसत्त्वाना वा मूर्तयः प्रतिष्ठापिता भवन्ति (प्राट पृ० ४२४)।

(ख) **उपास्यदेवता**—कोरिया इत्यत्र द्वौ बुद्धौ बूलौ वा (कोरियावास्तव्या बुद्धान् बूलपदेन व्यवहरन्ति) विशेषतः पूज्येते—(१) शाक्यमुनिः (सुक्रपुरै, स्येक्-का मुनि)। (२) अमिताभ (अमिया)। भैषजगुरुः (यक्षपुरै की-मिलेई-फो) अपि विशेषत उपास्यते।

वैरोचनलोहनावपि आराध्यौ देवौ स्तः। बोधिसत्त्वेषु अथवा पोसलेषु षण्णा विशिष्टा प्रतिष्ठास्ति—(१) मैत्रेयः (मिरयेकपोसलः), (२) क्षितिगर्भः (ति-तजंगपोसलः), (३) अवलोकितेश्वरः (क्वानसिन या कोअन-स्येइ इउम), (४) महास्थानप्राप्तः (तई-सइ-चि-पोसल), (चीनी-ताशिह चिह, जापानी दाई सीएशी), (५) मञ्जुश्रीः (चीनी-वेनश मौन, सौ पोसल), (६) पोहियेनपोसलः। अमीषा बुद्धाना बोधिसत्त्वानाञ्च चतुर्ण्णा पूजाऽधिका भवति—ते चेमे सुक्कपुरै, अमिदा, क्वानसिन, मिरियेक इति। बहुषु मन्दिरेषु वेद्यां केन्द्रे शाक्यमुनिः, तथा तमुभयतोऽमिताभः, भैषजगुरुश्च, अथवा द्वौ बोधिसत्त्वौ क्वानसिनः तथा तईस एइ-चि इत्येतौ भवतः। अमिताभस्य शाक्यमुनितोऽधिका प्रतिष्ठा विद्यते।

चीनापेक्षया कोरियादेशस्य मन्दिराणा मूर्तयो कलादृष्ट्या उत्कृष्टतराः सन्ति। केन्द्रीय-मन्दिराणा भित्तिषु प्रायः बोधिसत्त्वाना कमलपरिपूर्णाना स्वर्गलोकाना भयङ्करनरकाणाञ्च चित्राणि भवन्ति। महत्सु मन्दिरेषु कतिपयेष्वन्यगृहेषु बोधिसत्त्वाना लोहनानामन्यबौद्धाना देवाना वा चित्राणि भवन्ति। अत्र दशाना नरकाणा दशाना राज्ञा तथा षोडशाना मुख्याना शिष्याणां चित्राणि भवन्ति। चीनमन्दिरवद् अत्र मैत्रेयेण सम्मुन्नतं स्थान न प्राप्यते।

**(ग) बौद्धसम्प्रदायः**—कोरियादेशे बौद्धभिक्षवो द्वयोः सम्प्रदाययोर्विभक्ताः सन्ति। (१) स्पेनजोनः—अध्यात्मवादः पन्थाः चीनस्य चुआनस्य तथा जापानस्य जेनशू-सम्प्रदायस्य स्रोतोनामकशाखया सवदति। इमे उपासना विशेषतो ध्यायन्ति। मन्दिरेषु दिवसेषु वारत्रय घण्टाद्वयं यावत् तथा साय घण्टात्रयं यावद् जानुभ्यामुपविश्य ध्यानमग्ना भवन्ति। इत्थं चतुर्विंशतिघण्टामध्ये नवघण्टा ध्यानेन समाधिना वा व्यतियन्ति। (२) क्योजो-नेति—अयं सम्प्रदायो बुद्धस्योपासना मूर्तेः पुरः दण्डवत् प्रणतो भूत्वा सस्वरं सूत्राणि पठन् कासस्य काष्ठस्य च घण्टा करताल वा वादयन् 'नमामि अमिताभाय बुद्धाय' इतिपदस्य कीर्तनेन सह करोति (प्राट०, पृ० ४२६–७) अस्य मन्दिरेषु धूपवर्तिकानामपि व्यवहारो भवति।

**भिक्षूणां धार्मिको विश्वासः**—बौद्धभिक्षवः शाक्यमुनौ अमिताभे मैत्रेये च दृढ विश्वसन्ति। इमे इद जानन्ति यत् शाक्यमुनिर्भारतेऽजायत। तेन सासारिकदुःखनिवृत्तिरन्विष्टा। पुनर्जन्मवादस्य कर्मवादस्य च दार्शनिके सिद्धान्ते तेषा दृढो विश्वासोऽस्ति। श्रीप्राटमहोदय एकेन भिक्षुणोपदिष्टो यत् शुभकर्मकर्तारः कतिपयकाल स्वर्गमधिष्ठाय उच्चकुलेषु समुत्पत्स्यन्ते (पृ० ४३०)। अन्यस्यैकस्य वृद्धस्य भिक्षोरय विश्वास आसीद् यद् आगामिनि जन्मनि स एकस्मिन् धनिककुले उत्पत्स्यते। सर्वे भिक्षवो बुद्धं प्रार्थयन्ते, तथा तेषा विश्वासोऽप्यस्ति यत् तेषा प्रार्थना श्रूयते। प्रार्थनाया प्रायस्ते 'नमः शाक्यमुनये, नमोऽमिताभाय' बुद्धाय (नमुसुक्कपुरै अथवा नमुअमिदबूल) इति मन्त्र पुनः पुनस्ते उच्चारयन्ति। चतुर्णामार्यसत्यानामष्टाङ्ग-मार्गस्य च स्थाने ते षट्सु पारमितासु अर्थात् दुःखसागरस्य परं पारं नेतु साधनेषु विश्वास-मादधति। इमानि साधनानि दयालुता, नैतिकता, धीरता, पौरुषम्, ध्यानम्, बुद्धिमत्ता च सन्ति। भिक्षुत्वाय त्रीणि वर्षाणि अन्तेवासित्व स्वीकार्यम्। प्रायो बौद्धविहारेषु रक्ष्यमाणा अनाथा बालकास्तथाऽऽनन्दमयजीवनयापयितारो युवान एव भिक्षवो भवन्ति। विदेशेषु बौद्धधर्म-

स्यानाथाना शिशूना पालने समीचीना दृष्टिरासीत् । वर्तमानखीष्टीयमठवद् इतो बौद्धधर्मस्य प्रबलाः समर्थकाः प्रचारकाश्च निर्गताः । कोरिया न केवलमानन्दमय निष्क्रिय जीवन यापयता भिक्षूणा स्थानमस्ति, किन्तु वृद्धाना विधवाना शरणस्थलमप्यस्ति । प्राटमहोदयेन एकस्मिन् मठे दश रुग्णाः स्त्रियः दृष्टाः, या अक्षोटवत् शुष्कशरीरा अपि बालिकावद् विहसद्वदना आसन् । तास्तथा वृद्धा आसन् यत् समीपस्थाना भिक्षूणा पितामहीयोग्या अपि नासन् । यदा ता भिक्षुकी व्रतग्रहणस्य कारण पृष्टास्तदा ताभिरुक्त यद् विधवात्वप्राप्त्यनन्तर तासा केचन पालका नासन् । अधिका भिक्षवो निरक्षरा भवन्ति । अधुना कोरियादेशे नवीन उत्साहो भवति । कोरियाभिक्षवो जापानस्य विद्यापीठेषु धर्मस्य गभीर ज्ञान प्राप्नुवन्ति । अनेन कोरियास्थ-बौद्धधर्मेषु नवस्य स्फुरणस्य सम्भावनाऽस्ति । पूर्वमिद निवेदितमस्ति यत् कोरियादेशेन भारतीयधर्मं चीनसस्कृतिञ्च चीनाज्जापान यावन्नेतु सेतुबन्धायितम् । अत एव सूर्योदयदेशे जापाने बौद्धधर्मस्य नवीनः सूर्यः उदियाय । अग्रिमेऽध्यायेऽस्य वर्णन करिष्यते ।



# सप्तमोऽध्यायः

## जापानः

### नूतनः सूर्योदयः

जापानः सूर्योदयस्य देश उच्यते । षष्ठे खीष्टाब्दीये शतके सूर्योदयदेशे बौद्धधर्मस्य नवीनः सूर्य उदियाय । एददर्थं जापानदेशः कोरियादेशस्य चीनस्य चाधमर्णोऽस्ति । वस्तुतस्तस्य धर्मस्य सभ्यतायाश्च शिक्षकश्चीन आसीत् । कोरिया केवलं द्वारमासीत्, चीनः शाक्यमुनेः शिष्यत्वं स्वीचकार । अतो यदा चीनतः सभ्यताया. किरणा जापानं प्राप्तुमारेभिरे तदा बौद्धधर्मोऽपि एभिः साकं तत्र गतः । परं चीनजापानयोर्बौद्धधर्मे एको महान् भेद आसीत्, चीनवद् जापाने बौद्धधर्मप्रचारकाणां भारतीयपण्डितानां कदाप्यागमनं नाभूत् । जापानस्य भारतेन सह कश्चन प्रत्यक्षः सम्बन्धो नासीत्, स तु भारतस्य शिष्यस्य शिष्यः प्रशिष्यो वासीत् ।

भारतेन सह साक्षात्सम्बन्धाभावेऽपि जापाने भारतीयसंस्कृतेः प्रसारोऽनेकधा महत्त्वाधायकोऽस्ति । जापानं एशियायाः पूर्वोत्तरप्रान्तस्य सीमाप्रायेऽस्ति । भारतीयधर्मस्यात्रागमनस्य तात्पर्यं सकलस्य पूर्वोत्तरस्य एशियादेशस्य सांस्कृतिको दिग्विजय आसीत् । जापाने बौद्धधर्मेण साधारणजनानां समाजिकाभ्युत्थाने कलानामुन्नतौ च महान् भागो गृहीतः । राजनीतौ बहुवारं तस्य महान् प्रभावोऽभूत् । जापानवासिभिरस्य विलक्षणपद्धत्या विकासो विहितः ।

जापाने बौद्धधर्मस्येतिहासो निम्नयुगेषु विभक्तुं शक्यते—

( १ ) बौद्धधर्मस्य प्रवेशस्य प्रारम्भिकविस्तारस्य च युगम् ( ५२२ ई०–७०९ ई० )
( २ ) नारायुगम् ( ७०९ ई०–७९४ ई० )
( ३ ) हेइआनयुगम् ( ७९४ ई०–११९२ ई० )
( ४ ) कामाकुशयुगम् ( ११९२–१३३५ ) तथा पुरोमाची युगम् ( १३३५-१५७३ )
( ५ ) नोबुनागा ( १५७३–१६१६ ) तथा तोकुगावायुगम् ( १६०३-१८६७ )
( ६ ) मेइजीयुगम् ( १८६७–१९४१ )

## बौद्धधर्मस्य प्रवेशयुगम्

**प्रथमसन्देशवाहकः शिवातचीतो**—जापाने बौद्धधर्मस्य प्रथमः सन्देशवाहकः शिवातचीतोनामकः चीनदेशीयो भिक्षुरासीत् । ५२२ तमे खीष्टीयाब्देऽयं मध्यजापानं ( यमातो ) प्राप्तः । अनेन मन्दिरमेकं निर्मापितं तत्र च भगवतो बुद्धस्यैका मूर्तिः प्रतिष्ठापिता, अनेकानि वर्षाणि यावत् तत्र भगवन्तमुपासिष्ट । इदं न ज्ञायते यत् स जापानवासिनस्तथागतस्य उपासकान् विधातुं प्रायतत न वा ।

**कोरियाराजस्योपायनम्**—किन्तु तथाविधस्य सफलस्य प्रयत्नस्य कर्ता दक्षिणपश्चिम-कोरियाप्रदेशस्य ( पक्चे ) राजा आसीत्। तेन ५५२ तमे खीष्टीयाब्दे जापानदेशस्य किमोई-नामधेयाय सम्राजे ( रा० का०५४०-५७१ ) बुद्धस्यैका स्वर्णमण्डिता ताम्रमूर्तिः, बौद्धसूत्राणि पताकाश्छत्राणि चोपायनानि प्रेषितानि। अनेन सहैवैकस्मिन् पत्रे इद लिखित यत् "अय धर्मः सर्वश्रेष्ठोऽस्ति", परमस्य विशदीकरणमवगमनञ्च दुस्साध्यमस्ति। ( चीनस्य प्राचीनो राजवशः ) चौनामकप्राचीनराजवशस्य राजानः कन्फ्यूशियसमतावलम्बिनोऽपि चेद ज्ञातु नापारयन्। अय लक्ष्मीमपरिमेयमनन्त फलञ्च दाताऽस्ति। अय मनुष्यान् बोधिरूपेण परिणमयितु शक्नोति। अपरञ्च दविष्ठाद्भारतात् चीनदेशस्य हाननामक-राजवश्यनृपपर्यन्त धर्ममम् सर्वे स्वीचक्रुः। तादृशः कोऽपि नास्ति य उपदेशे सति श्रद्धयास्य स्वागतं न कुर्यात्।

सम्राट् मूर्तिमासाद्यातीव प्रसन्नो जातः, किन्तु स नेदं ज्ञातवान् यत्तस्याः कमुपयोग कुर्यात्। राजपरिषदः सैनिकसमुदायो राज्यस्य प्राचीन-शिन्तोधर्मस्यातीव भक्त आसीत्, नूतनधर्मस्य च प्रवेशस्यात्यन्तविरोधी। तैः सम्राजे परामर्शः प्रदत्तो यद् नवीनं सिद्धान्त स्वीकृत्य स शिन्तो-देवताना ( कमियो ) कोपस्य भाजन न भवेत्। किन्तु पुरव्यवहारसम्बन्धिनामधिकारिणा विशेषतः सोगावश्यानामिद निवेदनमासीद् यदस्य स्वीकारेणास्माभिः सभ्येन जगता चीनेन कोरिया इत्यनेन च सह प्रगतिः कर्तव्या। सम्राजा एको मध्यममार्गोऽन्विष्टः। परीक्षणार्थ सोगावश्येभ्यो मूर्तिः समर्पिता ते च मूर्तिपूजार्थमादिष्टाः। परीक्षणे सफले सति तत् स्वीकारे कश्चन दोषो नासीत्, अफले च सोगापरिवार एव देवाना कोपभाजन भविष्यति। देवताना कोपस्य सभावनाया सत्यामपि सोगामुख्येन स्वगेहे बुद्धस्यैकं मन्दिर निर्माण्य महता धैर्येण तस्य पूजा प्रारब्धा। किन्तु परीक्षणं निष्फलमभूत्। तदा एको जनपदध्वसिव्याधिः प्रसृतः। अय व्याधिः 'कमी' नामकस्य देवस्य कोपचिह्नमित्यमन्यत। मूर्तिः कुल्याया प्रक्षिप्ता। आगामिविंशतिवर्षाणि यावत् शिवातचीतो इत्येव जापाने भगवतो बुद्धस्योपासक आसीत्।

पक्चेप्रदेशस्य राज्ञा ५७२ तमे खीष्टीयाब्दे किम्मेईनाम्ना प्रसिद्धस्य तस्य मन्त्रिणो मृत्यौ सति सम्राजे पुनरुपायन समर्पितम्। अत्र धर्मग्रन्थाना द्वे शते, एकः तपस्वी, एको योगी, एका भिक्षुकी, एको मन्त्रपाठकः, एको मूर्तिनिर्माता, एकश्च मन्दिरनिर्माता, एतावन्त आसन्। इमे ओसाकाख्ये स्थाने मन्दिर निर्मातुमादिष्टाः। बौद्धमन्दिराणा संख्या वृद्धिं गन्तु प्रवृत्ता। पुनः जनपदध्वसिव्याधिः प्रसृतः। मूर्तयो जले निक्षिप्ताः। किन्तु इदानीं जनपदध्वसिव्याधिः शान्तिस्थाने वृद्धिं जगाम। तदा सोगापरिवारेणोक्त यदिय विपत्तिः 'कमी' देवस्य न, किन्तु बुद्धस्य कोपाज्जाता, इद सर्वैरवगतम्। जापाने चेत्थ बौद्धधर्मस्य मूलस्य स्थापना जाता।

अस्य दृढीकरणस्य गौरव सोगानामकपरिवारस्यास्ति। तस्मिन् समये राज्यस्य परिवारस्या साधारणः प्रभाव आसीत्। प्रायोऽस्यैव परिवारस्य स्त्रियो राज्ञो भवन्ति स्म। बाल्ये स्वपरिवारे प्राप्तस्य बौद्धधर्मस्य सस्कारं ताः राजभवने नयन्ति स्म। सम्राट् जिम्मूः ( ५८६-८७ ) सोगा-परिवारस्य प्रमुखस्य पितृव्यपुत्र आसीत्। तस्मिन् काले जापाने बौद्धधर्मः प्रथममेव राजकृपाया भाजनमभूत्। राज्ञः सद्धर्मे श्रद्धाऽऽसीत्। तस्मिन् दिव प्रयाते सति बौद्धधर्मविरोधिनो भ्येनोनोव-

नामधेयस्य नरस्य नेतृत्वे विद्रोहमकार्षुः । किन्तु सोगानामकपरिवारस्तस्य दमन चकार ( ५८८ ५९२ ई० ) । अनेन बौद्धधर्मोऽतीव प्रोत्साहितः । राज्ञा अनेके जापानवासिनो बौद्धधर्म शिक्षितु कोरियादेशे प्रेषिता. । तदा कोरियादेशादनेकेषा बौद्धप्रचारकाणामागमनमजायत । इमे साधारणान् जानान् बुद्धानुयायिनः कर्तुमारेभिरे ।

**जापानदेशीयोऽशोकः-उमयादो**—६९२ तमे खीष्टीयाब्दे महाराज्ञ्याः सुइकोनामधेयाया राजसिंहासनारोहणेन सह बौद्धधर्मेण प्रबलो राज्याश्रयः प्राप्तः । तदानीं शासनकार्यमस्या भ्रातृव्य उमदादो[1]नामधेय एवावलोकयति स्म, इतिहासेऽस्य शोतोकुतशी ( ५७४-६२१ ) नाम्ना प्रसिद्धयति । शोतोकूर्जापानस्याशोक आसीत् । ५८८ तमे खीष्टीयाब्दे बौद्धधर्मविरोधिना विद्रोहं शमयितुं गौरवमस्यैवास्ति । महाराज्ञ्याः सुइकोनाम्न्याः साहाय्येनानेन स्वमृत्युपर्यन्तम् ( ६२१ ई० ) अयं धर्मः, धर्मेणानेन सह चीनदेशात् कोरियादेशाच्चागताः कलाः सस्कृतिश्च प्रोत्साहिताः । जापानस्य प्रथमस्य शासनविधानस्य रचयिताऽयमेवासीत् , तदानीमेवायमुद्घोषः कृतो यत् त्रिरत्नमेव ( बुद्धो धर्मः सङ्घश्च ) श्रद्धायाश्चरम लक्ष्यमस्ति । अनन्यभावेनास्योपासना उत्तमस्य जीवनस्यैकः प्रधानः स्तम्भोऽस्ति । तत्समय यावत् चीनदेशे भगवतो बुद्धस्य मन्दिराणि गृहेषु निर्मीयन्ते स्म ।

**होरयुजीमठस्य स्थापना**—५८७ तमे खीष्टीयाब्देऽनेन सेतुप्रान्ते प्राथमिक सार्वजनिक बौद्धमन्दिर स्थापितम् । अस्य सर्वतोऽधिका प्रसिद्धा कृतिर्होरयुजीनामकस्य धार्मिकसस्थानस्य स्थापनाऽऽसीत् ( ६०७ ई० ) । ओसाकाप्रदेशात् त्रयोदशक्रोशान् पूर्व स्थितनारानगरीपार्श्वे होरयुजीमठोऽनेकानि शतकानि यावद् बौद्धधर्मकलासस्कृतीना बौद्धसभ्यतानाञ्च प्रधान केन्द्रमासीत् । अस्य केन्द्रे मन्दिरमेक निर्मितम् । इद जापानस्य प्राचीनतमं मन्दिर तथा विश्वस्य सर्वतः प्राचीनं दारुमय भवनमस्ति । अत्र जापानस्य प्रथमेन प्रसिद्धेन शिल्पिना निर्मिता अनेका कास्यमूर्तयः समुपलभ्यन्ते । मन्दिरमभितो बौद्धदर्शनस्य कलायाः सगीतस्य चाध्ययनार्थं पृथक् पृथग् भवनानि निर्मापितानि । प्राणिमात्रस्य कल्याणार्थं चिकित्सालयाः, औषधालया अन्नक्षेत्राणि च स्थापितानि । मठोऽयमग्रे ग.वा बौद्धधर्मस्य बौद्धकलायाश्च महान् विश्वविद्यालयः सवृत्त. ।

---

१. उमदादो इत्यस्यार्थोऽस्ति अश्वशालाया द्वारस्य राजकुमारः । एवमनुश्रुतिः प्रसिद्धास्ति यद् यदाऽस्य माता राजकीयाश्वशालां निरीक्षते स्म तदाऽयमुत्पन्न आसीत् । जापानीयेतिहासस्य महापुरुषत्वेनास्य विषये अनेका आश्चर्योत्पादिका वार्ताः प्रसिद्धाः सन्ति । अयमुत्पन्नन्नेव वक्तु प्रारब्धवान् । अस्य स्मृतिशक्तिस्तथा तीव्राऽऽसीद् यदष्टानां जनानां प्रश्नान् सहैव श्रुत्वा सर्वेषां समुचितान्युत्तराणि दातुं शक्नोति स्म । ई० ५८२ तमतः ६२१ तमपर्यन्तं तेन न केवलं देशस्य शासनं यथोचित कृतम् , किन्तु सप्तदशविभागसमन्वित देशस्य प्रथमं शासनविधानमपि निर्मिम्, जापाने नैतिकव्यवस्थाया अपि स एव संस्थापक आसीत् । सोऽतीव लोकप्रिय आसीत् । जा.ानस्येतिहासे निहोङ्गी इत्यत्र लिखितमस्ति यत् तस्य मृत्यौ वृद्धास्तथा रुदि वन्तो मन्ये तेषां पुत्रो दिवङ्गतोऽभवत् , युवानश्च तथा रुदितवन्तो मन्ये तेषां पिता मृतोऽभूत् ।

अद्यत्वेऽत्र त्रयस्त्रिंशद् भवनानि सन्ति यत्र १३०० वर्षदेशीयानि प्राचीनानि कलासम्बन्धीनि वस्तूनि सन्ति ।

इदं स्मर्तव्यं यत् शोतो-कू इत्यनेन बौद्धधर्मं राष्ट्रीयजीवनस्य कृतेऽधिकाधिकमुपयोगिनं कर्तुं प्रयत्नो व्यधायि । तदानीं शिक्षिता जापानवासिनोऽयं धर्मो निर्वाणपदवी-प्रदाताऽस्तीति बौद्धधर्मं न स्वीकुर्वन्ति स्म । परमस्य प्रभावेणाशिक्षाया व्याधेश्चाभावो भवति । जनसाधारणस्य च समुन्नता सामाजिकावस्था भवतीति स्वीकुर्वन्ति स्म । सर्वेषां प्राणिनां दुःखं मोचयितुं महायानस्य विचारो जापानवासिभ्योऽरोचत । इदमुल्लेखनीयमस्ति, यत् शोतोकूनाम-धेयेन पुरुषेण येषां ग्रन्थानां टीका लिखिता तेषु एकतमो विमलकीर्तिनिर्देशाभिधो ग्रन्थोऽयासीत् । अस्मिन् वैशाल्या एकस्याढ्यस्य गृहस्थस्य महिमा वर्णितो यः संसारस्योपकृतौ दत्तचित्त आसीत्[1] । शो-तो-कूनामकेन सद्धर्मपुण्डरीकस्य श्रीमलदेवीसूत्रस्य (आदर्शबौद्धस्त्रीवर्णनकर्तुर्ग्रन्थस्य) च टीके लिखिते । स जापानीयसभ्यताया बौद्धधर्मस्य च संस्थापको मन्यते ।

सप्तमे शतकेऽस्य लोकप्रियता निरन्तरं वृद्धिं गता । शो-तो कूनामकस्य तथा सुइको-नामकस्य प्रोत्साहनस्यायं परिणामो जातो यत् ६२४ तमे खीष्टीयाब्दे जापाने षट्चत्वारिंशद् बौद्धमन्दिराणि ८१६ भिक्षवः ५६९ भिक्षुण्यश्चासन्[2] । सप्तमस्य शतकस्यान्यै राजभी राज्ञीभि-श्चायमनीव संरक्षितः । सप्तमस्य शतकस्यान्ते इयं राजाज्ञा प्रसारिता यत् प्रत्येकं भवने बुद्धस्य मन्दिरेण भवितव्यम् । तदानीं चीनदेशात् कोरिया-देशाच्चापि बौद्धविद्वांस आजग्मुः । जापान-देशीया बौद्धग्रन्थानामध्ययनं चीनभाषयैव कुर्वन्ति स्म, तथा अद्यावधि पर्यन्तं तत्रत्या धार्मिकी भाषा चीनी अस्ति । शो तो कूनामकेनास्याध्ययनं प्रोत्साहितमुन्नमितं प्रसारितञ्च । चीनपण्डिता-तिरिक्तोऽस्य शतकस्य मध्ये एको भारतीयोऽपि विद्वान् समागतः । अस्य नाम होदो आसीत् । अनेन ६४५ तमे खीष्टीयाब्दे सम्राजः को-तो-कू इत्यस्य चिकित्सा कृता[3] । इदमुच्यते यदनेन बौद्धधर्मस्य प्रचारे महती सफलताऽऽसादिता । इदं सम्भवति यदस्य सफलतायाः कारणमस्य चिकित्साकौशलमासीत् ।

बौद्धधर्मस्य सम्पर्केण जापानेन सर्वेषु क्षेत्रेषु समुन्नतिः कृताः । उन्नतेरेको मानदण्डः कलाऽस्ति । युगेऽस्मिन् बुद्धस्य बोधिसत्त्वस्य च शतानि मूर्तयो निर्मिताः । अत्र कलाया विकासस्य धार्मिकभावनायाश्च वृद्धिः स्पष्टतया दृष्टिगोचरीभवति । अतीतेऽध्याये निरूपितमस्ति यद्

---

१. विमलकीर्तिनिर्देशाभिधे ग्रन्थेऽस्य विस्तृतं वर्णनमस्ति । अस्य चीनभाषयाऽनुवादः १८८ तमतः ९०७ तमान्तरालेऽभूत्, संस्कृतं मूलमस्य नोपलभ्यते । प्राध्यापकेन इडूदमीत्या-ख्येनास्याङ्गलभाषानुवादः दी ईस्टर्न बुद्धिस्ट (खं. ३ पृ. १३८९) नामके ग्रन्थे कृतोऽस्ति । अस्य सङ्क्षेपेण परिचयः प्राट. पृ. पू पु. २३२-३ इत्यत्रास्ति ।

२. इंसा, रिली, ई. खं. ७, पृ. ४८२ ।

३. तकाकुसु ह्वाट. जापान ओज टू इंडिया, दी यंग ईस्ट खं. १, पृ. ७४-७५ ।

विभिन्ना बोधिसत्त्वाः करुणाबुद्धिमत्ताप्रभृतिगुणाना विग्रहाः सन्ति । जापानदेशीया इमा अतीन्द्रिया भावना अद्‌भुतसुन्दराकृतीः प्रददुः ।

## नारायुगम् ( ७०९–७९४ )

७०९ तम खीष्टीयाब्दपर्यन्त जापानस्य कापि स्थिरा राजधानी नासीत् । प्रत्येक सम्राट् राजसिहासनारोहणानन्तरं नूतना राजधानीं निर्मापयति स्म । अत्र बहवः सौकर्याभावाः आसन् । शिल्पिना कर्मकराणाञ्चानेकानि कष्टानि भवन्ति स्म । ७१० तमे खीष्टीयाब्दे महाराज्ञ्या जिम्मेईनामधेयया शान्तिधाम ( नारा ) नाम्नी स्थायिनी राजधानी निर्मापिता । ७९४ तम-खीष्टीयाब्दपर्यन्तमिद नगर सम्मान लेभे । अतो जापानेतिहासे इदं युग नारायुगमिति प्रोच्यते ।

नारायुगस्य सर्वे सम्राजो बौद्धधर्मस्य पोषका आसन् । अय प्रायो राजधर्मः सवृत्तः । तस्मिन् समये विचारोऽय प्रबलो जातो यद् राज्यस्य सुखं समृद्धिः शान्तिश्च बुद्धस्य बोधिसत्त्वस्य च कृपामवलम्बन्ते । शोम्मूनामधेयस्य सम्राजः ( ७२४–७५६ ) समये प्रत्येक प्रान्ते एकैक मन्दिरं राजधान्या च केन्द्रीयमन्दिरमासीत् । नृपोऽय स्वबुद्धभक्त्या पूर्वान् सर्वान् सम्राजोऽतिशयितुमियेष ।

**वैरोचनस्य बृहत्तमा कांस्यप्रतिमा**—अनेन नारास्थकेन्द्रीयमन्दिरेऽधिकाधिकधनव्ययेन वैरोचनबुद्धस्यैका ५३½ फीटप्रमाणा समुन्नता कास्यमूर्तिः प्रतिष्ठापिता । अस्या मुख षोडशफीट-मितमायतं तथा ९½ फीटमित विस्तीर्णमासीत् । अक्षि पादोनचतुःफीटमित ( ३′–९″ ) कर्णः ८½ फीटमितोऽस्ति । मूर्तेर्भारः १३५०० 'मन'परिमितोऽस्ति । इद मूर्त्यधिष्ठित भवन जापान-देशीया दाईबुत्सुदुनपदेन ( महती बुद्धस्य शाला ), व्यवहरन्ति, इदं संसारे बृहत्तम दारुमय भवनमस्ति । शोम्मूनामकेन साम्राज इदं निर्माय बौद्धधर्मस्य सरक्षकेषु सम्राट्सु स्वकीय नाम अमरमकारि । तस्य सुन्दरी भार्या कोम्योनामधेयाऽपि पूर्णतया बौद्धमतानुयायिनी आसीत् । राजा राज्ञी उभावपि आत्मान त्रिरत्नसेवक कथयतः स्म । सकृत् तौ बुद्धस्य समक्ष दण्डवद् नम्रावभूताम् । जापानदेशस्य सम्राट् ससारे कस्यापि समक्ष न नम्रो भवति स्म । तयोर्भगवतो बुद्धस्य पुरः साष्टाङ्गप्रणामो जापानेतिहासस्यानुपमा घटनाऽऽसीत् । अयं तयोरगाधश्रद्धायाः परिचायकोऽस्ति ।

राजसभायामस्य धर्मस्य प्रतिष्ठावर्धनस्य स्वाभाविकः परिणामोऽयमभूत् यद् राजनीतौ मठाधीशाना भिक्षूणाञ्च प्रभावोऽवर्द्धत । कोकिननामधेयायाः सम्राज्ञ्याः ( ७४९–७६९ ई० ) समये बौद्धास्तथा प्रबला अभूवन् यद् दोक्योनामको भिक्षुरेव राज्यस्य सर्वसामर्थ्ययुताधिकारी सवृत्तः, तेन सम्राजः पदमपि प्राप्तु प्रयतितम् । यदि राजपक्षपातिनः कियोमासेनामकस्य विरोधो नाभविष्यत्तर्हि स सम्राडभविष्यत् ।

**समन्वयवादिनी प्रवृत्तिः**—एतस्मिन् समये बौद्धधर्मस्यैतावच्छक्तिशालित्वे महत्कारण समन्वयवादिनी प्रवृत्तिरासीत् । तस्मिन् समये ईतयो विपत्तयश्च वर्द्धन्ते स्म । जनपदध्वसिव्याधिर्वर्द्धते

स्म, जनेषु इय भावना प्रबला सजाता यत् प्राचीनाना कमीनामधेयाना देवाना तिरस्कारेण विपत्तय आगच्छन्ति। शिन्तोवादिनः सूर्यस्य परमोपासका आसन्। तैश्चीनदेशस्य कन्फ्यूशियसमतावलम्बिवद् बौद्धधर्मस्य नितरा विरोधो न कृतः, किन्तु बौद्धैरिदमनुभूत यत् तेषा सन्तोषमन्तरा जनाना समर्थन न सम्भवति। अत एव तैः समन्वयवादः स्वीकृतः। इत्थभूतस्य सिद्धान्तस्य प्रतिपादकेषु महात्मा ग्योगी उल्लेखनीयोऽस्ति। यदा शोम्मूनामकेन सम्राजा वैरोचनस्य ( दाईबुत्सु ) मूर्तिनिर्माणस्य संकल्पः कृतस्तदा स इद ज्ञातुमियेष, यदनेन कदाचित् कमीनामधेया जापानदेवा रुष्टास्तु न भविष्यन्ति। ग्योगीनामको महात्मा इसेनामके प्रसिद्धे मन्दिरे सूर्यदेवीमिदं प्रष्टु प्रेषितः। देव्या उत्तरमासीत्—"वैरोचनस्तु अहमेवास्मि"। किञ्चित्कालानन्तर स्वप्ने देवी सम्राज स्ववैरोचन-योरभिन्नत्व बोधितवती। ततो मिश्रितस्य ( रयोब्रो ) शिन्तोवादस्य प्रारम्भोऽभूत्। अत्र सर्वे कमीदेवा बौद्धदेवाना रूपान्तराणि मन्यन्ते स्म ( प्राट० पृ० ४६५–६ )। भारते वैष्णवा बुद्ध विष्णोरवतार मत्वा बौद्धधर्म निजगरुः, जापाने बौद्धधर्मः सूर्यदेवीं वैरोचन कृत्वा शिन्तोधर्म निगलितु प्रारभत। प्रवृत्तिरिय पञ्चाशद्वर्षानन्तरं 'कूकेई' नामकेन नरेण पराकाष्ठा प्रापिता।

नारायुगे बौद्धधर्मस्योत्कर्षेण सह कलानामपि समुन्नतिरभूत् तथा लोकसेवकसस्थानानामपि विकासोऽजायत। अस्मिन् समये कास्यमूर्तीना विलापकल्पनमत्युत्तमं बभूव। पूर्व वैरोचनस्य विशालाया मूर्तेरुल्लेखोऽस्ति। अस्मिन्नेव युगे जापानस्य द्वितीया सर्वेभ्यो गुरुर्महती च घण्टा निर्मिता। प्रथमा द्वादशफीटसमुन्नता नवफीटविस्तृता तथा ७४ टनपरिमिता गुरुर्घण्टा क्योतो-प्रदेशस्य चिओनइनमन्दिरे १६३३ तमे निर्मिता। अस्या औन्नत्यं १३३ फीटमितम्, मूले व्यासो नवफीट-इचद्वयमितः, परिधिः २७ फीटमितः तथा ४८ टनमित गुरुत्वमस्ति। होर-युजीमन्दिरे अजन्तावद् भित्तिचित्राणि निर्मितानि।

## हेइयान–युगम् ( ७९४–११९२ )

**साइचो तथा तेन्दाईशू**—युगमिद जापानीयबौद्धधर्मस्य केषाञ्चिद् महत्त्वपूर्णाना सम्प्रदायाना प्रादुर्भावस्य कृते प्रसिद्धमस्ति। सर्वप्रथम तेन्दाईशूसम्प्रदायस्य स्थापनाऽभूत्। अस्य सस्थापकः साइचो अथवा देग्यो-दाइथीनामक ( ७६७–८२२ ) आसीत्। अय क्योतो-प्रदेशस्य पार्श्वे ही एई स्थाने जन्म लेभे। बाल्यतो धार्मिकप्रवृत्तिसत्त्वेन भिक्षुरभूत्। अध्ययनार्थ शान्तिधाम ( नारा ) गतवान्, किन्तु तत्र शान्तिं न प्राप्तवान्। धर्मस्य बाह्यरूपस्याडम्बरस्य च प्रधानता मठाधीशाना राजनीतौ हस्तक्षेपश्चास्मै नारोचताम्। ततोऽसन्तुष्टो भूत्वाऽय क्योतोप्रदेश प्रति न्यवर्तत। ही-एई-नाम्नि पर्वते कुटीं निर्माय ध्यानमग्नो न्यवात्सीत्। ७८८ तमे खीष्टीयाब्दे तेनात्रैक मन्दिरं स्थापित तत इद तेन्दाईशूसम्प्रदायस्य केन्द्र बभूव। ७९४ तमे खीष्टाब्दे काम्मूनामकभूमिपालद्वारा राजधानीपरिवर्तनेऽस्यैव हस्त आसीत्। नूतनायां राजधान्या प्रथम-मङ्गलप्रार्थनायै सम्राट् एनमेवाग्रहीत्। बौद्धधर्मस्य गभीरं ज्ञान प्राप्तुमय चीनमगच्छत् ( ८०२ ई० )। तियेनताई ( चेकियाग ) स्थाने बौद्धग्रन्थाना गहनाध्ययनानन्तरमय स्वदेशं प्रत्याजगाम, तेन्दाई-शूसम्प्रदायस्य जन्मदाताऽजायत।

अस्य सम्प्रदायस्य शिक्षाया मूलाधारः सद्धर्मपुण्डरीकाख्योऽस्ति। अस्य त्रय उल्लेखनीयाः सिद्धान्ता आसन्। (१) बौद्धधर्मस्य सर्वे सम्प्रदाया एकस्यैव सत्यस्य प्रकटीकरणाय विविधा उपायाः सन्ति। (२) बौद्धधर्मस्य मूलसिद्धान्तः सद्धर्मपुण्डरीकाख्ये ग्रन्थे विद्यते। अस्य महतीयं शिक्षाऽस्ति यत् सर्वेषु बुद्धत्वमस्ति। नारास्थहोस्सो (धर्मलक्षण) भिक्षव इदममन्यन्त यत् सर्वेषा बुद्धत्वेऽधिकारो नास्ति। साइचोनामकस्य कथनमासीद् यत् सर्वेषु बोधिसत्त्वो बोसित्सु इति वा भवितु क्षमताऽस्ति। (३) भिक्षूणा प्रधान कार्य प्राणिसेवाऽस्ति। इद स्पष्टमस्ति यदस्य शिक्षाः काममुदारा आसन्। प्रथमाया शिक्षाया सर्वेषा सम्प्रदायाना समावेशो भवति। अत एव आगामिकाले जापाने सर्वे सम्प्रदाया अस्मात् प्रादुरभूवन्। द्वितीयया तृतीयया च शिक्षया जनेषु अस्य प्रतिष्ठाऽवर्द्धत, अनेन राजनीतौ धर्मे च गभीरः प्रभावः स्थापितः।

**शिङ्गोन-सू (सद्वचनसम्प्रदायः)**—सम्प्रदायस्यास्य मूलस्य स्थापना नारायुगेऽजायत। परमस्मिन् युगेऽनेन विशिष्टशक्तिर्महत्ता चासादिता। अस्य शक्तिशालित्वस्य गौरवस्य वाश्रेयः कूकाई (७७४–८३५) नामधेयेन महात्मना प्राप्यत। सकलमहात्मवदस्य प्रारम्भिकजीवनविषयेऽनेकाः चमत्कारपूर्णा. जनश्रुतयः प्रसिद्धयन्ति। अत्र सन्देहो नास्ति यत् स जापानस्यैको महान् पुरुष आसीत्। प्रथम तेन कन्फ्यूशियसमतस्य शिक्षा प्राप्ता, स सन्तोष न प्राप्नोत्। 'ताओ' धर्मस्याध्ययनं कृतम्, तत्रापि तस्य शान्तिर्नाभूत्। सत्यान्वेषणायाय पर्वतेषु अरण्येषु च भ्रमितुमारेभे। कदाचित् समाधौ कस्यचन बौद्धमहात्मनो दर्शनेन बौद्धोऽभूत्। विंशतिवर्षदेशीयेनानेन स्वप्रधानो दर्शनग्रन्थो निर्मितः। अस्मिन् कन्फ्यूशियसपथानुयायिनां शिन्तोवादिना बौद्धानाञ्च वादप्रतिवादौ विद्येते। महायानसदृशसार्वभौमसत्यसिद्धान्तमाश्रित्य प्रतिष्ठितो धर्म एव प्रामाणिको विश्वासयोग्यश्च भवितु शक्नोतीत्यस्य वादविवादयोर्निष्कर्षः परिणामो वा विद्यते।

साइचोनामधेयवद् बौद्धधर्ममध्येतु कोबो चीन गतः, तत्र ७२० तमे खीष्टीयाब्दे भारतादागतस्य चेनयेन (सद्वचन) सम्प्रदायस्य गभीरानुशीलन कृतवान्। कथ्यते यद् यदाऽयमस्य सम्प्रदायस्य गुरो'हुईकुओनामकस्य चरणौ उपगतवान् तदा स त दृष्ट्वैव प्रोक्तवान् यदहं चिरकालतस्त्वा प्रत्यैक्षिषि। चतुर्मासान् त शिक्षयित्वोपसम्पदा च तस्मै दत्त्वा सद्वचनसम्प्रदायस्य प्रचाराय जापाने त प्रेषयामास। जापानस्य द्वीपेषु विशेषत उत्तरवर्तिनीष्वारण्यकजातिप्रधानद्वीपेष्वनेन महतोत्साहेन प्रचारः कृतः। स्वशिक्षा स्थायिनीं कर्तुं च तेन ओसाकास्थानाद् विंशतिक्रोशान् दक्षिणेऽस्मिन् कोयासानाख्यस्य सुरम्य पर्वतशिखर (औन्नत्यम् १२८५८ फीट) समुचितममानि। इद नाराप्रदेशात्, क्योतोप्रदेशाच्च बहुदूर विजनः शान्तश्च प्रदेश आसीत्। ८१६ तमे खीष्टीयाब्देऽत्रास्य सम्प्रदायस्य प्रथमस्य मन्दिरस्य स्थापना बभूव। तदनन्तरमिद मन्दिरं शिङ्गोन-सम्प्रदायस्य प्रधान केन्द्रमजायत। अत्रत्येऽत्र द्वादशक्रोशेषु अस्य पवित्राणि स्थानानि प्रसृतानि। यद्यपि इमानि बहुवारमग्निना दग्धानि, किन्तु अनेकप्राचीनावशेषस्मारकसहितानि त्रिंशन्मन्दिराणि इदानीमप्यवशिष्टानि।

कोबोनामकस्य पुरुषस्य प्रभावस्य सीमा धर्म एव नासीत्। तस्य प्रतिभा प्रवृत्तयश्च सर्वतोमुख्य आसन् स स्वयमेक उत्कृष्टः शिल्पी आसीत्, स जापाने बुद्धाना बोधिसत्त्वानाञ्च मूर्तीना वर्तमान-

परम्परागतरूपाणां प्रणेतोच्यते। स सामुद्रिकशास्त्रस्य व्याकरणस्य भाषाशास्त्रस्य च प्रकाण्डः पण्डित आसीत्। अनेन शब्दखण्डानां ध्वन्यमुकूलसङ्केतैर्लेखनाय हिरगननामिका एका पद्धतिराविष्कृता। अनेन जापानलिपिः चीनलिप्यपेक्षया लेखने अधिका सरला सञ्जाता, स कवयति स्मापि, केवलं तस्य साहित्यिकप्रवृत्तौ एव रुचिरासीदिति न, तेन राजमार्गस्य सेतोश्च निर्माण-कलायामप्यवधानं दत्तम्, कौशेयकीटानां पालनं प्रोत्साहितम्। साधारणजनानां शिक्षार्थं प्रथमा पाठशाला 'कोत्रो' इत्यनेनैवोद्घाटिता। अमीषां सर्वेषां क्रियात्मककार्याणां विषयेऽवधानानन्तरं स्वजीवनसन्ध्यायां समाधये कोयापर्वतस्यैकान्ते मन्दिरे गतः, ८३५ तमे खीष्टीयाब्दे परलोक-मलञ्चकार।

**कोबोनामकस्य महात्मनः सिद्धान्तः**—कोबोमहात्मनः सर्वतोमुखी प्रतिभा, सर्वक्षेत्रेषु तस्योपयुक्तानि कार्याणि निरन्तरं परिश्रमश्च साधारणजनेषु राजसभासु च तस्य महत्त्वं वर्धयामासुः। किञ्चित्कालानन्तरं कोयानामकविहारोऽधिकतमः शक्तिशाल्यभूत्।

**कोबोमहात्मनो मुख्याः सिद्धान्ता निम्नलिखिता आसन्**—(१) धार्मिक जीवनस्य विस्तारो दशसु अवस्थासु भवति। तासु सर्वोत्तमा शिगोनाभिधेयाऽस्ति। बुद्धतत्त्वेन विश्वस्य सर्वं वस्तु व्याप्तमस्ति। निखिलमपि जगद् बुद्धस्य बाह्यं रूपमस्ति। सिद्धान्तेनानेन जापाने उपरि लिखिता तथा ग्योगीनामधेयेन प्रवर्तिता समन्वयवादिनी प्रवृत्तिरधिका बलशालिनी जाता। शिंगोनसम्प्रदायानुयायिनो रयोबो (बौद्धमतवादिशिन्तो) नामधेयसम्प्रदाय-स्यापि प्रचारका आसन्। अस्य कथनमासीद् यत् 'कमी' पूजा बौद्धोपासनाया एकं प्रच्छन्नं रूपमस्ति। शिन्तोवादिनः प्रकृते प्रत्येकं वस्तुनि 'कमी' इत्याख्यं देवं पश्यन्ति स्म। बौद्धाः सर्वेषु बुद्धं वर्तमानं मन्यन्ते स्म। अतः कमीबुद्धयोर्मेलनं कठिनं नासीत्। रयोबूसम्प्रदायेऽनयो-र्मेलनेन बौद्धधर्मस्य प्रसारे महत् साहाय्यं प्राप्तम्।

कोबोमहात्मा शिंगोनसम्प्रदायश्च जापानस्य भारतेन सह सम्पर्कं वर्द्धयितुं प्रायतेताम्। कोबोमहात्मना जापाने संस्कृतस्याध्ययनं प्रोत्साहितम्। अयं स्वशिष्यान् बौद्धधर्मस्य मूलस्रोतो भारतपर्यन्तं नेतुमियेष। ८१८ तमे खीष्टीयाब्दे भारतस्य यात्री प्रथमो जापानदेशीयः कोगो-समईनामकः कोत्रो इत्यस्य शिष्य आसीत्। द्वितीयो यात्री राजकुमारः तका-ओकाः शिगोन-सम्प्रदायस्य भिक्षुरासीत्, किन्तु दुर्भाग्यवशात् 'मलाया' इति स्थाने कुत्रचिद् मार्गे एव तस्याऽवसानं जातम्।

## कामाकुरायुगं मुरोमाचीयुगश्च (११९२–१५७३)

**(क) राजनीतिकपरिस्थितिः**—११९२ तमे खीष्टीयाब्दे तैराकुलस्य शक्तिं विनाश्य मिनो-मोतोवंशस्य योरितोमोनामधेयेन पुरुषेण कामाकुरा स्वीया राजधानी संपादिता, सर्वमपि च शासनं स्वायत्तीकृतम्। तदानीं सम्राट् शक्तिसम्पन्नानां नायकानां काष्ठपुत्तलिकाऽऽसीत्। वास्तविकं शासनं शोगुनोपाधिधारिणां शक्तिशालिनां सामन्तानां हस्ते आसीत्। शोगुन इति पदस्य प्रधानसेनापति-रित्यर्थोऽस्ति। उपाधिरयं सम्राजा प्रादीयत। ११९२ तमे खीष्टीयाब्दे योरितोमो इति प्रधानसेना-

पति ( शोगुन ) रभूत् । अनेन राज्य शासनञ्च नूतनपद्धत्या व्यवस्थापिते, जापान योद्धृराष्ट्र-निर्माणस्यास्यैव गौरवमस्तीत्युच्यते । तस्मिन् समये सम्राट् क्योतोस्थाने निवसति स्म । शोगुनश्च कामाकुरास्थाने, क्योतोराजधानी सत्यपि जापानस्य धार्मिककेन्द्रमेवासीत्, शासनस्य सर्वा व्यवस्था कामाकुरस्थानादेवाभवत् । ११९९ तमे खीष्टीयाब्दे योरितोमो इत्यस्य मृत्योरनन्तर तस्य वयस्क. मूनुर्योरी-होजो तोकिमासानामधेयस्य संरक्षणे राजसिंहासनमलङ्कृतवान् । सर्वा-शक्तिर्होजोपरिवारस्य हस्तमागता । यद्यपि इमे आत्मान संरक्षकमथवा राजप्रसादस्य प्रहरिणं ( शिक्किन ) कथयन्ति स्म, किन्तु सर्वोऽप्यधिकारोऽमीषा हस्ते आसीत् । चतुर्दशस्य शतकस्य पूर्वार्द्ध ( १३३३ ई० ) यावद् होजोवशस्य प्रभुताऽभूत्, यद्यपि मध्ये जोदैगोनामधेयेन सम्राजा (१३१९–१३४८) कतिपय कालं सामन्तप्रभावादात्मान मोचयितु निष्फलः प्रयत्नोऽकारि । होजो-वंशकाले एव विश्वविजयिनो मङ्गोला जापान जेतुमैच्छन्, द्विराक्रमण कृतवन्त' ( १२७४ ई० १२८१ ई० ), किन्तु वारद्वयमपि ते काम पराभूताः । होजोवंशानन्तरं १३३५ तमखीष्टीया-ब्दाद् अशिकागावंशः प्रबलोऽभूत्, तथा १५७३ तमखीष्टीयाब्दपर्यन्तमस्य प्रभुताऽभूत्, किन्तु अतीतयुगवद् अस्मिन् समग्रेऽपि युगे गृहयुद्धदावानलः प्राज्वलत् । हत्यायाः, लुण्ठनस्य, अव्यवस्थाया अराजकतायाश्च साम्राज्यमासीत् ।

**(ख) धार्मिकदशा**—पर बौद्धधर्मः स्वोन्नतेश्चरम शिखर प्राप्नोत् । अस्य कारणमिदमासीत्, यद् युद्धेषु साफल्य प्राप्ताः सामन्ताः स्वसाफल्यस्य गौरव बौद्धधर्ममारोपयन्ति स्म । योरितोमो-नामधेयस्य विश्वास आसीद् यत् तैरावशस्य पराभवे तेन दैवीशक्तिरासादिता । स्वकृतज्ञता प्रदर्शयितु तेन अमिताभस्य महामूर्तेर्निर्माणस्यायोजन कृतम् । इय विश्वस्य भव्यतमासु मूर्तिष्वेकास्ति, तथा कास्यप्रतिमासु संसारे द्वितीया महती मूर्तिरस्ति । विश्वस्य सर्वतो महती पूर्व वर्णिता नाराप्रदेशस्था मूर्तिरस्ति । जापानवासिनस्ता महाबुद्ध ( दाईबुत्सु ) कथयन्ति । इय ध्यानमुद्राया ( करतल-मुद्ध्वाभिमुखम्, हस्तावङ्के परस्परमधिरूढौ भवतः ) उपविष्टा विद्यते । आधारसहितायास्तस्या उपविष्टाया मूर्तेरौन्नत्यं ४२½ फीटमितमस्ति । आधारेऽस्याः परिधिः ९७ फीटमितोऽस्ति । मुखस्य विस्तारः ७ फीट ८ इञ्चमितोऽस्ति, तथा अक्ष्णोः परिणाहः ३ फीट ५ इञ्चमितोऽस्ति । मूर्तेर्भारः ९२ 'टन'मितोऽस्ति । अस्या मुखमण्डले समाधेः सुखस्य शान्तेश्च महती सौम्या छटा विद्यते ।

मिनोमोतोवशेन ध्यानवादी बौद्धधर्मोऽतीव प्रोत्साहितः । त्रयोदशस्य शतकस्योत्तरार्द्धे मङ्गोलाना पराभवस्यापि प्रधान कारण बौद्धधर्मोऽमानि । अत्र कश्चन सन्देहो नास्ति यद् जापानवीराणा बलैखानामकस्य दुर्जयसेनाभियोद्धुमुत्साहदाता जेनवादी बौद्धधर्म एवासीत् । बौद्धधर्मप्रभावाद् भारतदेशो नपुसकोऽजायतेत्यारोपकर्तृभिरिदमुदाहरण सदैव स्मर्तव्यम् । तदानीं राजसत्ता बौद्धधर्मायात्यधिक सरक्षणमदात् । अतो बौद्धधर्मो महान् शक्तिशाली सवृत्तः ।

**निचिरनसम्प्रदायः**—कामाकुरायुगे निचिरेननामधेयेनैकेन महात्मना एको नूतनः सम्प्रदायः स्थापितः । अय तदानीन्तनधार्मिकपरिस्थितेरसन्तोपस्य परिणाम आसीत् । अय विशेषतः सद्धर्मपुण्डरीकस्य जप बुद्धस्य च मूलशिक्षा अवालम्बत । जापानस्य सत्सु सर्वाधिका यन्त्रणा निचिरेनेनैव सोढाः । स तदा प्रसिद्धाना जोडो-जेनसम्प्रदायाना महाविरोध्यासीत् । अमीषा

सम्प्रदायाना पार्श्वे स्वीया सेनाऽऽसीत् । तैः पशुबलेन भीषणैरत्याचारैश्च निचिरेन दमयितुमैच्छन्, किन्तु स तानि सर्वाणि कष्टानि सहमानः स्वसिद्धान्ते स्थिरोऽभूत् । अस्मिन् धर्मप्रवर्तकानामुत्साहः परिसस्कारकाणा साहसञ्चासीत् ।

निचिरेनस्य यन्त्रणास्तथा तस्य दृढः संकल्पः—स्वसिद्धान्तप्रचारायाय कामाकुरा गतवान् । अनेनामिताभस्य पूजायाः समर्थकाना मन्येषा सम्प्रदायाना तीक्ष्णा आलोचना कृता । अस्याय परिणामो जातो यदन्ये भिक्षवोऽमु हन्तु सन्नद्धा अभूवन् । यदाऽनेन स्वकीये एकस्मिन् पुस्तके होनेननामधेयस्य विचारो नरकस्य द्वारमस्तीति प्रतिपादित तदा केचन भिक्षवः रात्रौ अस्य कुटीर दग्धवन्तः । अयं महता काठिन्येन प्राणान् रक्षितवान् । तत्पश्चाद् विरोधिनोऽमु कारागारं प्रवेशितवन्तः । किन्त्वनेनापि अस्योत्साहे न्यूनता न समायाता । अस्य वधायानेके यत्ना अभूवन् । किन्त्वयं स्वीय मत त्यक्तु नापारयत् । अस्य कथनमासीद् यत् "यथाभिलाष स्वर्गीयदेवा मत्तः करुणामय हस्तमुत्थापयेयुः, भीषणतमापत्तिर्मयि पतेन्नाम, तथाप्यह स्वीय जीवन सत्याय बलिं कर्तु पश्चान्न भविष्यामि, सुख भवतु दुःख वा···पुण्डरीकावमाननं मत्कृते नरकपातोऽस्ति । अह स्वविचारे दृढो भविष्यामि, सर्वान् प्रत्यादेशान् सर्वाणि प्रलोभनानि च न गणयिष्यामि । भवतु कश्चन मा वदेद् यद् यदि त्व सद्धर्मपुण्डरीके आस्था त्यज, अमिताभबौद्धधर्मे विश्वासं कुरु तदा तुभ्य जापानस्य सिंहासन दास्यामि, परमह तादृशा प्रलोभनाना मृत्युपर्यन्तं प्रतिरोध करिष्यामि । मत्पुरः प्रत्येकमापत्तिर्धूलिर्भविष्यति । अह जापानस्य स्तम्भो भविष्यामि । मदीया प्रतिज्ञा सदा स्थिरा भविष्यति ।" निचिरेनमहोदयस्तथा तस्यानुयायिनः स्वसिद्धान्तेषु स्थिरा अभूवन् । १२८२ तमे खीष्टीयाब्दे निचिरेने निर्वाण प्राप्ते सति भीषणे दमनेऽपि अस्य सम्प्रदायस्य प्रचारोऽन्ववर्तत । निशिननाम्नो जनस्य शिरसि विरोधिनो ज्वलल्लोहघटाह स्थापितवन्तः, शिरसि शोथो जातः, किन्तु निशिनेन 'उफ' इत्यपि नोक्तम् । भीषणतमोऽप्याचारोऽमु सम्प्रदाय दमयितु न प्राभवत् । अद्यावधि अस्य जापाने महान् प्रचारोऽस्ति ।

**सांस्कृतिकं जीवनम्**—अतीतयुगवदधुनापि जापानदेशीयकला मूलप्रेरणा बौद्धधर्मादेवाससाद । कस्यचिज्जापानदेशीयविदुष इयमुक्तिर्विद्यते यत् चित्रकलायाः, कवितारचनायाः, गृहनिर्माणस्य, प्रकोष्ठालङ्करणस्य, पुष्पविन्यासस्य, वाटिकानिर्माणस्य, चायाख्यवस्तुनिर्माणस्य च कलाना प्रत्येक क्षेत्रेषु जेनसम्प्रदायस्य प्रभावोऽभूत् । वस्तुतः जापाने सम्भवतो विचारस्य कार्यस्य वा किमपि क्षेत्रं नासीद् यद् जेनसम्प्रदाय(ध्यानसम्प्रदाय)वद्भिर्न स्पृष्टम्, तथा तत् सरलसौन्दर्यादर्शनानुप्राणितं न कृतम् । प्रत्येक वस्तु यद् विशेषरूपेण जापानीयमुच्यते, व्यजन-कौशेय-चित्र-सुलेख-जापानीयमन्दहास-मुद्राकाठिन्यप्रभृतीनि वस्तूनि प्रत्यक्षतः परोक्षतो वा जेनसम्प्रदायादुत्पन्नानि ( प्रा–८९१ ) ।

## नोबुनागायुगं तोकुगावायुगश्च ( १५७३–१६१६ )

**( क ) राजनीतिकस्थितिः**—षोडशे शतके जापाने गृहयुद्धैः सर्वतो महती अराजकता संजाता । आशिकागाकुलं दुर्बलमजायत । अस्या अराजकताया दूरीकरणस्य श्रेयो नोबुनागा इत्यस्यास्ति तेन १५७३ तमे खीष्टीयाब्दे अशिकागावशात् शासन गृहीतम् । जापानदेशस्तदा निरन्तर

क्रमेण नोबुनागा ( १५३४–१५८२ ) हिदेयोशी ( १५३६–१५९२ ) ईयेयसु ( १५४२–१६१६ ) नाम्ना नरपुङ्गवाना नेतृत्वमलभत । अनेन जापाने एकतायाः शान्तेश्च स्थापना जाता । १८६७ तमखीष्टीयाब्दपर्यन्तमस्य वशस्य प्रमुत्वमासीत् ।

**धार्मिकदशा**—धार्मिकदृष्ट्या युगेऽस्मिन् घटनात्रयमभूत् । ( १ ) बौद्धधर्मस्य दमन सरक्षण वा, ( २ ) शिन्तोधर्मस्य पुनरुत्थानम्, ( ३ ) ईसाईमतस्य प्रवेश' । सुप्रसिद्धमेवेद यत् तदानीं बौद्धमन्दिराणि सैनिकशिविराणि दुर्गाणि च सजातानि । भिक्षूणा शक्तिः प्रबला जाता, इयं च राज्यस्य कृते भयङ्करस्य भयस्य भीषणशङ्कानाञ्च हेतुरभूत् । मठाधीशाना समीपे अनन्ता सम्पत्ति-रासीत् । क्वान्तो-कागा एकिगोप्रभृतिस्थानेषु ते विशालाना प्रदेशाना शासका अभ्यासन् । तदानीन्तनाना भूमिपालाना मठाधीशानाञ्च कश्चन भेदो नासीत् । सामन्तवदिमे राजनीतौ हस्तक्षेप चक्रुः । केन्योनामकेन मठाधीशेन तु सम्राज पद प्राप्तु प्रयतितम् । नोबुनागा इत्यनेन शान्तिं स्थापयितु पूर्वं सामन्ताना दमनमावश्यकममानि, किन्तु शीघ्रमेव तेन ज्ञात यन्मठाधीशाना दमनमन्तरा अराजकताया अन्तो भवितुं नार्हति । १५७४ तमे खीष्टीयाब्दे क्योतोप्रदेशस्य समीपे हिएईसाननामकस्य स्थानस्य तेन्दाईमठो राज्यस्य कृते तथा भयानको जातो यद् नोबुनागा इत्यनेन सेनामादाय अभियातोऽयम् । त्रीणि सहस्राणि मठा विहाराश्च दग्धाः ( प्राट–पृ० ४९१ ) । ये भिक्षवोऽग्निज्वालातो रक्षितास्तेऽसिना हताः । तस्योत्तराधिकारिभिरपि बौद्धभिक्षून् प्रति दुर्व्यवहारो विहितः । अनेन बौद्धधर्मस्य राजनीतिकप्रभावः सेनाप्रभावश्च पूर्णतया क्षीणता प्रापतु' ।

**तोकुगावावंशद्वारा बौद्धधर्मस्य संरक्षणम्**—तोकुगावावशस्य ( १६०३–१८६७ ) शोगुननामकेनाधिकारिणा बौद्धधर्मं प्रति सरक्षणस्य नीतिं धारयतापीदं पूर्णतया ध्यात यत् स राजनीतेः सेनायाश्च शक्ते रूप धर्तु न शक्नुयात् । यदीद कथ्येत यत्तेन सरक्षणाहिफेनेन स पङ्गुर्निश्चेष्टश्च कृतस्तदाऽत्र नास्ति काचनाप्ययुक्तिः । ते मन्दिरेष्वतीवोपहार समर्पयन्ति स्म, पुरोहितान् प्रसादयन्ति स्म । राजकीयदानैः सङ्घस्तथा समृद्धोऽभूत् , यत्तस्य जनतायाः साहाय्यस्य आवश्यकतैव नासीत् । अनया समृद्ध्या बौद्धधर्मस्य पतन स्वाभाविकमासीत् , किन्तु पुनरपि इद स्वीकरणीय यत् तोकुगावा शोगुनैर्बाह्यरूपेण जापानस्य बौद्धत्वाय पूर्णतया प्रयतितम् । प्राय. सर्वे तोकुगावावश्याः शोगुनावश्याश्च बौद्धधर्मस्य भक्ता आसन् । प्रथमः शोगुनः ईयेयिसु-नामको जोडोसम्प्रदायस्य भक्त आसीत् । द्वितीय ईयेमिसुनामको बौद्धधर्मस्य प्रबलः समर्थक आसीत् । पञ्चमस्य शोगुनस्य त्सुनायोशीनामकस्य भक्तिस्तु धर्मान्धतासीमा प्राप्तवती । १६१४ तम-खीष्टीयाब्दस्यैकस्या राजाज्ञाया अनुसारेण प्रत्येक जापानवासिनः कृते बौद्धत्व शिन्तोत्व वाऽऽवश्यक-मभूत् , प्रत्येक दुर्गरक्षकप्रमुखस्य ( देमियो ) कृते कस्यापि बौद्धधर्मस्य सदस्यत्वमावश्यकमासीत् । ते सम्राजो बौद्धधर्मग्रन्थाना प्रकाशनेऽपि महत्साहाय्यमददुः ।

## मेईजीयुगम् ( १८६७–१९४५ )

१६३७ तमखीष्टीयाब्दस्य पश्चात् २१७ वर्षपर्यन्तं जापानवासिनः पश्चिमदेशस्य सर्वां ईसाईशक्तिर्विवादस्य मूलमिति मन्यमानास्तस्याः कृते स्वदेशस्य द्वार पिहितवन्तः । १८५४ तमे खीष्टीयाब्दे अमेरिकास्थेन समुद्राधिकारिणा कोमोडोरपेरीनामधेयेन सर्वप्रथमं द्वारमिदं समुद्-

घाटित व्यापाराय । तदानीं तोकुगावावंशः पतनोन्मुख आसीत् । तस्मिन् पाश्चात्त्याना नूतनाना प्रवृत्तीना संकटानाञ्च निरासाय शक्तिर्नासीत् । अस्य प्रतिस्पर्द्धिनौ सतमूमा-चोशूनामानौ द्वौ वंशौ एकत्रीभूयास्य विरोध कृतवन्तौ । क्रान्तेः सफलीकरणाय कस्यचिन्नेतुरावश्यकता आसीत् । तैरेतदर्थं बहुशतीत उपेक्षितः सम्राड् विचितः । जापानस्य लुप्तं प्राचीन वैभव पुनरुज्जीवयितु-मेका क्रान्तिर्जाता । १८६७ तमे 'मेईजी' इति नामकः सम्राड् राजसिंहासनमारोपितः । यो जापान-देश अद्यावधि पश्चिमात् पृथग् वर्तितुमियेष, तेन पश्चिमज्ञानविज्ञानयोर्महता वेगेनाध्य-यन कृतम्, दशवर्षान्तराल एव देशस्य स्वरूपे परिवर्तनमजायत । मेईजी इत्यस्य राजसिंहासनो-पवेशनात् पूर्वं जापानो मध्ययुगस्य देश आसीत्, १८७७ तमपर्यन्तं तदाधुनिक राष्ट्रमभूत् । श्रीवेल्जमहोदयस्येयमुक्तिः सर्वथा सत्यास्ति यत् सकलस्य विश्वस्येतिहासे केनचनान्येन राष्ट्रेण तावत्यल्पे समये तावती उन्नतिर्न विहिता । यत् कार्य योरोपीयदेशैरनेकासु शताब्दीषु कृत तत् जापानेन स्वल्पदशाब्दीष्वेव कृतम् ।

जापानस्य पुनरुत्थान प्रारम्भे बौद्धधर्मस्य कृते घातकमसिध्यत । १८६७ तमस्य क्रान्तिः लुप्तस्य गौरवस्य पुनरुद्धार समर्थयते स्म । अतोऽनया जापानस्य प्राचीनः शिन्तोधर्मो राजधर्मोऽकारि ।

रयोगी (८२२) कूकेई (८३५) इत्यनयोः समये बौद्धशिन्तोधर्मयोः परस्पर मिश्रणं बभूव । इदानीं तौ पृथक्भूतौ । बौद्धधर्माय राज्यमर्द्धचन्द्र दातु प्रारभत । रयोबौ-शिन्तोमन्दिरेभ्यो राजप्रासादेभ्यश्च बौद्धचिह्नानि विचित्य विचित्यापाकृतानि । मन्दिराणि शिन्तो-पुरोहितेभ्यः समर्पितानि । बौद्धमूर्तयो बौद्धमन्दिराणि च त्रोटितानि, समीचीन जीवनं यापयितुं भिक्षवो नियमिताः । तेषा भिक्षायाचनमपि प्रतिबद्धम् । १८७५ तमखीष्टीयाब्दपर्यन्त बौद्धधर्म प्रति उग्रस्य विरोधस्य नीतिः प्रचलिता । तदनन्तरं शिथिलताऽत्रागन्तु प्रारभत । अन्ते १८८४ तमे खीष्टीयाब्दे धार्मिकस्वातन्त्र्यनीतिरङ्गीकृता, बौद्धधर्मः सर्वेभ्य प्रतिबन्धेभ्य उन्मोचितः । बौद्धधर्मस्य प्रचारो वर्द्धितुमारेभे । सम्प्रति बौद्धमन्दिराणा सख्या ७१ सहस्रेभ्योऽप्यधिकाऽस्ति । अत्र चतुष्पञ्चाशत् सहस्राणि पुरोहिताः सन्ति ।

१९४५ तमखीष्टीयाब्दस्यागस्तमासे हिरोशिमा इत्यत्र आणवास्त्रपतनेन सह मेईजी-युगस्य समाप्तिरजायत । सूर्यदेवस्य वंश्यः सम्राट् हिरोहितोनामधेयः शिन्तोदेवश्च जापान रक्षितु न पारितवन्तौ ।

जापानेऽसाफल्यस्य गभीराया निराशाया लहरिः प्रसृता । मध्ययुगे एतादृशे समये बौद्धधर्मेण जापानाय शान्तिः प्रदत्ता, तथाद्यापि स तस्य द्वितीयविश्वयुद्धजनितस्य व्रणस्यौषधं जातम् ।

## बौद्धधर्मस्य वर्तमानाऽवस्था

जापाने बौद्धधर्मस्य या देव्यो देवाश्च पूज्यन्ते, ते प्रायः चीनदेवैः संवदन्ति । केवलं नाम्ना ते भिन्दन्ति । बुद्ध जापानीया बुत्सु कथयन्ति, तथा बोधिसत्त्व बुसत्सुम् । शाक्यमुनि-(शकमुनि या शक), अमिताभ-(अमिद), भैषजगुरु-(पकुशी), वैरोचन-(दाइनिचि)

नामकाश्चत्वारो बुद्धाः, अवलोकितेश्वर-( क्वान्तोन ) क्षितिगर्भ-( जीजो ) मञ्जुश्री ( मोञ्जु )-समन्तभद्र ( फूजन ) मैत्रेय- (मिरोकु ) महास्थानप्राप्त- (ग्रेई-शी, दाई-सेई-शी ) नामकाः षड् बोधिसत्त्वाः पूज्यन्ते । एषु सर्वतोऽधिक महत्त्वममिताभस्यास्ति, ततश्च शाक्यमुनेः ।

**बोधिसत्त्वाः**—एषु दयादेवता अवलोकितेश्वरोऽथवा क्वान्तोनाख्यश्चीनदेशवद् जापानेऽतीव लोकप्रियोऽस्ति । प्रायस्तस्य हस्ते कमल भवति । वहुवार स एकादशशिरस्क अश्वशिराश्चत्वारिंशद्धस्तो वा निर्मीयते । महास्थानप्राप्तनामको ( सेई-शी ) जापाने बुद्धिदेवतास्ति । क्वान्तोनेन साक आयोऽमिताभेन साकं वा निवासेन, अनेन जापाने चीनापेक्षयाऽधिका लोकप्रियता प्राप्ता । क्षितिगर्भस्य अथवा जीजो इत्यस्य देवस्य महत्त्वमप्यत्र चीनादधिकमस्ति । अय नरकाद् न केवलमुद्धरति, किन्तु सन्तानदानरोगविपत्तिनिवारणसुखप्रसूतिप्रभृतिकार्येषु साहाय्य करोति । किन्त्वस्याधिका पूजा बालाना संरक्षकदेवतारूपेण भवति । येषा सन्ततिर्न जीवति ते स्वमृतशिशूना क्रीडनकान्यस्मै देवायोपायनानि कुर्वन्ति । जापानवासिना विश्वासोऽस्ति यद् मृत्योरनन्तरं बालानामात्मानः परलोके एकस्य समुद्रस्य तटे लोष्ठाना राशिमेकत्र कुर्वन्ति, तदैव राक्षसाः सहसैव तानाक्राम्यन्ति । बालका भयादाक्रोश कर्तुमारभन्ते । तेषामाक्रोश श्रुत्वा क्षितिगर्भः स्व दण्ड गृहीत्वा तत्र प्रादुर्भवति, राक्षसाः पलायन्ते, बालकास्तेन तद्दण्डेन च संलग्ना भवन्ति । मूर्तिषु चित्रेषु च क्षितिगर्भस्य दण्डस्योपरिभागे एकस्य धातुनिर्मितगोलस्य षड्भागाः षट्पारमिताना ( बुद्धत्वप्राप्तेरावश्यकाना षण्णा गुणाना दान-शील-क्षान्ति-वीर्य-ध्यान-प्रज्ञानाम् ) सूचका भवन्ति ।

महायानवादिनामक्षोभ्यनामकस्य ध्यानिनो बुद्धस्य शिंगोनसम्प्रदायावादिनोऽशकुनाम्ना पूजा कुर्वन्ति । अयमेव सम्प्रदाय आकाशगर्भस्य बोधिसत्त्वस्यापि बुसत्सुकोकुजोनाम्ना उपासना करोति । अय बुद्धेर्देवोऽस्ति । अचलनामकस्य भारतीयदेवस्य रूपान्तर फूडोनामकं देवं जापानवासिनो विशेषतः पूजयन्ति ।

अस्य मूर्तिरतीव भयावहा भवति । अस्यैकस्मिन् हस्ते पापिना बन्धनाय पाशस्तथा द्वितीयस्मिन् वधायासिर्भवति । चीनवद् अर्हताम् ( राकनाना ) उपासनाऽप्यत्र प्रचलति । अत्रमीषा संख्याः पञ्चदश सन्ति । सर्वाधिको लोकप्रियो राकनो बिनजुरुदेवोऽस्ति । अस्य सम्बन्धः स्वास्थ्येन कथ्यते । गेटीनाम्न्या कुमार्या भैषजगुरोर्बुद्धस्येद लोकप्रिय रूपान्तर कथितम् ।

**पौराणिकी देवता**—बौद्धधर्मेण सह चीनवज्जापाने काश्चन पौराणिक्यो देवता अपि समागच्छन् । अमीषा देवाना स्थानानि राकनदेवापेक्षया निम्नानि मन्यन्ते । देवेष्वेषु नीओः, अथवा द्वौ देवौ इन्द्रो ब्रह्मा च मुख्यौ स्तः । इमौ मन्दिराणा द्वारि स्थाप्येते । तकाकुआनामधेयोऽध्यापक इमौ नारायणस्य द्वे रूपे मन्यते । चतुर्षु दिक्पालेषु ( शीतेन्नो ) बिशेमौनस्य महती प्रतिष्ठा भवति । अय पौराणिको वैश्रवणोऽस्ति । अयं सप्तस्वष्टसु वा समृद्धिदातृषु देवेष्वन्यतमो मन्यते । भारतवच्चीनवासिनोऽमु धनदेव मन्यन्ते । अन्येषु सौभाग्यदातृषु देवेष्वपि त्रयो भारतीयाः सन्ति । एषु दाईकोकू इति शिवस्य तथा वेनजाई इति सरस्वत्या रूप मन्यते । किचिजो इति भारतीयलक्ष्म्या जापानीयसस्करणमस्ति । नरकस्याधिष्ठाता एम्मा-

ओ इति भारतीयो यमोऽस्ति । अन्येभ्यः पौराणिकदेवेभ्यः प्रादुर्भूताना जापानदेवाना नामानि निम्नलिखितानि सन्ति—

| भारतीयदेवता: | जापानदेशीयनामानि |
|---|---|
| अग्निः | उच्छुशमा |
| रुद्र॰ | कोजिन |
| ब्रह्मा | बोनतन |
| इन्द्रः | तेशकू |
| वरुणः | सुइतन |
| गणेशः | शोतन |

**जापानस्य बौद्धधर्मस्य वैशिष्ट्यम्**—जापानस्य बौद्धधर्मस्य कानिचिद् वैशिष्ट्यानि सन्ति। महायानेन सह सम्बन्धादनेन लोकसेवा विशेषतः समर्थिता। कस्मिश्चिदन्यस्मिन् देशे, बौद्धधर्मेण लोकोपकारकार्ये राष्ट्रियकार्ये च जापानवद् भागो न गृहीतः । अत्र बौद्धधर्मो देश-भक्तिप्रचारको बभूव । निचिरेन सम्प्रदायेन विशेपरूपेणेद समर्थितम् । बौद्धधर्मस्य नीतिरप्य-त्राधिक्येन पालिता । बहुवार जापानवासिना जीवदया हास्यास्पदसीमा प्राप्तवती । क्यूशू-विश्वविद्यालये प्राणिशास्त्राध्ययनार्थं मण्डूका. श्वानः शशकाश्च प्राणिनो हन्यन्ते । १९२१-२२ तमे क्यूशूनगरस्य तरुणपुरुषाणा बौद्धसङ्घेन एतदर्थं हताना ३४००० मण्डूकानाम्, ७००० मूषकाणाम्, १००० शशकानाम् ५०० शुनाम्, ५०० मार्जाराणाम्, ३०० कुक्कुटीनाम्, ५०० पारावताना च शान्तये प्रार्थना कृता ।

**जापानस्य भारताधमर्णत्वम्**—अद्यत्वे जापानदेशो वैज्ञानिकोन्नतौ कलाकौशले व्यापारे च भारतापेक्षयाऽतीवाग्रे वर्तते । तस्य वर्तमानसभ्यताया स्रोतः पाश्चात्त्यदेशाः सन्ति, किन्तु १८६७ तमखीष्टीयाब्दपर्यन्तं ज्ञाने विज्ञाने कलायाञ्च तेन यावती उन्नतिः कृता तन्मूल-कारण भारतीयो बौद्धधर्म आसीत् । भारतदेशो जापानस्य गुरासीत् । सम्प्रति कालचक्रपरि-वतनेन स सम्बन्धो नास्ति । भारतेनानेकेषु विषयेषु विशेषतो देशभक्तौ, औद्योगिके च क्षेत्रे जापानतो बहु शिक्षणीय विद्यते । किन्तु द्वयोरपि देशयोः सास्कृतिकः सम्बन्धोऽजरोऽमरश्च वर्तते । वैरोचनस्य ५३ फीटमितोन्नता तथामिताभस्य ४२ फीटमितोन्नता, संसारस्य सर्वतः समुन्नते द्वे कास्यमूर्ती अनेकानि शतकानि उपद्रव सहमाने मौनभावेन सास्कृतिकसम्पर्कस्य साक्ष्य कुरुतः । प्रतिदिन कोटिजापानवासिना मुखेभ्यो निस्सरन् 'नमू अमिदा बुत्सु' इति मधुरो ध्वनिः, होरयजीमठस्य भिक्षुभि॰ क्रियमाणः सुखावतीव्यूहस्य पाठोऽस्य सम्बन्धस्य मुखरः साक्षी वर्तते, सूर्योदयस्य देशे जापाने भारतीयसंस्कृतेः सूर्योदय सूचयति च ।



# अष्टमोऽध्यायः

## तिब्बतदेशः

**सामान्यः परिचयः**—भारतवर्षादुत्तरस्मिन् नगाधिराजस्य हिमालयस्यापरस्मिन् भागे संसारस्य सर्वोन्नतो रहस्यपरिपूर्णो लामेति नाम्ना प्रसिद्धाना पुरोहिताना महोदेशस्तिब्बतनामाऽस्ति। अस्य कापि वसतिः समुद्रतलादेकादशसहस्रफीटमिताद् न्यूनोन्नता नास्ति, सर्वा उपत्यका द्वादशसहस्रफीटमितात् सप्तदशसहस्रफीटमितौन्नत्यान्तराले सन्ति। उत्तरस्मिन् सार्द्धसप्तशतक्रोशान् दीर्घस्य चतुश्शतक्रोशेभ्यः सार्द्धचतुश्शतक्रोशपर्यन्त विशालस्य चड्-थड्नामकस्यातिशीतलस्य क्षेत्रस्य प्राय औन्नत्य १६००० फीटेभ्योऽप्यधिकमस्ति। तस्मिन् समुन्नते प्रदेशे तृणमन्तरा किमपि वस्तु समुद्भवितु न शक्नोतीत्यय प्रदेशो निर्जनोऽस्ति। अधिका जनसंख्या लासादिमहानगराणि च केवलं दक्षिणे तिब्बतदेशे सिन्धु-सतलुज-ब्रह्मपुत्रनदीना तटेषु सन्ति, यतो ह्ययमेव प्रदेशो निम्नोस्ति, अतोऽत्र कृषिः सम्भवति। तिब्बतवासिनः स्वकीय देश भोट इति, अथवा बोदयुल इति व्यपदिशन्ति, अस्य चोन्नतो भागस्तु भोट (उच्चभोट) इति, अयमेव शब्दो योरोपीययात्रिभिः शनैः शनैर्विकृतिं प्राप्नुवन् वर्तमानं तिब्बतशब्द समुत्पादितवान्। द्वादशमासान् हिमावस्थानेन तिब्बतवासिनोऽमु देश हिमदशमपि (गगसचउन) कथयन्ति। औन्नत्येन हिमेन च दशलक्षवर्गमीलमिते विशाले भूखण्डेऽप्यस्य जनसंख्या चत्वारिंशतः पञ्चाशतो लक्षाणामन्तराले एव वर्तते। अस्माकमुत्तरप्रदेशस्य एतदपेक्षया क्षेत्रफलम् $\frac{1}{6}$ वर्तते, तथापि जनसंख्या दशगुणाऽस्ति।

**तिब्बतदेशीयबौद्धधर्मस्य महत्त्वम्**—सप्तमशतकाद् भारतीया विद्वांसस्तिब्बत गन्तु प्रारेभिरे। तैस्तिब्बतदेशाय संस्कृतेरखिल मूलमुपादान वर्णमाला भाषा, साहित्यम्, धर्मः कला च प्रदत्तानि। भारतीयप्रभावेण तत्र बौद्धधर्मस्य लामावादनामकमेक विशिष्ट रूप प्रससार। इद ततः मंगोलियाख्ये देशे प्रसरद् मंगोलाना विस्तारेण सह दोन-वोल्गामध्यवर्तिन प्रदेश योरोपीयरूसं व्याप्नोत्। पाश्चात्त्यपण्डितैर्लामावाद-रोमनकैथोलिकसम्प्रदाययोर्धार्मिकानुष्ठानेषु राजनीतिस्वरूपे च महती समानता दृश्यते। अत एव च तेऽस्मै विशिष्ट महत्त्व प्रयच्छन्ति, किन्त्वस्माक कृते लामावादः सप्तमेऽष्टमे च शतके प्रचलिताना बौद्धशैवतान्त्रिकमताना तिब्बतदेशीयरूपान्तरमस्ति। हिन्दुधर्मस्य तन्त्रवादस्य पूर्ण स्वरूप ज्ञातु तिब्बतदेशं प्राप्ताना भारतीयग्रन्थानामन्वेषणमध्ययनञ्चावश्यकमस्ति। अपरञ्च संस्कृतवाङ्मयस्य सर्वासा शाखाना ग्रन्थास्तिब्बतदेशीयभाषाया समुपलभ्यन्ते। यवनाक्रमणकारिभिरुत्तरभारते विजिते सति बौद्धभिक्षवोऽनेकान् ग्रन्थानादाय तिब्बतदेश जग्मुः। भारते लुप्ताना ग्रन्थाना पुनरुद्धारस्तिब्बतदेशेन भवति। दिङ्नागस्य न्यायमुखस्य आलम्बनपरीक्षायाश्च, शङ्करस्वामिनो न्यायप्रवेशस्य, धर्मकीर्तिकृतप्रमाणवार्त्तिकस्य, असङ्गस्य महायानसग्रहस्य, वसुबन्धोः अभिधर्मकोशस्य च सम्पादनं तिब्बतीयभाषानुवादेनैवाक्रियत। श्रीराहुलसांकृत्या-

यनेन १९३४-१९३६ तमे खीष्टीयाब्दे तालपत्रेषु लिखितानि पुस्तकानि द्वाविंशतिमश्वतरानारोप्य भारते आनीतानि। इमानि सर्वाणि तथा तिब्बतदेशीयविहारेषु शतानि पुस्तकानि तिब्बतदेशीयभाषा जानता संस्कृतविदुषा प्रयासान् प्रतीक्षन्ते, ये तान्यन्धकारात् प्रकाशमानयेयुस्तथा मध्ययुगस्य भारतीय इतिहासे तान्त्रिकमतस्य विकासे च नूतनं प्रकाशं कुर्युः।

तिब्बतदेशे भारतीयायाः संस्कृतेः प्रसारश्चतुर्षुमुख्येषु युगेषु विभक्तुं शक्यते—

(१) आद्यं युगम् (६३०-७४३ खी०)
(२) मन्त्रयानयुगम् (७४३-१०३८ खी०)
(३) वज्रयान (कालचक्र) युगम् (१०३८-१४०० खी०)
(४) लामावादयुगम् (१४००-१९४८ खी०)

इमे विभागा विभिन्नाना युगाना मुख्यप्रवृत्तिमाधृत्याक्रियन्त।

## आद्यं युगम् (६३०-७४३ खी०)

**स्रोङ्चनगम्पो इति (६१७-६५० खी०)**—सप्तमे शतके तिब्बतदेशस्येतिहासादन्धकारावरणं व्यपयाति। यदा अरबदेशीयमरुस्थले श्रीमुहम्मदमहोदयोऽरबदेशीयेभ्य इस्लामधर्मं सन्दिश्य तान् एकस्मिन् शक्तिशालिनि राष्ट्रे सङ्घटयति स्म प्रायस्तदैव स्रोङ्चनगम्पो (६१७-६५०) इति नाम्ना प्रसिद्धस्तिब्बतदेशीयस्थपठारस्य पशुपालकजातीयाना शक्तिशालिराज्यनिर्माणे संलग्न आसीत्। ६१७ तमे खीष्टीयाब्देऽस्य जन्माभूत, त्रयोदशवर्षात्मकेऽल्पे आयुष्यय राजसिंहासनमारूढः। तदानी तिब्बतदेशो बहुषु ह्रस्वेषु राज्येषु विभक्त आसीत्। स्रोङ्महोदयेन पूर्वं पार्श्वस्थानि राज्यानि विजितानि पुनः पश्चिमदिशि गिलगितलद्दाखप्रदेशपर्यन्तम्, उत्तरस्मिन् कोकोनोरप्रदेशपर्यन्तं दक्षिणस्मिंश्च नेपालराज्यपर्यन्तं प्रदेशः स्वायत्तीकृतः। चीनदेशीयेतिहासे तु एतदपि जल्पितं विद्यते यद् दक्षिणेऽस्य राज्यं वङ्गीयाखातपर्यन्तमासीत्, अस्मात् कारणात् तस्मिन् काले तत्तिब्बतदेशीयः समुद्र उच्यते स्म। एभिर्विजयैस्तिब्बतदेशस्य पार्श्ववर्तिभिःसभ्यदेशैःसाकं परिचयोभूत्। स्रोङ्महोदयस्तैःसाकं सम्बन्धं संस्थाप्य स्वीया प्रतिष्ठा संवर्द्धयितुं कामयते स्म, ते चास्य सैनिकबलाद् बिभ्यति स्म। सम्भवत इदमेव कारणमासीद् यद् नेपालराज्यस्य चीनदेशस्य च भूमिपालाभ्या निम्नजातीयस्रोङ्महोदयाय तत्प्रार्थना स्वीकृत्य स्वकन्याःप्रदत्ताः। नेपालराजकुमारी भृकुटिर्न्वी(खिचुन) ६३८ तमे खीष्टीयाब्दे, चीनदेशस्य च राजकन्या विनछ-ऐंगे ६४१ तमे खीष्टीयाब्दे तिब्बतदेशस्य महाराज्ञ्यौ अभूताम्।

**तिब्बतदेशे बौद्धधर्मस्य प्रवेशः**—पूर्वोक्तं पाणिग्रहणं तिब्बतराज्ये बौद्धधर्मस्य मूलसंस्थापकमासीत्। यदीदं प्रतिपाद्येत यदनेन तिब्बतदेशस्य बौद्धधर्मस्य च परस्परं परिणयोऽभूत्, तदाऽत्र काप्यत्युक्तिर्न स्यात्। द्वे अपि राजकुमार्यौ बौद्धधर्मस्य परमे उपासिके आस्ताम्। आभ्यां सह विवाहसमये स्रोङ्महोदयेन प्रतिज्ञातं यदहं बौद्धधर्मस्य प्रचारं करिष्यामि। तिब्बतदेशीयपरम्परानुसारेण भृकुटिदेव्या सम्बन्धार्थं याचना कुर्वता राज्ञाय संदेशः प्रेषितः—"अहं दुष्टस्तिब्बतदेशस्य शासकोऽस्मि, अहिंसादिदशशीलानामाचरणं न करोमि, यदि भवान् कन्यादान-

कृपा कुर्यात् तथा मा धर्मे प्रवर्तयितुमिच्छेत् तदाऽह पञ्चसहस्त्रैः शरीरैर्दशाना शीलानामभ्यास करिष्यामि । अह पञ्च सहस्राणि मन्दिराणि निर्मास्यामि" । नेपालराजकुमारी आत्मना सह अक्षोभ्यस्य, मैत्रेयस्य तारायाश्च मूर्ती समानीतवती । चीनराजकन्यया साकमौद्वाहिकोपायने शाक्यमुनेर्बुद्धस्य प्राचीना मूर्ति. समागता। विशालस्य राज्यस्य सचालनाय स्रोङ्महोदयः स्वीया राजधानीं यरलुङ् ( उपरि उपत्यकातः ) स्थानादपनीय देवभूमौ लासाया (लह-स) समानीतवान्। तदुत्तरभागे स्वीया मूर्तिं प्रतिष्ठापयितु विन-छ-ऐंग इति नामधेया चीनराजकन्या रमो-छे इत्याख्य मन्दिर निर्मापितवती। भृकुटिपार्श्वे स्वमूर्तिस्थापनाय आवश्यक धन नासीत्, सम्राजा यदेदं ज्ञात तदा तेन राजधान्या मध्ये एतदर्थं प्रुलसनङ्नामक मन्दिरं निर्मापितम्।

## तिब्बतदेशस्य भारताद् वर्णमालाग्रहणम्

**थोन मिसंभोटनाम्न. पुरुषस्य कश्मीरागमनम् ( प्रायः ६३२ ख्री० )**—स्रोङ्-महोदयेनेदमनुभूत यद् विना लिपि साहित्य न स्थिराया. सभ्यताया निर्माणं भवितु नार्हति, अतोऽनेन अनुमहोदयस्य पुत्र. थोन-मिसभोटनामकः पुरुषः (थोनग्रामवासी उत्तमस्तिब्बतीयः) बौद्धसाहित्य तद्वर्णमालाञ्चानेतु षोडशमित्रै सह कश्मीर प्रति प्रेषितः । अस्या घटनायाः तिथिरनिश्चितोऽस्ति । यदीय घटना पूर्वोक्तविवाहानन्तर भवेत्तदाऽस्माभिर्मन्तव्य यद् राज्योः प्रेरणैवात्र मुख्य कारणं तथा श्रीथामसमहोदयस्येय मनोरञ्जककल्पनाऽपि सत्या स्याद् यत् सभोटमहोदयस्य कश्मीर प्रति प्रेषणस्य कारण द्वयो राज्योरीर्ष्याऽऽसीत्। लासाप्रदेशाद् नेपालदेशः सन्निकट आसीत् किन्तु वेन-छि-ऐङ् राज्ञी सापत्न्येन चीन समर्थयमाना समभवत्, अनेन भृकुटिमहोदयाया भृकुटिर्वक्रा जातेति मन्ये । पर कश्मीरप्रदेशे काप्यापत्तिर्नासीत्। कतिचिद् वर्षाणि भारते विद्याभ्यासानन्तर थोन-मि-महोदय· स्वदेश प्रति निवृत्तः। काश्मीरी लिपिमुपजीव्य तेन स्वभाषाया आवश्यकतानुसारेण तिब्बतदेशीयलिपिर्निर्मिता। तिब्बतदेशे केवलं पञ्चस्वरा अ,इ,उ, ए, ओ इत्येते भवन्ति, वर्गेषु चतुर्थान्यक्षराणि मूर्द्धन्य. 'ष' वर्णश्च न भवन्ति । एतानि अक्षराणि परित्यक्तानि। च, छ, ज, श, स, ऽ,-नूतना इमे षड् वर्णाः कृताः । **थोनमहोदयेन** तिब्बतदेशीयभाषायाः प्रथम व्याकरण निर्मितम्, करण्डव्यूहसूत्रस्य, रत्नमेघसूत्रस्य कर्मशतकस्य चानुवादः कृतः। कथ्यते यत् सम्राजा नूतनाया लिपौ अभिनवे व्याकरणे च महती रुचीः प्रदर्शिता । लासाप्रदेशस्य लोहपर्वते उत्कीर्णा सा गुहाऽद्यापि वर्तते यत्र सम्राजा स्रोङ्महोदयेन चत्वारि वर्षाणि इमे द्वे अभ्यस्ते । (राहुल. पृ० ६) किन्त्विय सम्भवतो राज्ञो विद्याप्रेमसूचिका किंवदन्त्येवास्ति । तस्य स्वजीवने युद्धात् तावानवकाशो नासीद् यत् स ईदृशं कार्यं ध्यायेत्।

**स्रोङ्नृपतिद्वारा बौद्धविदुषां प्रोत्साहनम्**—तथापि तेन विद्वासः पूर्णतया प्रोत्साहिताः। बौद्धधर्मग्रन्थानामनुवादाय भारतीयः पण्डितः कुमारः, काश्मीरो विद्वान् तनाख्यः, नेपालदेशीयः शीलमञ्जुः, चीनदेशीयो भिक्षुर्महादेवः, थोन-मिमहोदयः,तस्य शिष्यो धर्मकोशश्च न्ययुज्यन्त । तिब्बतदेशे अनुवादेऽस्मिन् चीनभारतयोर्देशयोर्विद्वासः सलग्ना आसन्। अमीभिर्विद्वद्भिर्जापानदेशस्य चीनदेशस्य च सहनशीलता समन्वयवादिनीतिश्चानुसरद्भिः

प्राचीना भोटसंस्कृतिर्न विनाशिता, किन्तु स्वकीयाः सर्वे विचारास्तिब्बतदेशीयप्रावारके तत्पर्यन्तं नीताः। तेषां सर्वोत्कृष्ट उपहारस्तु भारतीया वर्णमालाऽऽसीत्। इयं कुटिला लिपिः कतिपयपरिवर्तनैः सह सज्जीकृत्य लिख्यते स्म। भोटजातीया एतद्द्वारा स्वं साहित्यं सुरक्षन्ति स्म। लद्दाखप्रदेशस्य, पाश्चात्त्यहिमालयस्य भूटानराज्यस्य, नेपालराज्यस्य च कतिपयवाचां कृतेऽस्य प्रयोगो भवितुमारब्धः। कानमूस्थाने कतिपयैर्बौद्धभिक्षुभिरस्यां लिपौ चीनदेशीयभाषापि लिखिता। त्रयोदशे शतके इमां संशोध्य मङ्गोलानां लिपिनिर्माणाय यत्नोऽभूत्। प्रदेशस्यास्य यत् साहित्यमवशिष्टं विद्यते सा अस्या लिपेः कृपाऽस्ति।

स्रोङ्महोदयेन स्वस्याधीनराज्याः प्रभावेण तिब्बतदेशं सभ्यं कर्तुमनेके प्रयत्नाः कृताः। तिब्बतदेशस्य विवरणानुसारेण राजकुमार्यै तिब्बतवासिनामियं रीतिर्न रोचते स्म, यत् ते स्वानि मुखानि रक्तवर्णेन रञ्जयेयुः, सम्राज्ञी राजाज्ञया सा निरुद्धा। ऊर्णादिकृतस्थूलवस्त्र ( नमदा ) स्थाने चर्मस्थाने च कौशेयं प्रायुज्यत। तिब्बतदेशस्य युवकाः शिक्षार्थं चीनदेशे प्रेषिताः। चीनदेशाद् मद्यनिर्मातारः, जलचक्रीचालकाः, कर्गदमसीनिर्मातारश्च शिल्पिनः समानीताः। इदं कथ्यते यत् तिब्बतदेशे वेम्नो मृद्भाण्डस्य च निर्माणस्य प्रचारोऽपि तदानीमभूत्। अत्र सन्देहो नास्ति यत् स्रोङ्महोदयस्तिब्बतराष्ट्रस्य जन्मदाता, तस्य साहित्यस्य सभ्यतायाश्च स्रष्टाऽऽसीत्। ६५० तमे खीष्टीयाब्दे स दिवङ्गतः। तिब्बतवासिनस्तमवलोकितेश्वरस्य ( चेन-रे-जी ) अवतारं राष्ट्रपितरं च मत्वा, समुचितार्घ्यप्रदानेन सम्भावितवन्तः, वेन-छ-ऐंगनाम्नीं भृकुटिनाम्नीञ्च राज्ञीमपि, बौद्धसङ्घं प्रति तयोः सेवयावलोकितेश्वरस्य पत्न्यौ श्वेतां हरिततारां च मत्वाऽमृते कृतवन्तः।

## ( २ ) मन्त्रयानयुगम् ( ७४७–१०४२ )

७४३ खीष्टीयाब्दे खिस्रोङ्ल्देव्चन नामा राजा राजसिंहासनमधिरूढः। वस्तुतस्तस्मात् कालादेव तिब्बतदेशे बौद्धधर्मस्य पूर्णोत्कर्षो भवितुमारब्धः, ७४७ तमे खीष्टीयाब्दे पद्मसम्भवमहोदयस्यागमनेन मन्त्रयानस्य प्रसारो महावेगेनाभूत्। बौद्धविहाराः संस्थापिताः, भोटजातीया भिक्षुत्वं ग्रहीतुमारब्धवन्तः, राज्यद्वारा धर्मेणानेन संरक्षणं निरन्तरं प्राप्तम्, तिब्बतदेशस्य राजनीतिकोत्कर्षस्य सूर्य आकाशे स्वीयां समुन्नतसीमां प्राप्य वेगेनास्तं गन्तुमारभत।

खिस्रोङ्नाम्नो राज्ञः (७४३-७८५) काले उत्कर्षस्य चरमां सीमामधिगता राजनीतिकप्रभुता तु समाप्ताऽभूत्, किन्तु तदानीं यो हि धर्मः प्रोत्साहितः, सोऽद्यापि तिब्बतदेशे फलति पुष्यति च। स्रोङ्महोदयस्य माता चीनदेशीया राजकन्याऽऽसीत्, सम्भवतः स्तन्येन सह धर्मोऽपि तेन पीतो भवेत्। यदा स राजसिंहासनमधिरूढस्तदा बौद्धधर्मः शोचनीयावस्थायामासीत्। भूतप्रेतानां पूजां समर्थयमाना बोन-पानामकाः प्राचीनधर्मावलम्बिनः नूतनधर्मविरोधिन आसन्। अस्य बाल्यकाले बौद्धधर्मविरोधिनो मन्त्रिण एतावच्छक्तिशालिनोऽभूवन् यत् तैर्नेपालदेशीयाया राज्या भृकुटेः प्रुलसनङ्स्था बुद्धमूर्तिः पूर्वन्तु चीनदेशं प्रेषयितुमिष्टा, किन्तु पश्चात् सा भूमौ निखाता तन्मन्दिरं च धूलिसात्कृतम्, बौद्धग्रन्थाश्च विनाशिताः। ( राहुल पृ० ८ )।

अस्यामन्धकारपूर्णायां स्थितौ युवकेन सम्राजा पूर्वजानां चरित्रं पठता बौद्धधर्मो ज्ञातः अस्य धर्मस्य तिरोहितान् ग्रन्थानधीत्य तस्य तस्मिन् धर्मेऽगाधा श्रद्धाऽभूत्। तस्मिन् काले तस्य राजसभायां बहवश्चानदेशीया विद्वांस आसन्। एषु मेगोनामानौ तथा कश्मीर-देशीयः पण्डितमनन्तं स धर्मग्रन्थानामनुवादे नियुक्तवान्। किन्तु बोन-पामन्त्रिणा विरोधेन नेपालदेशेन साकं सम्बद्धे नङ्पुलप्रदेशे एते निर्वासिताः। एतेभ्य एको जनोग्रे ज्ञानेन्द्र (मे शेस-दिवङ्-पो) नाम्ना प्रसिद्धोऽभूत्, स नालन्दा[1] जगाम। तत्र तेनाचार्यस्य शान्त-रक्षितस्य नाम श्रुतम्। प्रतिनिवर्तमानेन तेन नेपालदेशे तस्य दर्शनं कृतम्। लासाप्रदेशमा-गत्य सम्राजः खिस्रोङमहोदयस्य पुर आचार्यस्य चर्चा कृता। तदा राजसभायां केचन जना बौद्धधर्मं पुनः प्रतिष्ठापयितुमिच्छन्ति स्म। किन्त्वेकः शक्तिशाली मन्त्री माशङ्खोम-पसक्येद्-नामको धर्मान्धबोनपा बौद्धधर्मस्य विरोधी आसीत्, तस्मिन् जीवति दुश्शकमिदमभूत्। सम्राजा मन्त्रिणामन्येषां परामर्शेन माशङ्नामा मन्त्री प्रज्वालितः तथा तेन सहैव बोन-धर्मोऽपि समापितः। मार्गे निष्कण्टके जाते ज्ञानेन्द्रः शान्तरक्षितमाह्वातुं भारते प्रेषितः।

**आचार्यः शान्तरक्षितः**—शान्तरक्षितमहोदयो यदा तिब्बतदेशं प्राप्तस्तदा स तिब्बतदेशीयभाषानभिज्ञोऽभूत्। स संस्कृतं वदति स्म, काश्मीरपण्डितोऽनन्तमहोदयस्तद-नुवदति स्म। सम्राड् अस्य महतीं प्रतिष्ठां कृतवान्। चतुरो मासान् यावद् दशकुशल (शुभकर्म) द्वादशप्रतीत्यसमुत्पादप्रभृतिविषयेष्वाचार्यस्योपदेशमश्रृणोत्। तदानीं राज्येषु काश्चन प्राकृतिकविपत्तयः समागताः, पशुषु रोगाः प्रसृताः, लोहितगिरौ विद्युत्पातोऽभूत् तथा चङ्थङ्प्रदेशं आप्लावे प्रावहत्। बोनधर्मावलम्बिभिः कोलाहलः कृतः, यदाचार्यस्य प्रवचनैः कुपितानां तिब्बतीयदेवानां प्रकोपस्यायं परिणामोऽस्ति। सम्राड् महत्याऽनिच्छया तस्य तिब्बतदेशाद् भारते प्रेषणाय विवशोऽभूत्।

आचार्यः शान्तरक्षितः सम्भवतो भूतप्रेतवादिना तिब्बतवासिनां दौर्बल्यमनुमितवान्। तेन मन्त्रविद्यानिष्णातं स्वशिष्यं पद्मसम्भवमाकारयितुं सम्राट् प्रबोधितः। सम्राज आमन्त्र-णेनाचार्यः स्वयं पुनः पञ्चसप्ततिवर्षात्मके वयसि तिब्बतदेशं समागतवान्। यस्मिन् वयसि जनाः खट्वायां कासन्ते, आचार्यो धर्मप्रचारोत्साहेन तस्मिन् वयसि षोडशसहस्रफीटपरिमाण-समुन्नतमद्रिद्वारं दुर्गा उपत्यकाश्च समतिक्रान्तवान्। अस्मिन् समये तेन तिब्बतदेशे विहार-स्थापना तिब्बतवासिभ्यो भिक्षुत्वप्रदानम्, बौद्धग्रन्थानामनुवाद एतानि महत्त्वपूर्णानि त्रीणि कार्याणि सम्पादितानि। वर्षशतद्वयाद् बौद्धधर्मस्य प्रवेशे सत्यपि तिब्बतदेशे तत्कालपर्यन्तं नापि कश्चन विहार आसीत्, नापि च कश्चिद् भोटभिक्षुरासीत्। राज्ञाऽस्याज्ञानुसारेण

---

**१. इदं स्मर्तव्यं यन्मध्ययुगे ल्हासाप्रदेशस्य प्रधानो मार्गो दार्जलिङ्गद्वारा नहि, किन्तु नेपालद्वारा गच्छति स्म। अयं काठमाण्डूतः किरोंगं प्राप्नुवन् नोलाद्रिद्वार (दर्रा) (१६६०० फीट) समतिक्रम्य चाङ्पो (सांपू) नद्या द्रोणीं प्राप्नोति स्म। अयं दार्जिलिंगमार्गापेक्षयाऽधिको विकटोऽस्ति।**

ल्हासाप्रदेशात् पञ्चदशक्रोशेषु दक्षिणपूर्वयोब्रह्मपुत्रनद्या. क्रोशद्वयमुत्तरस्मिन् उदन्तपुरीम् ( बिहार-शरीफ ) अनुकृत्य समये ( बसम् यस् ) नामको बिहारः स्थापितः ( ७६३-७७५ खी० )। अस्य मध्ये सुमेरुरूपेण प्रधान मन्दिरमासीत्, तथा भिक्षूणा निवासायाभितश्चतुर्महाद्वीपरूपेणाष्टोपद्वीपरूपेण चावासस्थानान्यासन् । चतुर्पु कोणेषु चत्वारो मनोहराः स्तूपास्तथाभिः समुन्नतः प्राकार आसीत् । अथ चत्वारि महाद्वाराण्यासन्। शान्तरक्षितोऽस्य प्रथमो मठाधीशो लामापदवाच्यो वाऽभूत् । विहारस्थापनानन्तर सर्वप्रथमम् ७६७ तमे खीष्टीयाब्दे ज्ञानेन्द्रशीलेन्द्ररक्षितप्रभृतयः सप्त भोटाः कुलपुत्राः प्रथमवार भिक्षवः कृताः । शान्तरक्षितस्य तृतीय कार्यमनुवाद आसीत् । तेन धर्मकोषनामकस्य तिब्बतवासिनो भाषाद्वयविदः ( लोचन ) साहाय्येन दिङ्नागस्य हेतुचक्रस्यानुवादः कृतः। स दर्शनशास्त्राणा प्रकाण्डः पण्डित आसीत्। तेन तत्त्वसंग्रहकारिका धर्मकीर्तेर्वादन्यायस्य वादन्यायवृत्तिविरञ्चितार्थनाम्नी टीका च लिखिता। शतवर्षात्मके वयसि ( ७८० खी० ) आचार्यो निर्वाण प्राप्तवान्। वृद्धावस्थाया तेन धर्मप्रचारस्य यः प्रशसनीय उत्साह. श्लाघनीयस्त्यागश्च प्रदर्शितः, तदर्थं स बोधिसत्त्वो विहितः। अनेके तिब्बतदेशवासिनस्त महापण्डित ( मू-खनछेन् ) बोधिसत्त्वनाम्ना जानन्ति ।

**पद्मसम्भवो मन्त्रयानञ्च**—तिब्बतदेशे बौद्धधर्मं लोकप्रिय कर्तुं तथाऽस्य मूलं सम्यक्तया स्थिरयितुं गौरव पद्मसम्भवमहोदयस्यैवास्ति। ७४७ तमे खीष्टीयाब्दे तस्यागमनेन तिब्बतदेशे बौद्धधर्मस्य नवयुग प्रारभ्यते। आचार्यः शान्तरक्षितो दर्शनस्य प्रकाण्डो विद्वानासीत्, किन्त्वनेकधा अन्धविश्वासे मग्नाना तिब्बतवासिना कृते तस्य प्रतीत्यसमुत्पादस्य दार्शनिकप्रवचनेषु किमप्याकर्षण नास्ति। पद्मसम्भवमहोदयेन तेभ्यो भूतप्रेतादीना वशीकरणाय मन्त्रयानमुपदिष्टम् । इद तिब्बतवासिना स्वभावानुकूलमासीत्, अतोऽस्य तत्र महान् प्रचारोऽभूत् ।

पद्मसम्भवस्य जीवने तस्य भक्तैश्चमत्काराणा तादृश सुवर्णरञ्जन कृतम्, यत् तस्य वास्तविकरूप विलुप्तमभूत्। तिब्बतदेशस्यानुश्रुतौ स उद्यानप्रदेशस्य राज्ञ इन्द्रभूतिनामकस्य पुत्रोऽस्तीति प्रतिपादितम्। बौद्धधर्मस्यानन्यभक्तत्वेन पद्मसम्भवमहोदयेन केचन बौद्धमतविरोधिनो हताः। पित्राऽपराधेऽस्मिन् देशान्निष्कासितोऽयम्। सोऽनेकेषु स्थानेषु भ्राम्यन् नालन्दा प्राप्तवान्। तत्र स योगाचारतान्त्रिकबौद्धमतस्य प्रबलप्रचारकोऽभूत्। सम्राजा खिस्रोङ्नाम्ना समाहूतः ७४७ तमे खीष्टीयाब्दे तिब्बतदेश प्राप्तवान्। अनेन तिब्बतस्य सर्वे भूताः पिशाचाश्च सहृताः। जीवनपर्यन्त स तै साक रक्षात्मक युद्ध चकार। यैर्भूतैर्नूतनस्य धर्मस्य संरक्षणमङ्गीकृतम्, ये युद्धाद् मुक्ताः, अथ च तेषा पूजन प्रतिज्ञातम्। भारतीयतन्त्रवादस्य बोनधर्मस्य च सम्मेलनमेव लामाधर्मस्य रूप गृहीतवान्। अत्र भारतीयैर्जापानप्रभृतिदेशेषु स्वीकृता समन्वयवादनीतिः प्रतिबिम्बिता दृश्यते। यथा जापानदेशे शिन्तोवादस्य देवा बुद्धस्यावताराः सन्तीति मत्वा धर्मेणानेन तत्र लोकप्रियता प्राप्ता, तथैव तिब्बतदेशे बोनधर्मावलम्बिनामनेकान् प्रचलितान् विश्वासान् स्वीकृत्यानेन तिब्बतदेशवासिना मानसे स्वस्थानं स्थापितम् ।

भारतीयं मन्त्रयानमष्टमे शतके जावाराज्ये चीनदेशे चापि जगाम, किन्तु तत्र तस्य प्रचारो नाभूत्। तिब्बतवासिभिर्न केवलमिदं स्वीकृतम्, परमस्य महान् विकासोऽपि कृतः।

**मन्त्रयानस्य विशिष्टताः**—पद्मसम्भवस्य मन्त्रयानस्य निम्नलिखिता विशिष्टता आसन्—(१) भूतप्रेताना वशीकरणाय तथालौकिकसिद्धीनां प्राप्तये धारणीति नाम्ना प्रसिद्धानां मन्त्राणां प्रचुर उपयोगः, (२) एतैरुपायैर्न केवल देवतानामाह्वानं कर्तुं शक्यते, किन्तु स्वयमपि देवत्वं प्राप्तुंशक्यते, (३) अमिताभस्य पूजाया तस्य सुखावतीनाम्नि स्वर्गे च विश्वासः, (४) मासस्थानेऽन्नस्य बलिर्मृतकाना श्राद्धञ्च, (५) दिवङ्गताना जीवता वा गुरूणाञ्च पूजा, (६) साधारणेषु जनेषु प्रचलिताना स्थानीयपूजानामङ्गीकरणं तथा स्वधर्मे तत्स्वीकारः। पद्मसम्भवस्य शिक्षैकयाऽन्यया दृष्ट्याऽपि बौद्धधर्मस्य मूले कुठाराघातकर्त्र्यासीत्। अनेन काचित् सौन्दर्यसम्पन्ना राजकन्या कुमारीदेवी परिणीता, तया जीवनपर्यन्तमनुसृतोऽयम्। बुद्धभगवता भिक्षूणां कृते ब्रह्मचर्यमावश्यकं मतम्, किन्तु मन्त्रयानिनः प्रत्येकं देवं देवीमन्तराऽपूर्णं मन्यन्ते स्म। पुनः पद्मसम्भवः कथमपूर्णस्तिष्ठेत्। बहुकालपर्यन्तं तिब्बतदेशस्य भूतप्रेतानां वशीकरणानन्तरम्, स स्वीयां जन्मभूमिमुद्यानप्रदेशं प्रतिनिवृत्तवान्। पद्मसम्भवानन्तरं तस्य पञ्चविंशत्या मान्त्रिकैः शिष्यैर्जनेषु मन्त्रयानस्य महान् प्रचारः कृतः।

यदा सर्वत्र नूतनस्तन्त्रवादो वेगेन प्रसरति स्म, तदा राजसभायां चीन-भारतयोः पण्डिताना सघर्षोऽभूत्। खिस्रोङ्महोदयस्य राजसभाया पूर्वं चीनदेशीयपण्डिताना प्राबल्यमासीत्, किन्त्वाचार्यस्य शान्तरक्षितस्यागमनेन सम्राजः पक्षपातो भारतीयपण्डितेष्वभूत्। चीनदेशीयपण्डितेभ्य इदं नारोचत। तैराचार्यस्य स्वर्गारोहणानन्तर कमपि सिद्धान्त पुरस्कृत्य भारतीयपण्डिताना महान् विरोधः कृतः। तेषामयं सिद्धान्त आसीद् यद् बुद्धत्वप्राप्तेरद्वितीयं साधनं सर्वेषा कर्मणा परित्यागस्य तथा पूर्णतया निष्क्रियताया आलम्बनमेवास्ति। आचार्यस्योत्तराधिकारी श्रीघोषोऽस्य विरोध्यासीत्। उभयोर्विवादस्तावतीं वृद्धिं प्राप्तो यदेकेन पक्षेणापरपक्षस्ताडयितुं प्रारभ्यत। अन्तेऽस्य निर्णयाय नालन्दाप्रदेशादाचार्यः कमलशील आहूतः। शास्त्रार्थोऽभूत्, सम्राड् मध्यस्थ आसीत्। दक्षिणस्मिन् भागे अकर्मण्यवादिनस्तस्य नेता चीनदेशीयभिक्षुश्च (होशंग) उपाविशद्, वामे भागे चाचार्याः कमलशील-श्रीघोषप्रभृतयो विद्वांसः। द्वयोः पक्षयोर्नेत्रोर्हस्ते सम्राजा माला समर्पिता, कथितञ्च "यः पराजयं प्राप्नुयात् स विजेतुर्हस्ते माला समर्प्यापुनरागमनाय गच्छेत्"। शास्त्रार्थे चीनवासिनः पराजिताः। ते कमलशीलाय माला समर्प्य देशान्निष्क्रान्ताः, किन्तु तैश्चतुर्भिश्चीनीयशौनकेभ्यो धन दत्त्वा कमलशीलो घातितः, तथेत्थ पराजयक्रोधमपनेतु प्रयत्नोऽकारि। चीनवासिनां पराजयानन्तरं राज्ञेयं प्रसारिता यत् सम्प्रति तिब्बतवासिनो महायानसम्प्रदायस्याचार्यनागार्जुनस्य माध्यमिकमतमनुसरेयुः। तदानीं तिब्बतदेशे आचार्यविमलमित्रेण, बुद्धगुह्येन, शान्तिगर्भेण विशुद्धसिंहेन च भाषाद्वयविदा भोटाना साहाय्येन संस्कृतग्रन्थाश्चीनभाषायामनूदिताः। इमे भोटाया लोचनपदवाच्या लोकचक्षुःपदवाच्या वा भवन्ति स्म। इमे जनानां चक्षुर्मा भूत्, किन्तु भारतीयनामाचार्याणा चक्षुरवश्यमासीत्।

**खि-ल्दे-बचन-पो** (७८७-८१७ खी०) नामको राजा बौद्धधर्मस्य संरक्षक आसीत्। स न केवल बाल्तिस्तानप्रदेशस्य सुदूरवर्तिनि सकरदोनगरे बौद्धमन्दिरं निर्मापितवान्,

परमनुवादस्य पद्धतिं परिष्कर्तुमपि प्रायतत। तत्कालपर्यन्त यद्यप्यनेकेऽनुवादाः सजाताः, किन्त्वेषु प्रतिशब्दानां कृते कश्चन नियमो नासीत्, अतः तिब्बतदेशीयाना कृतेऽय महान् दुर्बोध आसीत्। अधुना इमे प्रतिशब्दाः सस्कृतस्य भोटभाषायाश्च धातुप्रत्ययान् सम्यग् निरीक्ष्य सावधानतया अवचिताः। सस्कृतस्य प्रत्येक शब्दस्य कृते एको भोटशब्दो निश्चितोऽभूत्। यथा-धर्मपालस्य कृते छोस्-सक्योङ्, धर्मधरस्य च छोस्-जिन इति। अमीषा प्रतिशब्दाना व्युत्पत्ति नामकः कोशो निर्मितोऽभूत्। अनेन भोटानुवादस्तथा प्रामाणिकोऽभूत्, यत् तैर्मूलग्रन्थाः सस्कृते विनायासं परिवर्तयितु शक्यन्ते स्म। अनेके ग्रन्था इत्थ तिब्बतदेशीयभाषायाः सस्कृतेऽनूदिताः। जिनमित्र-ये-शेससदे-धर्मशीलास्तथा भोटीयाचार्यो द्पल-बर्चेगस्महोदयोऽस्मिन् काले महाननुवादक आसीत्। नागार्जुन-वसुबन्धु-चन्द्रकीर्ति-विनीतदेव-शान्तरक्षित-कमलशीलप्रभृतिविदुषा ग्रन्था अनूदिताः। एषु लक्षश्लोकात्मकप्रज्ञापारमिताप्यासीत्। प्राचीना अनुवादाः संशोधिताः। कश्चन परवर्ती आचार्यस्ताननुवादान् विशेषतः परिमार्ष्टुं नाशकत्। ७९०–८४० खी० पर्यन्त पञ्चाशद्वर्षेषु यावदनुवादकार्यमभूद् न तावत् कस्मिंश्चिदन्यस्मिन् काले। अय समग्रस्य तिब्बतीयकंजुरतंजुरनामकवाङ्मयस्यार्द्धभागोऽस्ति।

**रल्-प-चन् दीर्घकेशो वा राजा (८१७–८४१ ई०)**—चन-पानामधेयस्य राज्ञः पश्चादनेन बौद्धधर्मे सकलपूर्वापेक्षयाधिका श्रद्धा प्रदर्शिता। धर्मोपदेशं शृण्वतानेन स्वस्य दीर्घेषु केशेषु कौशेयं वस्त्र प्रसार्य तत्र व्याख्याता समुपवेश्यते स्म, अतोऽयं राजा दीर्घकेश इति नाम लेभे। अनेन प्रत्येकं भिक्षोः सेवार्थं सप्त परिवारा निश्चिताः, ल्हासाप्रदेशस्य राजप्रबन्ध एकस्य भिक्षोर्हस्ते समर्पितः। अस्य पुत्रः चङ्मोनामा भिक्षुत्वमङ्गीचकार। भारताद् जिनमित्रः, सुरेन्द्रबोधिः, शीलेन्द्रबोधिः, बोधिमित्रः, धनशीलश्च तिब्बतदेशे आकारितः। अस्मै भारतीया संस्कृतिस्तथा रोचते स्म यदनेनापि भारतीया तोलनपद्धतिः स्वीकृता। अस्य प्रोत्साहनेनायोग्या अपि जना भिक्षुत्वमङ्गीकृतवन्तः। धर्मः कलङ्कं प्राप्तुमारभत। विरोधिनः प्रबला अभूवन्। राजसिंहासनालाभेनास्य ज्येष्ठो भ्राता ग्लङ्दरमनामा क्रुद्ध आसीत्। तेनावसरः प्राप्तः। सम्राट् स्वभ्रातुः कपटप्रबन्धेन हतः (८४१ खी०)। ग्लङ्दरमनामा राजा राजसिंहासनमारूढः।

**बौद्धधर्मस्य दमनम्—ग्लङ्दरमराजा (८४१ खी०)**—अनेन राज्ञा बौद्धधर्मे महान् अत्याचारः कृतः। अतीतेभ्यः शताद् वर्षेभ्यो बौद्धधर्मेणातिशयं संरक्षणं प्राप्यते स्म। आगामीनि शत वर्षाणि तस्यातीव सकटमयानि जातानि। तदानीं मठा भग्नाः, पुस्तकानि प्रज्वालितानि, व्याधत्व भिक्षवो स्वीकर्तु बाधिताः। सम्भवतोऽत एव चीनदेशीयेतिहासलेखकेन थङ्युमहोदयेन ग्लङ्राजातिशयकुत्सितरूपेणोपवर्णितः। "स प्रियमद्यः, क्रीडासक्तः, स्त्रीलम्पटः, क्रूरोऽत्याचारी, कृतघ्नश्चासीत्"। तिब्बतदेशस्येतिहासानुसारेण तस्मिन् शासति भिक्षवो मास भक्षयितु मद्यञ्च पातु विवशा अभूवन्। यो भिक्षुत्वमपहाय गार्हस्थ्यं स्वीकर्तु न संनह्यति स्म स निर्वासितः। केचन स्वेच्छया देशं परित्यज्य गताः, ये न गतास्तैर्मृदङ्गनरसिंहनामके वाद्ये ग्राहिते, धनुर्बाणै. सह मृगयायां मृगयुशुनोऽनुसर्तुमाज्ञप्तास्ते। कैश्चिद् भिक्षुभिर्व्याधकर्म शिक्षितम्। जोखङ्नामकात्

प्रसिद्धमन्दिराद् बुद्धमूर्तिर्निष्कास्य बालुकाया निक्षिता, मन्दिरस्य द्वारं पिधाय तत्र मद्य पिबतो भिक्षोर्मूर्तिरङ्किता। रमोछे तथा समये इत्यनयोर्विहारयोर्द्वारमपीत्थमेव पिहितम्। अधिकानि पुस्तकानि ल्हासाप्रदेशस्य शिलासु तिरोहितानि। बौद्धाः पण्डिता अनुवादकाश्च प्राणरक्षायै ल्हासाप्रदेशाद् मानसरोवर तथा तुर्किस्थानं पलायितुमारेभिरे। तिब्बतदेशस्येतिहासैरिदं स्पष्ट न भवति यद् ग्लङ्महोदयेन तादृशोऽत्याचारः केनोद्देश्येन कृतः। इदन्तु स्पष्टमस्ति यदतीताना राज्ञा पूर्वसरक्षणेन बौद्धधर्मेऽनेका भयङ्करा दोषाः समागताः। चीनदेशस्य जापानदेशस्य चेतिहासेऽस्योल्लेखो विद्यते, किन्तु ग्लङ्महोदयः सर्वेषु प्रतिबन्धं समारोप्यामीषा नाशं कर्तु शक्नोति स्म। अत्याचाराणा वास्तविकमुद्देश्य राजनीतिरेवासीत्। अस्यानुजेन सर्वोऽपि शासनाधिकारः समर्पित आसीत्। महतीना भूमीना मठाधीशा महान्तः शक्तिशालिन आसन्। राज्याय तैः सकट आसीत्। अतो ग्लङ्महोदयेन महाबलेन तान् अतिक्रमितु यतितम्।

किन्तु ग्लङ्दरमराजस्येमेऽत्याचारा बहुकाल यावत् स्थिरा नाभूवन्। बौद्धेष्वस्य प्रतीकारः स्वाभाविक आसीत्। एकस्मिन् दूरवर्तिनि पर्वतप्रदेशे ध्यानमग्नेन पलदोर्जेनामकेन (द्पल-ग्यि-दोर्जे) श्रमणेन पलायमानेभ्यो भिक्षुभ्यो यदामी समाचारा ज्ञातास्तदा तेन प्रतिशोधयितुं प्रतिज्ञातम्। अयं बहिः कृष्णमभ्यन्तरे शुक्लमुष्णकोमलरोमावलियुक्तसमरप्रभृतिपशुचर्मनिर्मितकञ्चुक भूतावेशेन नृत्यतो मान्त्रिकस्य वेश परिहितवान्, शिथिलबाहुपरिधाने धनुः बाणञ्च तिरोधायाश्वं मस्या रक्तः सरज्य च स ल्हासाप्रदेश समागतवान्। तत्र भूतावेशेन नृत्यता तेन राज्ञो ध्यान स्वाभिमुख कृतम्। स राजप्रासादे आहूतः। दोर्जेनाम्ना श्रमणेन समीचीनोऽवसरः प्राप्तः। तेन प्रणामव्याजेन तथा बाणः प्रक्षितो यत् स राज्ञो वक्षसि पतितः। स ततः परमिम कोलाहल कुर्वन्नश्वमारुह्य ततः पलायितः, यत् 'पापो राजा हन्तव्यश्चेद् इत्थ हन्तव्यः।' ल्हासाप्रदेशे महान् सक्षोभ. प्रवृत्तः, राज्ञोऽत्याचारेण जना पूर्वत एव रुष्टा आसन्। दोर्जेनामा केन ग्रहीतव्यो भवेत्? तेन स्वरक्षार्थं ल्हासाप्रदेशाद् बहिर्निर्यां तुरङ्गस्य मसी प्रक्षालिता, तथा पूर्वोक्त चर्मकञ्चुक परिवर्त्य तस्य शुक्लो भागो बहिः कृतः। तिब्बतदेशस्य बौद्धसङ्घेन स्वशत्रुहन्तुः स्मृतिः कृतज्ञतयाक्षुण्णत्व नीता। दोर्जेदेवत्व नीतः, मठेष्वद्यापि इयं घटनाऽभिनीयते। मरणसमये ग्लङ्दरमराजस्य बौद्धधर्मस्यापूर्णदमनस्य महद् दुःखमासीत्, तस्यान्तिमः शब्द आसीत्—"हन्त! कथन्नाह वर्षत्रयात् पूर्वमेव हतः, अनेनाहमेतावन्ति पापानि नाकरिष्यम्, अथवाऽह वर्षत्रयानन्तरमेव किं न हतः, येनाहं देशादस्माद् बौद्धधर्मस्य समूलोन्मूलनमकरिष्यम्।

**बौद्धधर्मस्यान्धयुगम्**—आगामीनि शतं वर्षाणि बौद्धधर्मस्य कृतेऽन्धयुगमेवासीत्। तदानीं तिब्बतदेशे केवलम् 'अम्दो'नामके प्रान्ते त्रयो बौद्धभिक्षवोऽवशिष्टा आसन्, इमे ग्लङ्दरमराजस्यत्याचारेभ्यः संत्रस्ता भूत्वा प्रदेशेऽस्मिन् अगच्छन्। तेभ्यः कश्चन तिब्बतवासी खुगुरुलनामकः प्रव्रज्या प्राप्तुमैच्छत्। सङ्घस्य नियमानुसारेणोपसम्पदार्थं न्यूनातिन्यूना पञ्च भिक्षवोऽन्वेष्टुमारब्धाः। अतिशयान्वेषणे कृते सति ग्लङ्दरमाघातको दोर्जेनामा भिक्षुरुपलब्धः, किन्तु नरहत्यापराधात् स भिक्षुर्नासीद्। अन्ते द्वाभ्या चीनीयभिक्षुभ्या (होशंग) नियतां सख्या

प्रपूर्य खूग्रुलनामा दीक्षितः। पश्चादनेन द्बुस( क्यी अथवा द्बुसछुनरी-उपत्यका )प्रदेशस्य तथा ग्चङ ( चङ्युल ) प्रदेशस्य पञ्च पञ्च पुरुषाः शिष्याः कृताः। अनेन तिब्बतदेशे नूतन-पद्धत्या बौद्धधर्मः प्रचारितः, तथा पद्मसम्भवस्य परम्परा मन्वानेन भिङ्-म-पसम्प्रदायः प्रारब्धः।

## बौद्धधर्मस्य पुनरुद्वारः

**ज्ञानप्रभः**—एकादशस्य शतकस्य पूर्वार्धे बौद्धधर्मः पुनरुत्कर्षमवाप। तिब्बतदेशीयैतिहासिका अस्मात् कालाद् बौद्धधर्मस्य प्रसारमेकं नूतनं युगं मन्वते। आचार्यशान्तरक्षितस्य पद्मसम्भवस्य च धर्मप्रचारं ते स्नङ्दरपदेनाभिदधति नूतन प्रचारञ्च फ्यिदरपदेन। फ्यिदर-कर्तारः केचन तिब्बतवासिनोऽधिकाशा भारतस्य विभिन्नप्रदेशेभ्य आगन्तारो बौद्धभिक्षव आसन्। तिब्बतवासिषु मिम्गोननामकस्य ज्येष्ठः पुत्रो येशेस्-होदनामको ( ज्ञानप्रभः ) मुख्य आसीत्। नवमस्य शतकस्यान्ते (६८२) त्रि-मम्-गोननामको यो ल्हासाप्रदेशस्य राज्ञः पुत्र आसीत्-स राजधानीं त्यक्तुं बाधितोऽभूत्। अय शताश्वारोहैः साक पाश्चात्यतिब्बतदेशं ङरी( मङ् अरिस् )प्रदेशं वा समागतः। सदुद्रङ्स्( मानसरोवरस्य निकटवर्ति )प्रदेशस्यैकेन राज्ञाऽस्मै स्वकीया राजकन्या राज्यञ्च प्रदत्तम्। अनेन सकलं पाश्चात्यतिब्बतं-लद्दाख शङ्-शुङ्-गूगे वा तथा सपुरङ्स इति नामक प्रदेश विजित्य स्वस्य त्रिषु पुत्रेषु विभक्तम्, किन्तु ज्ञानप्रभः ( ये शेस ) स्वं राज्यं स्वस्मै अनुजाय समर्प्य भिक्षुत्वमङ्गीचकार। तदानीं बौद्धधर्मस्यात्यधिकं पतनमजायत। ज्ञान-प्रभस्तेषामाचरणेन तन्त्रग्रन्थेन च विषण्णोऽभूत्। स तद् बुद्धस्य मूलशिक्षातो विपरीत मन्यते स्म। तेन तेषा पठनार्थं रिन-छेन-बसङ्पोप्रभृत्येकविंशतिं युवकाः कश्मीरे प्रेषिताः। एषु द्वाववशिष्य सर्वे दिवङ्गताः। अतो ज्ञानप्रभेणेद समुचितममानि यद् भारतीयाः पण्डितास्तिब्बतदेशे आहूयेरन्।

एकादशशतकस्य प्रारम्भे कश्मीरस्य, वङ्गस्य, विहारस्य चानेके विद्वांसो भिक्षवस्तिब्बतदेशं गन्तुं सन्नद्धा आसन्। तस्मिन् काले वङ्गे विहारे च पालवंशस्य सम्राजः प्रोत्साहनेन नालन्दा-विक्रमशिला (वर्तमान सुल्तानगंज, जि०भागलपुर)-उदन्त-पुरी(विहारशरीफ, जि० पटना)-जगत्तला-( गङ्गाकरतोयासगमे उदीच्यवङ्गप्रदेशे )विश्वविद्यालया भारतविदुषां मुख्यकेन्द्रस्थाना-न्यासन्। एभ्योऽनेके विद्वांसो भारतीयास्तिब्बतदेश गतवन्तः। इदं प्रायः प्रतिपाद्यते यत् तुर्काक्रमणकारिणामाक्रमणेन पलाय्य इमे तिब्बतदेश प्राप्ताः, किन्तु वस्तुस्थितिरैतिहासिकतथ्य-ञ्चेमा लोकप्रसिद्धां जनश्रुतिं प्रत्याचक्षाते। विहारे वङ्गप्रदेशे च तुर्काणामाक्रमणं द्वादशस्य शत-कस्यान्तिमे दशके प्रारब्धम्, किन्तु पण्डिता इमेऽष्टमशतकादेव तिब्बतदेश जग्मुः, तथैकादशे द्वादशे शतके च तिब्बतदेशस्य नूतनधार्मिकसशोधने एतेषा मुख्यो भाग आसीत्। यदि यवना-क्रमणैर्बौद्धभिक्षवो भारताद् बहिः पलायेरन् तर्हि त्रयोदशस्य शतकस्य तिब्बतसाहित्येऽस्य विस्तृत उल्लेखः समुपलभ्येत; प्रत्युत, तत्रैकादशशतकादमीषा महती परम्परा दरीदृश्यते।

भारतीयपण्डितानां तिब्बतगमनस्य स्वाभाविककारण वङ्गप्रदेशे एकादशे शतके बौद्धधर्मस्य पुनरुज्जीवनमेव प्रतीयते। अस्य शतकस्य प्रारम्भे आचार्यधर्मपालः, सिद्धपालेन गुरुपालेन प्रज्ञापालेन च सह तिब्बतदेशं समागतः ( १०१३ खी० )। किन्त्वस्य शतकस्य सर्वप्रसिद्ध आचार्यदीपङ्करश्रीज्ञान—अतिश आसीत्। राज्ञा ज्ञानप्रभेणाहूतः १०३८ खीष्टीयाब्दे स

तिब्बतदेश समागतस्तथा तस्यागमनेन सह बौद्धधर्मस्यैकं नूतनं युगं प्रारभ्यते। अतिशमहोदयस्य वज्रयानसमर्थनेनेदं वज्रयानयुग कथ्यते। अथवा तिब्बतदेशीयभाषानुसारेणाय फ्यिदर अथवा बौद्धधर्मस्यातीतः प्रसार आसीत्। युगेऽस्मिन् वज्रयानस्य प्रचारमतिरिच्य सास्कृतिकधार्मिक-दृष्ट्या अनेका महत्त्वपूर्णा घटना अभूवन्। अत्र निम्नलिखिता विशेषत उल्लेखनीयाः सन्ति—भारतीयवाङ्मयस्य कलायाश्चाधिक्येन प्रवेशः, नूतनाना सम्प्रदायानामुद्भवः, तिब्बतीयत्रिपिटकस्य निर्माणम्, मठाना राजनीतिकप्रभुत्वम्, तिब्बतदेशस्य मङ्गोलैः सह सम्बन्धः।

## वज्रयानयुगम् ( १०३८–१४०० खी० )

**ज्ञानप्रभस्य आदर्शत्यागः**—राजभिक्षुणा ज्ञानप्रभेण ( येशेसुहोद ) यदा भारता-दाचार्यानाह्वातुं निश्चयोऽकारि, तदा तेनावगतं यदार्यावर्तेऽधुना सर्वोत्कृष्ट आचार्यो दीपङ्करः श्रीज्ञानोऽस्ति। तमाकारयितु दूतः प्रेषितः, किन्तु स नागतः। पुनः दूत प्रहेतु प्रयत्नोऽभूत्। एतदर्थमावश्यक स्वर्ण सग्रहीतु ज्ञानप्रभः सीमान्तदेशं गतवान्, किन्तु बौद्धधर्मविरोधिगरतोकस्य राजा त बन्दीचकार। तस्योत्तराधिकारी बोधिप्रभः ( व्यङ्–छुप्–डोर् ) राजा शत्रुभ्यः शरीर-प्रमाण स्वर्ण दत्त्वा मोचयितुं वाञ्छति स्म, किन्तु ज्ञानप्रभस्य कथनमासीद् यद् धनमिदं भारतात् पण्डिताह्वाने व्यय यायात्। तस्याय त्यागो नितान्त श्लाघनीयोऽनुपमश्चासीत्। यदा द्वितीय-वारमाचार्यमतिशमहोदयमाकारयितु दूतः प्रेषितस्तदा ज्ञानप्रभस्य महान् त्यागस्त तिब्बतदेश-मागन्तु विवशं कृतवान्।

**अतिशेतिनाम्ना प्रसिद्धो दीपङ्करश्रीज्ञानाख्य आचार्यः (९८२–१०५४ खी०)**—आचार्योऽतिशो गौडीयराजकुले समुदपद्यत। तस्य पित्रा कल्याणश्रिया जनन्या प्रभावत्या च तस्य चन्द्रप्रभेति नाम कृतम्। जेतारिनामकाद् गुरोरध्येतु स तस्य पार्श्वे प्रेषितः। स्वीययाऽ-साधारण्या प्रतिभया तेन शीघ्रमेव सर्वेषु दर्शनेषु, महायानस्य त्रिपिटके, माध्यमिकस्य योगाचारस्य च सम्प्रदाययोर्ग्रन्थेषु चतुष्प्रकारेषु तन्त्रेषु च प्रवीणताऽवाप्ता। परित्यज्य संसार स एकस्मिन् विहारे गुह्यज्ञानवज्रनाम्ना दीक्षितोऽभूत्, नरोत्तमपादात् ( नारोपा ) बौद्धधर्मस्य गुह्ययोगविद्या पपाठ। विंशतिवर्षात्मके आयुषि नालन्दाविश्वविद्यालयस्याचार्याद् बोधिभद्रादुपसम्पदा गृहीत्वा तेन दीपङ्करश्रीज्ञानेति नाम प्राप्तम्। विक्रमशिलाया वज्रासने ( बुद्धगयायाम् ) च त्रिपिटकस्य तन्त्राणाञ्च पूर्ण ज्ञानमवाप्य स १०१३ तमे खीष्टीयाब्दे सुवर्णद्वीपस्याचार्याद् धर्मपाला-दध्येतु सुमात्राराज्य गतवान्। द्वादशवर्षाणि तत्र न्युष्य स १०३६ तमे खीष्टीयाब्दे यदा भारत प्रत्यवर्तत तदा परितोऽस्यागाधपाण्डित्यस्य ख्यातिः प्रससार। अत्र नास्ति कश्चिदपि सन्देहो यदयं तस्मिन् काले सकलस्य भारतीयज्ञानस्य विश्वकोष आसीत्। राज्ञा नयपालेनाय विक्रम-शिलायाः 'महापण्डितः' नियुक्तः। अस्य विश्वविद्यालयस्य तथान्येषामनेकेषा प्रायोऽष्टोत्तर-शतमठाना सचालनमस्य हस्ते आसीत्। पाश्चात्यतिब्बतदेशादथवा ङरीप्रदेशात् ( मङ्ङरिस ) ज्ञानप्रभस्य प्रथममामन्त्रणमागतम्, किन्त्वनेन प्रतिपादित यत् "अह वृद्धत्व प्राप्तोऽस्मि। बहूना मठाना तालिका मत्पार्श्वे सन्ति, ममानेकानि कार्याण्यपूर्णानि, अतोऽहं शीघ्र तिब्बतदेशं गन्तुं न पारयामि, अष्टादशमासानन्तरमेव गन्तु शक्ष्यामि"। किन्तु तिब्बतवासिना

धर्मपिपासा प्रबलाऽऽसीत्। तैः पुनरामन्त्रणं प्रेषितम्। एतदभ्यन्तरे दीपङ्करेण भगवत्या तारया सह तिब्बतगमनविषये परामर्शः कृतः, देव्या उत्तर प्राप्त यदनेन तिब्बतवासिनामुपकारो भविष्यति, किन्तु तत्र गमनेन तस्यायुषो विंशतिः वर्षाणि न्यूनानि भविष्यन्ति। तदानीं सोऽष्टपञ्चाशद्वर्ष-वयस्क आसीत्। किन्तु ज्ञानप्रभस्य त्यागकथा श्रुत्वा स स्वविचारे स्थिरो नाभूत्। १०४० तमे खीष्टीयाब्दे स तिब्बतदेश गन्तु सन्नद्धोऽभूत्। पूर्वे स नेपालदेश गतः, अत्रत्यस्य राज्ञ आग्रहेण वर्षैक नेपालनिवासानन्तरं मानसरोवरस्य पार्श्वे १०४२ तमे खीष्टीयाब्दे थोलिङ्मठमागतः। तिब्बतदेश प्राप्तस्य तस्य जना भव्य स्वागत कृतवन्तः। "सीम्नि राज्ञोऽश्वारोहाणा शतत्रय तस्य प्रत्युद्गमनार्थमुपस्थिता आसन्। सकले पथि स्वागतगीत गायन्तो जनास्तेन सह प्रचलिताः" थोलिङ्मठे तेन बोधिप्रदीपनामकः प्रसिद्धो ग्रन्थो विरचितः। १०४४ तमे खीष्टीयाब्दे स मानसरोवरस्य पूर्वस्मिन् सुत्यु-रङ्स स्थाने गतः। अत्र ब्रोम्-स-तोन्नामकस्तस्य शिष्योऽभूत्। अनेन अतिशमहोदयस्यानुयायिना कदम्प(वकऽदम्-पो)नामकः सम्प्रदायः प्रचालितः। १०५४ तमखीष्टीयाब्दपर्यन्त स्वमृत्युपर्यन्तं दीपङ्करमहोदयस्तिब्बतदेशेऽनुवादे धर्मप्रचारे च सलग्न आसीत्। पाश्चात्त्यतिब्बतप्रदेशात् स चङ्युलप्रदेश (ग् च् ल) तथा द्वुसप्रदेश (ल्हासापार्श्वस्थप्रदेशम्) प्रस्थितः। १०४७ तमे खीष्टीयाब्दे स समये मठस्य ग्रन्थभण्डारं दृष्ट्वा चकितोऽभूत्। अत्र स भारतस्य महत्सु विश्वविद्यालयेषु दुर्लभान्यनेकानि ग्रन्थरत्नान्यव-लोकयामास। त्रिसप्ततिवर्षात्मके आयुषि स दिवङ्गतः, किन्तु स्वकीयैः शतद्वयमौलिकरचनाभिरनु-वादैश्च तिब्बतदेशेऽद्यापि तस्य नामाक्षुण्णमस्ति। एषु त्र्यशीतिः संस्कृतग्रन्थाः सन्ति।

**वज्रयानम्**—आचार्येणातिशमहोदयेन तिब्बतदेशे भारतस्य वज्रयानस्य प्रचारः कृतः। मन्त्रयानस्यैवोग्ररूप वज्रयानमस्ति। अष्टमे शतके इद मन्त्रयानात् प्रादुरभूत्, तथागामिषु चतुर्षु शतकेषु (८००-१२००) अस्य महान् प्रचारोऽभूत्। वज्रयानस्य लक्ष्यमपि भूतप्रेतेषु मन्त्रतन्त्रै-र्विजयलाभ आसीत्। किन्तु उपायेष्विमे मन्त्रयानिभ्योऽप्यग्रे आसन्। मन्त्रास्तथा हठयोगास्तु बौद्धधर्मे पूर्वत आसन्। अधुना एतैर्मद्यस्य नार्याश्च प्रवेशः कृतः। स्त्रीसम्बन्धे तु तैर्न केवल जातेः कुलस्य च, किन्तु मातुर्भगिन्याः किं बहुना दुहितुरपि सम्बन्धो न लक्षितः। एतेषा कामुकाना साधकाना कृते शीघ्रमेव सिद्धेर्विश्वासो दत्तः[1]। प्राचीने बौद्धधर्मे बुद्धः, धर्मः, सङ्घश्च त्रीणि रत्नान्या-सन्। एतैर्नीलपटदर्शने लिखितम्—

वेश्यारत्न सुरारत्न रत्नं देवो मनोभवः।
एतद् रत्नत्रय वन्देऽन्यत् काचमणित्रयम्॥

एतैरुपायैः सिद्धिप्रापको जनो वज्राचार्योऽथवा सिद्ध उच्यते स्म। ८००-११७५ तम-खीष्टीयाब्दपर्यन्तं भारते चतुरशीतिः सिद्धा अभूवन्। एकादशे शतकेऽन्तिमात् सिद्धाद् मैत्रीपातात्

---

१. अनङ्गवज्रस्य प्रज्ञोपायविनिश्चयसिद्धिः, (गायकवाड ओरियण्टल सिरीज) पृ० २५

जनयित्रीं स्वसारं च स्वपुत्रीं भागिनेयिकाम्।
कामयन् तत्त्वयोगेन लघु सिध्येद्धि साधकः॥

दीपङ्करश्रीज्ञानेन शिक्षा गृहीता। तिब्बतदेशे तेन तस्य कालचक्रनाम्ना प्रचारः कृतः। कालचक्रस्यैको महान् सिद्धान्तोऽयमस्ति यदादिमो बुद्ध एकोऽस्ति, अवशिष्टा बुद्धास्तत एव प्रादुर्भूताः सन्ति, किन्तु तन्त्राणा देववत् तेषा सर्वेषां बुद्धाना शक्तयः कल्पिताः। हिन्दूना प्रकृतिपुरुषविचारः स्वाभाविकोऽस्ति। किन्तु ब्रह्मचर्यं समर्थयमाने बौद्धसघेऽयं कुठाराघात आसीत्। भगवता बुद्धेन स्त्रीणा भिक्षुणीत्वमादिशतेद प्रत्यपाद्यत यत्—यदि संघः सहस्राणि वर्षाणि प्रचलिष्यति तदाऽनया व्यवस्थया ५०० बर्षाण्येव प्रचलिष्यति, किन्तु यदा तदनुयायिभिर्नव त्रिरत्नं निर्मापित तदा तेषा पतनमनिवार्यमासीत्। अतिशमहोदयस्य वज्रयानमिद तिब्बतदेशे तस्मिन् समये प्रचलितः परम्पराविरोधिनामन्धविश्वासानामपेक्षयाधिकः संघटितः सुसंगतो नियन्त्रितो व्यवस्थितश्च धर्म आसीत्, अतोऽस्य स्थानीये धर्मे विजेताभूत्।

**प्रमुखा भारतीया भोटाश्च पण्डिताः**—आचार्यस्यातिशमहोदयस्य रिनछोनमहोदयस्य च परम्परा एकादशे द्वादशे त्रयोदशे च शतके भारतीयैस्तथा भोटीयैः पण्डितैः प्रवाहिता। एकादशे शतके दीपङ्करमहोदयात् किञ्चित्पूर्वं (१०२७ खी०) काश्मीरपण्डितेन सोमनाथेन तिब्बतदेशे षष्टिवर्षाणा सवत्सराणा नवः क्रमः 'कालचक्रज्यौतिषम्' अनूद्य प्रवर्तित'। तेन सह लक्ष्मीकरः, दानश्रीः, चन्द्रराहुलः सोमनाथश्च तिब्बतदेश प्रस्थिताः। मैत्रीपाशिष्यो वैशाल्याः कायस्थपण्डितो गयाधरः १०७४ खीष्टीयाब्दे तिब्बतदेशे गत्वा भोटीयविदुषा साहाय्येन 'बुद्धकपालतन्त्र-वज्रडाकतन्त्रप्रभृत्यनेकग्रन्थाननूदितवान्। तस्मिन् काले स्मृतिनामकेन पण्डितेनानेकानि वर्षाणि तिब्बतदेशे पशुचारककर्म कृत्वा तिब्बतीयभाषाया असाधारणं ज्ञानं प्राप्तम्। स्मृतिर्विभूतिचन्द्रश्च (१२०४ खी०) ईदृशौ स्तः, याभ्यां तिब्बतीयद्विभाषाविदा साहाय्यमन्तरा भोटभाषायामुत्तमोऽनुवादः कृतः। ज्ञानप्रभस्य भ्रात्रा शान्तिप्रभमहोदयेन (शि-व-डोद) सुजनश्रीज्ञानमन्त्रकलशगुणाकरभद्राणामनुवादैः सह शान्तरक्षितस्य तत्त्वसग्रहस्य स्वयमनुवादः कृतः। शान्तिप्रभानन्तरं तस्य चे-ल्देनामा पुत्रो मानसरोवरस्य शासको भूत्वा १०७६ तमे खीष्टीयाब्दे एकमुत्तमं विद्यालयं स्थापितवान्। डोर्ग ब्ल्मे-ल्दन-शेस्-रबमहोदयं (१०५९-११०८) पठितुं कश्मीरं प्रेषितवान्। तत्रानेन भारतीयेभ्य आचार्येभ्यो न्यायस्य योगाचारस्य च ग्रन्था अधीताः, धर्मकीर्तेः प्रमाणवार्त्तिकस्य प्रमाणविनिश्चयस्य न्यायबिन्दोश्च भोटीयभाषानुवादः कृतः। सप्तदश वर्षाणि कश्मीरेऽवस्थानानन्तरं चतुर्दशवर्षाणि तिब्बतदेशेऽनेनेदं कार्यं प्रवर्तितम्। केनचन भोटीयविदुषा रविकीर्तिनामकेन कश्मीरे त्रयोविंशतिवर्षाणि समधीत्य मातृभाषा आर्यदेवस्य चतुश्शतकशास्त्रस्य, चन्द्रकीर्तेर्मध्यमकावतारस्य तथाभिधर्मकोशस्यानेकगभीरदार्शनिकटीकानामनुवादेन समृद्धि नीता। तिलककलशकनकवर्मादिपण्डितास्तस्य सहायका आसन्।

एकादशे शतके भारतीयपण्डिताना प्रधान केन्द्र पाश्चात्त्यतिब्बतदेशस्य लद्दाखप्रदेशस्य गूगेराज्यमासीत्। अस्मिन् समये ल्हासाप्रदेशे किमपि सुदृढं राज्यं नासीत्। सर्वा च सत्ता शक्तिशालिना मठाना हस्ते आसीत्। १०७३ तमे खीष्टीयाब्दे कोग्यंल (ऽखोन दमोग्र्यल) नामकेन गृहस्थेन धर्माचार्येण ग्चङ्प्रदेशे मौण्ट-एवरेस्टतः पञ्चविंशतिक्रोशेभ्युत्तरस्मिन् सक्य-

( स सुक्य )नामा विहारः स्थापितः। अस्य विहारस्याध्यक्षैर्द्वादशशतकाच्चतुर्दशशतकं यावद् बौद्धधर्मं मङ्गोलियापर्यन्तं प्रापयितुं तिब्बतवाङ्मयस्य च विकासं कर्तुं महत्साहाय्यं कृतम्। कोर्ग्यलमहोदयस्योत्तराधिकारिणा बरिलोचवनामकेन भारते नालन्दाया विक्रमशिलायाश्च महापण्डितादभयाकरगुप्तात् शिक्षा गृहीता। बरिमहोदयस्य पौत्रेण ग्रयुर्सपर्यल-मूछन ( ११४७–१२२६ खी० )नामकेन दिङ्नागस्य न्यायप्रवेशस्यैकस्य तन्त्रग्रन्थस्य चानुवादः कृतः। अस्मिन्नेव शतके खो-फुव्यमुस्-प-द्पल्-महोदयेन काशिराजस्य जयचन्द्रस्य गुरुर्मित्रयोगी ११९८ तमे खीष्टीयाब्दे तिब्बतदेशं नीतः। अनेन तत्र चतुरङ्गधर्मचर्चायाः तिब्बतदेशीयभाषयाऽनुवादः कृतः, १२०० तमे खीष्टीयाब्दे कश्मीरपण्डितं बुद्धश्रियमाहूय तेन च सहाभिसमयालङ्कारस्य टीका लिखिता, प्रज्ञाप्रदीपस्य भाषान्तरञ्च कृतम्। द्वादशस्य शतकस्य प्रारम्भे कश्मीरपण्डितः शाक्यः श्रीभद्रो मगधनरेशस्य गुरुः, विक्रमशिलाविहारस्य प्रधानो नायकस्तस्य युगस्य च महान् विद्वानासीत्। मुहम्मद-बिन-बख्तियारखिल्जीनामकेनास्य ध्वंसे कृतेऽय जगत्तला प्राप्तः। १२०० तमे खीष्टीयाब्दे आमन्त्रणं प्राप्य विभूतिचन्द्रदानशीलसङ्घश्री सुगतश्रीप्रभृतिभिः सह तिब्बतदेशं गतः। सक्यमठाधीशगग्रुमहोदयस्य भ्रातुष्पुत्र उत्तराधिकारी कुन्-द्गऽग्र्यल म् छ न ( ११८२–१२५१ खी० ) महोदयस्तस्य शिष्योऽभूत् ( १२२८ खी० )। तस्मात् स प्रमाणवार्तिकप्रभृतिग्रन्थान् पपाठ। सक्यविहारस्य प्रतिष्ठावर्द्धनस्य मुख्यं कारणं तस्य विक्रमशिलाया अन्तिमेनाचार्येण शाक्यश्रीभद्रेण सम्बन्ध आसीत्। दशवर्षानन्तरमय भारतं प्रति निवृत्तः। खीष्टीयाब्दस्य द्वादशस्य शतकस्यैकेन तिब्बतदेशीयेन शोङ्सतोनदोर्जेग्र्यलमूछनमहोदयेन भारतीयपण्डितस्य लक्ष्मीकरस्य साहाय्येन हर्षस्य नागानन्दस्य, दण्डिनः काव्यादर्शस्य, क्षेमेन्द्रस्य बोधिसत्त्वावदानकल्पलतायाश्च तिब्बतदेशीयभाषयानुवादः कृतः। चतुरशीतिसिद्धाना हिन्दीदोहापदवाच्यानां गीतानाञ्चापि भोटीयभाषानुवादः कृतः।

त्रयोदशे शतके उत्तरभारते तुर्काणा सत्ताया सत्यां भारतस्य बौद्धकेन्द्राण्यनश्यन्। अतो भारतात् पण्डितानामागमनं प्रायोऽवरुद्धम्। केवल भोटीयविद्वास एवानुवादसङ्कलनकार्याणि चक्रुः। चन्द्रगोमिनो लोकानन्दस्य, कालिदासस्य मेघदूतस्य चानुवादोऽभूत्, किन्तु कालस्यास्य सर्वेभ्यो महत्त्वपूर्णा घटना तत्काल यावत् सम्पूर्णतिब्बतदेशीयग्रन्थाना कञ्जुर-तञ्जुरनामकयोर्द्वयोर्महतोर्भागयोर्विशालः संग्रह आसीत्। बुस्-तोन-रिन-छेन-ग्रुब ( १२९०–१३६४ )-महोदयेनेदं कार्यं सम्पादितम्। सक्यमठेऽध्यापयतानेन तत्रत्यो विशालः पुस्तकालयः पर्यवेक्षितः। अनेन स्वकालपर्यन्तमनूदितस्य सकलस्य तिब्बतीयवाङ्मयस्य भागद्वये संग्रहं कृत्वा तत् स्वतत्त्वावधाने निश्चितक्रमेण लेखितम्। ग्रन्थाना सूची निर्मिता, कलापधातुकाय-त्याद्यन्तप्रक्रियाप्रभृतिग्रन्थानामनुवादः कृतः, स्वयञ्च बहवो ग्रन्था लिखिताः। तेषु १३३२ तमे खीष्टीयाब्दे लिखितो बौद्धधर्मस्येतिहासोऽप्यस्ति। १३६४तमे खीष्टीयाब्दे शक्यविहारेऽस्य मृत्युना साकं तिब्बतीयवाङ्मयस्य महत्त्वपूर्णयुगस्य पटाक्षेपो भवति। इदमुच्यते यद् भोटे तादृशः कश्चनाद्यावधि विद्वान् नाभूत्।

**लामावादो मठानां राजनीतिकप्रभुता च—**युगेऽस्मिन् पुरोहितानां मठानाञ्च राजनीतिकप्रभुत्वस्य विशेषेण विकासोऽभूत्। एकादशद्वादशशतकयोर्जापानदेशवत् तिब्बतदेशेऽपि पुरोहिताः प्रबला अभूवन्, किन्तु जापानदेशे तेषां प्रतिद्वन्द्विनः शक्तिशालिनो ग्रामपतय आसन्। नोबुनागानामधेयेन ग्रामपतिना दमनं कृत्वा तेषां राजनीतिकप्रभावः समाप्तिं नीतः, किन्तु तिब्बतदेशस्य परस्परं विवदमानानां लघूनां ग्रामपतीनां कस्मिन्नपि सामर्थ्यमिदं नासीद् यत् स मठानां शक्तिं नाशयेत्। जना अन्धविश्वासापन्ना भिक्षूणां विहारस्य निर्माणे च सन्नद्धा आसन्। तिब्बतदेशस्य भयङ्कराच्छीतात् त्रातुं ते विहारा अतीव पुष्टा निर्मीयन्ते स्म, भोज्यपदार्थैः सदा संभ्रियन्ते स्म। विहाररूपेण निर्मितानीमानि दुर्गाण्यतीव दुर्धर्षाण्यभूवन्। मठाधीशास्तेभ्यः प्राकारेभ्यः पार्श्वस्थान् प्रदेशान् शासति स्म। तस्मिन् युगे तादृशा अनेके मठा निर्मिता आसन्। तेषु सक्यविहारस्य शक्तिः सर्वतः प्रबलावर्तत। अतः स शनैः शनैः पार्श्वस्थानां प्रदेशानां शासकोऽभूत्, तथा मङ्गोलैः समर्थितः सकले तिब्बतदेशेऽधिकारं स्थापयितुं यतितवान्। तत एव कालात् तिब्बतदेशस्य सकलं शासनं लामानां हस्ते समागतम्। इदमेकं विलक्षणसमसमयत्वमस्ति यत् त्रयोदशस्य शतकस्य प्रारम्भे यदैकतः चंगेजखाँनाम्ना प्रसिद्धो नेता विविधान् मङ्गोलसमुदायान् एकताया दृढे सूत्रे संसीव्य विश्वं विजेतुं संनह्यति स्म, तदैव सङ्घराजेन सक्यपण्डितेन कुन-द्गऽग्र्यलम्छन( ११८६–१२५१ )महोदयेन मङ्गोलानां धर्मविजयो निश्चितः। १२२३ तमे खीष्टीयाब्दे मंगोलानां पार्श्वे धर्मप्रचारकाः प्रेषिताः। १२४३ तमे खीष्टीयाब्दे सङ्घराजः स्वकीयौ भ्रातुष्पुत्रौ अफग्सप-प्यग्-ननामानौ धर्मप्रचारार्थं मङ्गोलियां प्रति प्रेषयामास। १२४६ तमे खीष्टीयाब्दे स स्वयं मङ्गोलसम्राजं साक्षात्कृतवान्। १२४७ तमे खीष्टीयाब्दे सम्राजो गुरुरभूत्। तत्पर्यन्तं तिब्बतदेशे मङ्गोलानां प्रभावः स्थापितोऽवर्तत। १२४८ तमे खीष्टीयाब्दे सम्राजा द्बुस-ग्चङ्प्रदेशौ स्वगुरवे समर्पितौ। तिब्बतदेशे सङ्घराजानां शासनस्य सूत्रपातोऽजायत। १२५० तमे खी०धर्मप्रचारकार्ये व्यापृत एव स सङ्घराजो दिवङ्गतः।

**मङ्गोलानां बौद्धधर्मस्याङ्गीकरणम्—**सक्यपण्डितस्य मृत्योरनन्तरं तस्य भ्रातुष्पुत्रः अफग्स ( आर्यः ) नामा सक्यविहारस्य प्रमुखोऽभूत्। अयमपि बौद्धधर्मस्यासाधारणो विद्वानासीत्। तस्मिन् काले खुबलैहान् ( कुबलैखां ) महोदयो मङ्गोलानां कृते एतादृशं नूतनं धर्मं स्वीकर्तुं वाञ्छति स्म, यस्तान् साहित्यसंस्कृतिभ्यां सुरक्षेत्। तदा मङ्गोलानां राजसभायां खीष्टानुयायिधर्मः, इस्लामधर्मः, ताओधर्मो बौद्धधर्मश्च प्राप्ता आसन्। तेषु तेषां प्रवृत्तिः कतिपयैः कारणैर्बौद्धधर्मे आसीत्। खीष्टानुयायिधर्मस्य मूलस्थानं योरोपदेशोऽतीव दूरे आसीत्, इस्लामधर्मो राजनीतौ हस्तक्षेपं करोति स्म। अन्तिमो निर्णयस्ताओधर्मे बौद्धधर्मस्य तिब्बतदेशीयरूपे लामावादे चासीत्। गतेऽध्याये कुबलैमहोदयस्य बौद्धत्वस्वीकारकथाया उल्लेखोऽस्ति। तिब्बतदेशीयवृत्तान्तेनात्र चमत्कृतिरागो लिप्तः। श्रूयते यत् सम्राजा सर्वे ईसाईप्रभृतिविभिन्नधर्मावलम्बिन आदिष्टा यच्चमत्कारं प्रदर्श्य स्वधर्मस्य श्रेष्ठत्वं प्रतिपादयन्तु। ईसाईधर्मावलम्बिनः कमपि चमत्कारं प्रदर्शयितुं नाशकन्। किन्तु लामासंज्ञका पुरोहिता मद्यचषकं सम्राज ओष्ठं नीतवन्तः। सम्भवतो द्वाभ्यां कारणाभ्यां कुबलैमहोदयेन लामाधर्मो राजधर्मरूपेणाङ्गीकृतः।

प्रथमं कारणमिदमासीद् यदन्यधर्मापेक्षया धर्मोऽयं मङ्गोलानां भूतप्रेतवादैर्निर्विवेकविश्वासैश्चाधिकं साम्यमादधाति स्म। तिब्बतवासिना मङ्गोलानाञ्चैकमेव बौद्धिक धरातलमासीत्। द्वितीय कारणमिदं यत् तिब्बतदेशे सेनाभियान स्वशासनञ्चातीव कठिनमासीत्। किन्तु तेनोपायेन लामाख्यान् पुरुषान् प्रसाद्य तत्र स्वप्रभुत्व सम्यक्तया स्थापयितु शक्यते स्म। किमपि भवतु, १२६१ तमे खी० कुब्लैमहोदयेन सक्यस्य सङ्घराजः फग्पः (फ्-गस्य) आहूतः। तस्माल्लामाधर्मस्य दीक्षा गृहीता, मङ्गोलैतिहासिकसनङ्सेचेनमहोदयस्य कथनानुसारेण स उन्नतमासनमारुह्य सम्राजमुपदिशति स्म। चीनदेशे स 'राष्ट्रगुरुः' अथवा 'कुओ-शिह' इत्युपाधिना भूषितः। सम्राजा स सकलस्य तिब्बतदेशस्य धर्माध्यक्षत्वेन शासकत्वेन च स्वीकृतस्तस्य साहाय्यार्थं च परिषदेका प्रतिष्ठापिता। मङ्गोलसम्राजो बौद्धधर्मस्याङ्गीकरणेन यत्रचैकतो मङ्गोलियादेशे बौद्धधर्मः प्रसृतः, तत्रान्यतस्तिब्बतदेशे चीनस्य प्रभावोऽवर्धत।

फग्सपमहोदयस्य निरीक्षणे त्रिपिटकस्य चीनीय संस्करणमभूत्। तेन तिब्बतदेशीयभाषामाश्रित्य मङ्गोलेष्वेकस्या नूतनाया लिपेः प्रचालनस्यासफलः प्रयासः कृतः। तस्य धर्मे पौराणिकत्वस्य गम्भीरः प्रभाव आसीत्। श्रूयते यत्तस्य जन्मतः पूर्वं तस्य पिता गणेशः सकल तिब्बतदेश प्रदर्श्याकथयत्—तव पुत्रोऽस्य शासको भविष्यतीति। चीनराजसभाया यदा तेन काठिन्यमनुभूत तदा महाकालस्तस्य साहाय्यमकरोत्। १२८० तमे फग्सपमहोदयः पञ्चत्वमुपागतः।

मङ्गोलाः १३६८ तमखीष्टीयाब्दपर्यन्तं लामावादाय पूर्णतया राजसरक्षण प्रददुः। सक्यविहारेण शासनसूत्रस्य स्वहस्ते आगमनसमकालमेव १२५२ तमे खीष्टीयाब्दे भोटप्रदेशस्य त्रयोदश प्रान्ता विजिताः। १२७०–१३४० पर्यन्त सक्यमठस्य सङ्घराजः तिब्बतदेशस्य शासकोऽभूत्। तेन स्वविरोधिना दमने कोऽपि प्रयत्नो न त्यक्तः, १३२० तमे खीष्टीयाब्दे स्वप्रतिस्पर्द्धी दिमुङ्मठः प्रज्वालितः। किन्तु सक्यमठस्य सत्ताया मुख्य आधारो मङ्गोला आसन्। चीनदेशे तेषा शक्तौ क्षीणाया तिब्बतदेशे सक्यमठस्य प्रभावः क्षीणोऽभूत्। १३६२ तमे खीष्टीयाब्दे युआन-वंशस्य समाप्त्या साक तेषा सत्तापि समाप्ता।

राजसत्ता प्राप्य तिब्बतदेशे बौद्धसङ्घेऽनेकास्त्रुटयः समागताः। मठाना नियन्त्रणमत्यधिकं शिथिलतां गतम्, अनाचारा वृद्धिं याताः। अनेके नवाः सम्प्रदायाः प्रादुरभूवन्। आचार्यशान्तरक्षितस्यानुयायिनो बौद्धधर्मस्य भूतप्रेतपूजां मन्त्रतन्त्रादिप्रथाञ्च स्वीकृत्य निर्विवेकविश्वासान् वर्द्धयन्ति स्म। एतादृशे समये कस्यचन युगप्रवर्तकस्य जन्मावश्यकमासीत्।

**लामावादस्य विकासः—**अस्य युगस्य सर्वतो महती घटना लामावादस्य विकासोऽस्ति। लामावादस्य द्वौ विशिष्टौ सिद्धान्तौ स्तः। (१) देवाना मनुष्यरूपेणावतारः, (२) एकस्मिन् सघे मठे वा जीवनमखण्डरूपेण प्रचलति। सङ्घमखण्ड रक्षितु पूर्वन्तु तिब्बतदेशे वंशपरम्परातो मठाधीशा भवन्ति स्म, किन्तु ब्रह्मचर्यनियमस्य समर्थनेन सा परम्परा भग्नेव प्रतीता। अतोऽवतारवता लामाना सिद्धान्तः स्वीकृतः। तदनुसारेणेद मन्यते यन्मरणानन्तर झटित्येव लामानामात्मा द्वितीयं शरीर प्रविशति। पूर्वलामामृत्योरनन्तरमुत्पन्नशिशूना परीक्षा कृत्वेद

निश्चीयते यत् तस्यावतारः कस्मिन् शिशौ जातोऽस्ति, स एव लामापदेऽभिषिच्यते। तिब्बतदेशेऽस्य सिद्धान्तस्य सर्वप्रथम प्रचारस्त्रयोदशे शतकेऽभूत्। किन्तु तद्युगपर्यन्तमयं सिद्धान्तः स्वविकासस्य चरमा सीमा प्राप्तः। लब्रोलंघोमंठस्याधीशाद् दलाईलामापर्यन्तं सर्वे तेनैव प्रकारेण निर्वाअनन्ते स्म। अस्याः प्रथाया एतावतोऽधिकस्य प्रचारस्य कारण स्पष्टमस्ति, लामाना बाल्ये मठस्य सकलाः सम्पत्तयः स्वार्थिना हस्ते भवन्ति स्म, अवतारवता लामाना पित्रोः सम्बन्धिनाञ्च कृते मठ. पैतृकसम्पत्तिर्जायते स्म। सरक्षकाः सकला शक्ति स्वहस्ते कर्तु लामाना दीर्घजीवित्वमनाशयन्। प्रायो लामाना विंशतिवर्षात्मकेऽल्पवयस्येव देहावसान भवति स्म।

**दलाई-लामा**—१९५९ खीष्टीयाब्दपर्यन्त तिब्बतदेशस्य शासका महान्तो धर्मगुरवश्च दलाईलामेति नाम्ना प्रसिद्धाश्चतुर्दश पुरुषा अभूवन्। दलाई-लामोपाधिस्तु पश्चात् प्रचलितः। किन्तु तस्याः परम्पराया आद्यप्रवर्तकः चोङ्ख-प महोदयस्य शिष्यः द्गे ऽदुन् ग्रुब ( १३९१ १४७४ ) इत्यासीत्। अनेन टशीन्हुल्पो ( वक्र-शिस्-ल्हुन्-पो कीर्तिपुञ्ज ) नामको विहारः स्थापितः। अस्यैवासनेऽग्रे दलाईलामा उपाविशत्। प्रारम्भेऽय केवलमस्य मठस्याध्यक्ष एवासीत्, किन्तु शनैःशनैर्घटनाचक्रेण सर्व शासनमस्योत्तराधिकारिणा हस्ते समागतम्। पञ्चदशे षोडशे च शतके तिब्बतदेशः सुदृढस्य केन्द्रीयशासनस्याभावे विभिन्नाना मठाना सशस्त्रप्रतिद्वन्द्विताया: केन्द्र जातम्। अभितो मारणलुण्ठनाराजकताना साम्राज्यमासीत्। किन्तु तस्मिन् समये टशीलुम्पो-गेलुग्सम्प्रदायस्य लामाख्याः पुरोहिताः स्वप्रचारकार्य न परितत्यजुः। चोङ्-ख-पोनामकेन तच्छिष्यैश्च सस्थापिता द्गऽलदन्-सेरे-टशीन्हुम्पो-डेपुङ्मठा धर्मप्रचारस्य विद्याप्रचारस्य च केन्द्राण्यभूवन्। तत्र तिब्बतदेशस्यैव नहि, अपि तु मङ्गोलियाप्रदेशस्य साइबेरिया प्रदेशस्य च भिक्षवः पठितु समागच्छन्ति स्म। अतो गेलुग्प-सम्प्रदायस्य प्रतिष्ठा वर्द्धितुमारेभे। अनेन साकमेव टशीलुम्पोविहारस्य लामाभिर्मङ्गोलियाप्रदेशे धर्मप्रचारकार्यमपि कृतम्। १५७७ तमे खीष्टीयाब्दे टशीलुम्पोविहारस्य तृतीयपीठाधिष्ठितः ( दलाईलामा ) अस्य कार्यस्य कृते स्वय मङ्गोलियादेश गतः। तृतीयेन लामामहोदयेन मङ्गोलियाप्रदेशेऽनेके विहाराः स्थापिताः। १५८२ तमे खीष्टीयाब्दे एको मङ्गोलशिशुः टशीलुम्पोविहारस्य चतुर्थः सङ्घराजो निर्वाचितः।

अनेन गे-लुग्-पसम्प्रदायस्य मङ्गोलैः सह दृढतरोऽभूत् सम्बन्धः। अय मङ्गोललामा अधिकवयाः सन् यदा ल्हासाप्रदेश समागतस्तदा उरगा ( ओर रगोमङ्गोलिया ) प्रदेशे तस्य प्रतिनिधिः स्थापितोऽभूत्। स तद्वंशजाश्च क्रमेण मैत्रेयस्य तारानाथस्य चावतारा अमन्यन्त।

ततः पञ्चमो लामाः सुमतिसागरोऽथवा लोजङ्महोदयो ( १६१७-१६८० ) जातः। तेन स्वयोग्यतया दलाईलामाना तिब्बतदेशे धार्मिकी राजनीतिकी च प्रभुता स्थापिता। तस्य मठाधीशत्वप्राप्तिकाले राजनीतिदृष्टया खम्द्दो( पूर्व )बु( द्बुस अथवा मध्य )चङ् ( पश्चिम ) नामकैस्त्रिभिर्भागैर्विभक्तस्तिब्बतदेश आसीत्। १६३० तमे खीष्टीयाब्दे चङ्प्रदेशस्य शासको ल्हासाप्रदेश विजित्य सकलस्य तिब्बतदेशस्य शासकोऽभूत्। स सक्यसम्प्रदायस्यासीत्। तिब्बतदेशस्य मठान्तराणि गे-लुग्-पमठाना वर्द्धमानायै प्रभुतायै असूयन्ति स्म। तानि सैनिकैस्तेषामन्त वाञ्छितवन्ति। १६१८ तमे खीष्टीयाब्दे गृचङ् इत्येतस्य सेना गे-लुग्-प-

सम्प्रदायस्य डेयुङ्विहारमाक्रम्य सहस्राणि भिक्षून् जघ्नुः। सुमतिसागरस्य (लोजङ्) गेलुग्पसम्प्रदायस्य च सोऽतीव सङ्कटमयः समय आसीत्। तदानीं लोजङ्महोदयेन मङ्गोलेभ्यः साहाय्य प्राप्तु निश्चितम्। गुरुश्री (गुशी) खाननामक मङ्गोलग्रामपतिं साहाय्य याचितवान्। अथ लोजङ्नामकस्य गुरोः छोस्-क्यि-ग्यल्-चनमहोदयस्य शिष्यस्तदा कोकोनोरवासिना किन्तु मुकाना पूर्वजस्य ओइलोतफिरकेप्रदेशस्य राजाऽऽसीत्। गेलुग्पसम्प्रदायस्य नितरा सा.थकित्वेन तेन लोजङ्महोदयस्य प्रार्थना श्रुत्वा तिब्बतदेश आक्रान्तः। सकल देश विजित्य गुरुचरणेभ्यः समर्पयितु प्रतिज्ञातम् (१६४२ खी०)। अमु समर्पणविधि सम्पादयितु कोकोसरोवरस्य समीपे मङ्गोलग्रामपतेः लोजङ्महोदयस्य च सम्मेलन महता समारोहेणाभूत्। मङ्गोलैतिहासिकेन सनङ्सेछेनेनात्यन्तं मनोरञ्जक विवरण लिखितम्। तस्मिन्नवसरे धर्मराज्ये सूर्यचन्द्राभ्यामुपमिते स्तः। लामामहोदयो गुश्री इत्येनं 'दिव्यमहाब्रह्मा' (ल्-हई-छङस्-प-चन पो) इत्युपाधिना सत्कृतवान्, मङ्गोलग्रामपतिना (खगन) लामामहोदयः तलै इति पदेन भूषितः। मङ्गोलभाषायास्तलै इति शब्दस्यार्थोऽस्ति समुद्रः। पदमिदं तस्य समुद्रसदृशागाधपाण्डित्यगाम्भीर्यस्यापरिमेयविशालतायाश्च द्योतकमासीत्। अस्यैव तिब्बतीयरूप 'दलाई' इत्यस्ति। मङ्गोलपुरोहितवर्गस्य नूतनपद्धत्या व्यवस्था कृता। मांसोपयोगः सकोचं नीतः, मृतानां संस्कार आवश्यकः कृतः, स्थानीया देवा नाशिता बौद्धरूपेण वा परिणमिताः। दलाईलामा मङ्गोलान् प्रेरितवान् यत्ते षड्भुजम्, गणेशे स्थित शिवैकरूप भीलमहाकालं सेवन्ताम्। १५८३ तमे खीष्टीयाब्देऽयं पुनः मङ्गोलिया गतः।

तावद् दलाईलामा धार्मिको गुरुरासीत्, अद्यत्वे तु स राजनीतिकः शासकोऽप्यभूत्। ल्हासाप्रदेशे राज्ञा प्राचीनेषु निवासस्थानेषु मरपुरापर्वतके तेन १६४५ तमे खीष्टीयाब्दे पोतलनामकः प्रासादोऽकारि तत्र च निवासः कृतः। अनुश्रुतिः प्रसिद्धास्ति यद् अवलोकितेश्वरः पोतलप्रदेशे निवसति। दलाईलामा तस्यावतारो मन्यते स्म। अतस्तस्य पोतलनिर्माणमावश्यकमासीत्। १९५९ तमे खीष्टीयाब्दे साम्यवादिचीनदेशस्याधिकारिभिः सत्रस्तस्य चतुर्दश-दलाईलामामहोदयस्य पलायनात् पूर्वं तिब्बतदेशस्य राजनीतिक केन्द्रं पोतलमेवासीत्।

**लामावादस्य रूसदेशे साइबेरियाप्रदेशे च प्रचारः**—तिब्बतदेशस्य लामावादो भोटप्रदेशे एव सीमितो नाभूत्, किन्तु तस्य प्रचारो योरोपीयरूसदेशे, साइबेरियाप्रदेशे, मगोलियाप्रदेशे, मञ्चूरियाप्रदेशे, सिक्किमराज्ये, भूटानराज्ये, लद्दाखप्रदेशे चाप्यजायत। अन्याः प्रदेशास्तु तिब्बतदेशेन भारतेन च सम्बद्धाः सन्ति। तेषा विषये पृथग् वक्तव्य नास्ति। पूर्व प्रदेशद्वये तस्य प्रचारो मङ्गोलैः कृतः। तिब्बतवासिभिर्मङ्गोलेषु बौद्धधर्म. प्रसारित इति तु पूर्वमेवोल्लेखो जातः। मङ्गोलानामेका शाखा कल्मुक इति नामधेया सप्तदशे शतके जुगारियाप्रदेशात् पश्चिमाभिमुखं प्रसरन्ती रूसदेशं प्राप्ता। गते शतके वोल्गा-दोननद्योस्तटे लामाधर्मानुयायिनस्तज्जातीया लक्षपरिमिताः सम्भाव्यन्ते स्म। एशिया-रूसे ८२,००० किरगीज इत्याख्याः, १,१९,१६२ कलमुखाश्च लामानुयायिन आसन्। अथ च बेकालसरोवरस्य तटे साइबेरियाप्रदेशे १,९०,००० बुरियत इति नामका अपि बौद्धा आसन्। १९१७ तमे खीष्टीयाब्दे तेषु प्रदेशेषु सोवियतसङ्घस्य शासनस्थापनेन लामावादः काम क्षीणोऽभूत्।

**मङ्गोलियाप्रदेशः**—मङ्गोलियाप्रदेशे ( क्षेत्रफलम् २०००००० व० मी०, जनसंख्या १० लक्षाणि ) लामावादस्य प्रचारो द्विवारमभूत्। प्रथमं कुबलैखां महोदयस्य शासनकाले मङ्गोला बौद्धा अभूवन्, किन्तु १३६८ तमे खीष्टीयाब्दे चीनदेशे मङ्गोलराजवंशस्यान्तोऽभूत्। अनेन सहैव मङ्गोला अपि तत्परित्यागं कृत्वा प्राचीनान् धार्मिकविश्वासान् पालयितुं प्रारभन्त। १५७७ तमे खीष्टीयाब्दे तृतीयेन दलाईलामामहोदयेन मङ्गोलाना पुरः पुनर्बौद्धधर्मसन्देशः श्रावितः। विगते शतके सकलो मङ्गोलियाप्रदेशो बौद्ध आसीत्। अधुना तस्य भागद्वयमस्ति। उत्तरो भागो बाह्यमङ्गोलिया कथ्यते, दक्षिणो भागश्चाभ्यन्तरमङ्गोलिया। बाह्यभागे रूसदेशस्याधिकः प्रभावोऽस्ति, आभ्यन्तरे भागे च चीनदेशस्य प्रभावः। अत्र लामावादः शनैः शनैः क्षयं याति।

वर्तमाने काले मङ्गोलियाप्रदेशस्य बौद्धसाहित्यस्यानुसन्धानं रूसजर्मनीजापानदेशीयपण्डितैरक्रियत। जर्मनदेशीयभाषाया सुवर्णप्रभास सूत्रयोः कालमुक ( पश्चिममङ्गोल ) उइगूरानुवादौ प्रकाशितौ स्तः। रूसदेशीयपण्डितैः १९२४ तमे खीष्टीयाब्दे जापानदेशीयपण्डितैश्च १९२९ तमे मङ्गोलभाषायास्तञ्जुरनामकं वाङ्मयं गवेषितम्।

**मञ्चूरियाप्रदेशः**—मञ्चूरिया ( ५ लक्षवर्गमीलपरिमितं क्षेत्रफलम्, जनसंख्या ३,२० लक्षाणि ) प्रदेशस्याधिकाशा जना लामावादिनः सन्ति। १९३२ तमखीष्टीयाब्दपर्यन्तमयं चीनदेशस्यांश आसीत्। ततो जापानदेशेनात्र मञ्चुकुओराज्यं स्थापितम्। द्वितीयविश्वयुद्धे जापानदेशस्य पराजयानन्तरमयं देशः स्वतन्त्रोऽभूत्। अत्रत्यतो विहाराद् वाल्टरवुखसनामको जर्मनपण्डितो मञ्चूरियाप्रदेशस्य कञ्जुरस्य पुस्तकद्वयं प्राप्नोत्।

**गायत्रीमन्त्रस्य प्रसारः**—मङ्गोलियामञ्चूरियाप्रदेशयोर्विषये इदमेकमुल्लेखनीयं तथ्यमस्ति यद् बौद्धधर्मस्य प्रचारेण सहात्र हिन्दुधर्मस्य गायत्रीमन्त्रस्यापि प्रसारोऽभूत्। मङ्गोलाः स्वेन सह तं चीनदेशं तिब्बतदेशञ्च नीतवन्तः। मङ्गोला यस्य मन्त्रस्यार्थं न जानन्ति, अस्य पाठमेव कुर्वन्ति, मन्यन्ते च यदस्य विभिन्नाना शब्दानामुच्चारणेन प्रभावं उत्पादयितुं शक्येत। मन्त्रस्यार्थज्ञानाभावेन 'ओम्' इति विहाय तत्र शब्देषु सर्वेषु न्यूनाधिको विकारः समागतः। अद्यत्वे मङ्गोलियाप्रदेशे मञ्चूरियाप्रदेशे चीने तिब्बते चास्य यद्रूपं लभ्यते तत् कोष्ठेषु लिखितेन शुद्धोच्चारणेन साकं निम्नलिखितमस्ति—

ओं भुर भुव स्व। स ततु सबिदुरि वरिनन्।
( ओ ) ( भूर् ) ( भुवः ) ( स्वः ) ( तत् ) ( सवितुर् ) ( वरेण्यम् )
बरिवु मिवहि तिनहे त्यु। यु न प्रजुनयतु ॥
( भर्गो ) ( देवस्य ( धीमहि ) ( धियो ) ( यो ) ( नः ) ( प्रचोदयात् )

## तिब्बतदेशे भारतीयधर्मकलासाहित्यानि—

**धर्मः**—उपर्युक्तवर्णनेन स्पष्टमस्ति यत् तिब्बतदेशस्य सभ्यतासंस्कृतिपाठकं भारतवर्षमेवासीत्। धर्मस्य साहित्यस्य कलायाश्च प्रत्येकं क्षेत्रे तिब्बतदेशस्योपरि भारतस्य ऋणमस्ति। इदं

पूर्वं निवेदितमस्ति यत् तिब्बतदेशस्य धर्मो मध्ययुगस्य ( सप्तमाष्टमशतकाभ्यां द्वादशशतकं यावत् ) बौद्धबोनधर्मयोर्विचित्रं सम्मिश्रणमस्ति। मध्ययुगस्य बौद्धधर्मः स्वयमेव हिन्दुबौद्धधर्मयोर्मेलनमासीत्। चीनजापानप्रभृतिदेशान्तरवद् बौद्धधर्मस्य मुख्यविचारास्तु तिब्बतदेशेन भारताद् गृहीताः, किन्तु तेषां विकासः स्वरीत्या कृतः। तिब्बतदेशस्य बौद्धधर्मे द्वौ आधारभूतौ विचारौ स्तः—( १ ) स्वपरितः प्राप्यमाणानां दुरात्मनां भूतप्रेतानामनुभूतिः तेषाञ्च वशीकरणस्य यत्नः, ( २ ) मनुष्येषु देवानां पूर्वजानाञ्चावतारमननम्। विचारद्वयस्य पादपो भारताद् गतः, किन्तु तिब्बतदेशस्य विचारेण परिस्थित्या प्राचीननिर्विवेकविश्वासैश्च प्रभावितेन तेन नवं रूपं धृतम्। प्रथमस्य विचारस्य विषये इदमुच्यते यत् तिब्बतवासिभिर्देवानां विकरालं रूपं समर्थितम्। हिन्दुधर्मे काल्याः कालभैरवस्यान्येषां भीषणदेवानां न्यूनता नासीत्, किन्तु ततः प्रेरणां प्राप्य सकलानां देवानां विकरालत्वस्थापनं तिब्बतमस्तिष्कस्यैव कार्यम्। तिब्बतदेशः शिरसश्चक्रभ्रमकारकस्यौन्नत्यस्य, हृदयकम्पनकारकगभीरगर्तस्य, प्राणान्तकारकशैत्यस्य च स्थानमस्ति। तत्र मरुस्थलानां कच्छानां वनस्पतिहीनातिशीतलप्रदेशेषु मनुष्यैर्विकरालपरिस्थितिमनादृत्य जीविकोपार्जनीया भवति। तादृश्यां दशायां तत्रत्यानां देवानां विकरालत्वं स्वाभाविकमस्ति। द्वितीयस्मिन्नपि विचारे तिब्बतदेशेन परिवर्तितम्। भारते प्रायो मृता मनुष्या देवत्वं प्राप्नुवन्ति, किन्तु चीनदेशे जापानदेशे च जीवितानां पुरुषाणां बुद्धत्वबोधिसत्त्वाङ्गीकरणस्य प्राचीना परिपाट्यासीत्। मङ्गोलियाप्रदेशस्य बोनधर्मस्य च मान्त्रिकाः स्वेषु देवावतरणं मन्यन्ते स्म। लामावादस्तस्यैव विकसितं रूपमस्ति। लामावादः स्वतन्त्रो धर्मोऽस्तीति कथनापेक्षयेदं प्रतिपादनमधिकमुचितं यदिदं मध्ययुगवर्तिनोर्बौद्धहिन्दुधर्मयोरेव कतिपयविशिष्टदशास्वधिकं विकसितं बृंहितञ्च रूपमस्ति।

तिब्बतीयदेवानां पर्यवेक्षणेनेदं सम्यक्तया स्पष्टं भविष्यति। चोङ्-ख-प-महोदयेन संशोधिते धर्मे तिब्बतस्य संरक्षकोऽवलोकितेश्वरः स्वीकृतोऽस्ति। दलाईलामास्तस्यावतारः। तिब्बतदेशे शाक्यमुनिबोधिसत्त्वामिताभमैत्रेयमञ्जुश्रीप्रभृतीनां विविधानां रूपाणां पूजा क्रियते। भूतप्रेतानां विषये तिब्बतदेशीयास्तान्त्रिका भारतीयान् तान्त्रिकाननुसरन्ति। ते तेषां समुपासनापेक्षया मन्त्रतन्त्रे मण्डलेन वशीकरणञ्च समर्थयन्ते। तेषु सिद्धानामधिकारः स्वीकृतः। देवापेक्षया देव्यो विशेषेण पूज्यन्ते। तासामाविर्भावस्य बहूनि रूपाणि स्वीक्रियन्ते। भारतवद् देवो द्विधा विभज्यते—(१) जनानां स्वस्य विशिष्टः संरक्षक इष्टो देवः ( यिदम ), (२) धर्मस्य देशस्य चाधिष्ठाता रक्षको वा देवो धर्मपालोऽथवा छोस्-स्क्योङ्। प्रत्येकं लामाः स्वमेकं देवं विचिन्त्य प्रतिदिनं भूतप्रेतानां निर्वासनाय तं प्रार्थयते। अधिष्ठातारो देवाः प्रायो वज्रधरवज्रसत्त्वादयो भवन्ति। तेषां हस्ते पिशाचानां संहाराय वज्रं विराजते।

**हिन्दुदेवताः**—प्राय इदं मन्यते यत् तिब्बतदेशे बौद्धधर्मस्यैव देवाः पूज्यन्ते, किन्तु वस्तुतः सा स्थितिर्नास्ति, तत्र पौराणिका अपि देवाः सम्यक् पूज्यन्ते। तस्य मुख्यं कारणमिदं यत् तत्र यो बौद्धतन्त्रवादो गतस्तस्मिन् हिन्दुतन्त्रवादः सम्यक्तया सम्मिश्रित आसीत्। तिब्बतदेशीया विकरालदेवोपासकाः सन्ति। अतस्तेभ्यः शिवस्य रौद्ररूपं तस्य भयङ्करगणा अतीवारोचन्त।

शिवस्य महाकाल-सवर-हेवज्र-बुद्धकपाल-यमान्तकप्रभृतिरूपाणा तत्र पूजा जायते। धर्मस्य देशस्य वा रक्षकाणा भीषणानामष्टाना देवाना विशेषेण शिवरूपाणि सन्ति, अथवा तत्सम्बद्धानि विद्यन्ते। तेषु महाकाल-ल्ह-मो ( दुर्गा ) ल्चमसङ् ( कार्तिकेय ) यम-हयग्रीव-यमान्तक-कुबेराश्च मुख्या.[१]। श्वेतब्रह्म( थसङ्-सूप-द्करयो )नामको देवः कल्केस्तिब्बतीय रूप मन्यते। ब्रह्मा, दिक्पालाः, त्रयस्त्रिंशद् देवाः, नागाः, यक्षाः भारतवत् सत्क्रियन्ते। इद स्मर्तव्य यत् तिब्बतदेशे भारताद् गताना देवाना स्थान श्रेष्ठम्, स्थानीयाः प्राचीनाश्च देवास्तदधीनाः।

**देव्यः**—देवीना सर्वाधिका प्रतिष्ठा ताराया अस्ति। तिब्बतदेशीयास्तां स्-ग्रोल्मा इति, मङ्गोलाश्च दर-आका इति कथयन्ति। एषा अवलोकितेश्वरस्य पत्नी सत्यपि स्वतन्त्रा सत्तामादधाति, विविधरूपाणि च प्रकटयति। प्रारम्भे लक्ष्मीसदृश्युपकर्त्री सौम्यदेवी सत्यपि पश्चात् चण्डीसदृशं विकराल रूप धृतवती। सामान्यत एकविंशतिस्ताराः पूज्यन्ते। मङ्गोलाः श्वेततारा विशेषत उपासते। रूसदेशस्य जारोऽस्यैवावतारो मन्यते स्म। तिब्बतदेशे हरिततारायाः सर्वाधिक्येन पूजा भवति।

**गुरुमन्त्रः**—तिब्बतवासिना गुरुमन्त्रः 'ओ३म् मणिपद्मे हुम्' इत्यस्ति। तिब्बतवासिनोऽमु मन्त्र सर्वसुखद जन्ममरणबन्धनमुक्तिद मन्यन्ते। एनं पत्रे कौशेये च सहस्रकृत्वो लक्षकृत्वो वा विलिख्य परिवेष्टितञ्च कृत्वा नलिकायामेकस्या निदधति। अस्य नलिकाया भ्रमणेनेद मन्यते यद् भक्तेन तावद्वार मन्त्राः पठिता यावत् तस्या नलिकायाः पत्रे लिखिताः सन्ति। मालापरिवर्तने महत्कष्ट जायते, इद तस्यात्यन्तं सरल रूप विद्यते। भारतेनाद्य यावत् तादृशः सरल उपायो जपस्य नान्विष्टः। अथ महाविवादग्रस्तोऽस्ति प्रश्नो यदिदं तिब्बतदेशस्य स्वकीय मौलिक ज्ञानमस्ति, अथवा तेन देशान्तराद् गृहीतम्; इत्थमेवास्य प्रश्नस्यापि निर्णयो नाभूद् यदस्य मन्त्रस्य वस्तुतः कोऽर्थः। वैडलमहोदयस्य विचारो वर्तते यदियं पद्मपाणेरवलोकितेश्वरस्य प्रार्थनास्ति। ओम् इत्यस्यार्थः स्पष्टः, 'हुम्' मन्त्रस्यान्त्यं निरर्थक पदमस्ति, 'मणिपद्मे' पद्मे मणिः अर्थात् पद्मे समुपविष्टमवलोकितेश्वर सूचयति, किन्तु श्रीथामसमहोदयेन मणिपद्मे इति मणिपद्माया देव्याः सम्बोधन स्वीकृतम्। इदमवलोकितेश्वरस्य नारीरूपस्यैक नामास्ति। व्याकरणदृष्ट्यायमर्थोऽधिकः शुद्धः। अत्र न कश्चन सन्देहो यद् मन्त्रोऽयं भारताद् बौद्धधर्मेण साक तिब्बतदेश गतः, किन्तु अधुनाऽयं तिब्बतस्य प्रतिरोम व्याप्तोऽस्ति। अथ तत्रत्येषु शिलापट्टेषूत्कीर्णः, ध्वजेष्वङ्कितः, प्रतिदिनञ्च सहस्राधिका हस्ताः प्रार्थनानलिकाया तं भ्रमयन्ति सहस्राधिकाः कण्ठाश्च जपन्ति।

**भोटसाहित्यम्**—तिब्बतदेशस्य सकलं प्राचीन साहित्यं संस्कृतसाहित्यानुवादो वर्तते, अनेकाभिर्दृष्टिभिश्चातीव महत्त्वपूर्णमस्ति। तत्र तादृशा अनेके ग्रन्थाः सन्ति, ये भारते लोप प्राप्ताः। तिब्बतदेशीयैरनुवादे शुद्धताऽतीव कृता। संस्कृतशब्दाना स्थाने भोटभाषाया

---

१. हयग्रीवो भारते विष्णुना सम्बद्ध आसीत्। तिब्बतदेशे तस्य सम्बन्धः शिवेन साकमस्ति। मङ्गोलास्तं वाजिरक्षकं देवं मन्यन्ते ( इलियट ३।३९२ )।

निश्चिताः प्रतिशब्दाः स्थाप्यन्ते स्म, काममनुवादोऽस्पष्टो भवेत्। अतस्तिब्बतग्रन्थाना सस्कृत-रूपान्तरकरण नातिकठिनम्। धर्मकीर्तेः प्रमाणवर्तिकस्य, दिङ्नागस्य न्यायमुखस्य, मैत्रेय-नाथस्याभिसमयालङ्कारस्य चान्येषाञ्च ग्रन्थानां तथैव तिब्बतीयभाषाया अनुवादो जातः, सहस्रस्य च ग्रन्थाना तथोद्धारः सम्भवति। अथ चेदं साहित्यं भारतीयतन्त्रवादस्याध्ययनार्थ-मत्यधिकमुपयोगि वर्तते। मन्त्रयाने वज्रयाने वा भारते एतावत्साहित्य नोपलभ्यते यावत् तिब्बतदेशे लभ्यते। तिब्बतीयैरनुवादकैः स्वकीयं ध्यान धार्मिकसाहित्यपर्यन्तमेव न स्थापितम्। अनुवादेषु सस्कृतसाहित्यस्य सर्वेषामङ्गाना ग्रन्था विद्यन्ते। व्याकरणेषु पाणिनेः, चन्द्रगोमिनः, कलापस्य, सारस्वतस्य च ग्रन्थाः। साहित्ये अमरकोष-मेघदूत-छन्दोरत्नाकर-वृत्तमाला-चाणक्यनीतयो दण्डिनः काव्यादर्शश्च। चिकित्साशास्त्रे वाग्भट्टस्याष्टाङ्गहृदयमस्ति। चित्रकलापि अस्पृष्टा नास्ति। अस्मिन् विषये प्रतिमालक्षणनामा ग्रन्थ उल्लेखनीयः। सक्षेपेणोच्येत तदा तिब्बतदेशीयैर्भारतीयसाहित्ये यत् समीचीनमुपयोगि च प्रतीयते स्म तैस्तस्य भोटभाषयानुवादः कृतः। साहित्येऽस्मिन् नागार्जुनकृतेश्वरनिराकरणं कालिदासकृतसरस्वती-स्तोत्र च द्वौ ग्रन्थौ संस्कृते स्तः, एतौ द्वौ भारते नोपलभ्येते।

**कञ्जुरतञ्जुरग्रन्थौ**—तिब्बतस्य धार्मिक साहित्य भारतीयश्रुतिस्मृतिवत् कञ्जुर-तञ्जुरेति द्विधा विभक्तमस्ति। इद पूर्व प्रतिपादित यत् त्रयोदशस्य शतकस्य प्रारम्भे बुस्तोननाम्ना भोटपण्डितेन तत्काल यावत् सम्पूर्णमनूदित साहित्य कञ्जुरतञ्जुरनामकयो-र्द्वयोर्वर्गयोर्विभक्तम्। प्रथमस्यार्थोऽस्ति वचनस्यानुवादः। अत्र बुद्धवचनाना तन्त्राणाञ्च सग्रहो विद्यते। द्वितीयस्यार्थोऽस्ति शास्त्राणा व्याख्यानाञ्चानुवादः। अत्र भगवतो बुद्धाद् भिन्नै-राचार्यैर्लिखिताना दर्शनकाव्यवैद्यकज्योतिषग्रन्थानां कञ्जुरतञ्जुरयोर्विभिन्नग्रन्थानामुपरि लिखितानाञ्च टीकाना सग्रहः। तिब्बतदेशः सभ्यताहीनोऽसस्कृतश्च मन्यते, किन्तु तस्य साहित्यमनेकेषा सभ्याना वाङ्मयाद्विशालमस्ति। कञ्जुरे १०८ ग्रन्थाः सन्ति, तञ्जुरे च २२५। अन्यच्च तिब्बतदेशस्य मठेषु संस्कृतसाहित्यस्यानेकानि ग्रन्थरत्नानि तिरोहितानि। सस्कृत-ग्रन्थानामन्वेषणधिया श्रीराहुलसाङ्कृत्यायनेन १९३४ तमे १९३६ तमे च तिब्बतस्य यात्रा कृता। प्रथमं तेन प्रायः ४० सस्कृततालपुस्तकाना मण्डलानि द्वितीय वार च प्रायः ८० पुस्तकानि प्राप्तानि। प्राथमिके मण्डले खण्डिता अखण्डिताश्च १८४ ग्रन्था आसन्, द्वितीयस्मिन् संग्रहे १५१ ग्रन्थाः। लक्षद्वयश्लोकाना ( १ श्लोकः = ३२ अक्षर ) साहित्य तेन स्वेन साकमानीतम्। साहित्यमिदं केवल ग्याची टशीलुम्पो-सक्यविहारेभ्य एव प्राप्तमस्ति। तिब्बतदेशस्य मठान्तरे-ष्वपि संस्कृतसाहित्यस्य लुप्तानां ग्रन्थाना प्राप्त्याशा विद्यते। कार्यमिदं सम्पादयितु साहसिकाना सस्कृततिब्बतीयभाषाज्ञानवता बहूना भारतीयपण्डितानामावश्यकताऽस्ति।

**तिब्बतदेशीयकला**—तिब्बतदेशस्याधिकाशा कला उड़ीसाबिहारयोरेकादशद्वादश-शतकयोः पालवंशीयमध्ययुगकलायाः प्रादुर्भूता विकसिता च। तिब्बतवासिभिश्च नूतनानि परिवर्तनानि न्यूनानि कृतानि। बहुवार तेषा रुढिप्रियतायाः प्राचीनादर्शानाञ्च शतकानि यावत् संरक्षणस्य विलक्षणसामर्थ्य दृष्ट्वा आश्चर्यं भवति। स्टाइनमहोदयेन तुनह्वागस्योत्खनने दशमस्य शतकस्य तिब्बतदेशस्य चित्रकलाया यान्युदाहरणानि प्राप्तानि तेषु वर्तमानेषूदाहरणेषु

च कश्चन महान् भेदो नास्ति। चित्राणा विषयाः प्रायो बुद्धस्य, बोधिसत्त्वस्य, ८४ सिद्धानाम्, महाकालस्य, शिवस्य तत्सम्बद्धाना देवानाञ्च नानारूपाणि सन्ति। अधिकानि चित्राणि कौशेयेषु निर्मितानि सन्ति। तानि थानका( मन्दिरपताका )पदेनोच्यन्ते। तेषा द्विप्रकारको विषयो भवति। अतिशमहोदयस्य धर्मप्रचारेण केचन सम्बन्धमादधति। तेषु बुद्धस्य जीवनस्य विभिन्नानि दृश्यानि प्रदर्श्यन्ते। प्रकारान्तरे बुद्धो बोधिसत्त्वो लोकपालाः तिब्बतदेशस्य सन्तो वीरपुरुषाश्च प्रदर्श्यन्ते। तिब्बतदेशीयैः शिवस्य महाकालस्य विकरालरूपाणामधिको विकासः कृतः। मञ्चूसम्राड्भ्यस्तानि चित्राण्यतीव रोचन्ते स्म। अतस्तिब्बतदेशस्य माध्यमेन तानि चित्राणि चीनदेश गतानि। सम्राजा चियेन-लुङ्गेन पेकिंगे ईदृशानि चित्राणि निर्मातुं समादिष्टानि। ततः पूर्वं कुबलैखानस्य समयेऽपि तिब्बतद्वारा भारतस्य लौहस्य, अलङ्करणस्य सौवर्णकार्मिकवस्त्रस्य कर्माणि चीनदेशे गतान्यासन्। पाश्चात्त्यतिब्बतदेशेऽजन्ताया इलोरायाश्च चित्रकलायाः प्रभावः प्रथममुल्लिखितोऽस्ति। मूर्तिकलायामपि तिब्बतदेशेन भारतमनुकृतम्। बुद्धाना बोधिसत्त्वानाञ्च कास्यमूर्तयो भारतीयशैलीमाश्रित्य निर्मिताः। कतिपयानामवलोकितेश्वरगणां कास्यमूर्तयः ३०–३५ फीटमिता उन्नता अपि सन्ति। तिब्बतदेशेऽनेकाः तादृश्यः प्रतिमा अपि समुपलभ्यन्ते, यासु बोधिसत्त्वस्तादृश्या मुद्रया प्रदर्श्यते, याऽन्यत्र क्वचनापि नोपलभ्यते।

वास्तुकलाया तिब्बतदेशेन स्तूपानां मन्दिराणाञ्च निर्माणरीतिर्भारताद् गृहीता, किन्तु तत्र किञ्चित् परिवर्तन कृतम्। तिब्बतदेशस्य स्तूपानामाधारोऽतीवोन्नतो भवति, उपरितनो गोलाकारो भागश्च ह्रस्वः। मन्दिरेषु भिन्नत्वमिदं प्रतिपादयति यत् तिब्बतदेशे मन्दिराणा प्रधानमलङ्करणं चित्राणि चित्रिता ध्वजाश्च भवन्ति, भारतवत् स्तम्भा भित्तयश्चातीव न्यूनतया विरच्यन्ते।

**उपसंहारः**—भारतदेशस्तिब्बतदेशस्य सर्वथा गुरुरस्ति। तेन तत्र सर्वप्रथम धर्मस्य ज्ञानस्य च दीप प्रज्वाल्य भोटदेश आलोकितः सभ्यताञ्च नीतः। तिब्बतदेशे या काचन संस्कृतिरस्ति तद्गौरव भारतवर्षस्यास्ति, तस्यासभ्यदशात ऊर्ध्वोन्नायकोऽयमेव देशोऽस्ति। भारतीयधर्मेण तत्र नरपशुबलिसमाप्तिः कृता, भूतप्रेताना भयोत्पातयोर्न्यूनता विहिता, तिब्बतवासिनश्चाहिंसोदारताऽध्वरे दीक्षिताः।



# नवमोऽध्यायः

## एशियामहाद्वीपस्य दक्षिणपूर्व( आग्नेय )दिशि विद्यमानानां सुवर्णभूमिनाम्ना प्रसिद्धानां प्रदेशानामावासनस्योपक्रमः

सुवर्णभूमौ अथवा दक्षिणपूर्व एशियादेशे भारतीयजनतायाः प्रसारः, भारतीयसभ्यतायाः संस्कृतेश्चान्यासां दिशां विजयापेक्षयाधिको महत्त्वपूर्णोऽस्ति। भारतस्य प्राचीनेतिहासविषयेऽनेका भ्रान्ता धारणाः सन्ति। सुवर्णभूमेरावासनं तासु सर्वासु कुठाराघातं करोति। प्राय इदं मन्यते यत् प्रकृत्या भारतवर्षायातीव स्वाभाविक्यः सीमाः प्रदत्ताः सन्ति—उत्तरस्मिन् नगाधिराजस्य हिमालयस्य दुर्भेद्यः प्राकारोऽस्ति, तथाऽन्यासु तिसृषु दिक्षु अपारस्य जलनिधेरगाधा परिखाऽस्ति। अतः प्राचीनकाले भारतस्यान्यैर्देशैः साकं कश्चन सम्बन्धो नाभूत्। दन्तुरतटस्य शीतोष्णकटिबन्धस्य च निवासिनोऽतीव साहसिनो भवन्ति, किन्तु भारतेऽनयोर्द्वयोरभाव आसीत्। भारतस्य समुद्रतटं दन्तुरं नास्त्येव, उष्णत्वादत्रत्या जनाः प्रक्रमशीला न सन्ति। अत्रत्या च धार्मिकी सामाजिकी व्यवस्थे अपि एतद्दृश्यावेव स्तः। धर्मशास्त्रेषु समुद्रयात्राया विदेशगमनस्य च निषेधोऽस्ति। अशनपानयोः, जातिवादस्य स्पृश्यतास्पृश्यतयोश्च नियमैर्भारतीयानां वैदेशिकैः सम्पर्कोऽसम्भवोऽस्ति। अतो भारतीया अन्यदेशेभ्यः पृथग् निवसन्तः कूपमण्डूकवदस्मिन्नेव देशे स्वीयां संस्कृतिं विकासितवन्तस्ते विदेशान् नागमन्। यदि देशादस्मात् केचन भारतीया बहिरपि गतास्तर्हि ते बौद्धा एवासन्।

किन्तु सुवर्णभूमेरावासनस्य कथा अमीषां विचाराणां प्रत्याख्यानमस्ति। प्राचीनकालस्य महाप्राणा उत्साहसम्पन्नाश्चार्याः स्वदेशं पर्वतैः समुद्रैश्च कदापि सीमितं नावगतवन्तः, नैव च ते एतान् दुस्तरानन्तरायान् पर्यगणयन्। तेषां पराक्रमैरुत्साहेन च यथा दक्षिणस्मिन् सिंहलराज्यमुत्तरस्मिन् च मध्य-एशियादेशो भारतीयसंस्कृत्या प्रभाविते अभूताम्, पूर्वपयोदधि( बङ्गखात )पारे च वर्तमानो देशोऽप्यनया प्रभावितोऽभूत्। दक्षिणपूर्व एशियादेशस्य विविधानां प्रदेशानां प्रथमे प्रधानाश्चावासका बौद्धा न, परं हिन्दव आसन्। तैरत्र केवलं वसतिरेव न कृता, किन्तु शक्तिशालि राज्यमपि स्थापितम्, हिन्दुसंस्कृतेः प्रसारश्च कृतः। प्रदेशेष्वेष्वनेकानि भारतीयराज्यानि सहस्राधिकवर्षाणि यावत् स्थिराण्यभूवन्, तथा भारते हिन्दुशासनस्य समाप्त्यनन्तरमपि अमीषामुत्कर्षः प्रचलन्नासीत्। कम्बुज-चम्पा-श्रीविजय बिल्वतिनामकान्यत्यधिकशक्तिसम्पन्नानि साम्राज्यान्यासन्, हिन्दचीन-मलाया-जावा सुमात्रा-बोर्नियोप्रभृतिषु देशेषु प्राप्तैरभिलेखैरिदं ज्ञायते यद् भारतीयधर्मभाषा साहित्य-समाजव्यवस्था-दर्शनैर्गभीरः प्रभावः स्थापितः। कम्बोडियाभिधे स्थाने विष्णुः, शिवः, ब्रह्मा, इन्द्रः, लक्ष्मी, पार्वती, अग्निः—इमे हिन्दुदेवाः पूज्यन्ते स्म। मलायाराज्याद् धृतशङ्खचक्रगदापद्मस्य विष्णोः, धृतत्रिशूलस्य शिवस्य, नन्दिनः,

स्कन्दस्य, महाकालस्य, दुर्गायाश्च मूर्तयः समुपालभ्यन्त । तत्र राजानो महाहोमलक्षहोम-कोटिहोमादीन् वैदिकयज्ञान् कुर्वन्ति स्म, तथा हिन्दुदेवतानामनेकानि विशालानि मन्दिराणि संस्थापयन्ति स्म । वेदाना वेदाङ्गाना दर्शनानामध्ययनम्, पाणिनेः पतञ्जलेश्च ग्रन्थानाम-नुशीलनम्, रामायणस्य महाभारतस्य पुराणानाञ्चाखण्डः पाठो भवति स्म । रामायणस्य महाभारतस्य च कथा सुवर्णभूमिवासिना तथा प्रियाऽऽसीद् यद् बोरोबुडुरप्रम्बनन-अङ्कोर-प्रदेशाना मन्दिरेषु अमीषा ग्रन्थानामनेकानि दृश्यानि उत्कीर्णानि सन्ति । जावादेशे त्वेत-त्कालपर्यन्त वयङ्गनामकानि यानि च्छायानाटकानि अभिनीयन्ते, तान्युपजीव्य रामायणस्य महाभारतस्य च कथा भवन्ति । चातुर्वर्ण्यानुसारेण प्रतिष्ठितायाः सामाजिकव्यवस्थायाः कृते मनोर्धर्मशास्त्रस्य प्रामाण्य स्वीक्रियते स्म । कम्बोडियाख्यस्य देशस्य राजप्रसादे इन्द्रस्यासिरद्या-वधि सुरक्षितोऽस्ति । राज्यभिषेकसमये तस्य शोभायात्रा भवति, हिन्दुपुरोधसोऽस्मिन् माङ्ग-लिकेऽवसरे राज्ञः शिरसि पवित्रं जल प्रक्षिपन्ति । बालिराज्ये अन्येषु च स्थानेष्ववशिष्टा अल्पे हिन्दवोऽद्यापि तदतीतं स्मारयन्ति । यदाऽयं प्रदेश हिन्दुप्रभावमय आसीत्, तदा हिन्दुभि-र्मातृभूमितः सहस्रक्रोशेभ्यो दूर कौशाम्बी-अयोध्या-श्रीक्षेत्र-द्वारावती-तक्षशिला-मथुरा-चम्पा-कम्बोज-गान्धार-कलिङ्गाख्याः प्रदेशा आवासिता । प्रदेशस्यास्य नद्य पर्वताश्च चन्द्रभागा-गोमती-सरयू मेरुप्रभृतिभारतीयनामभिः प्रसिद्धा आसन् । प्राचीना अभिलेखा अस्मान् भारतस्य सीमायाः शतक्रोशेभ्यो दूर हिन्दचीन-बोर्नियोदेशपर्यन्त निवसन्त त समाजं दर्श-यन्ति, यः पूर्णतया हिन्दुरस्ति । वाराणस्या कान्यकुब्जस्य मथुराया वा पूर्णा प्रतिकृतिरस्ति । हिन्दुसस्कृतेः प्रसारस्येदमुत्कृष्टतममुज्ज्वलतमञ्च रूपमस्ति, किन्तु अस्माभिरवगन्तव्यं यदस्यो-ज्ज्वलस्य तीतस्यास्माक प्राचीनग्रन्थेषु कश्चनोल्लेखो नास्ति । अस्मात् कालात् ६०-७० वर्षेभ्यः पूर्वमस्मुमितिहास कश्चनापि न जानाति स्म । फ्रान्सदेशीयपण्डिताना तथा हालैण्ड-वासिविदुषा गभीरेणानुसन्धानेन तथा परिश्रमेणास्माभिर्भारतीयसस्कृतेर्लुप्त गौरवं ज्ञातम् । चीनदेशस्येतिहासानामभिलेखाना प्राचीनस्मारकाणाञ्च साहाय्येनामीभिः पण्डितैः प्रस्तुतस्य बृहत्तरभारतस्येतिहासस्य कृते भारतीयाः सदैव तेषा विदुषामृणवन्तो भविष्यन्ति ।

## सुवर्णभूमिप्रदेशस्य स्वरूपम्

प्राचीने काले पूर्वीयवङ्गप्रान्तस्य मणिपुरप्रदेशस्य च पूर्वः श्योनकिनाखातपर्यन्त विस्तृतस्य हिन्दचीनस्य विसालस्य द्वीपकल्पस्य हिन्दद्वीपस्य च समूहस्य सामान्य नाम सुवर्णभूमिरासीत्। जातकग्रन्थकालात् ( षष्ठ-पञ्चम श० खी० पू० ) साहसिनो भारतीया व्यापारिण एतद्-विशालद्वीपकल्प गन्तुमारभन्त । आदौ तेषामस्य विशालस्य प्रदेशस्यास्पष्टं परिचयमात्र-मासीत्, पश्चाद् यातायातयोर्व्यापारस्य च वृद्ध्या परिचयोऽस्य वर्द्धितुमारेभे। व्यापारवृद्धेर्मुख्यं कारण तत्र सुवर्णोपलब्धिरासीत् । उदीच्यबरमादेशस्य इरावदीनद्यास्तथा तस्याः सहायकनदीना तथा मलयादेशस्य कतीपयनदीना बालुकेभ्योऽद्यावधि सुवर्णं निष्कास्यते, मलायादेशस्य पहाङ्राज्यस्य रौबनामके स्थानेऽद्याप्येका सुवर्णस्य खनिरस्ति। अत्र प्राचीनाना खनीनामने-केऽवशेषा उपलभ्यन्ते। प्राचीने काले एषु प्रदेशेषु बहु सुवर्णमासीत् । अत एव भारतीया इरावदीं

सालवीनश्च तदा सुवर्णनदी तथाऽमुं समग्रं प्रदेशं सुवर्णभूमिं कथयन्ति स्म। अनेन प्रदेशेन सह परिचये वृद्धिं गते सत्यस्य सुवर्णभूमिसुवर्णद्वीप नामकौ द्वौ विभागावभूताम्। सुवर्णद्वीपे मलाया-द्वीपकल्पस्य हिन्दपूर्वद्वीपसमूहस्य च समावेशो भवति स्म, तथा सुवर्णभूमौ बर्मा-स्याम-फ्रासीसीहिन्दचीनप्रदेशानाम्। प्राचीनरोमनजना अपि मलक्काद्वीपकल्पं क्रिसीनाम्नाऽऽह्वयन्ति स्म। अस्यार्थोऽपि सुवर्णद्वीपमेवास्ति।

सुवर्णद्वीपस्य मनोरञ्जिका कथा कालक्रमतस्त्रिषु मुख्येषु विभागेषु विभक्तुं शक्यते— (१) फ्रासहिन्दचीनस्योपनिवेशनम्, (२) सुवर्णद्वीपस्य (मलायाद्वीपकल्पस्य हिन्दपूर्वद्वीपसमूहस्य च) आवासनम्, बर्मादेशस्य स्यामदेशस्य चावासनम्। यद्यपि बर्मा-स्यामप्रदेशौ फ्रासहिन्दचीनापेक्षया भारतस्य निकटतरौ स्तः किन्तु अनयोः प्रदेशयोः क्रमेण दशमे चतुर्दशे च शतकयोर्बर्मा-थाईवास्तव्यानामागमनात् पूर्वकालिकः शृङ्खलाबद्ध इतिहासोऽस्माभिर्ज्ञातो नास्ति, फ्रासहिन्दचीनदेशे प्रथमशतकखीष्टीयाब्दाद् भारतीयराज्यानामितिहास उपलभ्यते। अत. प्रथम फ्रासहिन्दचीनदेशस्य राजनीतिकः सांस्कृतिकश्च दिग्विजयस्योल्लेखो भविष्यति, किन्त्वमीषां प्रदेशाना विस्तृतस्येतिहासस्य प्रेक्षणात् पूर्वं सुवर्णभूमेरावासनसम्बधिना केषाञ्चित् सामान्याना प्रश्नाना विवेचनमावश्यक प्रतीयते। प्रथमशतकख्रीष्टीयाब्दे दक्षिणपूर्व-एशियाप्रदेशस्यान्तिमे तटे यानि भारतीयराज्यानि स्थापितानि, तानि कतिपयशतकेभ्यः पर पुरस्सराणामार्याणामद्भुतकर्तृत्वस्य परिणाम आसीत्, किन्तु एतेषां प्रदेशानामावसकाः के आसन्? ते कदा कैश्च मार्गैरत्रागताः?

**प्रधाना आवासकाः**

(क) **व्यापारिणः**—एतेषां प्रदेशानामावासका व्यापारिणो राजकुमारा मुनयश्चासन्, किन्तु एतेषु त्रिषु सर्वप्रथममत्रागमनदुःसाहसकर्तारो व्यापारिणः प्रतीयन्ते। तथा मुख्यमुद्देश्यं सुवर्णोपलब्धिरासीत्। महाजनकजातकेनेदं ज्ञायते यदेको राजकुमारः कैश्चिद् व्यापारिभिः सह प्रभूतसम्पत्तये सुवर्णभूमियायिना पोतेन प्रयाति। सुप्पारकजातके सोपाराप्रदेशात् सुवर्णभूमियायिना व्यापारिणा वर्णनमस्ति। कथासरित्सागरे बृहत्कथाश्लोकसंग्रहे च सुवर्णभूमेः सुवर्णद्वीपस्य वा साहसपूर्णा सकटपूर्णाश्च यात्रा कर्तृणा व्यापारिणा कियत्यो दीर्घा मनोहराश्च कथाः सन्ति। आसां कथानामध्ययनेनेद ज्ञायते यदेतेषां प्रदेशानामनन्ता स्वर्णसम्पत्तिरेवैतेषामावासनस्य प्रधाना कारणमासीत्। सर्वासु कथासु धनलाभाशया तेषु देशेषु यात्रां कुर्वन्तो व्यापारिणो दृश्यन्ते। पूर्वमिदं निवेदितमस्ति यद् धनलोलुपाः पुत्राः केन प्रकारेण मातुः कथनमनादृत्य सुवर्णभूमिप्रापक पोतमारोहन्ति स्म। कतिपयैरन्यैः प्रमाणैरपि इदं सूच्यते यदस्मिन् प्रदेशे आवासनस्य मूल कारण व्यापार एवासीत्। भारतीयैरत्र नूतनाना प्रदेशाना यानि नामानि प्रदत्तानि सन्ति, तानि तेषु देशेषूपलभ्यमानाना धातूना तथान्येषा व्यापारसम्बन्धिनामथवा कृषिजन्याना वस्तूनामाधारेणासन्। सुवर्णभूमि-सुवर्णद्वीप-हेमकूट-सुवर्णकूट-सुवर्णकुड्यप्रभृतीनि नामानि तेषु प्रदेशेषु सुवर्णप्राप्तेः सूचकानि सन्ति। रूप्यकद्वीप-ताम्रद्वीप-यवद्वीप-शङ्खद्वीप-कर्पूरद्वीप-नारिकेलद्वीपा (निकोबारद्वीप) न्यप्येता-

दृशान्येव नामान्यासन् । कौटिलीयार्थशास्त्रे विदेशाना परिचयस्तेषामौद्योगिकैस्तथा व्यापारिकैवस्तुभिर्दत्तोऽस्ति । अतोऽमीषा देशाना सम्बन्धस्य मूलकारण व्यापार एवासीत् । जातकानां बृहत्कथायाः कौटिलीयार्थशास्त्रस्य मिलिन्दप्रश्नस्य चाध्ययनेनेद ज्ञायते यद् भारतीया व्यापारिणो महता साहसेन पूर्वेषु प्रदेशेषु भ्राम्यन्ति स्म । तात्कालिकं कथासाहित्यमिद सूचयति यद् भारतीया व्यापारार्थं कठिन सङ्कट सोढु सन्नद्धा आसन् । तेषा स्थितिर्मध्ययुगस्य कोलम्बस वास्कोडिगामासदृशी आसीत्, किन्तु तत्पश्चात् साहसिनो राजकुमारा तपस्विनश्चाप्येतेषा प्रदेशाना राजनैतिक सास्कृतिकञ्च विजय कर्तुं प्रारभन्त ।

## ( ख ) राजकुमाराः—

एतेषा प्रदेशानामनुश्रुतिष्वनेके भारतीया राजकुमारा अत्र स्व राजवंशं सस्थापयन्तो दृश्यन्ते। एकस्या बर्मानुश्रुतेरनुसारेण बुद्धजन्मनोऽतीव पूर्वं कपिलवस्तुप्रदेशस्यैकः शाक्यो राजा सेनया सह इरावदीमध्यप्रदेशे समागतः । तस्य वश्यैरेकत्रिंशद्वशपर्यन्त शासन कृतम् । ततः सम्भवतश्चानदेशात् समागतस्यैकस्य पूर्वस्य जनसमूहस्याक्रमणेनाय वशः समाप्ति गतः । पुनः गङ्गाया नद्याः प्रदेशात् क्षत्रियवासकानामपरः समूहः समागतः । तेषा प्रधानः प्राक्तनस्य वशस्य मृतस्य राज्ञो विधवा राज्ञीं समुद्वाह्य नूतन राजवश सस्थापितवान् । अराकानप्रदेशस्यानुश्रुत्यनुसारेणास्य प्रान्तस्य प्रथमो राजा वाराणसीनृपतेः पुत्र आसीत् । कम्बोडियादेशेतिहासे विवरणमिदमुपलभ्यते यदिन्द्रप्रस्थस्य राजा आदित्यवशः स्वपुत्रे रुष्ट आसीत् । तेन स स्वराज्यान्निर्वासितः । निर्वासितेन राजपुत्रेण कम्बोडियादेशो विजितः, स तत्रत्यश्च प्रथमो राजाऽभूत् । भारतेऽनेकेसाहसिनो राजपुत्रा ज्येष्ठानां भ्रातृणा राजसिहासनारोहणानन्तर परस्परकलहेन राज्येऽवस्थातु नाशकन् । बृहत्तरभारते एवैतादृशा राजपुत्राणा स्वशौर्यप्रदर्शनायावसर आसीत् ।

## ( ग ) ऋषिमुनयः—

राजकुमारातिरिक्ता ऋषिमुनयोऽपि इमान् प्रदेशान् आवासयन्ति स्म । कम्बोडियादेशसंम्बन्धे एवैकापराऽनुश्रुतिरियमप्यस्ति यद् द्विजश्रेष्ठः[१] कौण्डिन्यः कम्बोडियाराजवशस्य मूलपुरुष आसीत् । चम्पायाः ( अनाम ) एकस्मिन् प्राचीने अभिलेखे इद प्रमाणमुत्कीर्णमस्ति यत् शिवः स्वर्गलोकाद् उरोजनामकम् ऋषिं चम्पाया राजान कृत्वा प्रेषयामास । चम्पाया राजा उरोजमेव स्वमूलपुरुषं मन्यते स्म । स्यामवास्तव्यानामय विश्वासोऽस्ति यत्तेषा पूर्वजाः ७६५ तमे खीष्टीयाब्दे भारतेऽशान्तिग्रस्ते सजातेऽमु देश समागमन् ।[२] यद्यपि इमाः सर्वा अनुश्रुतयो विशेषेण विश्वसनीया न सन्ति, किन्तु स्पष्टमिद विद्यते यद् भारतीयव्यापारिभ्योऽतिरिक्ताना ब्राह्मणाना क्षत्रियाणाञ्चामीषा प्रदेशानामावासने महान् प्रयास आसीत् । इद प्रतीयते यत्

---

१. मजूमदार-चम्पा भूमिका पृ० २२, ५६, ५६, ६३, १०० तथा डोगसोनस्याभिलेख, सं० ३१ — शिवेन पृथिव्यां चम्पाराज्य शासितुमुरोजमादिशता उक्तम्—'स त्व श्रीमानुरोजस्फुटतरसुयशाः श्रीनिधिः क्ष्माञ्च याहि' ॥

सुवर्णभूमेर्मार्गः पूर्वं व्यापारिभिरुद्घाटित । व्यापारिणः स्वपण्यैर्वस्तुभिः सह तेषु देशेषु भारतीयधर्म-भाषा-सस्कृतीरपि नीतवन्तः। प्रारम्भे तैस्तत्र स्ववसतिः कृता भवेत्, तादृशानि मन्दिराणि स्थपितानि भवेयुः, यादृशानि मन्दिराणि दक्षिणभारतस्य चेट्टीसञ्ज्ञका अद्यापि मलायादेशे स्थापयन्ति । ततोऽनुकूले समये समुपस्थिते तैस्तेषु प्रदेशेषु स्वकीया राजनीतिकप्रभुता स्थापिता । सकृन्मार्गे समुद्घाटिते सति भारतस्य साहससम्पन्नैः स्वशौर्यप्रकटनस्य नूतनं क्षेत्रं प्राप्तम्। तपस्विभिश्च भारतीयधर्मसस्कृत्योर्विस्ताराय समीचीना भूमिरुपलब्धा ।

यद्यपि दक्षिणपूर्व-एशियाप्रदेशस्योपनिवेशने व्यापारिणो मुनयः क्षत्रियराजकुमारश्चाग्रगामिन आसन् किन्तु बहुवार साधारणजना अप्यनेकैःकारणैः प्रवास कुर्वन्ति स्म। एकस्मिन् जातके इद वर्णन विद्यते यद् वाराणस्यास्तक्षकाणामेकेन ग्रामेण कस्यचन कार्यस्य समयः कृतः, तदर्थञ्च किञ्चिद्धन पूर्वमेव गृहीतम्, परन्तु तस्य पूर्तौ तैः स्वमनोनीतद्रव्यहानिर्दृष्टा । यदा ते प्रतिज्ञापूर्तये पीडिता अभूवन्, तदा तैर्निभृतमेक-पोतो निर्मितः, स्वकुटुम्बैः सह रात्रौ गङ्गाया तेषा पोतः प्रायात्, अन्ते समुद्र गत्वा ते एकस्मिन्नुर्वरद्वीपे न्युषितवन्तः। जनसङ्ख्याया आधिक्य वैदेशिकानामाक्रमणञ्चापि देशान्तरेषु प्रवासस्य कारणानि भवन्ति स्म । इय विधेरेका विचित्रा गतिरस्ति यत् खीष्टीयाब्दस्य प्रारम्भिकशतकेषु यदोत्तरपश्चिमभारते यवनशकपहलवप्रभृतीना जातिनामाक्रमण भवति स्म, तस्मिन्नेव समये भारतीया दक्षिणपूर्व-एशियादेशमावासयन्ति स्म।

उपरिनिर्दिष्टकारणैर्भारताद् बहिर्गामिषु व्यापारिषु तपस्विषु राजकुमारेषु चानेके जना विदेशेषु वसन्ति स्म। तैस्तत्रत्याःस्त्रिय उद्वाहिता अभूवन, शनैःशनैस्ते स्वीययोन्नतया सभ्यतया तेषा समाजं हिन्दुसस्कृतिरागे अरञ्जयन्। हिन्दुधर्मेण तासु जातिषु महत्या परोक्षपद्धत्या प्रभावः स्थापितः, शनै शनैः प्रभावममु गृह्णता हिन्दूना स्थानीयानाञ्च पुरुषाणा तथाधिक सम्मिश्रण जात यद् द्वयोर्भेदज्ञान दु शकमभूत् । पूर्वीयदेशाना मूलनिवासिभिर्हिन्दुनामानि स्वीकृतानि सस्कृतस्य पालेःप्राकृतस्य च प्रयोगःप्रारब्धः, हिन्दुधर्मस्य कर्मकाण्डादिक गृहीतम्। भारतीयैरपि स्थानीयरीतिस्वीकारे सकोचो न कृत ,तेषु योरोपवास्तव्यवज्जातीयोऽभिमानो नासीद् यस्तेषा स्थानीयजनानाञ्च मध्ये विशाल गर्तं कुर्यात्। अत एव भारतप्रवासिनो हिन्दवःशीघ्रमेव स्थानीयसमाजस्याशा अभूवन्,तथा तेषु मिश्रिता अजायन्त। कुत्राऽपि भारतीयसंस्कृतिरिस्लामवद् असिबलेन न प्रसारिता सा सर्वत्र शान्त्या प्रसृताऽभूत्,स्थानीयैर्जनैःस्वेच्छया साऽङ्गियत।इत्थमनेके हिन्दूपनिवेशाः स्थापिताः। मलायाद्वीपकल्पे चीनदेशीयै तुएन-सुइन नामकतादृशस्यैव राजस्य वर्णन कृतम् । इद पूर्वस्य पश्चिमस्य व्यापारस्य महत्केन्द्रमासीत् । अत्र प्रतिदिनं भारतात् पार्थियादेशाद् दूरवर्तिभ्यो देशान्तरेभ्यश्च दशसहस्राणि जना आगच्छन्ति स्म । पञ्चाशताना व्यापारिणा परिवारा न्यवसन्। तदतिरिक्तबौद्धाना द्विशती सहस्राधिका भारतीया ब्राह्मणाश्चासन्। तुएन-सुइनराज्यस्य जना एषा धर्ममनुसरन्ति स्म । स्वकन्या एभिः साकं परिणयन्ति स्म, यतो ह्यधिका ब्राह्मणा अस्मिन्नेव देशे न्यवसन्, बहिश्च नागमन्। अहर्निश ते धर्मशास्त्राणा स्वाध्यायं कुर्वन्ति स्म, तथा देवेभ्यः पुष्पाणि सुगन्धिद्रव्याणि समर्पयन्ति स्म। अनेन वर्णनेन स्पष्ट भवति यद् भारतीयाः स्थानीयजनानामङ्गानि भूत्वा तेषु

भारतीयधर्मं प्रचारयन्ति स्म। इत्थं शनैः शनैस्तैर्दक्षिणपूर्व-एशियाप्रदेशस्यैको महान् भाग आवासितः।

**आवासनस्य बाधाः—**

किन्त्वस्मिन्नावासने उपनिवेशकैर्या बाधा अनुभूताः, ता अवर्णनीयाः सन्ति। यद्यप्यस्माभिस्तस्य पूर्णविवरणं नोपलभ्यते, किन्तु कथासाहित्येन तस्यास्पष्टः परिचयो भवति, सोऽतीवोद्वेजको रोमहर्षकश्चास्ति। क्षुद्राभिस्तरिभिः क्षुब्धाना सागराणामतिक्रमणे प्रायः पोतभङ्गस्य भीतिर्भवति स्म। यदि भाग्यवशात् समुद्रयात्रा निर्विघ्नं समाप्तिं गता, तर्हि देशान्तरेषु विरोधिना यक्षाणां राक्षसानाञ्च प्राणहरणभयं सदा सन्निहितमासीत्। तत्रावासकैर्दुर्गमो मार्गः समुल्लङ्घनीयो भवति स्म। निद्देसनामके बौद्धग्रन्थेऽमीषां विस्तृतं वर्णनमस्ति। कुत्रचित् जण्णुपथे जना जानुभ्यां सर्पन्ति स्म, कुत्रचित् पर्वतारोहणाय शङ्कुपथेन गच्छन्ति स्म। चर्ममय्या रज्ज्वा प्रबाध्य महता वेगेनोपरि पर्वते निक्षिप्यमाणस्य शङ्कोः शिखा उपरि कुत्रचित् सम्यक्तया अन्तर्गच्छति स्म, तदा तस्य रज्जुमाहात्म्येन यात्री उपरि गच्छति स्म, शङ्कुपर्यन्तं गत्वा तत्राहीरकशिखेनोपकरणेन पर्वते छिद्रं कृत्वा शूलमेकं तत्र निदधाति स्म, पुनस्तस्मिन् शूले स्थित्वा शङ्कुमुत्खनति, तथा तं पुनरन्यत्र प्रक्षिपति स्म। अत्र प्रतिपदं महति गर्ते निपतनभयस्य मरणभयस्य चाशङ्का आसीत्। इदं साहसिकं कृत्यं हिमं भित्त्वा रश्मिभिर्हिमालयशिखरमारोहता यूरोपदेशयात्रिणां साहसं स्मारयति। निद्देसे इत्थं दश भयङ्करा मार्गाः परिगणिताः सन्ति। एषामतिक्रमणे शतानि जना म्रियन्ते स्म, परं तस्य युगस्यार्याः कदाप्याभिर्विपद्भिर्हतोत्साहा नाभूवन्।

तस्य युगस्य व्यापारिणामदम्यस्य साहसस्य, निरन्तरोद्योगस्यैक एव दृष्टान्तः पर्याप्तो भविष्यति। कदाचिद् महाजनकनामा कश्चन राजकुमारो व्यापारार्थं सुवर्णभूमिं गन्तु पोतमारुरोह। पथि पोतभङ्गो जातः। तत्र तस्य सर्वे सहयायिनो समुद्रे निमग्नाः, किन्तु स पोतस्य कूपकं गृहीत्वा सहयायिना रुधिरेण रञ्जिते सागरे सप्त दिनानि अतरत्। तस्मिन् समये पूर्वीयसागरस्य ( वङ्गखातस्य ) अधिष्ठात्री मणिमेखलानामा देवकन्या तत्र प्रकटीभूय तस्य साहसं परीक्षमाणाकथयत् 'यस्य तीरं नावलोक्यते तत्र गभीरे अगाधे च सागरे तव पुरुषकारो निरर्थकोऽस्ति, त्वं तटमगत्वैव मरिष्यसि, यस्य कार्यस्य पूर्तिर्दुःशका, यस्य किमपि फलं न दृश्यते तत्र पुरुषार्थैरलम्।" किन्तु महाजनकोऽविचलाशान्वितस्वरेणेदमोजस्वि उत्तरमददात्—"कर्मणः फलं निश्चितम्। देवि! किं त्वमत्रैवेदं न पश्यसि? ममानुगा न्यमाङ्क्षुः, अहञ्च तरामि, त्वां स्वसमीपे पश्यामि। अतोऽहं पुरुषार्थं करिष्याम्येव यावन्मयि शक्तिरस्ति, यावन्मयि बलमस्ति समुद्रस्य पारं गन्तुं पुरुषकारं करिष्यामि"। उत्तरमिदं श्रुत्वा मणिमेखला स्वबाहु प्रसारयामास महाजनकञ्च स्वाङ्के निधाय स्वराजधानीं नीतवती। एतादृशपुरुषकारभावनानुप्राणिता व्यापारिणः सहस्राणां पोतानाञ्च निमज्जनेऽपि सुवर्णभूमिगमनं न न्यरुन्धन्। 'युवानः सन्तु जलमग्नाः सहस्रं किन्तु यौवनमस्ति तद्वत्'। सततप्रयत्नेन, उद्धतयौवनेनाद्भुतपराक्रमेणादम्यसाहसेन चार्यैर्महत्यो विपदो न परिगणिताः, सुवर्णभूमिश्चावासिता।

## आव्रासनस्य समयो मार्गश्च

सुवर्णभूमेरावासन कदा आर्यैरारब्धमयमेको जटिलो विषयो विद्यते। प्रतिपादनमिदन्तु अतीव कठिनमस्ति यत् ते प्रदेशेऽस्मिन् सर्वप्रथम कदाऽऽगताः, किन्तु कैश्चित् प्रबलैः प्रमाणैरिदमवश्य निवेदयितु शक्यते यत् खीष्टीयाब्दीये द्वितीये तृतीये वा शतके एषु प्रदेशेषु भारतीय उपनिवेशः सम्यक्तया स्थापित आसीत्। द्वितीये तृतीये च शतकयोरुत्कीर्णैश्चम्पाया (अनाम) प्राप्तैः सस्कृताभिलेखैरिद सूच्यते यत् तत्र भारतीया सभ्यता व्याप्ताऽऽसीत्, फूनान (दक्षिण-कम्बोडिया)स्य हिन्दुराज्य द्वितीयशतकखीष्टीयाब्दस्य पूर्वार्द्धे निश्चितरूपेण स्थापितमासीत्। लग या सीउ (सम्भवतः केदा, पेकाक)राज्ये स्थापितस्यैकस्य हिन्दुराज्यस्य राजपुत्रेण ५१५ तमे खीष्टीयाब्दे चीनदेशस्य राजसभाया कथितं यत् तेषा राज्यस्य स्थापनाकालात् चतुःशताधिकानि वर्षाणि व्यतीतानि। टालमीमहोदयेन द्वितीयशतकखीष्टीयाब्दस्य मध्ये एतेषा प्रदेशाना भौगोलिक विवरण प्रतिपादयता यानि स्थानानि लिखितानि, तेष्वधिकाः सस्कृतभाषाशब्दाः सन्ति, अत इद स्पष्ट विद्यते यदेतेषा प्रदेशानामुपनिवेशनस्याधस्तनी मर्यादा खीष्टीयाब्दप्रथमशतकमथवा खीष्टीयाब्दद्वितीयशतकमस्ति। उपरितनोऽवधिः षष्ठात् पञ्चमाच्च खीष्टीयाब्दशतकात् पूर्व भवितुमर्हति, यतो हि सुवर्णभूमेः प्राचीनतम उल्लेखस्तदानीन्तनेषु जातकेषु समुपलभ्यते। सम्भवतीद यदार्या इतोऽपि पूर्वत एव तान् प्रदेशान् गन्तु प्रारभेरन्।

**आवासनस्य मार्गाः—**

आवासका जना सुवर्णभूमि जलमार्गेण स्थलमार्गेण चागमन्। इद प्रतीयते यदुदीच्यबर्माख्य देशं विहायान्येषा प्रदेशानामावासन जलमार्गेणाभूत्। भारतस्य पूर्वपश्चिमतटयोः पोताश्रयेभ्यः पोताः प्रचलन्ति स्म। जातकेषु पश्चिमतटे गुर्जरप्रदेशस्य शूर्पारकस्थानात् (सोपारा) तथा भरुकच्छस्थानात्, पूर्वीयतटे वङ्गस्य प्रसिद्धपोताश्रयताम्रलिप्तिस्थानात् (तामलुक) तथा चम्पापटनावाराणसीप्रभृत्याभ्यन्तरनगरेभ्योऽपि सुवर्णभूमिगमनस्य वर्णनमस्ति। पेरिप्लसमहोदयेन कावेरीनदीमुखस्य समीपवर्तिभ्यस्त्रिभ्यः पोताश्रयेभ्यः पूर्वदेशेषु गमनस्य वर्णनमक्रियत। टालमीमहोदयः पलौरास्थानस्य दक्षिणस्मिन् एकेटेरियननामपोताश्रयाद् मलयाद्वीपकल्पगामिना पोताना वर्णनमकरोत्। पलौरास्थान वर्तमानचिकाकोलस्थानस्य निकटेऽस्तीत्युच्यते। तथाऽस्य परिज्ञान कलिङ्गस्य प्रसिद्धेन प्राचीनपोताश्रयेण दन्तपुरेण क्रियते। इत्थ तदा जलमार्गेण सुवर्णभूमियायिना चत्वारि मुख्यानि केन्द्राण्यासन्—(१) गुर्जरप्रदेशस्य सोपाराभरुचपोताश्रयौ, (२) वङ्गदेशस्य ताम्रलिप्तिपट्टनम्, (३) कलिङ्गस्य दन्तपुरम्, (४) मद्रासप्रान्ते कावेरीनदीमुखपार्श्वस्थः पोताश्रयः।

सुवर्णभूमेरनुश्रुतिभिरपीमे व्यापारिमार्गाः प्रमाणिता भवन्ति। जावादेशस्य प्राचीनानुश्रुत्यनुसारेण तं देशमावासयितारः कलिङ्गाद् गुर्जरप्रदेशाच्चागता आसन्। कलिङ्गदेशादागमनस्य निवेदिकाऽनुश्रुतिरन्येष्वप्यनेकेषु द्वीपेषु समुपलभ्यते। पेगूवास्तव्या विश्वास कुर्वन्ति

यत्तेषां मूलपुरुषाः कृष्णाया गोदावर्याश्च नदीमुखपुलिनेभ्यः समागता आसन् । ताम्रलिप्ति-पट्टन परवर्तिषु युगेष्वपि बहुकालपर्यन्तमस्य तटस्य पोताश्रय आसीत् ।

**स्थलमार्गाः—**

इमे मार्गा त्रिधा विभक्तुं शक्यन्ते–( १ ) आसामप्रदेशे ब्रह्मपुत्रेण सहोपरि गत्वा पटकोईपर्वतमतिक्रम्य चिन्दविननद्यास्तथा इरावदीनद्या उपर्युपत्यकायामवतरन्तो मार्गाः, ( २ ) सुरमानदीतीराद् मणिपुरमुल्लङ्घ्य चिन्दविननद्या उपत्यकाया निस्सरन्तो मार्गाः, ( ३ ) चटगावतटेन सह बर्मादेशगामिनो मार्गाः । अत्र सुवर्णद्वीपस्यावासने आसामगामिनः प्रथमस्य मार्गस्य विशिष्ट महत्त्वमस्ति । यतो ह्यासामप्रान्तात् पूर्वस्मिन्नुदीच्यबर्माख्यप्रदेशे इरावदी-सालवीन-मीकाङ्-सोङ्कोईनदीनामुपरिष्टादुपत्यकायाः समीपे सन्ति। एताभिर्नदीभि-र्बर्मा-कम्बोडिया-अनाम-प्रदेशा निर्मिताः सन्ति । अत आसाममार्गः सुवर्णद्वीपस्य नदीनां पथामुपरितनं मूलं गृह्णाति । आसामप्रान्तस्य सुवर्णस्य, तथोदीच्यबर्माप्रदेशस्य पद्मरागस्य जेडाख्यस्य च खनिसत्त्वेन तस्मिन् युगे स्वभावतोऽस्य मार्गस्याधिक उपयोगो जातः ।

प्राकृतिकभूगोलमाश्रित्य प्रकाशितमुपर्युक्तं परिणाममेषु प्रदेशेष्ववासितानां जनानां सख्याया इतिहासः सम्यक्तया पुष्णाति । तस्मिन् कालेऽस्माभिर्ब्रह्मपुत्राद् मणिपुराच्च टोनकिना-खातपर्यन्तं क्षत्रियैरावासितानामनेकेषां लघूनां राज्यानां सत्तोपलभ्यते । मणिपुरस्यासामप्रदेशस्य च पर्वतकेषु तत्सिननामकं भारतीयं राज्यमासीत्. अस्मात् पञ्चसप्ततिक्रोशान् पूर्वं चिन्दविननद्याः पारे डानसीनगरादुत्तरस्मिन्नेकमपरं हिन्दुराज्यमासीत् । चिन्दविन-इरावदीभ्यां नदीभ्यां सह दक्षिणाभिमुखं गच्छद्भिर्भारतीयैर्बर्माख्ये प्रदेशे प्रोम-तगौङ्गादीन्यनेकानि राज्यानि स्थापितानि । इरावदी-सालवीननद्योर्मध्याप्रदेशः कौशाम्बीपदेन व्यवह्रियते स्म । अत्र थाईराज्यानामेकः सङ्घ आसीत् । अधुना अस्य दक्षिणो भागः शानराज्यं व्यपदिश्यते । शानराज्यं थाईसंज्ञकानामेकः समुदाय आसीद् यः पश्चिमे वर्धते स्म । पूर्वस्मिन्नेषामनेकानि राज्यानि कम्बुजस्यामोःसीमा-पर्यन्तं विस्तृतान्यासन् । उत्तरतो दक्षिणाभिमुखम् आलावि रम्मरराष्ट्र-सुवर्णग्राम-उन्मार्गशीला-योनकराष्ट्र-हरिपुञ्जयादीन्यनेकानि हिन्दुराज्यासन् । पालिग्रन्थेष्वेतेषां विस्तृतं वर्णनमस्ति । एतेभ्यः प्रदेशेभ्य उपलब्धाभिः पुरातत्त्वसामग्रीभिरेषां वर्णनानां पुष्टिर्भवति । अत्र गुप्तयुगस्य तथा तत्परवर्तियुगस्यानेका मूर्तयः समुपालभ्यन्त । अनेन न केवलमिदं सिध्यति यत् थाईसंज्ञकेषु सजातीयानां चीनवासिनामपेक्षया भारतीयानामधिकः प्रभावोऽभवत्, किन्त्विदमपि सिध्यति यदत्र भारतीयानामतीव गमनागमने आस्ताम् । हिन्दचीनदेशस्योत्तरस्मिन् भागे मीकाङ्-रक्तनद्योः ( सोंग कोई ) उपरितनी उपत्यका वर्तते । अत्रैव चीनदेशस्य दाक्षिणात्यः प्रान्तो युन्नानसंज्ञकोऽस्ति । प्रान्तेऽस्मिन् ननचाओ इत्यस्याथवा तालीफू इत्यस्य राज्यमासीत् । अस्य भारतीय नाम विदेह आसीत् । अस्मिन्नेव राज्ये मिथिलानगरी आसीत् । युन्नान-राज्यस्य केचनांशा गान्धारपदेन व्यपदिश्यन्ते स्म । त्रयोदशशतकं यावत् सोंऽशस्तेनैव नाम्ना अभिधीयते स्म । अस्य गान्धाराभिधाने कारणद्वयं स्यात् । एनं प्रदेशमावासयिता भारतीयो गान्धारप्रान्तात् ( रावलपिण्डी इत्यस्योत्तरपश्चिमप्रदेशात्) समागतः । अद्याप्यस्य प्रदेशस्य पराक्रमशालिनः पंजाबवासिनो भामोपर्यन्तमुदीच्यबर्माख्यदेशमाक्रान्तवन्तः सन्ति,

अथवा भारतस्य गान्धारप्रान्तवदयमपि सुवर्णद्वीपस्योत्तरपश्चिमयोरवस्थित आसीत्। अत्र बोधिवृक्ष-गृध्रकूट-कुकुटधरगिरि-पिप्पलगुहा-उपगुप्तप्रस्तरानन्दावशेषाणामवशेषस्यैकः स्तूपः समुपालभ्यत। इदं स्पष्टमस्ति यदत्र बौद्धधर्मस्य महान् प्रभाव आसीत्। मगधप्रदेशात् चन्द्रगुप्तनामक एको हिन्दुभिक्षुर्नवमे शतके युन्नानराज्ये समागच्छत्।

फ्रासीयहिन्दचीनस्य लाओसप्रान्तस्य प्राचीनं नाम मालवदेश आसीत्। अस्य पूर्वो भागो भारतीयमालवप्रदेशस्य पूर्वभागवद् दशार्ण उच्यते स्म। अधुना लुअग-प्रबंग इत्युच्यते। एतेषां राज्यानां सत्ताऽस्य विषयस्य प्रबलं प्रमाणमस्ति यद् भारतीया आवासका एषु प्रदेशेषु स्थलपथैरप्यगमन्। केवलजलमार्गैर्गमने ते युन्नान-ङनसीसदृशेषु समुद्रात् शतक्रोशान्तरालप्रदेशेष्वतिशीघ्रं राज्यं स्थापयितुं न शक्नुवन्ति स्म।

द्वितीयशतकखीष्टीयाब्दपूर्वत उदीच्यबर्माचीनदेशाभ्यां सह स्थलमार्गद्वारा भारतस्य सम्बन्धेऽनेकानि प्रमाणानि सन्ति। द्वितीये शतके खीष्टीयाब्दे यदा प्रसिद्धश्चीनदेशीयो राजदूतश्चाङ्कीनो बाख्त्रीप्रदेशे गतस्तदेदं दृष्ट्वा आश्चर्यचकितोऽभूद् यत् तत्रापणेषु चीनकौशेयानि वंशजानि वस्तूनि विक्रीयन्ते। तेनान्विष्टं यदिमानि वस्तूनि कुतः समागच्छन्ति ? तेनाऽज्ञायत यदिमे सर्वे पदार्थाश्चीनदेशस्य युन्नानप्रान्तात् सेचुआनप्रान्ताच्च समग्रमुत्तरभारतम् अफगानिस्तानञ्चातिक्रम्य हिन्दुकुशञ्चातिलङ्घ्य अत्रागच्छन्ति। प्रथमे शतके चीनगामिनौ द्वौ बौद्धभिक्षू सम्भवतो युन्नानप्रान्तमतिक्राम्यन्तौ चीनदेशं प्राप्तौ। इत्सिंगमहोदयेन लिखितमस्ति यद् युन्नानप्रान्तादुदीच्यबर्मादेशाद् विंशतिश्चीनवासिनस्तीर्थयात्रिणो भारतमागताः। घटनेयं द्वितीयस्य तृतीयस्य च शतकयोरस्ति। मार्गोऽयं तथोपयुज्यते स्म यत् ६५४ तमे खीष्टीयाब्दे चीनस्य राज्ञा बौद्धग्रन्थानानेतुमनेन मार्गेण भिक्षूणां त्रीणि शतानि प्रेषितानि।

एतेषां सामान्यानां प्रश्नानां विवेचनानन्तरमधुना सुवर्णभूमिप्रदेशस्य विभिन्नप्रदेशेषु हिन्दचीने ( कम्बोडिया, चम्पा ), सुवर्णद्वीपे, बर्माप्रदेशे, मलायाप्रदेशे च भारतीयसंस्कृतेः प्रसारस्य संक्षिप्त इतिहासः प्रदास्यते।



# दशमोऽध्यायः

## कम्बुजदेशः

सुवर्णभूमिप्रदेशे (एशियामहाद्वीपस्याग्नेयदिग्भागे) भारतीयैः सर्वप्रथम कम्बोडिया-नाम्नि प्रदेशे स्वकीय उपनिवेशः स्थापितः। अत्र फूनान कम्बुज-चम्पाख्यानि भारतीयराज्या-न्यासन्। एतेषा राजनीतिक सास्कृतिकञ्चेतिहासमवगन्तुमस्य प्रदेशस्य भौगोलिकस्थितेर्भारतीयाना-मागनात् पूर्वमत्र निवासिजनानामवस्थायाश्च परिचय आवश्यको विद्यते।

**हिन्दचीनप्रदेशस्य भूरचना प्रान्ताश्च**—हिन्दचीनप्रदेशस्य द्वीपकल्प एशिया-महाद्वीपस्य दक्षिणपूर्वदिक्कोणेऽवस्थितो विद्यते। अस्य सम्पूर्ण क्षेत्रफल ३, ३४,२८५ वर्गमील-परिमित तथा जनसख्या प्रायः कोटिद्वय वर्तते। अस्य भूभागस्य भूयान् भागो युन्नानराज्याद् निःसृतया एकया पर्वतशृङ्खलया परिवृतोऽस्ति। इयमुत्तरतो दक्षिणस्मिन् आवृत्तिद्वय विदधती आङ्गल-एस ( S ) इत्याकारेण सकलेदेशे प्रसृताऽस्ति। अस्य भूखण्डस्य द्वे महानद्यौ स्तः—सोगकोई इति, मीकाग इति च। द्वयोर्जलविभाजिका उपर्युक्ता शृङ्खलाऽस्ति।

नदीनामुर्वरतीराणि सर्वप्रथम सभ्यताकेन्द्राणि भवन्ति, यतो ह्यत्र आजीविकाकृषि-निवासगमनागमनानि विशेषतः सुखसाध्यानि भवन्ति। अनया दृष्ट्या हिन्दचीनप्रदेशे उपर्युक्त-क्षेत्राणि मीकागाख्यनद्या नदीमुखपुलिनम्, कोचीनचीनप्रान्तस्य तथा कम्बोडियाख्य-भूभागस्योर्वर क्षेत्र तथा अनामप्रदेशस्य टौनकिनेत्याख्यस्य प्रदेशस्य संकीर्णः खण्ड आसन्। एतेषु कैश्चन कारणैर्मीकागाख्यनद्या नदीमुखपुलिन सर्वोत्तममासीत्।

**मीकांगनदी गङ्गामाता च**—केषाञ्चिद् विदुषा विचारो विद्यते यद् मीकागशब्दो मातागङ्गा इत्यस्य रूपान्तरमस्ति। सदेहास्पद खल्विय व्युत्पत्तिः, किन्त्वत्र सदीतिलेशोऽपि नास्ति यद् भारतीयेतिहासे यत्स्थान गङ्गाया वर्तते, कम्बुजदेशे तदेव मीकागनद्या विद्यते। फूनान-राज्यस्य कम्बुजदेशस्य च प्राचीना वसतयो मीकागनद्यास्तट एवासन्। यदि मिश्रदेशो नीलनद्या वरदानमस्ति, तर्हि कम्बोडियाप्रदेशो मीकागनद्याः। दागरेकपर्वतमालाया दक्षिणस्मिन् भागे अस्य भूभागस्याधोभागः प्रतिवर्ष वर्षाकाले मीकागनद्या आप्लावेन निमज्जति। आप्लावोऽय सर्वस्मिन् प्रदेशे कर्दममुपलिप्य भूमिमुर्वरा करोति। अत्र कृषीवला. कृष्यर्थ भूमिलेपस्य (खाद) सेचनाय च जलस्याधिका चिन्ता न कुर्वन्ति। सकलदक्षिण-पूर्वएशियादेशेऽधिको विशालो भूभागः कश्चन न विद्यते। हिन्दचीनदेशे कृषेर्जीविकायाश्च सर्वाधिकं सौकर्यमत्रैव वर्तते। अपरञ्च कम्बोडियाप्रदेशो भारतचीनदेशयोर्मध्ये महत्त्वपूर्णो व्यापारिकप्रदेश आसीत्। उभयोर्देशयोर्व्यापारिणोऽत्र स्वदेशात् पण्यवस्तून्यानीय विनिमयन्ते स्म। लियागवशसम्बन्धि-चीनदेशीयेतिहासः तुएनसिउनेत्याख्य राज्य वर्णयन् लिखति यत् "भारतस्य पार्थिया-देशस्य च बहवो व्यापारिणोऽत्रागच्छन्ति स्म। तुएनसिउनराज्यस्यापणः पूर्वपश्चिमदेशयो. सन्धि-

स्थानं विद्यते। अत्र प्रतिदिनं दशसहस्राधिका जना आगच्छन्ति। अत्र दुर्लभाः पदार्थाः, महार्हाणि पण्यवस्तूनि सर्वाणि च द्रव्याणि समुपलभ्यन्ते।" जीविकायाः सौकर्यत्वाद् व्यापारिक केन्द्रत्वाच्च कम्बोडियाप्रदेशस्य भारतीयैरावासन स्वाभाविकमासीत्।

जातयः—यदा भारतीया अत्र समागतास्तदा हिन्दचीनदेशे मोनख्मेरजात्योः प्रभुत्वमासीत्। अधुना मोनजातिरस्य द्वीपकल्पस्य पश्चिमभागे दक्षिणबर्मादेशे च समुपलभ्यते, ख्मेरजातिश्च दक्षिणपूर्व(आग्नेय)दिग्भागे कम्बोडियाप्रदेशे। उभयोर्मध्ये चीनदेशस्य किरात(तिब्बती)वंशस्य च वाचौ प्रयुञ्जानैर्बर्मास्यामवास्यैरेक गर्त विहितम्, परमिद जातिद्वयमत्र क्रमेण एकादशशतके चतुर्दशशतके च दक्षिणचीनदेशात् समागमत्। अनयोः पूर्वमत्र मोनख्मेर-तत्सम्बद्धभाषाभाषिण्यो जातयो व्याप्ता आसन्।

अधुना हिन्दचीनप्रदेशे बर्मी-थाई-आदिवासिमोई(खस)ख्मेर-चमनामधेयाः पञ्चजातयः सन्ति। प्रथम जातिद्वयमेकादशे चतुर्दशे च शतकयोर्दक्षिणचीनदेशात् समागमत्। आर्याणामागमनकाले अन्तिम जातित्रयमेवासीत्, तिस्रोऽपि जातयस्तदानीं वन्यावस्थायामेवासन्। आदिवासिमोईनामधेया अथवा खसनामधेया जातिरस्य द्वीपकल्पस्य प्राचीनतमनीग्रिटोजातिवशजा विद्यते, एतेषा वर्तमानाः प्रतिकृतयोऽण्डेमानद्वीपवासिन आदिमजना विद्यन्ते, ये कृषिं न जानन्ति, तथा वन्यपशुवन्मृगयया जीवन यापयन्ति। टालमीमहोदयस्य वर्णनेनेदं ज्ञायते यदिमे नरभक्षिणो राक्षसा आसन्। द्वितीया ख्मेरजातिरपि वन्यावस्थायामेवासीत्। चीनदेशीयेतिहासानुसारेण ते नग्ना भ्राम्यन्ति स्म। तृतीया जातिरपि अत्यन्तासभ्यदशायामासीत्। एकेन चीनदेशीयेतिहासकारेण तौंगवाङनाम्ना प्रसिद्धेनैतेषां विषये लिखितम्—'ते तथा वन्याः सन्ति यत् कृषिं कर्तुं न जानन्ति, मत्स्यैर्मृगयया च जीवनं निर्वाहयन्ति। तेऽतीव दुर्दान्ताः सन्ति, प्रायो विद्रोह कुर्वन्ति। चीनदेशीयाधिकारिणा गृहेष्वाक्रमण कुर्वन्ति, यत्र कुत्रापि गच्छन्ति तत्राग्नि प्रज्वालयन्ति, लुण्ठनं ध्वंसन हिंसनञ्च कुर्वन्ति। प्रबलाभिः सेनाभिराक्रम्यमाणास्ते दुष्प्रवेशमरण्य प्रविशन्ति।

भारतीयानामुपनिवेशकाना मुख्य कार्यमेतादृशानामारण्यकाना सभ्यत्वसम्पादनमासीत्। स्पष्टमिद विद्यते यत् चीनवासिनः स्वप्रतिवेशिनः सभ्यान् कर्तुं नापारयन्। सहस्रक्रोशदूरतः समागता भारतीयास्तेषा सभ्यतापाठेन यथा सफला जातास्तथा अङ्कोरवत-बेयोन-अङ्कोरथोममन्दिरैः स्पष्टमस्ति। भारतीयैरत्रानेके उपनिवेशा आवासिताः, राज्यानि स्थापितानि तथा सस्कृतेः प्रसारः कृतः। तेषु प्रथमोपनिवेशः कम्बोडियाप्रदेश आसीत्।

## कम्बोडियाप्रदेशे भारतीयानामुपनिवेशनस्योपक्रमः

उद्गमस्तु प्रायः अस्पष्टोऽनिश्चितो विस्मृतिगर्भे च निमग्नो भवति। कतिपया जनश्रुतय एवास्पष्ट मूल प्रकाशयितु यतन्ते। कम्बोडियाप्रदेशे भारतीयानामावासनविषये इमा जनश्रुतय एवाश्रीयन्ते। प्रदेशस्यास्य प्राचीनतम राज्य फूनानेति (वर्तमानकम्बोडियाप्रदेशस्य कोचीन-

चीनप्रदेशस्य कतिपयभागः) आसीत्। अस्योद्गमस्य सम्बन्धे चीन-चम्पा-कम्बोडिया-देशानामितिहासेन चतुष्प्रकारकाणि विवरणानि समुपलभ्यन्ते।

(१) **कौण्डिन्यद्वारावासनम्**—तृतीयशतकखीष्टीयाब्दस्य चीनवासिनः कागताई-नामकस्य वर्णनानुसारेण फूनानराज्यस्य प्रथमा शासिका लिए उ—इतिनामधेयाऽऽसीत्। पौराणिकस्य कस्यचन देवस्योपासको मोफूनिवासी हुएन-चेनो हुएनतीनो वा स्वप्ने देवेनादिष्टो यत् स धनुरादाय कमपि वणिक्पोतमारोहेत्, समुद्रयात्राञ्च कुर्यात्। प्रातर्मन्दिर गतेन तेन धनुः प्राप्तम्, तत्पश्चात् स पोतमारोहत्। देवेन वायोर्मार्गस्तथा परिवर्तितो यत् तस्य पोतः फूनानराज्यं समागमत्। लिएउ ये—इत्याख्या शासिका नौकामारुह्य पोत लुण्ठितु समागमत्। हुएन-तीनो धनुरादाय तथा वाण प्राक्षिपत्, यथा स राज्ञ्या नौकामवरात् पार यावद् विद्धवान्। राज्ञी भीत्वा आत्मसमर्पणमकरोत्, हुएन तीनश्चास्य राज्यस्य शासकोऽभूत्।

(२) ६५७ तमखीष्टीयाब्दस्य चम्पादेशस्यैकस्मिन्नभिलेखे कम्बुजदेशस्य राजधान्या भवपुरस्य सस्थापकः कौण्डिन्यनामा ब्राह्मणः प्रतिपादितो विद्यते। द्विजोत्तमेन कौण्डिन्येन भवपुर-प्रदेशे द्रोणाचार्यस्य पुत्राद् द्विजश्रेष्ठाद् अश्वथाम्नः प्राप्तस्य शूलस्य स्थापना कृता। तत्र लिखितं यत् सर्पराजस्य सोमाभिधाना कन्याऽऽसीत्। प्रेमवशात् तया नररूप वृतम्। द्विजपुङ्गवेन कौण्डिन्येन सा पत्नीरूपेण स्वीकृता[1]। कम्बोडियादेशस्येतिहासेऽस्मिन् विषये द्वे अनुश्रुती स्तः।

(३) प्रथमानुश्रुत्यनुसारेण इन्द्रप्रस्थस्य राजा आदित्यवश' स्वपुत्र प्रति रुष्ट आसीत्। तेन स राज्यान्निर्वासित'। स कोकथ्लोकदेशे समागत', तत्र स राजान पराजित्य तस्याधिपतिरभूत्। कदाचित् सन्ध्याकाले समुद्रतटस्य बालुकामयप्रदेशे भ्राम्यन् सहसा वेलावृद्धिकारणात् स तत्रैव निशामनैषीत्। नक्तमेकाऽनुपमा सुन्दरी नागकन्या बालुकाया क्रीडितु समागता। राजा तस्या रूपेण मुग्धो भूत्वा तामुद्वोढु निश्चितवान्। कन्याया जनकेन नागराजेन समुद्रजल पीत्वा स्वस्य भविष्यतो जामातृ राज्य विस्तारितम्। तदर्थं राजधानी आवासिता, राज्य चेद् कम्बोज-पदेन व्यपदिष्टम्।

(४) **कम्बुद्वारा उपनिवेशनम्**—द्वितीया कथा इत्थमस्ति—अतीतकाले कम्बोडिया-देशः शिलाना बालुकानाञ्च गहन मरुस्थलमासीत्। कदाचिदार्यदेशस्य राजा कम्बुस्वा-यम्भुव आत्मान भीषणेऽस्मिन् मरुस्थले प्राप्तवान्। तस्मै महादेवेन मेरानामधेया पत्नी प्रदत्ता। तस्या मृत्युवशादुद्विग्नो भूत्वा कम्बुरिद सकल्प्य स्वदेश पर्यत्यजत्—"यदह भीषणाया मरुभूमौ प्राणान् त्यक्ष्यामि। कम्बोडियादेश प्राप्य स एका गुहा प्रविवेश। तत्र तेनानेकशीर्षा

---

१. मजूमदार चम्पा ३।१८,

> **तत्र स्थापितवाञ्छूलं कौण्डिन्यस्तद्द्विजर्षभः।**
> **अश्वत्थाम्नो द्विजश्रेष्ठाद् द्रोणपुत्रादवाप्य तम्।**
> **आसीद् भुजगेन्द्रकन्या सोमेति सा वंशकरी पृथिव्याम्॥**
> **कौण्डिन्यनाम्ना द्विजपुङ्गवेन कार्यार्थपत्नीत्वमनायि या हि॥**

विशालकाया. सर्पा दृष्टाः । दृष्ट्वा च तान् कोशादसि निष्कासितवान् सशौर्य बृहत्तमसर्पाभिमुख ससार। कम्बुरिद दृश्य दृष्ट्वा अवागभूद् यत् सर्पो मनुष्यवाचा तं तन्निवासस्थानमपृच्छत्। कम्बो. कथा श्रुत्वा सर्पेणोक्तम्—"वैदेशिक ! अह तवाभिधान न जानामि, किन्तु त्वं शिवस्य चर्चा करोषि, अह नागराजोऽस्मि, शिवश्च मम स्वाम्यस्ति । त्वं साहसिकः प्रतीयसे, त्वया यो देशो विचितोऽस्ति, तत्र त्व मया सह निवस, स्वदु.खञ्च निराकुरु" । कम्बुस्तत्र न्यवात्सीत्, मानवाकारैः सर्पैः सह प्रीतिं प्रारभत । कतिपयवर्षानन्तर स नागराजस्य कन्या परिणीतवान् । नागराजस्य समीपे मान्त्रिकशक्तिरासीत् । तया तेन देशोऽयमार्यदेशवत् सुन्दरः कृतः । कम्बुस्तस्य देशस्य शासकोऽभूत् । तद्राज्यञ्च तन्नाम्ना कम्बुजेत्यकथ्यत ।

उपर्युक्ताश्चतस्रः कथा यद्यप्यैतिहासिक्यो न सन्ति, तथापि कम्बोडियादेशस्य प्राचीने उपनिवेशने मनोरञ्जकानि तथ्यानि विशदीकुर्वन्ति । एताभिः कथाभिरिद निर्विवाद सिध्यति यदस्य देशस्य प्रथमावासका भारताद् गताः । चीनदेशीया अन्यस्या भाषायाः शब्दान् स्वभाषा-नुरूपान् कृत्वा लिखन्ति । चीनदेशीयभाषाविद. कथयन्ति यत् सस्कृतकौण्डिन्यशब्दश्चीनदेशीय-भाषाया हुएनतीन इति सजातः । अतः प्रथमयोर्द्वयोरनुसारेण देशस्यास्य प्रथमावासकः कौण्डि-न्यनामा ब्राह्मण आसीत् । अपरयोर्द्वयोरनुसारेण प्रथमे उपनिवेशकाः क्षत्रिया आसन् । एताभिः कथाभिरार्याणामुपनिवेशनविषये महत्त्वपूर्ण तथ्य ज्ञायते यत् ते येषु प्रदेशेषु वसन्ति स्म, तत्रत्यैर्जनैः सह वैवाहिकसम्बन्धद्वारा सम्मिश्रिता भवन्ति स्म । अस्मिन् प्रदेशे फूनानस्य प्रथमं राज्य स्थापितमभूत्, अतस्तस्यैवात्र प्रतिपादन भविष्यति ।

## फूनानराज्यम्

कम्बुजदेशस्य प्राचीनतम शक्तिशालि हिन्दुराज्य फूनाननामकमासीत् । सप्तमे शतके कम्बुजराज्यस्य स्थापनानन्तर प्राचीनराज्यस्य परम्परा अवशेषाश्चैतादृश्या पूर्णतया सहालुप्यन्त यत् प्राचीन भारतीय नामापि न ज्ञायते । अस्य राज्यस्य निखिलोऽपि परिचयस्त्रीन् सस्कृताभि-लेखान् विहाय चीनदेशीयेतिहासेभ्य उपलभ्यते । फूनानेति कस्यचिद् भारतीयस्य ख्मेरस्य वा शब्दस्य चीनदेशीयरूपान्तरमस्ति । विदुषामस्य मूलरूपविषये पर्याप्तो मतभेदो विद्यते । श्लीगल-पार्करमहोदयौ अस्य मूल रूप पोनमेति फ्नोमेति वा ( पेह ) मन्येते स्म, किन्त्वद्यत्वे फूनानस्याद्यं रूप बाफ्नामेति मन्यते । इद दक्षिणकम्बोडियादेशस्यैकः पर्वतको वर्तते, तथा तन्नाम्ना समीपस्थाः प्रदेशा अपि बाफ्नोमेति उच्यते । फूनानराज्यस्य राजधानी व्याधपुरमासीत् । प्रथमं विद्वास इद वर्तमानमङ्कोरथोम इति मन्यन्ते स्म, अद्यत्वे च बाफ्नोमपर्वतशिखरस्योपत्य-कायामवस्थिता काचन वसतिरियं स्वीक्रियते ।

**कौण्डिन्यः**—फूनानराज्यस्य प्रथमो राजा हुएनतीन इति कौण्डिन्यो वासीत् । अयं प्रथमशतकखीष्टीयाब्दे फूनानप्रदेशं समागतः । अस्य फूनानराज्यागमनस्य तत्र च राज्ञ्या विजयस्य कथा पूर्वं वर्णिता विद्यते । चीनदेशीयवर्णनानुसारेण यदा कौण्डिन्यः फूनानराज्यं समागतः, तदा तत्रत्या निवासिनोऽसभ्यावस्थायामासन्, दिगम्बरा भ्राम्यन्ति स्म । कौण्डिन्यस्तान् सभ्यताया.

पाठमपाठयत्, विशेषतःस्त्रीभ्यो वस्त्रधारणं बालकेभ्यःकेशग्रन्थनञ्च शिक्षितवान्। इदमुपरि प्रतिपादितं विद्यते यत् कम्बोडियादेशे तस्मिन् समयेऽनेकाः स्वल्पवसतयो राज्यानि वाऽऽसन्। हुएनतीमहोदयस्य सूनवे सप्तनगराणा भूमिः शासनप्रबन्धश्च दत्त आसीत्। सम्भवतोऽत्र तस्य प्रभुतानामभाव आसीत्। वास्तविक शासन स्थानीयनायकाना हस्ते आसीत्। हुएनतीनस्य कश्चनोत्तराधिकारी हुएकपान-हुअंगनामा नगरेष्वेषु विरोधबीजमुप्त्वा तानि पूर्णतया स्वायत्तीचकार। स स्वपुत्रान् पौत्रांश्चैकैकस्य नगरस्य शासकान् राज्ञो वा नियुक्तवान्। नवतिवर्षवयस्कः परिपक्वावस्थो हुअगो यदा स्वर्गं जगाम, तदा पानपान इत्याख्यो राजा राजसिंहासनमारूढवान्। तेन शासनभारः स्वसेनापतेः फनमनाख्यस्य फनचेमनाख्यस्य वा शिरसि निक्षिप्तः। पानपानराज्ञो मरणानन्तरं प्रजाभिः फनचेमनः स्वराजा विचितः (२०० खी०)। चतुर्थशतकपर्यन्तमत्रानेके राजानो बभूवुः।

**नूतनकौण्डिन्यस्यागमनम्**—चतुर्थशतकस्यान्तेऽथवा पञ्चमशतकस्य प्रारम्भे फूनानराज्ये कियाओ-चेन-जू इत्याख्यस्य पुरुषस्याथवा नूतनकौण्डिन्यस्यागमनमभूत्। लियागवशीये (५०२-५५६) तिहासानुसारेण कौण्डिन्य एको भारतवासी ब्राह्मण आसीत्। कदाचित् फूनानराज्यं गत्वा तत्र शासनायाकाशवाण्या स प्रतिबोधितः। स फूनानराज्यस्य दक्षिणस्मिन् अवस्थिते पानपानप्रदेशे गतः, फूनानदेशस्य जनैस्तस्य हार्दिकं स्वागत कृतम्। तञ्च स्वीय नृपमवृण्वन्। तेन फूनानराज्ये भारतीनियमा आचारव्यवहाराश्च प्रवेशिताः। अयं भारतीयावासकानामेको नूतनः प्रवाह आसीत्, य फूनानराज्य पूर्णतया भारतीयप्रभावेणानुप्राणितमकरोत्। अस्य कौण्डिन्यस्य वंशे जयवर्मरुद्रवर्म (५१४-५३६ खी०) प्रभृतयो नृपतयो बभूवुः। सप्तमशतके कम्बुजराज्योत्कर्षेण पराभूत फूनानराज्यं समाप्तिमगात्।

## फूनानराज्ये भारतीया संस्कृतिः

फूनानराज्य कम्बोडियाख्यस्य प्रदेशस्य प्राचीनतम हिन्दुराज्यमासीत्। तद् हिन्दचीनदेशे भारतीयायाः सस्कृतेः सभ्यतायाश्च प्रसारस्य न केवलमादिमम्, किन्तु अत्यधिक महत्त्वपूर्णं केन्द्रमासीत्। अस्मात् स्थानादेव भारतीयसस्कृतेः किरणाश्चतसृषु दिक्षु प्रसृताः। यदा फनाचेमनाख्येन राज्ञा लओस-स्याम-मलायाप्रदेशेषु फूनानराज्यस्य साम्राज्यं विस्तारितम्, तदा तेन सह भारतीयाः सस्कृतेर्ज्योतिरप्येतान् प्रदेशान् आलुलोकत्।

**धर्मः**—भारतीया एतेषा प्रदेशानामसभ्यान् निवासिनः सभ्यतायाः पाठमपाठयन्। सकलमपि चीनीयविवरणमत्र सवदति यदत्रजनाः पूर्वं दिगम्बरा निवसन्ति स्म, भारतीयाना ससर्गेण तैर्वस्त्रपरिधान शिक्षितम्। ख्मेरजनैर्भारतस्य धर्म-कला-आचार-विचार-राजनीत्यादयो गृहीताः। फूनानराज्ये पौराणिकस्य धर्मस्य प्राधान्यमासीत्, किन्तु बौद्धधर्मस्यापि महान् प्रचार आसीत्। तत्र शैवबौद्धधर्मौ प्रसिद्धावास्ताम्। फूनानराज्यस्य त्रिभिः प्राचीनैरभिलेखैश्चीनदेशीयवि-

वरण समर्थ्यते। इमेऽभिलेखा॰ प्राचीनभारतीयलिप्या सस्कृतभाषाया निबद्धाः सन्ति[१]। प्रथमोऽभिलेखो विष्णो॰ स्तुत्या प्रारभ्यते[२]। द्वितीयस्मिन्नभिलेखे राजकुमारेण गुणवर्मणा दत्तायाश्चक्रतीर्थस्वामिनामकविष्णुमूर्तेरुल्लेखो विद्यते। वेदे उपवेदे वेदाङ्गेपु च पारङ्गतैर्ब्राह्मणैरस्या मूर्तेर्नाम चक्रतीर्थस्वामीनि व्यधीयत[३]। तृतीयस्मिन्नभिलेखे कस्मैचन बौद्धसङ्घाय बौद्धविहाराथ वा दत्तस्य दानस्य वर्णनमस्ति[४]। अत्र बुद्धधर्मस्य सङ्घस्य चोल्लेखो वर्तते। द्वितीयस्मिन् लेखे भागवनाना तथा तृतीयस्मिन्नार्यसङ्घिकानामुल्लेखो विद्यते। प्रथमाभिलेखद्वयेन स्पष्टमस्ति यत् तत्र वैष्णवधर्मोऽपि प्रसिद्ध आसीत्। अन्यस्मिन्नभिलेखे भक्तिकर्मसिद्धान्तौ स्पष्टमुल्लिखितौ स्तः। विष्णोर्भक्तः सकृद् मन्दिर प्रविश्य सर्वपापविमुक्तो भवनि, विष्णुपदञ्च लभते।

तद्भक्तोऽधिवसेद् विशेदपि च वा तुष्टान्तरात्मा जनः।
मुक्तो दुष्कृतकर्मणः स परम गच्छेत् पद वैष्णवम्॥[५]

अस्मिन् लेखे इदमपि प्रत्यपाद्यत यद् ऋषिभिर्विष्णोश्चक्रतीर्थस्वामीति नाम विहितम्। अभिधानमिदमनेकेषु पुराणेषु समुपलभ्यते। अपरञ्चात्र क्षीरोदसमुद्रस्यामृतस्य चोल्लेख इदं सूचयति यत् फूनानराज्यस्य विद्वास॰ पौराणिका आसन्। प्रथमे द्वितीयस्मिन् चाभिलेखयोः शास्त्रनिष्णातब्राह्मणाना स्पष्टमुल्लेखो विद्यते। इमे ब्राह्मणास्तत्र भारतीयशास्त्राणामध्ययनस्य परम्परा सुरक्षितवन्तः।

एतेभ्योऽभिलेखेभ्य इदमपि ज्ञायते यत् फूनानराज्ये भारतीयाया वर्णमालायाः सस्कृतभाषायाश्च प्रवेश एव नासीत्, पर्याप्तो विकासोऽप्यजायत। अभिलेखाना लिपिर्दक्षिणभारतीया वर्तते, तथा भाषा काव्यशैलीक ललित संस्कृतमासीत्। यथा रुद्रवर्मणः शार्दूलविक्रीडितच्छन्दसा निबद्ध वर्णन द्रष्टव्यम्—

एकस्थानखिलान्नराधिपगुणानुद्यच्छतं वेक्षितु
धात्रा निर्मित एक एव स भुवि श्रीरुद्रवर्मा ।
सर्व सच्चरित कृत नृपतिना तेनातिधर्मार्थिना
लोकानुग्रहसाधन प्रति न च क्षत्रबलं खण्डितम्॥[६]

---

१. रायल-एशियाटिक सोसायटी-बगालद्वारा श्रीरमेशचन्द्रमजूमदारस्य कम्बोडियादेशस्य सस्कृताभिलेखाना संग्रह॰ 'इस्क्रिप्शन्स आफ् कम्बुज' (कलकत्ता १९५३) इति नाम्ना प्रकाशितोऽस्ति। अत्र सर्वेषामभिलेखानामविकलरूप लिखितं विद्यते अग्रेऽभिलेखानां सर्वं प्रमाणममु ग्रन्थमुपजीव्य लिखिष्यते। अस्य च सकेतो मइंकरूपोऽस्ति।

२. मइंक पृ० १, श्लोकः १।

३. मइंक, पृ० ४, अस्याष्टमे हि विचितैरुपवेदेवेदाङ्गविद्भिरमरप्रतिमैर्द्विजेन्द्रैः॥
सस्कारितस्य कथितं भुवि चक्रतीर्थस्वामीति नाम विदधु श्रुतिषु प्रवीणा॥

४. मइंक, पृ० ४-७।

५. मइंक, पृ० ४, श्लोकः—१०।

६. मइंक, पृ० ५—६, श्लोकौ ३—४।

**भारतीयपरम्पराणां प्रचलनम्**—कालिदासेन रघुवंशमहाकाव्ये क्षात्रव्रतस्य यादृशस्योदात्तादर्शस्य वर्णनं कृतम्, फूनानराज्यस्य राजानस्तद्व्रत कदापि न खण्डितवन्तः। ते समुन्नते पदे ब्राह्मणान् नियुञ्जन्ति स्म। जयवर्मणा एको द्विजनायकस्य पुत्रः कोशाध्यक्षपदे (धनानामध्यक्षपदे) नियुक्तः। एतेनेदमपि स्पष्ट विद्यते यत्तत्र ब्राह्मणक्षत्रियादिवर्णाना विचारः प्रचलति स्म। यद्यपि षष्ठशतक यावत् केवलं त्रयोऽपूर्णा लेखा एवोपालभ्यन्त, किन्त्वत्र प्रमुखसस्कृतभाषया पौराणिकीभिरुपमाभिश्चात्र सन्देहलेशोऽपि न भवति यद् भारतीयस्य धर्मस्य साहित्यस्य च प्रभावस्तत्र षष्ठशतकाद् बहुकालपूर्वं प्राप्त आसीत्। अस्यैक मनोहरमुदाहरण राज्याः कुलप्रभावत्या वर्णनमस्ति। सा शक्रस्य शचीव, अग्नेः स्वाहेव, हरस्य रुद्राणीव, श्रीपतेश्च श्रीरिवादर्शभूता पतिव्रताऽऽसीत्[1]। एतद्दिनपर्यन्त हिन्दुविवाहेष्वेतादृशाः श्लोका गीयन्ते[2]।

फूनानराज्यस्य साधारणजनानामाचारव्यवहारविषयेषु चीनदेशीयग्रन्थेषु यद्वर्णनं समुपलभ्यते, तदप्यभिलेखैः प्रकटित परिणामं समर्थयते। प्राचीनभारतस्येव तत्र दैवपरीक्षापद्धतेः प्रचलनमासीत्। "विवादे समुपस्थिते विवादी कथ्यमाने जले पातितमङ्गुलीयकमण्डवोद्धर्तुम्, अथवा तप्तायसश्रृङ्खला हस्ते आदाय गन्तुं कथ्यते। तत्रापराधिनो हस्तौ पूर्णतया दह्येते, तथा निरपराधस्य च काचन क्षतिर्न भवति। बहुवारं कलहकर्ता जले प्रक्षिप्यते। तत्रापराधी निमज्जति, निरपराधश्च न निमज्जति। बहुवारन्त्वपराधिनो हिंस्रजन्तूनां गोष्ठेऽथवा ब्राह्मणा समीपे दिनत्रयं स्थाप्यन्ते, यदि ते तैर्न भक्ष्यन्ते, तदा निर्दोषा मन्यन्ते।" राज्ञा नाम प्रायः फन(वर्मा)शब्देन समाप्यते स्म। मनुस्मृतौ क्षत्रियाणा वर्मान्त नाम कर्तुं विधिर्विद्यते। फूनानराज्यस्य राजानो भारतीया राजान इवाडम्बरेण निवसन्ति स्म। द्वयोर्देशयोर्भूषणाना वस्त्रपरिधानस्यान्यस्य च व्यवहारस्य परस्परं पूर्ण सादृश्यमासीत्।

**कला**—वास्तुकलाया मूर्तिकलायाश्चापि भारतेन फूनानराज्यमतीव प्रभावितम्। अस्य देशस्य वास्तुमूर्तिकले च द्विधा विभक्तुं शक्येते—(१) आद्या कला, (२) दशमशतकाद् विकसिता समुन्नता (क्लासिकल) कला। तयोराद्यायाः कलायाः प्रारम्भः फूनानराज्येऽभूत्। प्राचीनमन्दिराणि काष्ठनिर्मितत्वेनेष्टकानिर्मितत्वेन च समूल नष्टानि, किन्तु परवर्तिनोऽवशेषानाश्रित्यारम्भिकमन्दिरवास्तोर्यादृशी कल्पना विहिता, सा गुप्तकालिकवास्तुकलया गभीरं सादृश्यमादधाति।

## कम्बुजराज्यस्याभ्युत्थानम्

**कम्बुजराज्योदयः**—षष्ठशतकखीष्टीयाब्दे कम्बोडियाप्रदेशे कम्बुज(चीनदेशीय रूपं चेनला)नामकं फूनानराज्यस्यैकं करदं राज्यं प्रबलमभूत्। कम्बुजराज्यस्य मूलं स्थानमुत्तरपूर्वकम्बोडियाप्रदेशः प्रतीयते, यतो राज्यस्यास्य प्राचीनतमा राजधानी श्रेष्ठपुरवस्तक(लाओस)स्य

---

१. तत्रैव, पृ० २,

शक्रस्येव शची नृपस्य दयिता स्वाहेव सप्तार्चिषः
रुद्राणीव हरस्य लोकविदिता सा श्रीरिव श्रीपतेः।

२. साङ्गोपाङ्गविवाहविधिर्द्रष्टव्यः।

पार्श्वे वलफस्थाने आसीत्। इत्थ प्रतीयते यत् केचन आर्या उपनिवेशका उत्तरकम्बोडियाप्रदेशे अनेकाः स्वल्पा वसती राज्यञ्चावासितवन्तः। पूर्वमिमानि सर्वाणि फूनानराज्यमधीश्वर मन्यन्ते स्म। पुनरेषु राज्येषु षष्ठे शतके कम्बुजराज्य प्राबल्यमासादयत्, प्राक् ते स्वप्रतिवेशिनो राजानो विजिताः, अन्ते चानेकैराक्रमणैः फूनानराज्यस्य समूलोन्मूलन कृतम्।

कम्बुजदेशस्य प्रतापशालिनो राजानः प्रथमो भववर्मा (५८०–५९८ खी०) महेन्द्रवर्मा-परनामधेयश्चित्रसेनः (५९८–६१०), ईशानवर्मा (६१०–६३५ खी०), प्रथमो जयवर्मा (६४०–६८० खी०) चासन्।

## कम्बुजदेशस्य सांस्कृतिक इतिहासः

कम्बुजदेशस्योत्कर्षो राज्यञ्चैकशताब्दीपर्यन्तमभूत्, पर तस्य सांस्कृतिक इतिहासोऽतीव महत्त्वपूर्णो वर्तते। अस्मिन् काले समुपलब्धेभ्यः संस्कृतख्मेरभाषानिबद्धेभ्योऽभिलेखेभ्यश्चीनदेशीय-विवरणेभ्यश्चेदं प्रतीयते यद् हिन्दुसंस्कृतिः कम्बोडियाप्रदेशे सम्यक्तया बद्धमूला भूत्वा उदीच्य-दुर्गमपर्वतारण्येषु प्रसरति स्म। इद पूर्वमेव वर्णितं यत् कम्बोडियाप्रदेशादुत्तरपश्चिमतः कम्बुज-देशस्य लघु राज्य दांगरेकपर्वतानामुत्तरस्मिन् मननद्याः स्यामदेशे च प्रसरति स्म। चन्तबनप्रदेशेन साकं मननद्या उद्गमस्य सन्धात्री रेखाऽस्य राज्यस्य सीमाऽऽसीत्। एकस्याभिलेखस्य शब्देषु उदीच्यप्रदेशो भीषणारण्यसकुल उद्दामपुरुषावासश्चासीत्। भारतीया उपनिवेशका एतादृशा जनानां समुदाये प्रदेशे चागच्छन् तांश्च भारतीयधर्मसंस्कृतिदीक्षितानकार्षुः।

**धर्मः**—अस्मिन् शतके पौराणिको धर्मः कम्बुजदेशस्य प्रधानो धर्म आसीत्। यद्यपि वैदिकयज्ञाना यत्र तत्र वर्णन समुपलभ्यते[1], किन्त्वधिका अभिलेखाः शिवविष्णुप्रभृतिपौराणिकदेवाना मङ्गलाचरणात् प्रारभ्यन्ते। तेषु प्रायस्तेषा देवमूर्तीना प्रतिष्ठापनम्, मन्दिराणां निर्माणमथवा मन्दिरेभ्यो दत्त दान वर्णित विद्यते। अस्य प्रदेशस्य सर्वाधिकलोकप्रियो देवः शिवोऽस्ति। स महा-देवो विद्यते, ब्रह्मा विष्णुश्च तस्य चरणौ सेवेते। स रुद्र-शम्भु-त्र्यम्बक-त्रिशूलि शङ्कर-नृत्येश्वर-त्रिभुवनेश्वर-आम्रातकेश्वर-व्योमेश्वर-गम्भीरेश्वर-नैमिषेश्वर-केदारेश्वर-उत्पन्नेश्वर- अचलेश्वर- महेश्वर-निकामेश्वर-श्रीविजयेश्वर-पिङ्गलेश्वर-कदम्बेश्वर-ईशानप्रभृतिभिरनेकैर्नामभिः स्मर्यते। तस्य पूजा प्राधान्येन लिङ्गरूपेण भवति स्म। स शिरसा गङ्गा चन्द्रकलाञ्च वहति स्म। नन्दी अपि पवित्रोऽम-न्यत। शिवेन सह पार्वती उमा-दुर्गा-चतुर्भुजप्रभृतिनामभिः पूज्यते स्म। विष्णोरुपासना त्रैलोक्य-

---

१. यथा ईशानवर्मणः ५४१ तमे खीष्टीयाब्दे साम्बोर-प्रेईकुक-अभिलेखे राजानं प्रशंसति इदमकथ्यत यद् राज्ञः क्रतूनां संख्यातीततया देवाधिपः स्वम् 'शतक्रतुः' इति नाम सम्यग् न मन्यते।

संख्यातीततया यस्य क्रतूनाममराधिपः।
शतक्रतुकृतन्नाम मन्ये न बहुमन्यते॥
(मईक पृ० २२)

सारहरि-अच्युत-नारायणपदैरभूत् । एकस्मिन्नभिलेखे शालिग्रामस्यापि संकेतो विद्यते । भारते शैववैष्णवयोः कश्चन विरोधो भवेत्, किन्तु तत्र तयोर्द्वयोः समन्वयस्य यत्नोऽक्रियत । द्वावपि शङ्करनारायणरूपेण शम्भुविष्णुरूपेण हराच्युतरूपेण हरिशङ्कररूपेण च पूज्येते स्म। अन्येषु देवेषु स्वयम्भुव. (ब्रह्मणः), यमस्य, प्रहन्तेश्वरस्य, चान्द्रायणनाथस्य, तिलकेश्वरस्य, मूलस्थानस्य, यज्ञपतीश्वरस्य च पूजा भवति स्म। चीनदेशीयविवरणानुसारेण तत्र बौद्धधर्मोऽपि पूर्णतया प्रचलित आसीत् । एकस्मिन्नभिलेखे शास्तृमैत्रेयावलोकितेश्वराभिधानाना त्रयाणा बोधिसत्त्वानामुल्लेखोऽस्ति । कम्बुजदेशे प्राचीना मूर्तयः प्राचीनानि मन्दिराण्यप्यभिलेखानामुपर्युक्तं साक्ष्य पोषयन्ति । अत्र हरिहरस्य, शिवस्य, पार्वत्याः, बुद्धस्य, नन्दिनो ब्रह्मणश्च मूर्तयः समुपालभ्यन्त । एता मन्दिरेषु प्रतिष्ठाप्यन्ते स्म । राजा धनिनश्च मन्दिराणि निर्मातु तेभ्यश्च सुवर्ण-ग्राम-क्षेत्र-वाटिका-दास-दासी-पशु-नारिकेलपूगवृक्षादीनि दातु स्पर्द्धन्ते स्म । कम्बोडियाप्रदेशस्तादृशा मन्दिराणा ध्वसावशेषैः परिपूर्णो विद्यते । राजधान्या. पार्श्वे पर्वतकमन्दिराणि विशेषतः पवित्राणि मन्यन्ते स्म। आश्रमा अपि स्थाप्यन्ते स्म। आश्रमेषु मन्दिरेषु च प्रविष्टा जना अवध्या मन्यन्ते स्म । तत्र कश्चन रथं छत्रञ्च प्रयोक्तुम्, श्वान पक्षिणश्चानेतु नाशकत् ।

भगवत आराधना साकाररूपेणैव भवेदिति नासीत् ; उपनिषदा निराकारस्य ब्रह्मणो विचारोऽपि तत्र गत आसीत् । जीवनस्य लक्ष्यं ब्रह्मपदस्य निरुत्तरब्रह्मणश्च प्राप्तिर्मन्यते स्म[1] । भारतीये साहित्ये शिवस्याष्टमूर्तिविचारोऽधिको लभ्यते । कालिदासेन स्वीये प्रसिद्धे नाटके अभिज्ञानशकुन्तले नान्दीश्लोके 'या सृष्टिः स्रष्टुराद्या'' इत्यत्रायं विचारोऽभिव्यक्तो विद्यते । कम्बुजदेशेऽप्यय विचार आसीद् यत् शिवस्य चन्द्रः, सूर्यः, आकाशः, वायुः, आत्मा, पृथिवी, जलमग्निश्चाष्टौ मूर्तयः सन्ति[2] । भगवद्गीताया अनासक्तियोगोऽपि तत्र गत आसीत्[3] । 'ओं जैमिनये स्वाहा' इत्यस्याभिलेख इद प्रतिपादयति यत् पूर्वमीमासालेखकस्तत्र देव इव पूज्यते स्म । तीर्थाना माहात्म्ये पितृणा तर्पणे विश्वासोऽपि तत्र प्रचलति स्म[4] । पाशुपतशैव-सम्प्रदायस्य प्रभावोऽत्यधिक आसीत् । एकस्मिन्नभिलेखेऽस्य सम्प्रदायस्याचार्यविद्यापुष्पस्योल्लेखो विद्यते[5] ।

---

१ वेदाङ्गलेखः—मझुक पृ० ९, "यमान्तरं ज्योतिरुपासते बुधा निरुत्तरं ब्रह्म परं जिगीषव."।

२. फ्नोहप्राहविहारलेखः—मझुक पृ० ११–१२, "तनोति तनुभिः शम्भुर्योऽष्टाभिरखिलं जगत् ।"

३. वेदाङ्गाभिलेखः—मझुक पृ० ९, तप श्रुतेज्याविधयो यदर्पणा भवत्यनिर्देशफलानुबन्धिनः ।
न केवलं तत्फलयोगसंगिनामसंगिनां कर्मफलत्यजामपि ॥

४. केदेइ अङ्गमन्दिराभिलेखे जयवर्मणो राजवैद्येन सिंहदत्तेन निर्मितं श्रीविजयेश्वरमन्दिरं वर्णयता निर्मातुर्विषये लिखितमस्ति—

शिवयज्ञेन यो देवान् मुनीनध्ययनेन च ।
पितॄंश्चातर्पयत्तोयैः सत्पुत्रकरनिस्सृतैः ॥

५. मझुक पृ० १२,

तस्य पाशुपताचार्यो विद्यापुष्पाह्वयः कविः ।
शब्दवैशेषिकन्यायतत्त्वार्थकृतनिश्चयः ॥

धर्मस्य केषाञ्चिद् जघन्यरूपाणामपि प्रचलनमासीत्। चीनदेशीयग्रन्थानुसारेण राजा प्रतिवर्षं सकृद् नरबलिमपि करोति स्म।

पुराणाना कथास्तत्र भारतवत् प्रचलन्ति स्म। अभिलेखेषु समुद्रमन्थन-कैलास-उदय-गिरि-देवसेनानीकार्तिकेय-मदनदहन-सूर्यचन्द्रवंशारुन्धतीधरणीधरशेषनाग-वज्रधरसहस्राक्षपर्वतपक्ष-भिच्छतुक्रत्विन्द्रादिराजमनु-देवचिकित्सकाश्वनीकुमारादर्शनृपतिदिलीपादीना वर्णनमस्ति। वील-कान्तेल( सं० ९ )अभिलेखादिद ज्ञायते यद् मन्दिरेभ्यो रामायणमहाभारतपुराण-पुस्तकानि दीयन्ते स्म। एवञ्च तत्र तेषा प्रतिदिन सततपाठस्य व्यवस्था आसीत्[1]। एकस्मिन्नभिलेखे ( सं० ३६ ) महाभारतस्य सम्भव( आदि )पर्वणो दानस्य वर्णन विद्यते[2]। एतेषां पवित्रग्रन्थाना नाशकेभ्योऽनेके अभिशापा अदीयन्त[3]।

**भारतीयवाङ्मयस्य प्रसारोऽध्ययनञ्च**—अस्मिन् काले भारतीयवाङ्मयस्य सर्वासा शाखाप्रशाखाना तत्राध्ययन भवति स्म। ब्राह्मणा बौद्धदर्शनेषु प्रवीणा भवन्ति स्म। मन्त्रिणो धर्मशास्त्रज्ञातारो भवन्ति स्म। धार्मिकसाहित्यातिरिक्त दार्शनिकसाहित्यमपि तेषामनुशीलन-विषय आसीत्। वैशेषिकस्य न्यायस्य समीक्षायाः ( सम्भवतः साङ्ख्यस्य ) चाध्यापनस्य तत्रानेके संकेताः प्राप्यन्ते[4]। काव्याना पर्याप्तं रसास्वादनं भवति स्म। एको मन्त्री 'आपीतकवितारसः' इति विशेषणेन विशेषितो विद्यते। अभिलेखाना पठनेनेद ज्ञायते यत् कम्बुजदेशे संस्कृतभाषा-साहित्ययोर्गभीरमध्ययनं भवति स्म। अनेकेऽभिलेखाः काव्यशैलीकाः सस्कृतनिबद्धा मनोहरा रचनाः सन्ति। एषु संस्कृतभाषाया अलङ्कारस्य, छन्दश्शास्त्राणा नियमानाम्, गौडीवैदर्भीप्रभृति-रीतीनां कविसमयस्य च सम्यक् पालनमक्रियत। अस्मिन् विषये एक एव दृष्टान्तः पर्याप्तो भविष्यति। सस्कृतसाहित्येऽङ्काना विलोमरीत्या तथा निश्चितसकेतेन प्रकटनं भवति। यथा—५४६ संवत् संस्कृते पूर्वम् ६४५ क्रियते यतोह्य ङ्काना वामतो गतिः, पुनश्चाङ्कैरप्रकटी-कृत्य निर्धारितसङ्केतैस्ते लिख्यन्ते। ऋतवः षट्, समुद्राश्चत्वारः, इन्द्रियाणि पञ्च मन्यन्ते। अतोऽय सवत्सरः ऋतुसमुद्रेन्द्रियशब्देन प्रकटीक्रियते। कम्बुजदेशे संवत्सरोऽनयैव रीत्या प्रकटितो

---

१. मझंक पृ० १९, रामायणपुराणाभ्यामशेषं भारतं ददत्।
अकृतान्वहमच्छेद्यां स च तद्वाचनास्थितिम्॥

२. मझंक पृ० ५१, स्थितये दत्तं सम्भवपुस्तकम्।

३. तत्रैव, भवज्ञानेन निहितं व्याससत्रनिबन्धनम्।
यो नाशयति दुर्बुद्धिर्निरये स चिरं वसेत्॥

४. तत्रैव पृ० २२, भववर्मण एकः कर्मचारी विद्याविशेषो निम्नशास्त्राणां ज्ञाता प्रतिपादितोऽस्ति।

शब्दवैशेषिकन्यायसमीक्षासुगताध्वनाम्।
धुरि यो लिखितोऽनेकशास्त्रबृहद्बुद्धिभिः॥

विद्यते। सर्वत्राभिलेखेषु शकसंवत्प्रयोगो वर्तते[1]। अयमस्य सूचकोऽस्ति यत्ते भारतीयज्यौतिष-कालगणनाभ्या सम्यक् परिचिता आसन्। एष्वभिलेखेषु या मनोहरा रचनाः सन्ति, ता भारते लिखितोत्कृष्टतमप्रशस्तिकाव्यैः सम्यक् सवदन्ति। हानचे अभिलेखे भववर्मणो वर्णन कालिदास-कृतेन रघुवशेनात्यन्तं सवदति[2], किन्त्वेकस्मिन् विषये भारतस्य शिष्यः कम्बुजो देशः स्वगुरु-मप्यतिक्रान्तवान्। सा आसीदभिलेखानामुत्कीर्णकला। कम्बुजदेशस्याभिलेखानामुत्कीर्णत्वे ख्मेरशिल्पिभिर्यस्या उत्कृष्टाया समरूपतायाः कलात्मकतायाश्च परिचयो दत्तः, सा तु न भारते, न च भारताद्बहिर्जावाचम्पादेशयोर्दृश्यते।

## राज्यस्य व्यवस्था पद्धतयश्च

कम्बुजदेशस्य समाजो भारतीयसामाजिकव्यवस्थया पद्धतिभिश्च काम प्रभावित आसीत्। अभिलेखः साधारणेषु जनेषु प्रसिद्धाना प्रथाना विषये मूकोऽस्ति, किन्तु चीनदेशीयविवरणानि पूर्णतया ताः प्रकाशयन्ति। भारतीयः समाजो धर्मशास्त्रकारैर्ब्राह्मणक्षत्रियवैश्यशूद्रेति चतुर्धा विभक्तो विद्यते। ख्मेरसमाजे एतेषु ब्राह्मणक्षत्रियावेव श्रूयेते। वेदवेदाङ्गेषु प्रवीणा होतारश्च सन्तोऽप्यनेकेषु सैनिकपदेषु राजकीयपदेषु च कार्य कुर्वन्ति स्म। इत्थ मनुव्यवस्थापिताध्ययनादि कार्यसम्पादनस्य या भारतीया व्यवस्था विद्यते, सा तत्र यथावत् परिपाल्यमाना आसीत्। स्वजाति-विवाहस्य नियमस्यापीयं दशाऽऽसीत्। तत्र ब्राह्मणक्षत्रियाणा परस्परविवाहो भवति स्म। प्रथमस्य भववर्मणो भगिन्याः पाणिग्रहण सोमशर्मणा सामवेदविदा ब्राह्मणेन सहाभूत्। एकस्मिन्नभिलेखे सा पतिव्रता धर्मव्रता, द्वितीया अरुन्धत्येव च प्रतिपादिता विद्यते[3]। इदमेतत् सूचयति यत् कम्बुजदेशे दाम्पत्यजीवने भारतीयपातिव्रत्यस्यादर्शः श्रेष्ठो मन्यते स्म। तत्रत्यमन्त्येष्टिकर्म भारतीयपद्धत्या साधु सवदति स्म। शवः सम्बन्धिपुरोहितैः प्रार्थनागानैः सह श्मशानभूमिं नीत्वा सुरभिकाष्ठैः प्रज्वाल्यते, तद् भस्म च स्वर्णपात्रे रजतपात्रे वा निधाय कस्याञ्चिन्महानद्या प्रक्षिप्यते स्म। निर्धना जनास्तदर्थं मृत्पात्रमुपयुञ्जन्ति स्म। ख्मेरा भारतीया इव प्रतिदिन स्नानाध्ययनोपासनादिकर्माणि

---

१. वात-प्रेविअरस्थानस्य जयवर्मणो लेख.—मङ्क, पृ० ३८—

रसवसुविषयाणां सन्निपातेन लब्धे
शकपतिसमयाब्दे माघशुक्लद्वितीये।

२. अस्यैकमुदाहरणमेव पर्याप्त भविष्यति। भववर्मणो रूप वर्णयति लेखे इदं प्रतिपादितं विद्यते यत् कामदेवे दग्धे सति विधिना तस्य निराधारत्वरक्षणाय तस्य शरीर भववर्मणि स्थापितम्—

निराधारमिद मा भूद् दग्धे कुसुमधन्वनि।
इति विश्वसृजा नूनं वपुर्यत्र निवेशितम्॥ ( मङ्क पृ० ३८ )।

३. वीलकान्तेल—अभिलेखः, मङ्क पृ० १९, श्लोक सं० १,

श्रीवीरवर्मदुहिता स्वसा श्रीभववर्मणः।
पतिव्रता धर्मरता द्वितीयाऽरुन्धतीव या॥

कुर्वन्ति स्म। गेहाना मुख पूर्वाभिमुख भवति स्म, अतिथयः पूगशर्कराभ्यामन्यैश्च सुरभिपदार्थैः सत्क्रियन्ते स्म।

### राज्यव्यवस्था शासनप्रबन्धश्च

कम्बुजदेशे भारतवद् राजतन्त्र प्रचलितमासीत्। राजा दिव्यांशो मन्यते स्म, तस्य शक्तिरनियन्त्रिता सर्वोन्नता च भवति स्म। राजसभाधिपतिशब्देनैकस्या राजसभायाः सत्ताऽवश्य सूच्यते, किन्तु तस्याः स्वरूप न प्रकाशयन्त्यभिलेखाः। राजा शासनप्रबन्धार्थ मन्त्रिण-मनेकानुच्चाधिकारिणो दूताश्च नियुनक्ति स्म। सम्भवत इमे अनेकैः प्रलोभनैरुन्नता आसन्। कौटिलीयार्थशास्त्रे एषामुपधा सज्ञा विद्यते (१।१०)। इय चतुर्धा भवति स्म—धर्मोपधा, अर्थोपधा, कामोपधा भयोपधेति। राजा गुप्तचरद्वारोन्नतेषु पदेषु नियुक्तान् जनाननेकैः प्रलोभनैः प्रलोभ्य परीक्षते स्म। अस्या परीक्षायामुत्तीर्णो जनः सर्वोपधाशुद्धः प्रतिपाद्यते स्म। हानचे-अभिलेखे (स० ८) एको राजकीयोऽधिकारी आत्मान राज्ञोऽन्तरङ्ग कथयति, यतो हि स सर्वोपधाशुद्धोऽस्ति। कौटिल्येनेद नियतं कृत यत् सर्वोपधाशुद्धान् मन्त्रिणः कुर्यात् (१।१०।२४)[1]। इद प्रतीयते यत् कम्बुजदेशेऽस्य नियमस्य पालन भवति स्म। एकस्मिन्नभि-लेखे अर्थशास्त्रस्याध्ययनस्य निर्देशो विद्यते[2]। सम्भवत इद कौटिलीयमेवार्थशास्त्रं भवेत्, तथा तदुपजीव्य तत्र शासनव्यवस्था भवति स्म। राज्यस्योच्चाधिकारिषु केचन सैनिकाधिकारिण उल्लेखनीया सन्ति। अश्वारोहाणामध्यक्षो महाश्वपतिरुच्यते स्म। नौसेनाया द्वावधिकारिणौ महानौवाहकः समन्तनौवाहकश्च भवतः स्म। कौटिलीयार्थशास्त्रेऽय शासक उक्तोऽस्ति। कौटि-ल्यस्य मतमासीद् यद् हस्तिनो राज्ञः प्रधान बलमस्ति। कम्बुजदेशे एतेषामसाधारण महत्त्व वर्तते। एकस्य चीनदेशीयविवरणस्यानुसारेण सप्तमशतकखीष्टीयाब्दे कम्बुजदेशे पञ्च सहस्राणि युद्धहस्तिन आसन्। सैनिकाधिकारिषु पदानुसारेण पार्थक्य भवति स्म। एकस्मिन् नगरे निवासिन्याः सेनाया अधिकारी सहस्रवर्गाधिपतिरुच्यते स्म।

## कम्बुजराजस्यान्धयुगम् (६७४–८०२ खी०)

सप्तमे शतके कम्बुजराज्यस्याभ्युत्थानमभूत्, किन्तु शतवार्षिकसमुज्ज्वलेतिहासानन्तरमिद-मन्धयुग प्रारभ्यते। प्रथमस्य जयवर्मणः (६४०–८०) परतो नवमशतकस्य प्रारम्भ याव-दस्येतिहासोऽन्धकारावृतो विद्यते। चीनदेशीयविवरणान्यभिलेखाश्चाश्रित्य विद्वद्भिरमु काल प्रकाशयितुं प्रयतितम्, किन्तु पुनरप्यस्य युगस्य पूर्ण इतिहासोऽज्ञातो विद्यते। इत्थ प्रतीयते यदष्टमशतके कम्बुजदेशस्य केन्द्रीया शक्तिर्दुर्बला जाता। अनेकानि लघूनि राज्यानि प्रादु-

---

१. हान-चेई-अभिलेखः—श्लोकसं० २२, मईक पृ० १६,

उपधाशुद्धिमान् भृत्यस्तयोरवनिपालयोः॥

२. के-देई-अङ्गमन्दिराभिलेखे भवद्वर्मणो द्वयोर्मन्त्रिणोर्विषये लिखितं विद्यते—

तस्य तौ मन्त्रिणावास्तां सम्मतौ कृतवेदिनौ।

धर्मशास्त्रार्थशास्त्रज्ञौ धर्मार्थाविव रूपिणौ॥ ६॥ (मईक पृ० ३९)।

भूतानि। भववर्मणा तदुत्तराधिकारिभिश्च कम्बुजदेशाय या एकता दृढता महत्ता गुरुता चादीयन्त ता अलुप्यन्त। चीनदेशीयग्रन्थेष्वस्मिन् युगे कम्बुजदेशस्य जलीयस्य स्थलीयस्य च द्वयोः खण्डयोः स्पष्टमुल्लेखो विद्यते। अभिलेखेषु शम्भुपुरस्याभिनन्दितपुरस्य च वर्णनमुपलभ्यते। विद्वांसः पर्याप्तं विचार्यामुं परिणामं प्राप्तवन्तो यच्छम्भुपुरराज्यमभिनन्दितपुरराज्यञ्च वर्तमानकम्बोडियादेशे आस्ताम्, तच्च चीनवासिनो जलीयं कम्बुजं कथयन्ति स्म। दागरेकपर्वतादुपरितनः प्रदेशः स्थलीयकम्बुज उच्यते स्म।

**जयवर्मा द्वितीयस्तृतीयश्च** ( ८०२–८७७ )—नवमस्य शतकस्य प्रारम्भे द्वितीयस्य जयवर्मणः ( ८०२–८५४ ) राजसिंहासनारोहणेन साकमेव कम्बुजदेशस्येतिहासादन्धकारजवनिका व्यपगच्छति। जयवर्मणः पश्चाद् वर्तमानकालं यावत् कम्बुजराज्ञामविच्छिन्ना वंशपरम्परा जायते। अस्मात् कालात् कम्बुजदेशः शक्तिसम्पन्नं साम्राज्यं हिन्दुसभ्यताया महत्केन्द्रञ्च भवति। अनेकशतवर्षाणि यावत् तस्य सा स्थितिरक्षुण्णा भवति। अस्य महद् गौरवं द्वितीयस्य जयवर्मणो विद्यते, अत्र काचन सशीतिर्नास्ति। कम्बुजदेशस्य भाविन्या महत्ताया बीजारोपणं जयवर्मणो हस्तेनाभूत्। अस्मिन् काले द्वितीयो जयवर्मा (८०२–५४ खी०) तृतीयो जयवर्मा (८५४–८७७) प्रतापशालिनौ राजानावभूताम्।

## अङ्कोरस्योत्थानम् ( ८७७–१००१ खी० )

नवमशतकस्य चरमे भागेऽङ्कोरस्योत्कर्षः समजनि। तस्य प्रथमः प्रतापी राजा इन्द्रवर्मा ( ८७७–८८९ ) आसीत्।

**यशोवर्मा** ( ८८९–९०८ खी० )—इन्द्रवर्मणः पश्चात् तस्य पुत्रो यशोवर्मा राजसिंहासनमधिरूढः। इन्द्रवर्मणा स्वपुत्रस्य शिक्षा विशेषतो ध्याता। शिवकैवल्यस्यैको वंशजो वामशिवोऽस्य गुरुरासीत्। यशोवर्मणः शास्त्राणां काव्यानाञ्च व्यसनमासीत्। स न केवलं शास्त्रेषु, किन्तु शस्त्रविद्यायामपि निपुण आसीत्[1]। शिलालेखेषु तस्यानेकेषां विजयानां वर्णनमस्ति। तेन

---

१. लोलेई–लेखः, मद्दंक पृ० ८६,

यः सर्वशास्त्रशस्त्रेषु शिल्पभाषालिपिष्वपि।
नृत्तगीतादिविज्ञानेष्वादिकर्तेव पण्डितः॥ ५१॥

अस्य पातञ्जलमहाभाष्येऽप्येका टीकाऽऽसीत्—ईस्टर्न-बैरे-लेखः, मद्दंक पृ० ९६,

नागेन्द्रवक्त्रविषदुष्टतयेव भाष्यं मोहप्रदं प्रतिपदं किल शाब्दिकानाम्।
व्याख्यामृतेन वदनेन्दुविनिर्गतेन यस्य प्रबोधकरमेव पुनः प्रयुक्तम्॥ ९४॥

तस्य सुश्रुतस्यापि ज्ञानमासीत्—लोलेई-लेखः, मद्दंक पृ० ८५,

सुश्रुतोदितया वाचा समुदाचारसारया।
एको वैद्यः परत्रापि प्रजाव्याधिं जहार यः॥ ४९॥

कश्चन देशो नौसेनयाऽऽक्रम्यत[1]। कैश्चित् पराजितेभ्यो भूमिपालेभ्यो राज्यानि प्रत्यर्पितानि, तेषाञ्च कन्याः परिणीताः, किन्तु वर्णनमिदं सामान्यशब्दैर्वर्तते। तेनैतिहासिकघटनाना ज्ञानं निश्चयेन न भवति। अग्रे चीनदेशस्य बर्मादेशस्य तथाऽन्येषा स्रोतसामाश्रयेणास्य साम्राज्य-विस्तारस्य चर्चा भविष्यति। इदमवश्यमेव निश्चितं विद्यते यदनेन विशाल साम्राज्य शासितम्। अस्य साम्राज्यस्य सीमा पूर्वतश्चम्पादेशः, पश्चिमतो मीनमसालवीननद्योर्जलविभाजकः प्रदेशः, उत्तरतश्चीनदेशः, दक्षिणतश्च समुद्र आसीत्। पूर्वं यशोवर्मा विश्वविख्यातस्याङ्कोरथोमनगरस्य निर्माता मन्यते स्म। पश्चादनुसन्धानेनेदमज्ञायत यत् फनोमबखेननामके पर्वतके तेनावासिता कम्बुपुरी अथवा यशोधरपुरं वर्तमानमङ्कोरथोम इति नास्ति। अस्य नगरस्य स आद्यः सस्था-पकोऽवश्यमासीत्, किन्तु वर्तमानानामवशेषाणा निर्माता नास्ति।

यशोवर्मणो यशोधरपुरम् १० वर्गमीलमितपरिधि फनोमबखेमपर्वतकमभितो वर्तमान-मासीत्। एतन्नगरमभित एका महती परिखाऽऽसीत्। अस्मिन् नगरे ८०० सरासि निर्मिता-न्यासन्। ब्रिग्समहोदयस्य कथनानुसारेण तस्य सर्वोत्कृष्टा कृतिर्नवाया राजधान्या पानीयमानेतुं कृत्रिमजलाशयस्य (पूर्वीबैरे) निर्माणमासीत्। अस्य पादोनत्रिक्रोशदीर्घोऽर्द्धक्रोशायाम आसीत्। एतदतिरिक्त तेन निम्नलिखितस्थानेषु मन्दिराणि निर्मापितानि—लोलेई (८९३ खी०), प्राविहीर (८९३ खी०), फ्नोमबखेग (९०० खी०), फ्नोमक्रोम (प्रायः ९१० खी०), फ्नोमबोक (प्रायः ९१० खी०) इति। तेन स्पियनप्रातोनद्यास्तटे ५०० फुटपरिमितायाम-स्तथा २०० फुटपरिमितदीर्घः पाषाणजलमार्गो निर्मापितः। एनमभितः सप्तफणा नागराजा निर्मिताः सन्ति, अङ्कोरस्य वास्तुकलाया तादृशा नागानामतीव निर्माणमभूत्।

यशोधरपुरे परवर्तिख्मेरराजधानीना निम्नलिखितानि वैशिष्ट्यानि प्राप्यन्ते—वर्गाकार-योजना, केन्द्रे समुन्नते पर्वतके मुख्यमन्दिराणा निर्माणम्, नगरमभितो गभीरा परिखा, उन्नतः प्राकारः, चत्वारि द्वाराणि, शासनप्रबन्धदृष्ट्या नगरस्य चतुर्धा विभागः। नगरेऽस्मिन् मध्ये फ्नोमबखेगस्य शैवमन्दिरमेकस्मिन्नुन्नते पर्वतके विद्यते। अत्र पञ्चभूमयः क्रमेण परस्परतः समुन्नता सन्ति, शतेन शिखरेणेदमलङ्कृतमस्ति। उपरिगच्छत्सोपानमुभयतः सिंहा निर्मिताः सन्ति।

यशोवर्मणश्चतुर्दश अभिलेखाः प्राप्यन्त[2]। एतेषा वैशिष्ट्यद्वय ध्यातव्यम्। प्रथम ताव-देष्वेकस्याभिलेखस्य (सं० ६०) एकादश प्रतिलिपयो विभिन्नस्थानेषु स्थापिता अभूवन्[3]।

---

१. ईस्टर्न-बैरे-लेखः, मझंक पृ० ९२।
नौकास्वर्बुदं येन जयाय याने प्रसारितं सीतसितं समन्तात्॥

२. मझंक पृ० ७४–१२७।

३. मझंक पृ० ७४, प्राह्वतलेखः—अत्रेन्द्रतडाके शिवदुर्गयोश्चतसृणां प्रतिमानां स्थापनस्य यशोधरतडाकखनस्य, एकादशसु स्थानेषु गणेश-कार्तिकेय-नारायण-रुद्राणी-पञ्चलिङ्गेश्वरप्रभृतिस्थानीयदेवानां स्मृतौ एकादशानां यशोधराश्रमाणां स्थापनस्य च वर्णनं विद्यते।

द्वितीयं त्विमा एकादश प्रतिलिपयः कम्बुजदेशे प्रचलिततदानीन्तनलिप्यतिरिक्तनूतनलिप्या लिखिताः सन्ति। लिपिरियमुत्तरभारतलिप्या सवदति। सप्ताभिलेखा एवास्या लिपौ सन्ति। एष्वभिलेखेषु यशोवर्मणो धार्मिकदानानामाश्रमाणा सस्थापनस्य[1] च तत्सम्बद्धाना नियमानाञ्च विस्तृत वर्णनमस्ति। अयं शैव आसीत्। अस्याभिलेखः—नमोऽस्तु सम्भवे, जयति त्रिपुरध्वसी, नमोस्तु हरये, स्वयम्भूः पातु, वन्देऽपर्णाम्—प्रभृतिवाक्यैः प्रारभ्यते। अनेन शैवशास्त्र गभीरतयाऽधीतम्। राजकविशब्देषु—

शिवशास्त्रार्णवं बुद्धिमन्दरेण विमथ्य यः।
स्वयं ज्ञानामृत पीत्वा पश्चादन्यानपाययत्॥

किन्तु शैवेनाप्यनेन बौद्धधर्मः पूर्णतया प्रोत्साहितः। राजकविभिरयमतीवालङ्कारिकैः शब्दैः प्रशंसितः। स द्वितीयो मनुः, परशुरामादप्यधिक उदारः, भीमार्जुनवद् वीरः[2], सुश्रुतस्य विद्वान्, शिल्पभाषालिपिनृत्येषु पारङ्गत आसीत्। यद्येता अत्युक्तयो न विश्वसनीयाः स्युस्तदाऽपीदं मन्तव्य यत् स योग्यः शासक आसीत्, तथा तेन स्वप्रजाकल्याणार्थं पूर्णः प्रयत्नः कृतः। अयमादर्शो राजा योग्यश्च सेनापतिर्न केवलमुत्तमो विद्वानासीत्, पर स विदुषामाश्रयदाताऽप्यासीत्। मृत्योः पश्चात् स परमेश्वरलोकोपाधिं सम्प्राप्तः।

अस्य वशस्यान्ये प्रसिद्धा राजानो जयवर्मा चतुर्थः (९२८-९४१), राजेन्द्रवर्मा (९४५-९६९), जयवर्मा पञ्चमः (९६९-१००१ खी०) आसन्। अस्मिन् काले कम्बुजराज्यस्य महान् शक्तिविस्तारः समजनि।

**भरतीयसंस्कृतेः प्रभावः**—अस्य समयस्य (८७७–१००१ खी०) अपर वैशिष्ट्यमस्मिन् देशे भारतीयसस्कृतेर्गभीरः प्रभावो विद्यते। तदानीन्तनेभ्यः पञ्चाशदभिलेखेभ्यो विस्तृतः परिचयः समुपलभ्यते। अत्र शार्दूलविक्रीडितस्रग्धराप्रभृतिभिश्छन्दोभिः कम्बुजराज्यस्य नृपतीनां शोभनाः प्रशस्तयः सन्ति[3]। इमे अभिलेखाः काव्यभाषया लिखिता विद्यन्ते। भारते एतत्कालपर्यन्तमेतदभिलेखतुल्यो मनोहरो महाश्च लेखो नोपलब्धः। एतेषा पठनेनेदं ज्ञायते यदेष कालिदासस्य भवभूतेश्च रचना विद्यते। प्रशस्तिलेखकाना पुराणधर्मशास्त्रभारतीयसाहित्यानां

१. आश्रमनियमार्थं द्रष्टव्यम् मझुंक पृ० ७९–८०, प्राहवतलेखः, श्लोकसं० ३७–४६, लोलेईलेखः—श्लोकसं० ६५–८९।

२. लोलेईलेखः—मझुंक पृ० ८४, श्लोकः ३६,
तत्रैव श्लोकः ५५—राजन्यवन्द्यचरणो योऽभूद् मनुरिवापरः।
नार्जुनः केवलं कीर्त्या भीमोऽभूदपि रंहसा॥

३. यशोवर्मणः ईस्टर्नबैरे(यशोधरतडाक)लेखे (मझुंक पृ० ८९–९७) १०८ श्लोकाः सन्ति, तथा राजेन्द्रवर्मणः मे-बोन-लेखे (मझुंक पृ० १९३–२१९) २१८ श्लोकाः सन्ति। अत्र सप्त (१–४, ९–१०, १२) श्लोका. शार्दूलविक्रीडितच्छन्दसि तथा चत्वारः (८, ११, १३, २१८) स्रग्धराछन्दसि सन्ति। राजेन्द्रवर्मणः सर्वतो महति प्रेरुप-अभिलेखे २९८ छन्दांसि सन्ति (मझुंक पृ० २३२–६८)।

सर्वेषामङ्गाना विशिष्ट ज्ञानमासीत् । पाणिनीयव्याकरण महाभाष्य-मनुस्मृतिसुश्रुतानामेषु लेखेषु स्पष्ट वर्णन विद्यते[1] । संस्कृतसाहित्यस्यानेके प्रसिद्धा लेखकाः श्लोकाश्चात्रोद्धृताः सन्ति । प्रेरुपाभिलेखे ( स० ९३ ) कालिदासरचितरघुवशस्य चत्वारः श्लोका उपलभ्यन्ते[2] । मनुस्मृतेः ( २।१३६ ) निम्नलिखित. श्लोकोऽपि तत्रैकस्मिन्नभिलेखे उद्धृतो विद्यते[3] ।

वित्त बन्धुर्वयः कर्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्यदुत्तमम् ॥

यशोवर्मणो लेखेषु कथासरित्सागरस्य प्रारम्भे गुणाढ्यविषये लिखिता कथा निर्दिष्टा विद्यते ( मइक पृ० ९०, १०५, १०९ ) । इत्थमन्यत्र मयूरः प्रवरसेनश्च सूर्यशतकस्य सेतुबन्धस्य च ग्रन्थयो रचितारौ प्रतिपादितौ ( मइक पृ० ३४, ९९, १०९ ) । एतेषु पुनः पुनस्त्रय्याः, वेदान्तस्य, स्मृतेः, जैनबौद्धसम्प्रदाययोस्तथा तेषा धर्मग्रन्थाना वर्णनं वर्तते । इमे लेखा रामायणस्य महाभारतस्य पुराणानाञ्च कथासङ्केतेनानुस्यूताः सन्ति ।

कम्बुजराज्यस्य पूर्णरूपेण भारतीयसंस्कृतिरागेण निमज्जनस्य मुख्य कारणद्वयमासीत्— ( १ ) भारतकम्बुजदेशयोरविच्छिन्नः सम्बन्धः । ( २ ) कम्बुजदेशे भारतीयसंस्कृतेः प्रचारकाश्रमणामधिकाः संख्याः ।

**भारतकम्बुजदेशयोः सांस्कृतिकः सम्पर्कः**—भारतकम्बुजदेशयोर्निरन्तर दृढस्य सम्पर्कस्यानेकानि प्रमाणानि विद्यन्ते । कम्बुजभूमिपालाना वैवाहिकः सम्बन्धो भारतीयैः सह भवति स्म, भारताद् धर्मप्रचारार्थमनेके जनाः कम्बुजदेशं गच्छन्ति स्म । राजेन्द्रवर्मणः कन्या कम्बुजराजलक्ष्मीः कालिकातीरवासिना भारतीयेन ब्राह्मणेन दिवाकरभट्टेन परिणीता[4] । यशोवर्मणो

---

१. प्रेरुपाभिलेखे पाणिनेर्नियमानां निर्देश. ४८, २०९, २१४, २१८, २१९, २५८ संख्याकेषु श्लोकेषु विद्यते । अथर्ववेदस्य ६४ संख्याके, रामायणस्य २०७ संख्याके श्लोके । महाभाष्यस्य मनुस्मृते सुश्रुतस्य चोल्लेखार्थ द्रष्टव्यम् । यशोवर्मण एको मन्त्री सत्याश्रमः फिमानकलेखे ( मइंक पृ० १५५–५६ ) 'होराशास्त्राब्धिपारगः' इत्यनेन भूषितोऽस्ति ।

२. प्रेरुपाभिलेखे १६४, १९९, २११, २९४, लोलेई–अभिलेखे ३९ संख्याकेषु श्लोकेषु दिलीपस्य नन्दिन्याश्चोल्लेखं कुर्वंति यशोवर्मणो विषये कथितं विद्यते—

यो विपत्स्वपि सद्वृत्ति नन्दिनीं सर्वकामदाम् ।
प्रजां संपत्करी धेनुं दिलीप इव नाजहात् ॥ ३९ ॥

३. यशोवर्मणः प्रासातकोमनेयलेखस्य ( मइंक पृ० ११९–१२७ ) श्लोकसं० ६४ ।

४. प्राह-इन-कोसी-अभिलेखः—मइंक, ५–२९१, श्लोकसं० ३०—

कालिन्दी यत्र रम्या कुतुभ ' '' ' रिज्यजैर्द्विजेन्द्रैः ।
षट्त्रिंशद्भिः सहस्रैरनुसवनवृतैः ऋग्यजु.सामशब्दैः ॥
कृष्णः कृष्णाहिमर्दी दितिजकुलहरः क्रीडितो यत्र बाल्ये ।
तत्रैवाभूत् स देवो दिवसकर इति ख्यातनामा सुकीर्तिः ॥

मातुरेकः पूर्वजो वेदवेदाङ्गज्ञाता आर्यदेशस्य ब्राह्मणोऽगस्त्य आसीत्[1]। सर्वज्ञमुनिनामकश्चतुर्णां वेदानामागमानाञ्च पण्डितः शिवभक्तश्च कम्बुजदेशं समागतः[2], तस्य च वंशजाः समुन्नत धार्मिकपदमधिष्ठिता आसन्। भारतस्य ब्राह्मणा एव कम्बुजदेशमागच्छन्ति स्म, इत्येव न, किन्तु कम्बुजस्य ब्राह्मणाः शिक्षाग्रहणार्थं तथान्यकार्यार्थं भारत गच्छन्ति स्म। इन्द्रवर्मणो गुरोः शिवसोमस्य विषये इदं मन्यते यत् स भारतमागत्य श्रीशङ्कराचार्येभ्यः शिक्षा प्राप्तवान्।

यशोवर्मणः प्राहवतस्याश्रमस्य नियमनिर्देशका द्वादशाभिलेखा द्वाभ्या लिपिभ्यां निबद्धाः सन्ति ( मङ्क पृ० ७४ )। तत्र कम्बुजदेशस्य प्रचलितलिप्यतिरिक्तोत्तरभारतीयलिप्या सुसम्बद्धाया अन्यस्या लिपेरपि प्रयोगोऽस्ति। एक एव विषयो द्वाभ्या लिपिभ्या किमर्थं पुनः कथितः ? पूर्वबैरेसम्बन्धिनश्चत्वारोऽभिलेखाः ( मङ्क ८९–११९ ) केवलमनयैव लिप्या लिखिताः। या लिपिः कम्बुजदेशे प्रचलिता नाऽऽसीत्, उत्कीर्णलेखेषु सा कथ प्रयुक्ता ? अस्यैकमेव तर्कसङ्गतं स्वाभाविक कारणमिद प्रतीयते यत् तदा भारतीयानां महती सख्या उत्तरभारतात् प्रवास कृत्वाऽत्र निवासं कृतवती। सा तस्य देशस्य वर्णमाला न परिचितवती। यत्र तेषा भारतीयानामावास आसीत् तत्राभिलेखाः केवलमुत्तरभारतलिप्या लिखिताः। यत्र तेषा सख्या पर्याप्ताऽऽसीत् तत्र तेभ्यः ख्मेरेभ्यश्च द्वे अपि लिपी प्रयुक्ते। एतेन स्पष्ट विद्यते यत् तदानीं भारतीया अधिकया सख्यया कम्बुजदेशे न्यवसन्। अतः कम्बुजदेशे भारतीयसंस्कृते. प्रभावः स्वाभाविक एवासीत्।

**कम्बुजदेशस्याश्रमाः**—भारतीयसंस्कृतेः प्रसारस्य द्वितीय कारणमाश्रमस्य व्यवस्थाऽऽसीत्। पूर्व निवेदितमिदमस्ति यद् दक्षिणभारते ऋषीणामाश्रमास्तपोवनानि च भारतीयसभ्यताया· प्रकाशकानि केन्द्राण्यासन्। कम्बुजदेशेऽपि भारतीयानां गुरुकुलाना तपोवनानामादर्शमधिकृत्य राजभिर्मन्त्रिभिश्च सस्थापितैराश्रमैर्भारतीयसभ्यताया आलोकमस्मिन् देशे दूरं यावत् प्रसारयितुं महत्त्वपूर्ण कर्म सम्पादितम्। लोलेई-यूप लेखानुसारेण यशोवर्मणा सम्पूर्णे राज्ये शतमुत्तमा आश्रमाः स्थापिताः[3]। शतसख्योक्तिरत्युक्तिपूर्णा स्यात्, किन्त्वत्र कश्चन सन्देहो नास्ति यत् तेन महत्या सख्याया ते स्थापिता भवेयुः। इमे आश्रमास्तन्नाम्ना यश आश्रमा. कथ्यन्ते। इमे विभिन्नस्थानेषु मन्दिरैः सह स्थाप्यन्ते स्म। केचनाश्रमाः सर्वेषा सम्प्रदायाना कृतेऽनावृत्तद्वारा आसन्, केचन केवल वैष्णवाना शैवाना बौद्धानाञ्च कृते आसन्। इमे

---

१. प्राहवतलेख·, श्लोकसं० ५, मङ्क पृ० ७६,

अथ द्विजोऽगस्त्य इति प्रतीतो यो वेदवेदाङ्गविदार्यदेशे ॥

२. जयवर्मणः अङ्कारेवतलेखः, श्लोकसं० ९, मङ्क, पृ० ५४९,

आर्यदेशे समुत्पन्नः शिवाराधनतत्परः।
यो योगेनागतः कम्बुदेशेऽस्मिन्‥ ‥ ॥

३. लोलेई–यूपलेखः, श्लोकसं० ४६, मङ्क पृ० ८५,

चतुराश्रममर्यादां शासिता कल्पयन्नपि।
आश्रमाणां प्रशस्तानां शतं दिक्षु चकार यः ॥

वैष्णवाश्रम ब्राह्मणाश्रम-सौगताश्रमपदैर्व्यवह्रियन्ते स्म[1]। सामान्यतया एषामाश्रमाणां व्यवस्था कुलाध्यक्षस्य हस्ते भवति स्म। पूर्वमय कुलपतिरुच्यते स्म। अय शब्दो भारतस्य प्रचीनगुरु-कुलाध्यक्षान् स्मारयति। कुलाध्यक्षास्तत्सहायकाश्च स्वाश्रमनियमान् परिपालयन्ति स्म। एतेषा नियमानामनुसारेण कुलाध्यक्षस्य मुख्य कर्तव्यमतिथिसत्कारो भवति स्म। यदि राजा तत्रान्तःपुर-स्त्रीभिः सहागच्छेत्, तर्हि स देववत् सत्कर्तव्यः; यतो हि स भूदेवः सकलस्य ससारस्य च गुरुरस्ति। राज्ञः पश्चाद् ब्राह्मणाः सत्कर्तव्याः। अनेकेषु ब्राह्मणेषु विद्याशीलगुणेषु वृद्धः पूर्व सम्भावनीयः। ततः क्रमेण सराजकुमार मन्त्रिणं सेनापतिं सज्जनान् सम्मानयेत्। युद्धे शौर्यप्रदर्शको विशेषेण सत्कर्तव्यः। ततः के सम्माननीया इति विषये विभिन्नाश्रमेषु पृथक् पृथग् नियमा आसन्। वैष्णवाश्रमेषु पूर्व त्रयीविद्यापारङ्गताः पूर्वव्याकरणाचार्याः पूज्यन्ते स्म। यदि जनद्वय समानयोग्य-ताकं भवति, तर्हि तयोर्ब्रह्मचारी समुन्नत पद भजते। पाञ्चरात्रस्य व्याकरणस्य वा ज्ञानिन अपेक्षया द्वयोः शास्त्रयोर्ज्ञाता प्राथम्य प्राप्नोति स्म (मइक. पृ० १२३), किन्तु ब्राह्मणाश्रमेषु प्रथम स्थान ब्राह्मणानामासीत्, ततः पश्चात् शैवपाशुपताचार्याणाम्। एषु यो वैयाकरणो भवति स प्रथम सम्मानितो भवति (मइक. पृ० १२६, श्लोकः ६०)। सौगताश्रमेष्वपि बौद्धसिद्धान्तव्याकरण-ज्ञातृभ्यः पूर्व ब्राह्मणा सम्माननीया भवन्ति स्म (मइक. पृ० १३०)। अनयोर्द्वयोर्विषययोः शिक्षकेणानयोर्विषययोर्ज्ञातुः पूर्व मानो लभ्यते स्म। पुनस्त्रिष्वाश्रमेषु विद्वान् गृहस्थः पूजाया प्रथमं स्थानं प्राप्नोति स्म। यतो ह्युपरि निर्दिष्टस्य मनोर्वचनानुसारेण पूजायाः पञ्चसु हेतुषु धनकुलायुःकर्मविद्यासु विद्या सर्वश्रेष्ठा विद्यते।

एषां सर्वेषा पुरुषाणां समुचितसम्मानाय आश्रमवासिनाञ्च निर्वाहाय राजा तेभ्यः प्रचुरं द्रव्य ददाति स्म। यशोवर्मणाश्रमेभ्यः सुवर्ण रजत गावोऽश्वा महिष्यो हस्तिनः स्त्रियः पुरुषा उद्यानानि च दत्तानि।

एतेषामाश्रमाणा प्रवेशस्यानेके नियमा आसन्। केवलं राजानो ब्राह्मणाः क्षत्रिया एव तेष्वाभूषण धृत्वा गन्तु शक्नुवन्ति स्म। तेषामनुयायिनः साधारणाश्च जनास्तत्र सामान्य-वेषेणैव प्रवेष्टु शक्नुवन्ति स्म। ते नन्द्यावर्तातिरिक्तपुष्पमाला धृत्वा तत्र प्रवेष्टु नार्हन्ति स्म। स्त्रियः कर्णभूषणातिरिक्तसौवर्णमपरमलङ्कारं धृत्वा आश्रमान् प्रवेष्टु न शक्नुवन्ति स्म[2]। इमे

---

१. एषामाश्रमाणां विस्तृतं वर्णनं यशोवर्मणो निम्नलिखितेष्वभिलेखेषु वर्तते—प्राहवतयूपलेखे (मइंक, पृ० ७४-८१) श्लोकसं० ३७,४९, अस्य लेखस्य विविधस्थानेभ्य उपालब्धाभ्यो द्वादशप्रतिलिपिभ्य इदं सूच्यते यदेषु सर्वेषु स्थलेषु यशोधराश्रमा निर्मिता आसन्। लोलेई–अभिलेखः (श्लोकसं० ६५–८९), मइंक पृ० ८७–८९)। वैष्णवाश्रमाणां नियमार्थ द्र० प्रसातकोमनेय–अभिलेखः, श्लोकसं० ५१–१०५, मइंक पृ० १२४–७)। सौगताश्रमार्थं द्र० तेपप्रनामलेखः, श्लोकसं० ४७–१०३, मइंक पृ० १३०–३। ब्राह्मणा-श्रमार्थ द्र० प्रेई-प्रासात-लेखः, श्लोकसं० ५०–९६, मइंक पृ० १३६–३७)।

२. लोलेई–अभिलेखः, श्लोकसं० ६८, मइंक पृ० ८७,

कर्णभूषां विना तन्वी न हैमं भूषणं भजेत्॥

जनास्तत्र भोजन न कर्तुं शक्नुवन्ति स्म। क्षत्रियाणामनुयायिवर्गातिरिक्ताः साधारणजनास्तत्र प्रवेशेऽनधिकृता आसन्। दुश्चरित्राः पाखण्डिनो भिक्षवोऽपि तत्र प्रवेष्टु नार्हन्ति स्म। शिवस्य विष्णोश्चोपासका ब्राह्मणास्तत्र मन्दस्वरेण प्रार्थयितु योगमभ्यसितुञ्चैव गन्तुं शक्नुवन्ति स्म। आश्रमाभिमुख राजातिरिक्तेन प्रत्येक जनेन रथादुत्तीर्य पद्भ्या छत्रं विनैव गन्तव्य भवति स्म। कुलाध्यक्षस्येद कर्तव्य भवति स्म यत् स साधारणजनेभ्यो विशेषेण बालकेभ्यो वृद्धेभ्यो निर्धनेभ्यो व्याधिपीडितेभ्यश्चान्नवस्त्रभेषजानि दद्यात्। तस्येदमपि कार्यमासीद् यत् पर्वसु ग्रहणेषु मासान्तेषु च स भक्तेभ्यो युद्धे मृतेभ्यो निःसन्तानेभ्यो जनेभ्यः पिण्डं दद्यात् तेषा तर्पणञ्च कुर्यात्।

एतेष्वाश्रमेष्वध्ययनरतेभ्यो वैष्णवब्राह्मणभिक्षुभ्यो जीवनसाधनानि सर्वाण्यावश्यकानि भोजनवस्त्रादीनि वस्तूनि प्रदीयन्ते स्म। तानाश्रमान् प्रविष्टा जना अवध्या भवन्ति स्म। आश्रमसीमसु मृगप्रभृतयोऽहिंस्रा जन्तवो न हन्यन्ते स्म।

एतेष्वाश्रमेषु स्त्रीणा प्रवेशविषये केचन विशिष्टा नियमा आसन्। राज्ञः कन्या पौत्री राजकुलस्य वृद्धा अन्याश्च साध्व्यः स्त्रियोऽतिथीना सम्मानस्याधिकारिण्य आसन्, किन्तु तास्तपस्विना कुटीर प्रवेष्टु न शक्नुवन्ति स्म। बौद्धवैष्णवाश्रमाणामय नियम आसीद् यत् तत्र निवासिनः केऽपि जनाः स्वधर्मचारिणीभिरप्याश्रमसीमासु कमपि सम्बन्धं कर्तु नार्हन्ति स्म[1]।

प्रत्येकमाश्रमेष्वनेके कर्मकरा भवन्ति स्म। एषु द्वौ लेखकौ षट् पत्रकारकाश्च भवन्ति स्म। एष्वाश्रमेषु पुस्तकालया अपि भवन्ति स्म। द्वौ पुस्तकालयकार्यं कुर्वतः स्म[2]। द्वौ जलाहारकौ द्वौ च ताम्बूलपरिष्कारकौ, इमे सर्वे कुलाध्यक्षाधीना भवन्ति स्म।

आश्रमाणामुपर्युक्तेन विस्तृतविवरणेनेद स्पष्ट विद्यते यत् ते तदानीं कम्बुजदेशे हिन्दुसस्कृतेः प्रधान केन्द्रमासीत्। अनेकत्वेन सकले देशे स्थापितत्वेन चेमे हिन्दचीनदेशे दूरपर्यन्तं भारतीयायाः सभ्यतायाः सस्कृतेश्च प्रसारमकुर्वन्।

## कम्बुजदेशस्य साम्राज्यम् ( १००१–१२०२ ख्री० )

अङ्कोरस्योत्थानकाले ( ८७७–१००१ ) कम्बुजदेशस्यात्यधिको राजनीतिकविस्तारोऽभूत्, तत्र भारतीयसस्कृतेर्महान् दृष्टः प्रभावोऽभूत्, किन्तु तत्रत्य स्वर्णयुगमेकादश द्वादशञ्च शतकमासीत्। यदा भारत महमूदगजनवीनामकेन शिहाबुद्दीनगोरीनामकेन चाक्रम्यमाणमासीत्, भारतेऽनेकानि प्रादेशिकानि राज्यानि परस्परसङ्घर्षे स्वा शक्तिं क्षिण्वन्ति स्म, तदानीं कम्बुजसाम्राज्य वङ्गीयाखातात् चीनसागर यावद् विस्तीर्णमासीत्, यदोत्तरे भारते यवनैराक्रमणकारिभिः

---

१. प्रासात कोमनेय–अभिलेखः, श्लोकसं० ७४, मङ्क, पृ० १२४,

न वैष्णवाश्रमस्यास्य वैष्णवो वासयेत् स्त्रियम्।
कदाचिदुपशल्येऽपि सहधर्मचरीमपि ॥

२. स एव लेखः, श्लोकसं० ९८, मङ्क पृ० १२३,

द्वौ लेखकौ राजकुटीपालौ पुस्तकरक्षिणौ।
ताम्बूलिकौ च पानीयहारौ षट् पत्रकारकाः ॥

पवित्राणि मन्दिराणि नाश्यन्ते स्म, तदैव कम्बुजदेशेऽङ्कोरस्य जगत्प्रसिद्धानि मन्दिराणि निर्मीयन्ते स्म। कम्बुजदेशस्येतिहासस्य सर्वोत्कृष्ट गौरवास्पद युगम् १००१–१२०० खीष्टीयाब्दपर्यन्तमेवाऽऽसीत्।

**राजनीतिक इतिहासः**—१००१ तमे खीष्टीयाब्दे जयवर्मणः पञ्चमस्य मृत्यौ उदयादित्यः प्रथमः ( १००१–२ ) राजसिंहासनमारूढः, १००२ तमे खीष्टीयाब्दे स दिवङ्गतः, किन्तु तदानीं सिंहासनार्थं गृहयुद्ध प्रारब्धम्। जयवीरवर्मा सूर्यवर्मा च द्वौ नूतनौ नृपौ सन्नद्धौ। प्रथमस्य शासनमङ्कोरप्रदेशे आसीत्, द्वितीयस्य पूर्वोत्तरप्रदेशे। अष्टवर्षाण्यतीत्य सङ्घर्षेऽस्मिन् अन्ततः सूर्यवर्मा सफलो जातः ( १०१० खी० )[1]। अय महान् विद्वानासीत्। एकस्मिन्नभिलेखे अय भाषाणा काव्यस्य षण्णा दर्शनाना धर्मशास्त्राणाञ्च पण्डित आसीदिति प्रतिपादितं विद्यते[2]। अय बौद्ध आसीत्, किन्तु तेन कम्बुजराजकुलस्य प्राचीनो राजधर्मो न परित्यक्तः। अनेकानि शैववैष्णवमन्दिराणि निर्मापितानि। अपरञ्च वर्णव्यवस्थाऽपि नूतनपद्धत्या कारिता। तस्य राज्ये अनेके आन्तरविद्रोहा अभूवन्। एतान् शमयितुं तेन राजकर्मचारिणा राजभक्तिशपथग्रहणस्य परिपाटी प्रचालिता। अय शपथोऽङ्कोरथोमस्य राजप्रासादस्य गोपुरस्य स्तम्भेषूत्कीर्णो विद्यते। सूर्यवर्मणा सकलः स्यामदेशो विजितो दक्षिणबर्मादेशे थेतोनप्रदेशस्य मोनराज्यपर्यन्तमस्य सेना गता।

सूर्यवर्मणोऽनन्तरमुदयादित्यो द्वितीयः ( १०४९–१०६६ ) राजसिंहासनमारूढः। परमस्य कालस्य प्रसिद्धौ राजानौ सूर्यवर्मा द्वितीयो जयवर्मा सप्तमश्चास्ताम्।

**सूर्यवर्मा द्वितीयः ( १११२–५० )**—सूर्यवर्मणो द्वितीयस्य राज्याभिषेको दिवाकर पण्डितेन सम्पादितः। अनेन राज्ञे ब्रह्मगुह्यस्य ( महारहस्यस्य ) दीक्षा दत्ता। इदमेकं मान्त्रिकमतमासीत्। अनेन राज्ञा पूर्वजानामुद्धारार्थं कोटिहोम-लक्षहोम-महाहोमादयोऽनेके यज्ञाः कारिताः (मकदे, पृ० १२२–३)। धार्मिकक्षेत्रेऽस्योत्कृष्टतमा कृतिर्जगत्प्रसिद्धा अङ्कोरवत इत्येतस्य निर्माणमासीत्। राजनीतिकक्षेत्रेऽनेन प्रारम्भे सफलता प्राप्ता[3]। १११७ तमे ११२१ तमे च खीष्टीयाब्दे चीनदेशे दूत प्रेष्यानेन तेन देशेन साकं स्वकीयः पुरातनः सम्बन्धः पुनः स्थापितः। चीनदेशस्य वर्णनानुसारेण कम्बुजसाम्राज्य चम्पादेशादवो बर्मादेशपर्यन्त विस्तीर्णमासीत्। तथात्र बन्दोना-

---

१. प्राहखान–अभिलेखः, श्लोकसं० ७, मईक पृ० ३५९,

एतावतानुमेयं यद्वीर्यं यद्दृढधीर्मुनिः।
रणस्थो राजसंकीर्णाद्राज्ञो राज्यं जहार यः॥

२. तत्रैव, श्लोकसं० ६,

भाषादिचरणा काव्यपाणिः षड्दर्शनेन्द्रिया।
यन्मतिर्धर्मशास्त्रादिमस्तका जङ्गमायिता॥

३. केदेमहोदयेनास्य गौरवं सूर्यवर्मणो राजसिंहासने उपविष्टस्य चम्पादेशस्य जयेन्द्रवर्मणो द्वितीयस्य तथा पगानस्य क्यञ्जित्थस्य मृत्योर्विद्यते इति प्रतिपादितम् ( हाहिसौ, पृ०१०३ )।

खातादुपरितनभागपर्यन्तं मलायाद्वीपकल्पमपि सन्मिलितमासीत्। तदानीं कम्बुजदेशस्य पार्श्वे युद्धहस्तिलक्षद्वयमासीत्। एभिः कारणैः कम्बुजदेशस्याभिलेखेषु सूर्यवर्मणो महती अत्युक्तिपूर्णा प्रशंसाऽक्रियत। स महत्त्वाकाङ्क्षी राजाऽऽसीदित्यत्र कश्चनापि सन्देहो नासीत्। प्रारम्भे तु तेन पर्याप्ता सफलता प्राप्ता, किन्तु पश्चादसफलताया मुखं द्रष्टुं प्रारब्धम्। पूर्वं तेन चम्पादेशस्योदीच्यभागविजयं विधायैकं वशंवदं राज्यं निर्मितम्। पुनश्चम्पादेशेन सह सन्धिं कृत्वा अनामराज्यमाक्रमितुं सेना प्रेषिता (११२८)। यथासमयं चम्पादेशसेनाया अनागमनेन कम्बुजदेशीया सेना पराजिता प्रतिनिवृत्ता च। ११३२ तमे खीष्टीयाब्दे अनामदेशे सूर्यवर्मणो द्वितीयमप्याक्रमणं निष्फलमभूत्। ११३७ तमे अनामदेशे कम्बुजदेशस्तृतीयवारं पराजितोऽभूत्। तान् पराजयान् प्रतिकर्तुं तेन चम्पादेशे आक्रमणद्वयं कृतम् (११४७–११४८), किन्तु वारद्वयमपि चम्पादेशस्य राज्ञा हरिवर्मदेवेन स पराजितः। तृतीयस्मिन् वर्षे हरिवर्मदेवेन कम्बुजदेशमाक्रम्य स पराजितः (११४९)। ११५० तमे अनामदेशमाक्रमणं कर्तुं प्रेषिता सेनाऽपि पराजिता। एभिः पराजयैः कम्बुजदेशे महती अव्यवस्था समुत्पन्ना। अतस्ततः पश्चाद्भाविनां चतुर्णां राज्ञां हर्षवर्मणः (११५०–१) धरणीन्द्रवर्मणो द्वितीयस्य (११५१–६०) यशोवर्मणो द्वितीयस्य (११६०–६५) त्रिभुवनादित्यवर्मणः (११६५–७७) च समयोऽतीवाव्यवस्थापूर्णोऽभूत्।

अनयोर्द्वयो राज्ञोः समये आन्तरो विद्रोहस्तथा चम्पादेशेन साकं सङ्घर्षोऽक्षुण्णोऽभूत्। आन्तरिकविद्रोहविषये संजकनामकानामङ्गरक्षकाणां वर्णनमुचितं प्रतीयते। इमेऽद्भुतपराक्रमेण प्राणनिरपेक्षाः स्वामिनां प्राणान् रक्षन्ति स्म। द्वयोर्युद्धयोश्चतुर्भिरङ्गरक्षकैः स्वान् प्राणान् विसृज्य श्रीन्द्रकुमारो राजकुमारो रक्षितः। एषां मृत्योः पश्चाद् राजा तानुद्दिश्यमहान्तमादरमदर्शयत्। मन्दिरेषु तेषां मूर्तिः प्रतिष्ठाप्यते स्म, तथा ते देवा विधीयन्ते स्म। चम्पादेशेन सह कम्बुजदेशस्य बहुकालं यावत् संघर्षः प्रचलितः, किन्त्वन्ते चम्पाराजेन जयेन्द्रवर्मणा नौनिकरेण कम्बुजदेश आक्रान्तः (११७७ खी०)। मीकांगनद्याश्चम्पानौनिकरो राजधानीं प्राप्तवान् ताञ्च लुण्ठितवान्। कम्बुजेश्वरस्त्रिभुवनादित्यवर्मा युद्धे हतः। अस्मिन् समये जयवर्मणा एकस्मिन् नौयुद्धे चेमान् पराजित्य कम्बुजदेशो रक्षितः।

**जयवर्मा सप्तमः** (११८१–१२१९)—शत्रूणां पादाक्रान्तस्य कम्बुजदेशस्योद्धारको जयवर्मा सप्तम आसीत्। अयं कम्बुजदेशस्य महान् प्रतापी च राजाऽऽसीत्। सैनिकविजयदृष्ट्या धार्मिकदानदृष्ट्या चास्य समयोऽसाधारणं महत्त्वमादधाति।

सैनिकदृष्ट्याऽस्य विजयैः कम्बुजदेशसीमा पूर्वस्मिन् चीनसागरं यावत् तथा पश्चिमे वङ्गीयाखातं यावद् नीता। कम्बुजदेशस्यायं विस्तारः 'न भूतो न भविष्यति' इत्यासीत्। चम्पादेशस्य पूर्णरूपेण पादाक्रमणानन्तरमिदमेकं विलक्षणं चमत्कारपूर्णं कार्यमासीत्। पूर्वमनेन पूर्वा दिगनुध्याता चम्पापराजयश्च पूर्णतया तस्य सेनापतिना प्रतिशोधितः। ११९०-१२२२ पर्यन्तं कम्बुजचम्पादेशयोः सङ्घर्षः प्रचलितः। अस्मिन् सङ्घर्षे जयवर्मणः समयपर्यन्तं कम्बुजदेश एव विजयश्रियं लेभे, तस्य सेनापतिश्चम्पादेशं मर्दितवान्। बहुकालपर्यन्तं चम्पादेशः कम्बुजसाम्राज्यस्याधीनस्थः प्रान्तोऽभूत्। पूर्वस्मिन्नेकादशशतकस्य मध्ये पगानराज्येन रामञ्जदेशमाक्रम्य सकले

मध्यबर्मादेशे दक्षिणबर्मादेशे च स्वकीया प्रभुता स्थापिता । चीनदेशीयवर्णनानुसारेण द्वादशशतक-स्यान्ते पगानराज्य कम्बुजदेशस्य परवशता स्वीचकार । तेषु वर्णनेषु स्पष्टमिद नाक्रियत यत् सकल पगानराज्य कम्बुजदेशे सम्मिलितमथवा तस्य कम्बुजसम्बद्धो भागः, किन्त्विद निश्चितमस्ति यदस्या दिशि कम्बुजनिवासिनो नवमदशमशतकयोः पुरो गता आसन् ।

जयवर्मणा पूर्वभूमिपालवद् मन्दिरेभ्योऽधिक दान दत्तम् । अस्य साम्राज्य प्राक्तनभूपाला-पेक्षयाधिक विस्तीर्णमासीत्, तस्य धार्मिक दनमपि तदनुपातेऽतीवाधिकमासीत् । अत्रैकस्य दानस्यैवोल्लेखः पर्याप्तोऽस्ति । अनेन ताप्रोहमस्थानस्य राजकीये विहारे प्रज्ञापारमितारूपेण स्वस्य मातुर्मूर्तिः स्थापिता । इदं मन्दिर कियद् विशालमासीदित्येतावता तथ्येनानुमातु शक्यते ।[१] अस्य मन्दिरस्य देवाना पूजार्थम् ६६,६२५ जना आसन् । अस्य व्ययस्य संचालनार्थम् ३४०० ग्रामा दत्ताः । अत्र ४३९ गुरवः ९७० विद्यार्थिनश्चासन् । एतेषा भोजनवस्त्रप्रभृतिसकलदैनिका-वश्यकताना प्रबन्धो राज्येन विहितोऽभवत् । अत्र ५६६ पाषाणभवनानि २८८ इष्टकाभवनानि चासन् । प्रचुरपरिमाणातिसुवर्णरजतातिरिक्तानि पञ्चत्रिंशद् हीरकाणि, ४०६२० मुक्ताफलानि, ४५४० अन्यानि रत्नानि मन्दिरेभ्यो दत्तानि । अभिलेखादिद ज्ञायते यदस्य राज्ये ७९८ मन्दिराणि १०२ औषधालयाश्चासन् । तेभ्यः प्रतिवर्षम् ११०२०० खारीपरिमिताः ( १ खारी-३ मन ८ सेर ) तण्डुला दीयन्ते स्म ।

---

१. तोप्रोहम-अभिलेखः, मङ्क पृ० ४५९-७५, अत्र लिखिताः संख्या निम्नोद्धृतश्लोके-षूपलभ्यन्ते—

षट्सहस्राः षडयुताः षट्शताः पञ्चविंशतिः ।
स्त्रीपुंसा गणितास्तत्र देवपूजाविधायिनः ॥ ६६ ॥
राज्ञा दत्ताः स्वयं दत्ता ग्रामवद्भिश्च भक्तित. ।
सहस्रत्रितयं ग्रामाश्चत्वारिंशत् तथा शतम् ॥
सहस्रे द्वे शते च द्वात्रिंशच्च परिचारिकाः ।
योषितस्तासु नर्तक्यः षट्शता दशपञ्च च ॥ ६२-३ ॥

सुवर्णहारकमुक्तार्थम् द्र० श्लोकसं०६९-७६, भवनानां संख्या ७८ तमे श्लोके विद्यते । आरोग्यशालानां संख्या ११७ तमे श्लोके विद्यते, तथा तेभ्यो दत्तानां वस्तूनां विवरणम् ११८-१४० तमेषु श्लोकेषु । अस्यैव राज्ञः प्राहखानयूपलेखे ( मङ्क पृ० ४७५-४९२ ) ततोऽपि महती संख्या निर्दिष्टा विद्यते । अस्य राज्ञा नृत्येश्वरस्य ( शिवस्य ) द्वाभ्यां सुवर्णप्रतिमाभ्यां सह १३५०० ग्रामा दत्ताः ( श्लोकः २२ ), १२१ धर्मशाला निर्मापिताः ( श्लोकाः १२२-६ ), २०४०००देवतानां मूर्तीनां निर्देशेन सह तदर्थम् ८१७६ ग्रामाणां दानस्य, २०८,५३२ दासानां ( श्लोका. १४०-४) महापरिमाणे बहुमूल्यधातूनां तथा ५१४ मन्दिराणां निर्देशो वर्तते । राज्ञः सकलं दानम् १३,५०० ग्रामाः, ३०६३७२ दास्यश्चासन्, ये चम्पादेशपगान( पुकान )बर्मादेश( खन् )-देशेभ्य आनीताः, तथा ४०० १२६ खारीपरिमितास्तण्डुला आसन् ( श्लोकौ १७७-८ ) ।

जयवर्मणः सप्तमस्य १०२ औषधालयानां निर्माणं न केवलं कम्बुजदेशस्य, किन्तु विश्वस्येतिहासे नूतना घटनाऽऽसीत्। रोगाणां प्रतिकाराय तत्कालपर्यन्तं देशान्तरेषु राज्यद्वारा तावती व्यवस्था नासीत्। आरोग्यशालानां स्थापनायाः कारणमिदमासीद् यद् जयवर्मा प्रजानां रोगाणां चिन्तया परिपीड्यते स्म। इयं चिन्ता स्वशरीररोगादप्यधिकं क्लेशं तस्मै ददाति स्म। यतो हि राज्ञो वास्तविकं दुःखं स्वशरीररोगो न भवति, किन्तु प्रजादुःखं भवति।

देहिनां देहरोगो यन्मनोरागो सजूत्तराम्।
राष्ट्रदुःखं हि भर्तॄणां दुःखं दुःखन्तु नात्मनः॥
(मइक० पृ०४९७)

जयवर्मणः सेफागामिलेखे आरोग्यशालानां नियमानां विस्तृतं वर्णनं विद्यते (मइक० पृ० ४९३-५०२)। लोकहितस्योदात्तादर्शभूताया भावनाऽशोके प्रादुरभूत्, सैव जयवर्मणि आसीत्। १०२ आरोग्यशालानां स्थापनामत्युक्तिपूर्णां मन्यमानानां कृते कथनमिदं पर्याप्तं भविष्यति यदभिलेखेषु पञ्चदशानां स्थानं निश्चितं विद्यते।

जयवर्मणा सप्तमेन राजपथेषु यात्रिणां सुखाय १२१ धर्मशालाः स्थापिताः। अयं राजा बौद्धधर्मेऽतीवानुरक्त आसीत्। अस्यानेकेषु लेखेषु प्राणिमात्रं प्रति दयाया बौद्धभावनायाः स्पष्टं वर्णनं विद्यते। मृत्योः पश्चाद् जयवर्मणे महापरमसौगतनामादीयत।

## सांस्कृतिको विजयः

एकादशद्वादशशतकयोरेकतो यथा कम्बुजदेशस्य साम्राज्यं चीनसागराद् वङ्गाखातपर्यन्तं विस्तीर्णं सदौन्नत्यस्य चरमशिखरं प्राप्तम्, तथैवान्यतो भारतीयसंस्कृतेर्विकासेनापि स्वीया उदूर्ध्वतमा मर्यादा प्राप्ता। कम्बुजदेशे हिन्दुसंस्कृतेः सर्वाधिको गौरवपूर्णकालोऽयमेव वर्तते। पूर्वं प्रतिपादितमस्ति यत् कम्बुजदेशोऽतीतयुगे हिन्दुसंस्कृतिरागेण पूर्णतया अनुरञ्जित आसीत्। अस्मिन् युगेऽपि भारतीया विद्वांसो ब्राह्मणास्तपस्विनः साधवश्चात्र संस्कृतसाहित्यस्य हिन्दुबौद्धधर्मयोश्च प्रचारमकार्षुः। राजकुलेष्वनेकशतकानि यावत् पौरोहित्येन सेवां विदधतो ब्राह्मणा आश्रमाचार्याश्च भारतीयसंस्कृतेरक्षयवटं निरन्तरं संवर्द्धयन्तो विस्तारयामासुः। अस्य सर्वोत्तमो दृष्टान्तोऽस्य प्राचीनावशेषेषु कम्बुदेशस्य वास्तुकलाया मूर्तिकलायाञ्च प्राप्यते।

**कम्बुजदेशस्य वास्तुकला**—कम्बुजदेशस्य विस्मयावहा अप्रतिमा अवशेषा भारतीयकलाया उत्कृष्टतमा आकाराः सन्ति। भारतेऽपि तत्सदृशानि कान्यपि भवनानि नोपलब्धानि। कम्बुजदेशस्य बहूनि प्रसिद्धानि भवनानि तस्मिन्नेव काले निर्मितानि। एष्वङ्कोरवतेति अङ्कोरथोमेति च विशेषेणोल्लेखनीये स्तः। अङ्कोरवत इत्येतस्य निर्माणं सूर्यवर्मणा द्वितीयेन (१११३-११४५) कारितम्। अङ्कोरथोमस्य निर्माता पूर्वं यशोवर्मा प्रथमः (८८९-९०८) मन्यते स्म, किन्त्वद्यत्वे अस्य निर्माणस्य गौरवं जयवर्मणे सप्तमाय (११८१-१२०० खी०) दीयते।

**कम्बुजदेशस्य वास्तुकलाया वैशिष्ट्यद्वयम्**—एकादशद्वादशशतकयोः कम्बुजदेशे एकस्या वास्तुकलाया विकासोऽजायत। अस्य देशस्य प्राचीनानि मन्दिराणि भारतीयमन्दिरैः कामं

सन्ति । एतानि प्रासात् सुओर प्रात इति, अर्थात् पथिषु नृत्य कुर्वता नटाना प्रासाद-शिखराण्युच्यन्ते । अत्र राजा नटाना क्रीडा पश्यति स्म । उपविजयद्वारमुपविश्य स स्वसेनाया व्यायाम निरीक्षते स्म । अस्य पश्चिमे तस्य राजप्रासादो बफुओनमन्दिरञ्चास्ताम् ।

अङ्कोरथोमस्य वास्तविकशोभा तस्य केन्द्रे निर्मितमायताकारम् ( ७०० X ५५० फीट ) बोयेनबौद्धमन्दिरमासीत् । इद महायानानुयायिना बौद्धेन जयवर्मणा सप्तमेन त्रयोदशशतकस्य प्रारम्भे नूतनराजधान्या मध्ये निर्मापितम् । इद पिरामिडाकार वर्तते । अस्य केन्द्रीयमन्दिरस्य शिखर स्वर्णजटितमासीत् । अस्याभ्यन्तरबाह्यदीर्घासु प्रायः पञ्चाशत् शिखराणि सन्ति । बेयोन-मन्दिरस्यैक वैशिष्ट्यमेतेषु शिखरेषु चतसृषु दिक्षु चतुर्णा विशालमानवमुखाना निर्माण विद्यते । एतानि लोकेश्वररूपेण ( अवलोकितेश्वरस्यैक रूपम् ) सम्भवतस्तस्य निर्मातुर्जयवर्मणः प्रतिकृतयः सन्ति । बेयोनमन्दिर भूषयन्त्यो मूर्तयोऽतीव मनोहरा आसन्, किन्त्वधुना खण्डिता अभूवन् ।

बेयोनमन्दिरमङ्कोरथोमस्य सुमेरुपर्वत आसीत् । अस्य नगरस्य प्राकारभित्तयश्चन्द्र-वालस्याथवा सुमेरुपर्वतस्य परिवेष्टका लघवः पर्वता आसन् । बाह्यपरिखाभूमण्डलपरिवेष्टन-कर्ता समुद्र आसीत् । परिखाया मार्गेषु निर्मितान् नागराजान् रज्जु कृत्वा समुद्रमन्थनकारकाणा देवाना दैत्यानाञ्च मूर्तिभिर्बेयोनमन्दिर वस्तुतः समुद्रमन्थनाय मन्दराचलायते[1] ।

अङ्कोरथोमे कम्बुजदेशस्य वास्तुकला सर्वोत्तमरूपेण प्रादुर्बभूव । अत्र भवनाना विशा-लता, शोभनः समानुपातः, समरूपता चात्यधिक प्रभाव समुत्पादयन्ति, पर दीर्घाणा समुद्गतानि चित्राणि एना शोभा परा काष्ठा नयन्ति । वास्तुकलावद् मूर्तिकलाप्यस्मिन् काले चरमोत्कर्षे आसीत् ।

**मूर्त्तिकला**—पूर्वमेव प्रतिपादित विद्यते यत् कम्बुजदेशस्य मूर्त्तिकला गुप्तकलाभिरतीव प्रभाविताऽऽसीत् । ततः शनैः शनैरभ्यस्यन्तः कम्बुजदेशीयशिल्पिनः कलायामस्या तथा निपुणा अभूवन् यत् तैः पाषाणेष्वमरकाव्य रचितम् । युगस्यास्य मूर्तीनामेकमिद वैशिष्ट्य स्मेरमुख-मण्डलमस्ति । भारतीये साहित्ये विष्णोः स्मेरमुखमुद्राया वर्णन विद्यते, परमत्र कदापि उत्कीर्णा नाभूत् । कम्बुजदेशे प्रायः सर्वेषा देवानामर्द्धनिमीलिता स्मेरमुखमुद्रा एतावत्या शोभनया विलक्षणपद्धत्या च शिलासूत्कीर्णा विद्यते यत् तद्वास्तुशास्त्रिषु 'अङ्कोरस्येषद्धास्य'नाम्ना प्रसिद्धिं गता । हास्यमिद निर्वाणस्याथवाऽऽध्यात्मिकशान्तेर्बोधक तथा स्मेरकलाया उच्चतमो विकास उच्यते ।

भित्तीना पाषाणेषु चित्रोत्कीर्णकलाया अपि क्रमेण विकासोऽभूत् । चित्रेष्वधिकमुद्गतत्वं निम्नत्वञ्च विद्येते, पर शनैः शनैस्तत्रोद्गतत्वं न्यूनमभूत्, अन्ते च पाषाणेषु सूक्ष्म शोभनञ्च सूची शिल्पमात्रमेवावशिष्यत् ।

---

१. लुइस नार्मन—एड्रेगन एप्परेण्ट ( जोनाथनकेप लंडन ), पृ० २२५; रोलैण्ड बेंजमिन-आर्ट एण्ड आर्किटेक्चर आफ इण्डिया, पृ० २४० ।

जयवर्मणः सप्तमस्य १०२ औषधालयाना निर्माण न केवल कम्बुजदेशस्य, किन्तु विश्वस्येतिहासे नूतना घटनाऽऽसीत्। रोगाणा प्रतिकाराय तत्कालपर्यन्त देशान्तरेषु राज्यद्वारा तावती व्यवस्था नासीत्। आरोग्यशालाना स्थापनायाः कारणमिदमासीद् यद् जयवर्मा प्रजाना रोगाणा चिन्तया परिपीड्यते स्म। इय चिन्ता स्वशरीररोगादप्यधिकं क्लेशं तस्मै ददाति स्म। यतो हि राज्ञो वास्तविक दुःखं स्वशरीररोगो न भवति, किन्तु प्रजादुःखं भवति।

देहिना देहरोगो यन्मनोरागो सजूत्तराम्।
राष्ट्रदुःखं हि भर्तॄणा दुःखं दुःखन्तु नात्मनः॥
(मङ्क० पृ०४९७)

जयवर्मणः सेफागाभिलेखे आरोग्यशालाना नियमाना विस्तृत वर्णन विद्यते (मङ्क० पृ० ४९३-५०२)। लोकहितस्योदात्तादर्शभूताया भावनाऽशोके प्रादुरभूत्, सैव जयवर्मणि आसीत्। १०२ आरोग्यशालाना स्थापनामत्युक्तिपूर्णा मन्यमानाना कृते कथनमिद पर्याप्त भविष्यति यदभिलेखेषु पञ्चदशाना स्थान निश्चित विद्यते।

जयवर्मणा सप्तमेन राजपथेषु यात्रिणा सुखाय १२१ धर्मशाला. स्थापिताः। अय राजा बौद्धधर्मेऽतीवानुरक्त आसीत्। अस्यानेकेषु लेखेषु प्राणिमात्र प्रति दयाया बौद्धभावनायाः स्पष्ट वर्णन विद्यते। मृत्योः पश्चाद् जयवर्मणे महापरमसौगतनामादीयत।

## सांस्कृतिको विजयः

एकादशद्वादशशतकयोरेकतो यथा कम्बुजदेशस्य साम्राज्य चीनसागराद् वङ्गाखातपर्यन्तं विस्तीर्ण सदौन्नत्यस्य चरमशिखर प्राप्तम्, तथैवान्यतो भारतीयसस्कृतेर्विकासेनापि स्वीया उद्र्ध्वतमा मर्यादा प्राप्ता। कम्बुजदेशे हिन्दुसंस्कृतेः सर्वाधिको गौरवपूर्णकालोऽयमेव वर्तते। पूर्व प्रतिपादितमस्ति यत् कम्बुजदेशोऽतीतयुगे हिन्दुसस्कृतिरागेण पूर्णतया अनुरञ्जित आसीत्। अस्मिन् युगेऽपि भारतीया विद्वासो ब्राह्मणास्तपस्विन. साधवश्चात्र सस्कृतसाहित्यस्य हिन्दुबौद्धधर्मयोश्च प्रचारमकार्षुः। राजकुलेष्वनेकशतकानि यावत् पौरोहित्येन सेवा विदधतो ब्राह्मणा आश्रमाचार्याश्च भारतीयसस्कृतेरक्षयवट निरन्तर सवर्द्धयन्तो विस्तारयामासुः। अस्य सर्वोत्तमो दृष्टान्तोऽस्य प्राचीनावशेषेषु कम्बुदेशस्य वास्तुकलाया मूर्तिकलायाञ्च प्राप्यते।

**कम्बुजदेशस्य वास्तुकला**—कम्बुजदेशस्य विस्मयावहा अप्रतिमा अवशेषा भारतीयकलाया उत्कृष्टतमा आकाराः सन्ति। भारतेऽपि तत्सदृशानि कान्यपि भवनानि नोपलब्धानि। कम्बुजदेशस्य बहूनि प्रसिद्धानि भवनानि तस्मिन्नेव काले निर्मितानि। एष्वङ्कोरवतेति अङ्कोरथोमेति च विशेषेणोल्लेखनीये स्तः। अङ्कोरवत इत्येतस्य निर्माण सूर्यवर्मणा द्वितीयेन (१११३-११४५) कारितम्। अङ्कोरथोमस्य निर्माता पूर्व यशोवर्मा प्रथमः (८८९ ९०८) मन्यते स्म, किन्त्वद्यत्वे अस्य निर्माणस्य गौरवं जयवर्मणे सप्तमाय (११८१-१२०० खी०) दीयते।

**कम्बुजदेशस्य वास्तुकलाया वैशिष्ट्यद्वयम्**—एकादशद्वादशशतकयो. कम्बुजदेशे एकस्या वास्तुकलाया विकासोऽजायत। अस्य देशस्य प्राचीनानि मन्दिराणि भारतीयमन्दिरैः काम

सन्ति । एतानि प्रासात् सुओर प्रात इति, अर्थात् पथिषु नृत्य कुर्वता नटाना प्रासाद-शिखराण्युच्यन्ते । अत्र राजा नटाना क्रीडा पश्यति स्म । उपविजयद्वारमुपविश्य स स्वसेनाया व्यायाम निरीक्षते स्म । अस्य पश्चिमे तस्य राजप्रासादो बफुओनमन्दिरञ्चास्ताम् ।

अङ्कोरथोमस्य वास्तविकशोभा तस्य केन्द्रे निर्मितमायताकारम् (७०० × ५५० फीट) बोयेनबौद्धमन्दिरमासीत् । इद महायानानुयायिना बौद्धेन जयवर्मणा सप्तमेन त्रयोदशशतकस्य प्रारम्भे नूतनराजधान्या मध्ये निर्मापितम् । इद पिरामिडाकार वर्तते । अस्य केन्द्रीयमन्दिरस्य शिखर स्वर्णजटितमासीत् । अस्याभ्यन्तरबाह्यदीर्घासु प्रायः पञ्चाशत् शिखराणि सन्ति । बेयोन-मन्दिरस्यैक वैशिष्ट्यमेतेषु शिखरेषु चतसृषु दिक्षु चतुर्णा विशालमानवमुखाना निर्माण विद्यते । एतानि लोकेश्वररूपेण (अवलोकितेश्वरस्यैकं रूपम्) सम्भवतस्तस्य निर्मातुर्जयवर्मणः प्रतिकृतयः सन्ति । बेयोनमन्दिर भूषयन्त्यो मूर्तयोऽतीव मनोहरा आसन्, किन्त्वधुना खण्डिता अभूवन् ।

बेयोनमन्दिरमङ्कोरथोमस्य सुमेरुपर्वत आसीत् । अस्य नगरस्य प्राकारभित्तयश्चन्द्र-वालस्याथवा सुमेरुपर्वतस्य परिवेष्टका लघवः पर्वता आसन् । बाह्यपरिखाभूमण्डलपरिवेष्टन-कर्ता समुद्र आसीत् । परिखाया मार्गेषु निर्मितान् नागराजान् रज्जु कृत्वा समुद्रमन्थनकारकाणा देवाना दैत्यानाञ्च मूर्तिभिर्बेयोनमन्दिर वस्तुतः समुद्रमन्थनाय मन्दराचलायते[1] ।

अङ्कोरथोमे कम्बुजदेशस्य वास्तुकला सर्वोत्तमरूपेण प्रादुर्बभूव । अत्र भवनाना विशा-लता, शोभनः समानुपातः, समरूपता चात्यधिक प्रभाव समुत्पादयन्ति, पर दीर्घाणा समुद्गतानि चित्राणि एना शोभा परा काष्ठा नयन्ति । वास्तुकलावद् मूर्तिकलाप्यस्मिन् काले चरमोत्कर्षे आसीत् ।

**मूर्त्तिकला**—पूर्वमेव प्रतिपादित विद्यते यत् कम्बुजदेशस्य मूर्त्तिकला गुप्तकलाभिरतीव प्रभाविताऽऽसीत् । ततः शनैः शनैरभ्यस्यन्तः कम्बुजदेशीयशिल्पिनः कलायामस्यां तथा निपुणा अभूवन् यत् तैः पाषाणेष्वमरकाव्य रचितम् । युगस्यास्य मूर्तीनामेकमिद वैशिष्ट्य स्मेरमुख-मण्डलमस्ति । भारतीये साहित्ये विष्णोः स्मेरमुखमुद्राया वर्णन विद्यते, परमत्र कदापि उत्कीर्णा नाभूत् । कम्बुजदेशे प्रायः सर्वेषा देवानामर्द्धनिमीलिता स्मेरमुखमुद्रा एतावत्या शोभनया विलक्षणपद्धत्या च शिलासूत्कीर्णा विद्यते यत् तद्वास्तुशास्त्रिषु 'अङ्कोरस्येषद्धास्य'नाम्ना प्रसिद्धिं गता । हास्यमिद निर्वाणस्याथवाऽऽध्यात्मिकशान्तेर्बोधक तथा स्मेरकलाया उच्चतमो विकास उच्यते ।

भित्तीना पाषाणेषु चित्रोत्कीर्णकलाया अपि क्रमेण विकासोऽभूत् । चित्रेष्वधिकमुद्गतत्वं निम्नत्वञ्च विद्येते, परं शनैः शनैस्तत्रोद्गतत्व न्यूनमभूत्, अन्ते च पाषाणेषु सूक्ष्म शोभनञ्च सूची शिल्पमात्रमेवावशिष्यत् ।

---

१. लुइस नार्मन—एङ्गेगन एप्परेण्ट (जोनाथनकेप लंडन), पृ० २२५; रोलैण्ड बेञ्जमिन-आर्ट एण्ड आर्किटेक्चर आफ इण्डिया, पृ० २४० ।

इत्थं प्रस्तरखचितोद्गतचित्राणां विषयाः प्रायो भारतीयाः सन्ति । रामायणस्य महाभारतस्य हरिवंशपुराणस्य चानेकाः कथा एषु चित्रेषु प्रदर्शिताः सन्ति । अधिकानि चित्राणि वैष्णवानि सन्ति, किन्तु कानिचित् चित्राणि शैवान्यपि सन्ति । केदेमहोदयेन अङ्कोरवत इत्यस्य त्रिंशद्भारतीयानि चित्राण्यष्टधा विभक्तानि—

( १ ) रामायणस्यैकादशघटना.—( क ) धनुर्यज्ञः, ( ख ) विराधवधः, ( ग ) मारीचमरणम्, ( घ ) कबन्धमृत्युः, ( ङ ) रामसुग्रीवमैत्री, ( च ) बालिसुग्रीवयुद्धम्, ( छ ) अशोकवाटिकायां हनूमान्, ( ज ) रामविभीषणमैत्री, ( झ ) लङ्कायुद्धम्, ( ञ ) सीताया अग्निपरीक्षा, ( ट ) रामस्य पुष्पकविमानेन प्रत्यावर्तनम् ।

( २ ) कृष्णसम्बन्धिन्यः पञ्च घटनाः—( क ) द्वौ कृष्णौ, ( ख ) गोवर्द्धनधारणम्, ( ग ) नरकासुरसंग्रामः, ( घ ) स्यामन्तकमणिहरणम्, ( ङ ) बाणासुरयुद्धम् ।

( ३ ) पौराणिककथानां चत्वारि दृश्यानि—( क ) शेषशायी विष्णुः, ( ख-ग ) अमृतमन्थनस्य दृश्यद्वयम्, ( घ ) देवासुरसंग्रामः ।

( ४ ) विष्णोश्चत्वारि दृश्यानि, ( ५ ) शिवस्य त्रीणि दृश्यानि, ( ६ ) महाभारतस्य संग्रामः, ( ७ ) स्वर्गनरकयोश्चित्राणि, ( ८ ) परमविष्णुलोकदृश्यानि दीर्घातिरिक्तानां स्तम्भानामुपरितनं पटलस्य च मध्यमं स्थानमपि रिक्तं नासीत् । तेषु वासुकि-विष्णुदेव-असुर लक्ष्मी-उच्चैःश्रवस्-ब्रह्म-गणेश-नटराज किरातवेशधारिशिवार्जुनसंग्रामाणां दृश्यान्युत्कीर्णानि सन्ति । कृष्णस्य गोवर्द्धनधारणस्य, कालियदमनस्य, कुवलयापीडहस्तिनोऽसुरसंग्रामस्य च चित्राण्यपि अत्रोत्कीर्णानि विद्यन्ते । अत्र गरुडारूढस्य विष्णोस्तथा विष्णोरसुरैः सह युद्धस्यानेकानि चित्राणि वर्तन्ते ।

## कम्बुजदेशस्यापकर्षोऽङ्कोरस्यावसानञ्च

जयवर्मणः सप्तमस्यानन्तरं कम्बुजदेशस्यापकर्षः प्रारब्धोऽभूत् । फ्रांसदेशनिवासिना विदुषा केदेमहोदयेनास्य मुख्यं कारणं जयवर्मणो विशालेन निर्माणेन सैनिकविजयेन च करभाराक्रान्तायां जनतायां दारिद्र्यं प्रतिपादितम् । अनेन कम्बुजदेशे अन्तःक्षीणता प्रविष्टा । तदानीं तस्मिन् वैदेशिकमाक्रमणमपि प्रारभ्यत, तेनान्ते च कम्बुजवासिनोऽङ्कोरं परित्यक्तुं विवशा अभूवन् ।

जयवर्मणः सप्तमस्यानन्तरं तादृशो योग्योऽधिकारी कश्चन नाभूत् । ततः क्रमेण इन्द्रवर्मणा द्वितीयेन ( १२१९–४३ ), जयवर्मणा अष्टमेन ( १२४३–१२९५ ), इन्द्रवर्मणा तृतीयेन ( १२९५–१३०८ ), इन्द्रजयवर्मणा ( १३०८–१३२७ ) तथा जयवर्मणा परमेश्वरेण ( १३२७–१३५३ ) राज्यं कृतम् । एतेषां राज्ञां विस्तृत इतिहासो नोपलभ्यते । एतदवश्यं वक्तुं शक्यते यज्जयवर्मणः सप्तमस्य मृत्योः पश्चात् कम्बुजदेशवासिनः चम्पादेशं परित्यक्तवन्तः, तथा तस्य महायानबौद्धधर्मस्य विरुद्धा महती प्रतिक्रिया प्रारभ्यत, लोकेश्वरस्थाने शिवलिङ्गानि प्रतिष्ठाप्यमानान्यभूवन् । जयवर्मणोऽष्टमस्य द्विपञ्चाशद्वर्षात्मकः सुदीर्घो राज्यकालो ब्राह्मणप्रभुताद्दृष्टयोल्लेखनीय आसीत् । स थाइपदवाच्यानां भयं निराकर्तुं नापारयत् । १२५३ तमे खीष्टीयाब्दे कुबलैखानमहोदयस्य युन्नानविजयेन दक्षिणाभिमुखं वर्द्धितुं थाईजातयो विवशा

१४३२ तमे ख्मेरा अङ्कोरथोममसुरक्षित मत्वा परित्यक्तवन्तः १४३४ तमे च फ्नोमपेह इति नवा राजधानीं कृतवन्तः ।

अङ्कोरथोमस्य पतनेन सह ख्मेरसभ्यतायाः कलायाश्चान्त्यन्तोऽभूत् । पुनः कदापि ख्मेरैरङ्कोरवतसदृशाकृतीना निर्माण न कृतम् । नूतनाया रचनायास्तु विचारो दूरे तिष्ठतु, ते स्वीया प्राचीनपरम्परा भवनानि च रक्षितुमपि नापारयन् । यदा कदापि ते अङ्कोरवत-निर्मातृविषये अपृच्छ्यन्त, तदा ते कथयन्ति स्म यत् ता देवाना कृतय आसन् । शनैः शनै-रङ्कोरो निर्जन गहनमरण्यमभूत् । १९०७ तमे फ्रासदेशेनास्य प्रदेशस्य स्यामदेशहस्तगताङ्ग-कोरस्य लुप्तगौरवस्य पुनरुद्धार. कृतः ।

**कम्बोडियादेशे बौद्धधर्मः**—अद्यत्वे कम्बोडियादेशे श्रीलङ्का बर्मा-स्यामवत् थेरवाद. प्रचलितो विद्यते । प्रचुरा बौद्धमठाः सन्ति, प्राटमहोदयस्य कथनानुसारेण चत्वारिंशत्सहस्राणि-भिक्षव आसन् ( पृ० १९८ ) । स्यामबर्मावद् भिक्षवः शिक्षका भवन्ति, सर्वे च युवानः कतिपयकाल यावद् बौद्धविहारे निवसन्ति । प्रायः एकस्मिन् मठे त्रिंशत् पञ्चाशद् भिक्षवो निवसन्ति । प्रत्येक भिक्षोरत्र पृथक् कुटीर भवति, तदतिरिक्ता. शाला विहाराश्च प्रत्येक मठे भवन्ति स्म । तेषु बुद्धस्य विशालासीना च मूर्तिर्भवति, भित्तिषु च जातकाना कतिपयानि दृश्यानि चित्रितानि भवन्ति । भिक्षवः शालाया प्रातः सप्तवादने तथैकादशवादने च भोजन कुर्वन्ति । भिक्षार्थं नगरेषु गमन नाममात्रमस्ति, वस्तुतो भोजन मठे एव निर्मीयते । एकादश-वादनस्य भोजनानन्तर दीर्घा प्रार्थना पालिकम्बुजदेशीयभाषयोर्भवति । उपोसथ-उपसम्पदा-विधयो विहारे भवन्ति, प्रातिमोक्षस्य पाठोऽपि नियमेन भवति । प्रायो भिक्षवो रहसि मठाध्यक्षस्य पुरः स्वानि पापानि स्वीकुर्वन्ति । मठाधीशानामनुशासनस्य पर्याप्ता अधिकारा भवन्ति, सकलस्य सघस्य चाध्यक्षः सोमदेत्त प्राह सघराजो भवति ।

कम्बोडियादेशे बौद्धधर्मो जनतायाः कृते हितावह उन्नायकश्चासिध्यत । मो० लेक्लेयटे-महोदयस्य कथनानुसारेण कम्बोडियाबौद्धा योरोपीय-खीष्टधर्मावलम्बिनामपेक्षयाधिका धार्मिका भवन्ति । "अह न तु क्वचनान्यस्थाने न चान्यधर्मे भावनायास्तादृशीमुदात्तताञ्चोपलभे या मनुष्यानुच्चैर्नयेत्, तान् दयापूर्ण कार्य कर्तुं च प्रोत्साहयेत्, तान् कोमलतोदारताप्रेमयुतानि कार्याणि विधातु सन्नाहयेत् ( प्रा० दि० पृ० २०७ ) । लेक्लेयरमहोदयः स्वस्यास्य कथनस्य पोषणायानेकान्युदाहरणान्यपि प्रदर्शितानि, येषु वृद्धा जनाः स्वकीयं सर्वमायं धर्मशालायाः पगोडा इत्यस्य च निर्माणे उपयुञ्जन्ति, म्रियमाणो जनः पुत्रमुपदिशति यन्मरणानन्तर तस्य मासः पक्षिभ्यो वितरणीयः, वृद्धाः स्त्रियश्च दासत्वाद् मुञ्चन्ति ।

कम्बोडियादेशीयथेरवाद. स्यामदेशस्य हीनयानापेक्षया भारतस्य हिन्दूधर्मेण पूर्णतया प्रभावितो विद्यते । अस्य प्रधान कारण चिरकालपर्यन्त कम्बुजदेशे शैवधर्मस्य महायानबौद्ध-धर्मस्य च प्राधान्य विद्यते । महायानबौद्धधर्मस्य सद्धर्मपुण्डरीकप्रभृतिग्रन्थेषु ब्रह्मणः, इन्द्रस्य, देवाना नागानाञ्च दर्शनं भवति । यद्यपि हीनयानेन महायानं समाप्तिं नेतु प्रयतितम्, पर तस्य सकलपरम्परोन्मूलनं सम्भवं नासीत् । अङ्कोरस्य पौराणिकदृश्यानामपि हीनयाने महान्

इत्थ प्रस्तरखचितोद्गतचित्राणा विषयाः प्रायो भारतीयाः सन्ति। रामायणस्य महाभारतस्य हरिवंशपुराणस्य चानेका. कथा एषु चित्रेषु प्रदर्शिताः सन्ति। अधिकानि चित्राणि वैष्णवानि सन्ति, किन्तु कानिचित् चित्राणि शैवान्यपि सन्ति। केदेमहोदयेन अङ्कोरवत इत्यस्य त्रिंशद्भारतीयानि चित्राण्यष्टधा विभक्तानि—

(१) रामायणस्यैकादशघटनाः—(क) धनुर्यज्ञः, (ख) विराधवधः, (ग) मारीचमरणम्, (घ) कबन्धमृत्यु', (ङ) रामसुग्रीवमैत्री, (च) बालिसुग्रीवयुद्धम्, (छ) अशोकवाटिकाया हनूमान्, (ज) रामविभीषणमैत्री, (झ) लङ्कायुद्धम्, (ञ) सीताया अग्निपरीक्षा, (ट) रामस्य पुष्पकविमानेन प्रत्यावर्तनम्।

(२) कृष्णसम्बन्धिन्यः पञ्च घटनाः—(क) द्वौ कृष्णौ, (ख) गोवर्द्धनधारणम्, (ग) नरकासुरसग्रामः, (घ) स्यामन्तकमणिहरणम्, (ङ) वाणासुरयुद्धम्।

(३) पौराणिककथाना चत्वारि दृश्यानि—(क) शेषशायी विष्णुः, (ख-ग) अमृतमन्थनस्य दृश्यद्वयम्, (घ) देवासुरसग्रामः।

(४) विष्णोश्चत्वारि दृश्यानि, (५) शिवस्य त्रीणि दृश्यानि, (६) महाभारतस्य सग्रामः, (७) स्वर्गनरकयोश्चित्राणि, (८) परमविष्णुलोकदृश्यानि दीर्घातिरिक्ताना स्तम्भानामुपरितन पटलस्य च मध्यम स्थानमपि रिक्त नासीत्। तेषु वासुकि-विष्णुदेव-असुर-लक्ष्मी-उच्चैःश्रवस्-ब्रह्म-गणेश-नटराज-किरातवेशधारिशिवार्जुनसग्रामाणां दृश्यान्युत्कीर्णानि सन्ति। कृष्णस्य गोवर्द्धनधारणस्य, कालियदमनस्य, कुवलयापीडहस्तिनोऽसुरसग्रामस्य च चित्राण्यपि अत्रोत्कीर्णानि विद्यन्ते। अत्र गरुडारूढस्य विष्णोस्तथा विष्णोरसुरै. सह युद्धस्यानेकानि चित्राणि वर्तन्ते।

## कम्बुजदेशस्यापकर्षोऽङ्कोरस्यावसानश्च

जयवर्मण. सप्तमस्यानन्तर कम्बुजदेशस्यापकर्षः प्रारब्धोऽभूत्। फ्रासदेशनिवासिना विदुषा केदेमहोदयेनास्य मुख्य कारण जयवर्मणो विशालेन निर्माणेन सैनिकविजयेन च करभाराक्रान्ताया जनताया दारिद्र्य प्रतिपादितम्। अनेन कम्बुजदेशे अन्तःक्षीणता प्रविष्टा। तदानीं तस्मिन् वैदेशिकमाक्रमणमपि प्रारभ्यत, तेनान्ते च कम्बुजवासिनोऽङ्कोर परित्यक्तुं विवशा अभूवन्।

जयवर्मणः सप्तमस्यानन्तरं तादृशो योग्योऽधिकारी कश्चन नाभूत्। ततः क्रमेण इन्द्रवर्मणा द्वितीयेन (१२१९–४३), जयवर्मणा अष्टमेन (१२४३–१२९५), इन्द्रवर्मणा तृतीयेन (१२९५–१३०८), इन्द्रजयवर्मणा (१३०८–१३२७) तथा जयवर्मणा परमेश्वरेण (१३२७–१३५३) राज्य कृतम्। एतेषा राज्ञा विस्तृत इतिहासो नोपलभ्यते। एतदवश्यं वक्तु शक्यते यज्जयवर्मणः सप्तमस्य मृत्यो. पश्चात् कम्बुजदेशवासिनः चम्पादेश परित्यक्तवन्त', तथा तस्य महायानबौद्धधर्मस्य विरुद्धा महती प्रतिक्रिया प्रारभ्यत, लोकेश्वरस्थाने शिवलिङ्गानि प्रतिष्ठाप्यमानान्यभूवन्। जयवर्मणोऽष्टमस्य द्विपञ्चाशद्वर्षात्मकः सुदीर्घो राज्यकालो ब्राह्मणप्रभुताद्दृष्ट्योल्लेखनीय आसीत्। स थाइपदवाच्याना भय निराकर्तु नापारयत्। १२५३ तमे खीष्टीयाब्दे कुबलैखानमहोदयस्य युन्नानविजयेन दक्षिणाभिमुख वर्द्धितु थाईजातयो विवशा

१४३२ तमे ख्मेरा अङ्कोरथोममसुरक्षितं मत्वा परित्यक्तवन्तः १४३४ तमे च फ्नोमपेह इति नवां राजधानीं कृतवन्तः।

अङ्कोरथोमस्य पतनेन सह ख्मेरसभ्यतायाः कलायाश्चान्तोऽभूत्। पुनः कदापि ख्मेरैरङ्कोरवतसदृशकृतीनां निर्माणं न कृतम्। नूतनाया रचनायास्तु विचारो दूरे तिष्ठतु, ते स्वीयाः प्राचीनपरम्पराः भवनानि च रक्षितुमपि नापारयन्। यदा कदापि ते अङ्कोरवत-निर्मातृविषये अपृच्छयन्त, तदा ते कथयन्ति स्म यत् ता देवानां कृतय आसन्। शनैः शनै-रङ्कोरो निर्जनं गहनमरण्यमभूत्। १९०७ तमे फ्रांसदेशेनास्य प्रदेशस्य स्यामदेशहस्तगताङ्ग-कोरस्य लुप्तगौरवस्य पुनरुद्धारः कृतः।

**कम्बोडियादेशे बौद्धधर्मः**—अद्यत्वे कम्बोडियादेशे श्रीलङ्का बर्मा-स्यामवत् थेरवादः प्रचलितो विद्यते। प्रचुरा बौद्धमठाः सन्ति, प्राटमहोदयस्य कथनानुसारेण चत्वारिंशत्सहस्राणि-भिक्षव आसन् ( पृ० १९८ )। स्यामबर्मावद् भिक्षवः शिक्षका भवन्ति, सर्वे च युवानः कतिपयकालं यावद् बौद्धविहारे निवसन्ति। प्रायः एकस्मिन् मठे त्रिंशत् पञ्चाशद् भिक्षवो निवसन्ति। प्रत्येकं भिक्षोरत्र पृथक् कुटीरं भवति, तदतिरिक्ताः शाला विहाराश्च प्रत्येकं मठे भवन्ति स्म। तेषु बुद्धस्य विशालासीना च मूर्तिर्भवति, भित्तिषु च जातकानां कतिपयानि दृश्यानि चित्रितानि भवन्ति। भिक्षवः शालायां प्रातः सप्तवादने तथैकादशवादने च भोजनं कुर्वन्ति। भिक्षार्थं नगरेषु गमनं नाममात्रमस्ति, वस्तुतो भोजनं मठे एव निर्मीयते। एकादश-वादनस्य भोजनानन्तरं दीर्घा प्रार्थना पालिकम्बुजदेशीयभाषयोर्भवति। उपोसथ-उपसम्पदा-विधयो विहारे भवन्ति, प्रातिमोक्षस्य पाठोऽपि नियमेन भवति। प्रायो भिक्षवो रहसि मठाध्यक्षस्य पुरः स्वानि पापानि स्वीकुर्वन्ति। मठाधीशानामनुशासनस्य पर्याप्ता अधिकारा भवन्ति, सकलस्य सघस्य चाध्यक्षः सोमदेत्त प्राह सघराजो भवति।

कम्बोडियादेशे बौद्धधर्मो जनतायाः कृते हितावह उन्नायकश्चासिध्यत। मो० लेक्लेयटे-महोदयस्य कथनानुसारेण कम्बोडियाबौद्धा योरोपीय-ख्रीष्टधर्मावलम्बिनामपेक्षयाधिका धार्मिका भवन्ति। "अहं न तु क्वचनान्यस्थाने न चान्यधर्मे भावनायास्तादृशीमुदात्ततांश्चोपलभे या मनुष्यानुच्चैर्नयेत्, तान् दयापूर्णं कार्यं कर्तुं च प्रोत्साहयेत्, तान् कोमलतोदारताप्रेमयुतानि कार्याणि विधातुं सन्नाहयेत् ( प्रा० दि० पृ० २०७ )। लेक्लेयरमहोदय स्वस्यास्य कथनस्य पोषणायानेकान्युदाहरणान्यपि प्रदर्शितानि, येषु वृद्धा जनाः स्वकीयं सर्वमायं धर्मशालायाः पगोडा इत्यस्य च निर्माणे उपयुञ्जन्ति, म्रियमाणो जनः पुत्रमुपदिशति यन्मरणानन्तरं तस्य मांसः पक्षिभ्यो वितरणीयः, वृद्धाः स्त्रियश्च दासत्वाद् मुञ्चन्ति।

कम्बोडियादेशीयथेरवादः स्यामदेशस्य हीनयानापेक्षया भारतस्य हिन्दूधर्मेण पूर्णतया प्रभावितो विद्यते। अस्य प्रधानं कारणं चिरकालपर्यन्तं कम्बुजदेशे शैवधर्मस्य महायानबौद्ध-धर्मस्य च प्राधान्यं विद्यते। महायानबौद्धधर्मस्य सद्धर्मपुण्डरीकप्रभृतिग्रन्थेषु ब्रह्मणः, इन्द्रस्य, देवानां नागानाञ्च दर्शनं भवति। यद्यपि हीनयानेन महायानं समाप्तिं नेतुं प्रयतितम्, परं तस्य सकलपरम्परोन्मूलनं सम्भवं नासीत्। अङ्कोरस्य पौराणिकदृश्यानामपि हीनयाने महान्

प्रभावोऽभूत्। अतोऽत्र बौद्धवास्तुकलाया नागाना गरुडानाञ्च प्रवेशोऽजायत, बौद्धमन्दिरेषु यत्र कुत्र शिवविष्णुकालीगणेशादीना मूर्तयस्तथा नन्दी शिवलिङ्गश्चाप्युपलभ्यन्ते ( प्राट् पृ० १९३ )। बौद्धभिक्षवो विश्वसन्ति यत् प्रत्येक कल्पस्यारम्भे मानवा ब्रह्मणा ( प्रोम ) पुनरुत्पाद्यन्ते ( प्रा० पृ० १९४ )।

**हिन्दुप्रभावः**—वर्तमानकाले कम्बोडियादेशे हिन्दुप्रभावो राजसभापर्यन्तमेव सीमितो विद्यते। प्रोमपेहस्थाने कम्बोडियादेशस्य राजकुमाराणां चूडाकन्तलमङ्गलं स्पष्टतया गृह्यसूत्राणा चूडाकर्मसंस्कारो विद्यते। ख्मेराणा कथनमिद वर्तते यत् शिवेन ( प्राहईसो ) कैलासपर्वते एकादशे वर्षे स्वपुत्रस्य गणेशस्य ( प्राह केनेस ) चूडाकर्म सम्पादितम्। अतः कम्बोडियादेशीय-राजकुमाराणामय संस्कारो भवति[1]। अस्य कारयिता बकूनामको ब्राह्मणपुरोहितो विद्यते। अयमेवाद्यत्वे कम्बोडियादेशे हिन्दुसस्कृतेरन्तिमोऽवशेषो वर्तते। अतोऽस्य कश्चन परिचय आवश्यकोऽस्ति।

**बकूः**—फ्लोमपेहप्रदेशे राजसभाया इमे ब्राह्मणपुरोहिताः शिखासूत्राणि धारयन्ति। एमोनियेमहोदयस्य कथनानुसारेण एतेषा केचन विशेषाधिकारा भवन्ति[2]। विशिष्टेष्ववसरेष्विमे अनेकानि महत्त्वपूर्णानि कार्याणि कुर्वन्ति। "राजप्रासादेषु ते अनेकाः प्राचीना धातुमूर्तीः पवित्र-मसिञ्च ( प्राहखान ) रक्षन्ति[3]। राजा यदा सेनापतित्व गृह्णाति, तदा बकूस्तमसिमादाय तस्य पृष्ठगामी भवति। ते पवित्र जलं निर्मान्ति। राजा यदा नूतनवर्षे अन्येषु महत्त्वपूर्णपर्वसु युद्धात् पूर्व परञ्च शुद्धिं कर्तुं वाञ्छति, तदा बकूः सौवर्णाग्रेषु शङ्खेषु तत् पवित्र जलं निक्षिप्य राज्ञः समीपे नयति। ते मन्त्र ( मोन ), आगम ( अकोम ) रहस्यमयसूत्राणि पठन्ति। ते द्वादश पवित्र-दीपान् प्रज्वाल्य तैन सह नियतसख्याका प्रदक्षिणा कुर्वन्ति। राजकुमाराणां दाहसस्कारसमये यदि राजा चितायामग्निं न योजयति, तदा बकूरेव तत्कार्य करोति। सक्षेपतो राजप्रासादस्य सर्वेषा पवित्राणा विधीनामनुष्ठानं बकूः करोति। केदेमहोदयस्य कथनानुसारेण बकू राजकीयाधिका-रिभिः शपथ कारयति, प्रथम हलं कर्षति। तेष्वसरेषु याः प्रार्थनास्ते कुर्वन्ति ता भ्रष्टा दुर्बोध-सस्कृताश्च भवन्ति, तथा दक्षिणभारतस्य ग्रन्थलिप्या लिख्यन्ते। राज्याभिषेके बकूनामधेया ब्राह्मणा राजान पवित्रेण जलेनाभिषेचयन्ति, अनेकाश्च देवानाह्वयन्ति ( इलियट ३।१२९-३० )॥



१. नीसौ ई० पृ० ४५।

२. तत्रैव।

३. अस्यासेः त्सरु सौवर्णो विद्यते, तथा तत्र शिवस्य विष्णोश्च मूर्तयो निर्मिता भवन्ति ( वाकर-अए पृ० ९३ )।

# एकादशोऽध्यायः

## चम्पादेशः

**भौगोलिकी स्थितिः सामान्यपरिचयश्च–भूमिः**—चम्पायाः प्राचीनं राज्य हिन्दचीन-प्रदेशस्य पूर्वस्मिन् भागे विद्यमाने अनामप्रान्ते दशातोऽष्टादशोत्तराक्षांशेषु वर्तमाने दक्षिण-वियतनामप्रदेशे विस्तृतमासीत्। पूर्वस्मिन्नस्य सीमा चीनसागर आसीत्, पश्चिमे युन्नानगिरि-समूहाद् निःसरन्ती गहनारण्यैरावृता अनामपर्वतमाला तन्मीकातदरीतः पृथक् करोति स्म। अनामपर्वतमालयोत्तरस्य दक्षिणस्य च प्रायः सकलो देश आवृतोऽस्ति। अतः स्थल-मार्गेण प्राचीनचम्पा शेषद्वीपकल्पादत्यन्त पृथगासीत्। देशान्तरैरस्य सम्बन्धः केवलं समुद्र-मार्गद्वाराऽऽसीत्।

चम्पायास्त्रीणि राजनीतिककेन्द्राणि विशेषत उल्लेखनीयानि सन्ति—(१) उत्तरस्मिन् अमराबती (क्वागनाम), अस्या महन्नगरं प्राचीनचम्पानगरी (त्राक्यू) तथा इन्द्रपुरम् (दोंगहुओंगः) आस्ताम्। (२) मध्ये विजयः (बिन्ह दिन्हः)–अस्य मुख्यं नगरं विजय आसीत्, (३) दक्षिणस्मिन्–पाण्डुरङ्गप्रदेशः (फनरग, बिन्हथुआन), पाण्डुरङ्गप्रदेशस्यैको भागः कौठारेति (कन्हहोआ) अनेकधा स्वतन्त्र आसीत्।

**निवासिनः**—चम्पाया निवासिनोर्द्वयोर्वर्गयोर्विभक्ता आसन्–(१) आरण्यकाः, (२) चमाश्च। कुलदृष्टया द्वयोः कश्चन महान् भेदो नासीत्। द्वावप्याग्नेय-देशिनः सन्ति। अनयोर्महान् भेदोऽयमासीद् यत् चमा अधिकाः सभ्या आसन्। ते आरण्यकेभ्योऽजुगुप्सन्त, तान् म्लेच्छकिरातादिपदेन व्यवाहरन्। चमाना विषये चीन-देशीयलेखकेभ्य इद ज्ञायते यद् इमे कृष्णवर्णा आसन्, एषा नेत्राणि निम्नगानि भवन्ति स्म, नासिका नतास्तथा केशा ऊर्णावत् चूर्णकुन्तला भवन्ति स्म। ते कटितः पादपर्यन्तमेकमेव वस्त्र परिदधति स्म। साधारणा जना नग्नपादा गच्छन्ति स्म, किन्तु धनसम्पन्ना जना उपानहौ उपयुञ्जन्ति स्म। स्त्रियः पुरुषाश्चानेकधा वेणीं जटाञ्च बध्नन्ति स्म। कुण्डलानामन्येषाञ्च भूषणाना परिधानार्थं कर्णेषु छिद्रं कारयन्ति स्म। प्रतिदिन बहुवार स्नान्ति स्म, कर्पूरकस्तूरि-कादिसुगन्धिद्रव्यैः शरीराणि लिम्पन्ति स्म। चीन-देशीयं वर्णनमतीव पाश्चात्यमस्ति, तत्कालं यावत् चमाना चीनदेशीयैर्भारतीयैश्च सह सम्बन्धः प्रारभ्यत। अतोऽस्य प्रतिपादन कठिन मस्ति यदिद मूलचमानामवस्थायाः सत्यं चित्रणं करोति न वा। एतेषा विषये इद विशेषत उल्लेखनीयमस्ति यदिमे कृष्णवर्ण चारुतायाश्चिन्हं मन्यन्ते स्म। स्वकीय वर्ण कृष्णं कर्तुं शरीरे मृत्तिकालेप कृत्वा आतपे तिष्ठन्ति स्म। चमाना नृशंसताया हिंस्रप्रवृत्तेश्च पूर्वमुल्लेखो जातः।

## राजनीतिक इतिहासः

**चम्पाया आरम्भिक इतिहासः—चम्पायां रामायणस्य प्रतिध्वनिः—** अनामदेशस्येतिहासेषु चमानामारम्भिकस्येतिहासस्य विषये या अनुश्रुतय उपलभ्यन्ते ता रामयणस्य घटनाभिः काम सादृश्यमावहन्ति । तास्वेकेयमस्ति यत् प्राचीनकाले अनाम-राज्यस्य सीमायाः पर द्यूडीननामक राज्यमासीत् । अस्य राजा राक्षसराजोऽथवा दशानन उच्यते स्म । अस्य राज्यस्योत्तरस्मिन् होतोन-तिह्नराज्यमासीत् । अस्य राजा दशरथ आसीत् । दशरथस्य चुंगनूनाम्न. पुत्रस्य पत्नी रूपसम्पन्नाऽऽसीत् । दशाननस्तस्या रूपेण मुग्धो भूत्वा होतोनतिन्ह विजितवान् राजकुमारीञ्च हृतवान् । चुगनूनामकेन राजकुमारेण वानरचमूः सन्नाहिता, तैः समुद्रे सेतुर्निर्मितः । चुगनूर्दशानन हत्वा स्वपत्नीं प्रत्यावर्तितवान् । आधुनिका ऐतिहासिकास्तच्चम्पाया रामायणघटनाप्रतिध्वनिमात्र मन्यते, आरम्भिकस्येतिहासस्य प्रामाणिकं वृत्तान्त न मन्यन्ते । पुनरप्यनेन स्पष्टमस्ति यत् तत्र रामायणस्य गभीरः प्रभाव आसीत् ।

**प्रथमो राजा श्रीमारः—**चम्पादेशस्य सर्वप्रथमो हिन्दुराजा श्रीमार इति नाम्ना प्रसिद्ध आसीत्[१] । अनेकेषु परवर्तिष्वभिलेखेषु चम्पादेशस्य प्रथमो राजा शिवादुत्पन्न उरोजोऽथवा द्वापरयुगे १७, ७९, ३५९ संवत्सरे शासको विचित्रसागरनामा एको राजा कथ्यते[२], किन्तु वोचन्ह (जि० खान हो आजि) नामकात् स्थानात् प्राप्ते द्वितीयतृतीयशतकखीष्टीयाब्दीययोश्चम्पादेशस्य प्राचीनतमेऽभिलेखे एको राजाऽस्मान 'श्रीमारराजकुलवंशविभूषणम्' तथा 'श्रीमारकुलनन्दनम्' कथयति । आधुनिका ऐतिहासिकाश्चीनदेशीयेतिहासे वर्णित क्यूलीन श्रीमारञ्चाभिन्न मन्यन्ते । अतश्चम्पाया प्रथमस्य हिन्दुराज्यस्य स्थापना १९२ तमे खीष्टीयाब्दे मन्यते । इत्थ प्रतीयते यद् व्यापाराय प्रथमे, द्वितीये च खीष्टीयाब्दशतकयोश्चम्पादेश समागतैर्व्यापारिभि. साहसिकक्षत्रियैश्चानामदेशस्य तटे स्ववसतयो राज्यानि च स्थाप्यन्ते स्म । २२० तमे खीष्टीयाब्दे हानवशस्याराजकतया तैः स्व राज्य द्रढयितुमवसरो लब्धः ।

**गङ्गाराजस्य (३१३–१५) तीर्थयात्राप्रसङ्गेन भारतागमनम्—**श्रीमारवंशे गङ्गाराजो महत्त्वपूर्ण स्थान भजते । स्वपितुर्भद्रवर्मणः पश्चादय गङ्गाराजः (४१३–४१५) चम्पादेशस्य शासकोऽभूत् । चीनदेशीयेतिहासानुसारेणास्याभिधानं ति त चेन इत्यासीत् । तत्कथनानुसारेण यदायं राजसिंहासनमारूढस्तदाऽस्य भ्राता मात्रा सह पलायितः । अय तौ प्रत्यावर्तयितु प्रयतितवान् । तयोरप्रत्यावर्तनेन दु.खाविष्टोऽय राज्य परित्यज्य भारतमागतवान् । प्रकाशधर्मणोऽभिलेखे गङ्गाराजविषये इदं लिखितमस्ति—

१. वोचन्ह-अभिलेखः मजूमदार-चम्पा ३।१, श्रीमारराजकुल (वंशविभूषणेन)। केदेमहोदयस्य मतेनायमभिलेखश्चम्पास्थाने फूनानराज्येन सम्बद्धोऽस्ति (नीसौ इं० पृ० ४९)।

२. इन्द्रवर्मणो द्वितीयस्य दोंगदुओंगयूपलेख', मच ३।७६,५७ तथा अभिलेखसं. २२, २९ अ तथा ७१ । अभिलेखानामियं संख्या श्रीरमेशचन्द्रमजूमदारस्य चम्पायास्तृतीयस्मिन् भागे लिखितस्य क्रमस्यानुसारेणास्ति । अग्रे सर्वत्राभिलेखानां तथैव निर्देशोऽस्ति ।

'गङ्गादर्शनज सुखं महदिति प्रायादतो जाह्नवीम्' ( म० च० ३।१६ ) किमपि भवतु, इद स्पष्टमस्ति यदय भारत समागतः। यथाऽद्यत्वे वृद्धावस्थाया काशीवासः क्रियते, तथाऽनेन राज्ञापि सम्भवतो गङ्गातटेऽन्तिम जीवनं व्यत्येतु स्व कल्याणममानि। एतेनेद स्पष्टमस्ति यत् चम्पाभूमिपाला भारतीयपरम्परा पालयन्ति स्म, तेषा तीर्थस्थान भारतमेवासीत्।

गङ्गाराजस्य भारतगमनानन्तरं चम्पादेशस्य राजसिंहासनार्थ गृहयुद्ध प्रारब्धम्। चम्पावासिना चमाना चीनदेशवासिनाञ्च तुमुलं युद्धमभूत्। चीनवासिभिश्चमा भृश पीडिताः पराजिताश्च।

## गङ्गाराजस्य वंशः

**रुद्रवर्मा ( ५२९–५६५ खी० )**—षष्ठशतकखीष्टीयाब्दस्य पूर्वार्द्धतश्चम्पादेशे गङ्गाराजेन साक पुत्रपरम्परया तु नहि, परमंशतस्तेन सम्बद्ध एको राजवंशः शासनं प्रारब्धवान्। अस्य प्रथम उल्लेखनीयो राजा रुद्रवर्मा ( ५२९–५६५ खी० ) अस्ति। अस्य काले भद्रवर्मणा निर्मित भद्रेश्वरस्वामिमन्दिरमग्निदग्धमभूत्। 'ब्रह्मक्षत्रियकुलतिलक' रुद्रवर्मणा 'अग्निदग्धदेवदेवालयस्य' उद्धारः कारितः।

**शम्भुवर्मा ( ५६५–६२९ खी० )**—अस्य पुत्रः प्रशस्तधर्मा शम्भुवर्मणो नाम्ना राजसिंहासनमारूढः। रुद्रवर्म्मणा परिष्कृतं मन्दिरं पुनरग्निदग्धमभूत्। स तत् सुस्थ विधाय स्वनाम्ना शम्भुभद्रेश्वरमूर्तिः प्रतिष्ठापिता। भद्रवर्मणा मन्दिराय दत्ता भूमिः पुनः समर्थिता। अस्य दानस्य मन्दिरस्य च प्रतिष्ठाया उल्लेखं कुर्वति अभिलेखे मन्दाक्रान्ताछन्दसा शिवोऽतीव सरसतया स्तुतोऽस्ति ( म० च० ३।११ )—

सृष्ट येन त्रितयमखिलं भूर्भुवः स्वः स्वशक्त्या
येनोत्खात भुवनदुरितं वह्निनेवान्धकारः।
यस्याचिन्त्यो जगति महिमा यस्य नादिर्न चान्तः
चम्पादेशे जनयतु सुख शम्भुभद्रेश्वरोऽयम्॥

**कन्दर्पधर्मा ( ६२९–६४० )**—शम्भुवर्मणः पुत्रस्य कन्दर्पधर्मणः शासनकालः ( ६२९–६४० खी० ) महत्या शान्त्या व्यत्यगात्। प्रकाशधर्मणोऽभिलेखशब्देष्वयं साक्षाद् धर्मस्यावतार[1] आसीत्। अनेन पुत्रवत् प्रजाः पालिताः, अस्य प्रतापेन कलिरस्य राज्यात् पलायितः। इत्थं प्रतीयते यत् तत्पश्चात् चम्पादेशे राजसिंहासनाय युद्धं प्रारब्धम्।

**प्रकाशधर्मा विक्रान्तवर्मा ( ६५५–६९० खी० )**—आगामी उल्लेखनीयो राजा प्रकाशधर्मा विक्रान्तवर्मा ( ६५५–६९० खी० ) अस्ति। अस्याष्टौ अभिलेखा उपलभ्यन्ते

---

१. मिसोनयूपलेखः श्लोकसं० ७,८ ( म० च० ३।१७ ),

श्रीमान् कन्दर्पधर्मेति साक्षाद् धर्म इवापरः।
प्रजा यः स्वैर्धर्मैर्व्यसनरहितः पाति सुतवत्।
न तत्रास्त्याशा मे कलिरिति समुत्सेकविमुखः॥

( स० ९–१६ )। एष्वेकस्मिन् श्रीप्रभासेश्वरस्य स्थापनाया वर्णनमस्ति ( अभिलेख सं० १२ )। द्वितीयस्मिन् कुबेरस्य मन्दिरनिर्माणमुल्लिखितमस्ति[1]। अवशिष्टा अभिलेखा देवानां मन्दिराणाञ्च दान वर्णयन्ति। ईशानेश्वराय श्रीशम्भुभद्रेश्वराय च राज्ञा क्रमेणैकः कोशो मुकुटमेकञ्च दत्तम्[2]। प्रकाशधर्मणो विषये तथ्यमिदमवधारणीयमस्ति यदय शिवस्यैवोपासको नासीत्, किन्तु विष्णोरपि भक्त आसीत्। स विष्णोर्मन्द्रिरमपि स्थापितवान्[3]। प्रकाशधर्मणोऽनेकेभ्यो लेखेभ्य इद सूच्यते यत् चम्पादेशे तदा वाल्मीकिरामायणस्यातीव प्रचार आसीत्। स वाल्मीकेः प्रतिष्ठायामेक मन्दिर स्थापयन् आदिकविं विष्णुमकथयत्, अपरञ्चेद कथित यद् ब्रह्मापि तस्य शोकोत्थ श्लोक सम्मानयति—

यस्य शोकात् समुत्पन्न श्लोकं ब्रह्माभिपूजति।
विष्णोः पुसः पुराणस्य मानुषस्यात्मरूपिणः॥

शोकात् श्लोकोत्पत्तेर्वर्णन वाल्मीकिरामायणस्य बालकाण्डे ( नीसा पृ० ५५ ) उपलभ्यते। इत्थमुत्तरकाण्डे ( १३।२४।३०।३१ ) वर्णितः कुबेरस्यैकस्योपाख्यानस्य एकाक्षपिङ्गलस्य नाम्नः स्पष्टः सकेतः प्रकाशधर्मणा निर्मितस्यैकस्य कुबेरमन्दिरस्य निम्नश्लोके उपलभ्यते—

एकाक्षपिङ्गलेत्येष देव्या दर्शनदूषितः।
सवर्द्धयत्वीश धन पायाच्चाहिततः सदा॥
( मच० ३।२७ )

एतेन स्पष्टमस्ति यत् सप्तमे शतके वाल्मीकिरामायणस्य वर्तमान स्वरूप प्रचलितमासीत्। उपर्युक्तवाल्मीकिमन्द्रिरविषये शिलालेखे प्रतिपादितमिदमस्ति यदिद पूजास्थान द्वितीयं वार निर्मितमस्ति ( पूजास्थान पुनस्तस्य कृत……नी सौ इ० पृ० ५७ )। ६५७ तमे खीष्टीयाब्दे मिसोनयूपलेखे ( मच० ३।१९ ) इद प्रतिपादितमस्ति यल्लक्ष्मीः प्रकाशधर्माण दाशरथिं रामं मन्यमानाऽनुसरति—

दशरथनृपजोऽय राम इत्याशया य
श्रयति विधिपुरोगा श्रीरहो भुक्तिरूपम्॥

प्रकाशधर्मणोऽस्मिन्नेव मिसोनलेखे ( मच० ३।१८, श्लोकस० १६–१८ ) कौण्डिन्यस्य द्रोणपुत्रादश्वत्थाम्नस्त्रिशूलप्राप्तिः, नागकन्यासोमायाः पाणिग्रहण पृथिवीवशस्थापनञ्च वर्णित-

---

१. मच. ३।२७, महेश्वरसखस्येदं कुबेरस्य धनाकरम्।
प्रकाशधर्मनृपतिः पूजास्थानमकल्पयत्॥

२. ईशानेश्वरकोशं संस्थाप्य यथाविधि स्वधर्मवशात्।
( श्रीमान् प्रकाशधर्मो ) मुकुटं भद्रेश्वरायादात्॥

३ मच. ३।१५, ( क्वांगनाम ) स्थानात् समुपलब्ध. प्रकाशधर्मणः पादपीठाभिलेख·—"इदं भगवतः पुरुषोत्तमस्य विष्णोरनादिनिधनस्याशेषभुवनगुरोः पूजास्थानम्" श्रीप्रकाशधर्मणा कारितम्।

मस्ति। पल्लवानाममरावत्या एकस्मिन्नभिलेखे मदन्यामप्सरसि अश्वत्थाम्ना प्रादुर्भूतस्यास्य वंशस्योल्लेखोऽस्ति। द्वयो. सादृश्यं चम्पादेशे दक्षिणभारतस्य प्रभावं सूचयति। चीनदेशे चत्वारि दूतमण्डलानि ( ६५७, ६६९, ६७०, ६८६ खी० ) प्रेष्यानेन तेन देशेन साक मैत्रीपूर्णः सम्बन्धः स्थापितः। ततः ७५७ तमखीष्टीयाब्दपर्यन्तमस्यैव वंशस्य राजानश्चम्पादेशस्य शासनमकुर्वन्। एषामधिकाना लेखाना सिसोनप्रदेशस्य समीपे प्राप्त्या कल्पितमिदमस्ति यदस्य शासनमस्मिन्नेव प्रदेशे ( काग नाम ) आसीत्, किन्तु हुए-खान-होआव-फुयेनस्थानात् प्राप्तोऽभिलेख इद समर्थयते यदेतेषा प्रभुत्व सकले चम्पादेशे आसीत्, पर सर्वेभ्योऽधिक महत्त्वपूर्ण स्थान मिसोनप्रदेश आसीत्। प्रकाशधर्मण उत्तराधिकारिणो नरवाहनवर्मा ( ६९०–७१० खी० ), विक्रान्तवर्मा द्वितीयः ( ७१०–७३० खी० ) रुद्रवर्मा द्वितीयश्च ( ७३०–७५६ खी० ) आसन्।

**पाण्डुरङ्गस्य वंशः ( ७५८–८६० खी० )**—अष्टमस्य शतकस्योत्तरार्द्धे चम्पादेशे एकस्य नवीनस्य राजवंशस्य स्थापनाऽभूत्। अस्य वंशस्यैतत्कालपर्यन्तमुपलब्धैरभिलेखैरिद ज्ञायते यद् दक्षिणपाण्डुरङ्गप्रदेशः ( फनरग ) कौठारप्रदेशश्च ( न्हा-त्रग ) एषा शक्तेर्मुख्य केन्द्रमासीत्। अतोऽस्य वंशः पाण्डुरङ्गस्य राजवंश उच्यते[1]। एते सर्वेऽभिलेखाः कौठारप्रदेशस्य ( न्हात्रंग ) पोरनगरादुपलब्धाः सन्ति। अनेन प्रायः शत वर्षाणि चम्पादेशः शासितः। तदानीं जावावासिनश्चम्पादेशेऽनेकान्याक्रमणान्यकुर्वन्। इत्थ प्रतीयते यत् प्राचीनो राजवंश एषामाक्रमणाना प्रतिकारं कर्तुं न पारितवान्, समाप्तिं च गतवान्; किन्तु शीघ्रमेव चम्पादेशे एको नूतनो नेता प्रादुरभूत्, येनाक्रमणकारिभ्यो देशो रक्षितो नूतनश्च वंशः स्थापितः।

**प्रथवीन्द्रवर्मा ( ७५८–७७३ खी० )**—अस्य वंशस्य नेतुरभिधानं प्रथवीन्द्रवर्मा ( प्रायः ७५८ खी०–७७३ खी० ) आसीत्। ग्लैलेमोवस्थानस्याभिलेखेनेद स्पष्टमस्ति यदनेन स्वशक्त्या शत्रव. पराजिताः, सकलश्च चम्पादेशः शासितः[2]। सम्भवतोऽतीतस्य वंशस्य पतना-

---

१. अत एव चीनदेशीयेतिहासा अष्टमशतकस्य मध्यतश्चम्पादेश लिन-यी इति न कथित्वा हुआनवंश इति कथयन्ति। अस्य समयस्येदं वैशिष्ट्यं राज्येन शैवधर्मस्य प्रोत्साहनं मुख्यलिङ्गानां स्थापनञ्चास्ति। मुखलिङ्गेषु शिवलिङ्गस्यैकस्मिन्नथवा अनेकस्मिन् पार्श्वे शिवस्य मूर्तिरूपेण राज्ञ स्वरूपमुत्कीर्णं भवति स्म। इयं कम्बोडियादेशस्य देवराजपूजया सादृश्यमादधती पद्धतिरासीत्, यत्र शिवराज्ञोरभेदो मन्यते स्म। हालनाम्ना विदुषाऽयं भारतीयस्य चम्पादेशीयस्य प्राचीनधर्मस्य सुभगः समन्वयः प्रतिपादितोऽस्ति ( हा० हि० सौ० पृ० १५९–६० )।

२. म च० ३।५२, श्लोकसं० २–३,

श्रीमान् नरेन्द्रः प्रथवीन्द्रवर्मा ख्यातः स्ववंशैर्जगति प्रभावै.।
ह्यस्तीति लोके स भुनक्ति भूमिं शक्त्या च निर्जित्य रिपू( न् ) हि सर्वान्॥
चम्पां च सकलां भुक्त्वा स एव परमो नृपः।

नन्तरं देशस्यान्तरावस्था विकृति गता, सर्वतो दस्यूनामुत्पातोऽवर्धत । अनेन राज्ञा सर्वे तस्कराः सूर्येणान्धकार इव हताः[1] ।

**सत्यवर्मा-जावावासिनामाक्रमणं मुखलिङ्गस्य च हरणम् ( ७७४ खी० )**—प्रथवीन्द्रवर्मण उत्तराधिकारी तस्य भागिनेयः सत्यवर्माऽऽसीत् । अस्य शासनकालस्य प्रधाना घटना जावादेशीयसामुद्रिकैश्चम्पादेशे आक्रमणमेकस्य मन्दिरस्य मुखलिङ्गस्यापहरणञ्चासीत् । प्राचीनपरम्परानुसारेण द्वापरयुगे संवत् ५९११ तमस्य श्रीविचित्रसागरेण सस्थापितमिद मुखलिङ्ग चम्पादेशेऽत्यधिकं पवित्र मन्यते स्म । अपहरणानन्तरं सत्यवर्मणा पुनस्तत्प्रतिष्ठापितम् । एकस्मिन्नभिलेखे शार्दूलविक्रीडितच्छन्दसि अस्यापहरणस्य पुनः प्रतिष्ठापनस्य च कथाऽतीव ललिते सस्कृते प्रतिपादिताऽस्ति—

देवी शाननलिङ्गमन्यपुरजैः प्रेतादिकष्टाशनै-  
र्भीमाभैरतिकृष्णरुक्षपुरुषैः कालोग्रपापात्मकैः ।  
शाके कोशनवतुगे गतघृणैरुद्धृत्य पोतागतै-  
र्दैत्यौवैरिव सायुधैः सुरन्दग्धन्तदैतैस्तदा ॥

( मच ३।४२, श्लोकसख्या २ )

सत्यवर्माऽस्याक्रमणस्य समाचार श्रुत्वा स्वसैनिकैः सार्द्धमुत्तम पोतमारुह्य तानभिनिवेशितवान् हतवांश्च, किन्तु ज्ञात्वेद दुःखितोऽभूत् यच्छिवलिङ्ग तैः समुद्रे प्रक्षिप्तम् ।

**नूतनस्य मुखलिङ्गस्य स्थापना ( ७८४ खी० )**—सत्यवर्मणा ७८४ तमे खीष्टीयाब्दे इद लिङ्गमन्याभिरनेकाभिर्मूर्तिभिः सह पुनः प्रतिष्ठापितम् । एकस्मिन्नन्यस्मिन् लेखे 'स जगति कान्त्या कामदेवसमः विजये शक्रतुल्यो वर्तते' इति प्रतिपादितम् । युद्धे कोऽपि शत्रुः तस्य पुरः स्थातु न शक्नुयात्, यथा विष्णोः पुरोऽसुराः पराङ्मुखा भवन्ति, तथैव शत्रवः पराङ्मुखा भवन्ति ( मच० ३।५३१, श्लोकाः ७–९ ) ।

**इन्द्रवर्मा ( ७८५-८०० खी० )—मन्दिराणां स्थापना दानञ्च**—सत्यवर्मणोऽनन्तर तस्यानुज इन्द्रवर्मा प्रथमः ( प्रायः ७८५–८०० खी० ) राजाऽभूत् । अस्य द्वावभिलेखौ समुपलब्धौ स्तः ( स० २३, २४ ) । अत्र गद्यपद्याभ्यामतीव ललिते सस्कृते महाकविबाणशैल्या राजा नितरा प्रशंसितः । एतस्मिन् शासति पोतैः समागतैर्जवबलैरासहस्रवर्षेभ्यः स्थापित भद्राधिपतीश्वरमन्दिर प्रदग्धम् । राजा इन्द्रभद्रेश्वरनाम्ना महता दानेन साकमिदं पार्थिवलिङ्ग पुनः प्रतिष्ठापितम् ( ७९९ खी० ) । अस्यान्यमन्दिरेषु वीरपुरस्य इन्द्रयोगेश्वरस्य तथा सत्यवर्मकुलस्य इन्द्रपरमेश्वरस्य मन्दिरे ( ८०१ खी० ) उल्लेखनीये स्तः । अनेन शङ्करनारायणमन्दिराय ( शिवविष्णुसयुक्तरूपाय ) बहुधनं प्रदत्तम् । ७९३ तमे खीष्टीयाब्दे अनेन चीनसम्राजः सेवाया गण्डमहिषोपायनानि प्रेष्य तेनापि सह स्वसम्बन्धः स्थापितः ।

**हरिवर्मा ( ८००–८२० )–चीनदेशेन संघर्षः**—अग्रिमो राजास्य स्वसृपतिर्हरिवर्मा ( ८००–८२० प्रायः ) अभूत् । तेन राजाधिराज-श्रीचम्पापुरपरमेश्वरोपाधिर्धृतः । तस्मिन्

---

१. तत्रैव, श्लोकसं० ४,

न्यहनत् तस्करान् सर्वान् तमो भानुरिव प्रभुः ।

काले चीनदेशेन सह पुनः सघर्षोऽनुवृत्तः। चीनदेशीयेतिहासादवगम्यते यत् ८०३ तमे खीष्टीयाब्दे चम्पादेशस्य केनचन राज्ञा होन-ऐनामानौ चीनप्रान्तौ विजितौ, ८०९ तमे तेन पुनरभिषेणितम्, किन्तु चीनवासिभिः पुनरिमौ प्रान्तौ स्वायत्तीकृतौ। सम्भवतः स राजा हरिवर्मैवासीत्। ८१७ तमस्याभिलेखाद् ज्ञायते यदनेन स्वभुजदण्डमार्तण्डेन चीनान्धकारो दग्ध आसीत् (मार्तण्डदोर्दण्डदग्धचीनतमिस्रनिचयः) मच० ३।६२।

**कम्बुजविजयः**—अनेन स्वपुत्राय विक्रान्तवर्मणे पाण्डुरङ्गपुरस्य (फनरङ्ग) आधिपत्यं ददौ, तथा तस्य रक्षणाय पॅरनामकः सेनापतिर्नियुक्तः। अथ सेनापतिः स्वामिपक्षेण कम्बुजदेशमाक्रान्तवान्। यथा सिंहोऽतिगहने वने हस्तिनो मथ्नाति, तथैवानेन राजसिंहेन कम्बुजस्य मकरा मथिताः। नगरेषु हस्तिस्थानीया मनुष्या आसन् (अतिगहनकम्बुजपुरकाननजनगजपदप्रमथनैकराजसिंहायमानः)। अनेन सेनापतिना न शत्रव एवाक्रान्ताः, किन्त्वनेकमन्दिराणि मूर्तयश्चापि प्रतिष्ठापितानि। कौठारप्रदेशस्य (न्हात्रंग) जगत्प्रसिद्ध प्राचीन मन्दिर भगवत्या शून्यमासीत्। सम्भवतोऽस्य मूर्तिं जावावासिनो नीतवन्तः। अनेन ८१७ तमे खीष्टीयाब्दे भगवत्याः शिलामयी प्रतिमा प्रतिष्ठापिता, तथा अनया सह पण्ठकलिङ्ग-श्रीविनायक श्रीमालदाकुठारदेवाना मन्दिराणि निर्माय मण्डपैरलङ्कारितानि।

**विक्रान्तवर्मा (८२०–८६० खी०)**—हरिवर्मणोऽनन्तर विक्रान्तवर्मा तृतीयः (प्रायः ८२०–८६० खी०) राजाभूत्। अस्य चत्वारोऽभिलेखाः प्राप्यन्त। इमे सर्वे मन्दिरमूर्तिभ्या सम्बद्धाः सन्ति (मच० ३।६७–७४)। ८५४ तमे खीष्टीयाब्दे तेन श्रीविक्रान्तरुद्रेश्वराय पश्चात् श्रीविक्रान्तदेवाधिभवेश्वराय क्षेत्राणि प्रदत्तानि। कोशेन विभवेन च साक श्रीमहादेवः स्थापितः, श्रीसत्यमुखलिङ्गाय श्रीमहादेवाय च धनं दत्तम्। अपुत्रस्यास्य मरणेन वशोऽस्य समाप्तिं गतो नूतनश्च वंशः स्थापितोऽभूत्।

**भृगुवंशः (८७०–९७२ खी०)**—अस्य वंशस्य राजानः स्वमूलपुरुषं स्वय महादेवेन चम्पादेशे प्रहित भृगुमृषिं मन्यन्ते स्म, अतोऽयं भृगुवश उच्यते (मच० पृ० ५६–५७)। अस्य वशस्य प्रथमौ द्वौ रुद्रवर्मभद्रवर्माणौ स्थानीयौ नायकौ आस्ताम्।

**इन्द्रवर्मा द्वितीयः (८७०–८९५ खी०)**—तृतीयेन राज्ञा-इन्द्रवर्मणा (८७०–८९५ खी०) स्वशक्तिप्रभावाभ्या तथा जन्मान्तरीयतपःफलेन चम्पाराज्य प्राप्तम्। प्रारम्भे तस्य साधारणी स्थितिः 'श्रीलक्ष्मीन्द्रभूमीश्वरग्रामस्वामी' (अभिलेखस० ३१) इति पदेन सूच्यते, पश्चात् चम्पादेशस्याधिपत्यप्राप्त्यनन्तर तेन 'श्रीजय-इन्द्रवर्मा महाराधिराजः' इत्युपाधिर्धृतः। शैवत्वादयं शिवलिङ्गन्तु स्थापितवानेव, किन्त्वस्य प्रवृत्तिर्बौद्धधर्मेऽप्यासीत्। अस्यैकस्मिन्नभिलेखे स्वभयदस्य (बुद्धस्य) मूर्तिनिर्माणस्य भिक्षुसङ्घस्योपयोगाय विहारस्थापनस्य चोल्लेखः प्राप्यते। अपरश्चानेन स्वमन्त्रिणा स्थापिताय महालिङ्गदेवस्य मन्दिराय सदास क्षेत्र दत्तम्, तथा श्रीभाग्यकान्तेश्वरमन्दिरं करमुक्तं कृतम् (अभिलेखस० ३२)।

**जयसिंहवर्मा (८९५–९०४ खी०)**—आगामी राजा जयसिंहवर्मा (८९५–९०४ खी०) अस्ति। अस्य पञ्चस्वभिलेखेषु (स० ३४–३८) धार्मिकदानस्यैव वर्णनमस्ति। एषु अधिकाः शैवमन्दिरेण सम्बद्धाः सन्ति, किन्तु आनथाईप्रदेशस्य यूपलेखे (स० ३७ मच०

३।१०५–९ ) राज्ञः स्थविरनागपुष्पस्य कृते प्रमुदितशेकेश्वरविहारस्य स्थापनायास्तथा नागपुष्पस्य लोकनाथ( बुद्ध )मूर्तिस्थापनाया वर्णनं विद्यते। एतेनेद स्पष्ट भवति यत् तदा बौद्धधर्मोऽपि राजसंरक्षण प्राप्तुं प्रारेभे।

**भद्रवर्मा तृतीयः ( ९०५–९११ खी० )**—अस्य समये चम्पादेशस्य शक्तिस्तथा वृद्धिं प्राप्ता यद् देशान्तरैः साक दूतानामादानप्रदाने प्रारभ्येताम्। बागआनप्रदेशस्याभिलेखे ( स० ४२ ) तस्य राजसभाया देशान्तरेभ्यः समागतस्य महीपतिदूतसघस्य वर्णनमस्ति।[1] तस्य मन्त्री एकस्मिन्नेव क्षणे तेषां दूतानामभिप्रायमनुमिनोति स्म[2]। अस्य राज्ञ आज्ञया पोवक्लञ्-पिल्हिारनामा जनो द्विवारं दूतो भूत्वा जावादेश गतवान् ( मच० ३।१३१ )। अत इद स्पष्टमस्ति यत् तदानीन्तनेऽन्ताराष्ट्रिये जगति चम्पाया महत्त्व वर्द्धितुमारेभे।

**इन्द्रवर्मा तृतीयः ( ९११–९७२ खी० )**—भद्रवर्मणः पुत्र इन्द्रवर्मा तृतीयः ( प्रायः ९११–९७२ खी० ) एकषष्टिवर्षाणि चम्पादेशं शासितवान्। तस्याष्टौ अभिलेखाः ( स० ४५ ) अस्य पण्णा दर्शनानाम्, बौद्धदर्शनस्य, सकाशिकावृत्तिपाणिनीयव्याकरणस्य, आख्यानस्य तथा शैवानामुत्तरकल्पस्य प्रकाण्ड पाण्डित्य प्रतिपादितमस्ति[3]। इय काममत्युक्तिर्भवेत्, किन्तु तस्य वैदुष्ये मनागपि सशीतिर्नास्ति।

किन्तु यदा इन्द्रवर्मा दर्शनस्य समस्याः समन्वेतु प्रवृत्त आसीत्, तदा कम्बुजवासिनश्चम्पादेशस्य स्वर्णमूर्तिं जह्रुः। सम्भवतः सा ९१८ तमे खीष्टीयाब्देऽनेनैव स्थापिता भगवत्याः कलधौतप्रतिमाऽऽसीत्। कम्बुजवासिनामिदमाक्रमणम् ९४४–४७ खीष्टीयाब्दमध्येऽभूत्। यद्यपि इन्द्रवर्मणा कम्बुजवासिनः पश्चात् पराजिताः, किन्तु इत्थ प्रतीयते यत् तेषु प्रत्नेषु तस्य महान् विलम्बोऽभूत्, तथाकरणे च तस्य कोशो रिक्तोऽभूत्। ९६५ तमे खीष्टीयाब्दे यदा तेन पुनः भगवत्या मूर्तिः प्रतिष्ठापिता, तदा सा पाषाणमयी आसीत्[4]। इन्द्रवर्मण आद्या राजान तागवशस्य पतनात् परं चीनदेशस्य गृहयुद्धैरव्यवस्थया च ग्रस्तत्वेन तस्योपायनानि न प्रेषयामासुः, किन्तु कोयूओ-वेईमहोदयेन नूतने वशे स्थापिते सति ९५१ तमखीष्टीयाब्दादिन्द्रवर्मणा चीनदेशस्य पार्श्वे उपायनाना दूतमण्डलस्य च प्रेषणस्य प्राचीना परिपाटी प्रचालिता।

१ मच० ३।१२६, देशान्तरागतमहीपतिदूतसङ्घ ..

२. मच० ३।११५, सर्वदेशान्तरायातभूभुक्सन्देशमागतम्।
निरीक्ष्यैकक्षणं वेत्ति निश्शेषार्थमतीहया॥

३. मच. ३।११८ पोनगरस्येन्द्रवर्मणस्तृतीयस्य यूपलेख—
मीमांसा षट्तर्कजिनेन्द्रसूर्म्मिस्सकाशिकाव्याकरणौदकौघः।
आख्यानशैवेतरकल्पमीनः पटिष्ठ एतेष्विति सत्कवीनाम्॥

४. मच. ३।१४३ पोनगरस्य जय-इन्द्रर्मणोऽभिलेख —
हैमीं यत्प्रतिमां पूर्व येन दुष्प्रापतेजमा।
न्यस्तां लोभादिसक्रान्तामृता उद्धृत्य काम्बुजाः॥
श्रीजय-इन्द्रवर्माख्य सोऽयष्टाङ्गशकाधिप।
पुन शैलमयी कीर्त्यै कौठारे तामतिष्ठिपत्॥

## चम्पाया अवनतिः ( १०५०–१०६९ )

**जयपरमेश्वरवर्मा ( १०५०–१०६० )**—१०४४ तमस्यानामदेशवासिनामाक्रमणेन चम्पादेशस्य शक्तिः काम क्षीणता गता। अतीतैः सप्ततिवार्षिकैः ( ९८०–१०५० ) वैदेशिकैराक्रमणैश्चम्पादेशोऽतीव दुर्बलो जातः। तस्या निर्बलता ज्ञात्वा कम्बुजदेशवासिनस्तथाऽन्ये प्रतिवेशिनस्तामभियातु प्रारभन्त। जयसिंहवर्मणो मृत्युना सह प्राचीनो वश. समाप्तिं गतः। तादृशे सकटसमये देशस्य रक्षा नूतनस्य राजवशस्य सस्थापकेन जयपरमेश्वरवर्मणा ( प्रायः १०५०–१०६० ख्री० ) विहिता। अनेन पाण्डुरङ्गप्रदेशस्यान्तरो विद्रोहो दमितः। अस्य युवराजेन सेनापतिना कम्बुजदेशवासिनो विजित्य शम्भुपुर विजितम्। अतीतेष्वाक्रमणेषु विध्वस्ता अनेकमन्दिरमूर्तयो विहाराश्च पुनः प्रतिष्ठापिताः।

**रुद्रवर्मा चतुर्थः ( १०६१–१०६९ )–चम्पादेशस्य पराजयः**—जयपमेश्वरवर्मण आगामिपूत्तराधिकारिषु रुद्रवर्मा चतुर्थः ( प्रायः १०६१–१०६९ ) उल्लेखनीयोऽस्ति। चम्पावासिनोऽनामदेशवासिभिर्हृतान् प्रदेशान् कृतमपमानञ्च न विस्मृतवन्तः। रुद्रवर्मणाऽऽपाततोऽनामसम्राजा सह सम्बन्ध स्थापयता प्रच्छन्नरूपेण युद्धस्य सन्नाहः कृतः। अन्ते, १०६८ तमे ख्रीष्टीयाब्देऽनेनानामदेशेन साक युद्ध प्रवर्तितम्। अस्य युद्धस्य परिणामश्चम्पादेशस्य रुद्रवर्मणश्च कृतेऽतीवाशुभो जातः। तु मओ नदीतटे चम्पादेशस्य पराजयो जातः। सेनापतेर्वधेन सेनोत्साहो भग्नोऽभूत्। सेना च पलायितुमारेभे, राजाऽपि समाचरममु श्रुत्वा स्वराजप्रासादात् परिवारेण सह पलायितः, अभियातः कम्बुजसीम्नि गृहीतश्च ( १०६९ ख्री० )। विजेतारो विजयनगर्या राजप्रासादे नृत्यगीतभोजै. साकं महता समारोहेण स्वविजयहर्षो विहितः। राजधान्याः सकलानि भवनानि दग्धानि। अनामसम्राड् रुद्रवर्मणा सह पञ्चाशत् सहस्राणि बन्दिन आदाय टौनकिनप्रदेशं प्रतिनिवृत्तः। रुद्रवर्मा चम्पादेशस्य त्रीण्युदीच्यमण्डलानि डियाली-मालिन्ह-वोचन्हेति, अर्थात् सकल क्वागबिन्ह तथा क्वागत्रीप्रदेशस्योदीच्यभागमनामदेशाय दत्त्वैव कारागाराद् मुक्ति प्राप्तुमशकत् ( १०६९ ख्री० )। चम्पावासिना तेषा प्रदेशाना त्यागः सदा शल्यमिवाभवत्। आगामिषु शतकेष्वनेकेषा युद्धाना मूलमिमे प्रदेशा आसन्।

**चमानां राज्यसमाप्तिः**—१८२२ तमे ख्रीष्टीयाब्दे पोचोंगनामकेनान्त्येन राज्ञा यदाऽनामवासिनामाक्रमण सोढुमशक्यमभूत्, तदा स कैश्चिद् मित्रैः सह कम्बुजदेश समागतः। स स्वपश्चात् चमाना राजकोश रक्षितु राजकुमारीं पोबिआ परित्यक्तवान्। ता चमा. स्वस्वातन्त्र्यस्यान्तिम चिह्न मन्यन्ते स्म। अस्या मरणानन्तर सकला चम्पा अनामदेशे विलीनाऽभूत्।

इत्थ भारतीयानामावासकानामेक गौरवपूर्ण राज्य विलयं गतम्। भारतस्य तेषा वीराणा पुत्राणा पुरः श्रद्धया नतमस्तकैरस्माभिर्भूयते, यैः स्वमातृभूमितः शतक्रोशदूरे भारतात् किञ्चित् सहाय्य न प्राप्नुवद्भिः शक्तिशालि राज्य स्थापितम्। सार्द्धसहस्रवर्षपर्यन्तमनेकस्या प्रतिकूलाया परिस्थितौ भीषणे चाक्रमणेऽपि स्वतन्त्रताया. पुण्या पताका सदोन्नता।

## सांस्कृतिको विजयः

भारतीयैश्चम्पादेशस्य राजनीतिको विजय एव न कृतः, किन्तु सास्कृतिको विजयोऽपि कृतः। अतो भारतीयायाः सभ्यतायाः सस्कृतेश्चापि प्रकाशः कृतः। भारतीयसस्कृतौ धर्मस्य विशिष्ट महत्त्वमस्ति, अतः पूर्व चम्पादेशे भारतस्य धार्मिकप्रभावस्योल्लेखो भविष्यति।

**धर्मः—शैवधर्मस्य प्राधान्यम्**—चम्पादेशे शैव-वैष्णव-बौद्धधर्माणा प्रचार आसीत्। चम्पादेशे प्राप्तेषु १३० अभिलेखेषु एकविंशतौ तु कस्यापि विशिष्टस्य धर्मस्योल्लेखो नास्ति, किन्तु शेषेषु १०९ अभिलेखेषु ९२ अभिलेखेषु शिवस्य शिवसम्बद्धदेवानाम्, पञ्चसु स्वयमुत्पन्न-नाम्ना ब्रह्मणः, त्रिषु विष्णोः, सप्तसु बुद्धस्य, अवशिष्टयोर्द्वयोः शिवस्य विष्णोश्च द्वयोरुल्लेखोऽस्ति।

प्राचीनमन्दिराणामवशेषेभ्योऽपि शैवधर्मस्य प्राधान्य सूच्यते। मिसोननगरस्य पोनगरस्य च मन्दिरेषु शिवस्य विविधरूपाणा पूजा भवति स्म। शिवश्चम्पादेशस्याधिष्ठातृदेवो मन्यते स्म। इद पूर्व वर्णितमस्ति यदस्य देशस्य प्राचीनानुश्रुत्यनुसारेण शिव उरोजनामक प्रथम राजान कृत्वा प्रहितवान्, तथा तेन सर्वप्रथम नगररक्षकरूपेण लिङ्ग प्रतिष्ठापितम् (अभिलेखस० ३१)। अन्यत्र श्रीशानभद्रेश्वरो राजश्रिया. हेतुः प्रतिपादितोऽस्ति। भद्रवर्मणस्तृतीयस्यैकस्मिन्नभिलेखे (सं० ४२) सभृत्यवर्ग. शिव. पूज्यो मतोऽस्ति, यतो हि स चम्पादेशस्य समृद्धेर्मूलमस्ति।[1]

**शिवस्य नामानि**—शिवस्योपासनाऽनेकैर्नामभि. क्रियते स्म। एषु ईशान ईशानेश्वर-ईशाननाथादयः साधारणीं महत्तां प्रकटयन्ति स्म। परमेश्वर-महेश्वर-महादेव-महादेवेश्वर-अमरेश्वर-अधीश-देवदेवप्रभृतीनि नामानि देवेषु सर्वोच्चतासूचकान्यासन्। शम्भु शङ्कर-भाग्यकालेश्वर-धर्मेश्वराः कल्याणरूपस्य, भीम-रुद्र उग्र योगीश्वर-गुहेश्वरादीनि नामानीदं सूचयन्ति यच्छिव-सम्बन्धिन्यो भारतीयाः पौराणिक्यः कथा अपि चम्पादेश प्राप्ता आसन्। तस्यानेकानि नामानि लिङ्गेन साक सम्बद्धान्यासन्, यथा—देवलिङ्गेश्वरः, महालिङ्गदेवः, शिवलिङ्गदेवः, महालिङ्गेश्वरो धर्मलिङ्गेश्वरश्च।

**शिवस्य स्वरूपम्**—अभिलेखेभ्यः शिवस्य स्वरूपविषये इद ज्ञायते यत् स देवाधिदेवः सुरराजचूडामणिश्चास्ति। ब्रह्मविष्णुप्रभृतयो देवास्तस्य पादपद्म प्रणमन्ति। निम्नपद्येन तस्य महत्ता सुतरा स्पष्टीभवति (मच० ३।१२६)—

देवेन्द्रः किल पूर्वतः स्थितिगतो याभ्या सरोजद्भव-
श्चन्द्रार्काविह पृष्ठतश्च भगवान् नरायणो वामतः।
मध्यस्थो ज्वलिताभरश्मिसहितश्चोङ्कारपूर्वैस्स्वधा
स्वाहान्तैर्निजमन्त्रणैः स्तुतिनुतो योऽसौ तदाद्यैः सुरैः॥

अभिलेखानुसारेण देवाधिदेवत्वेन सोऽनादिरनन्तश्चास्ति, सर्गस्थितिप्रत्यवहाराणां हेतुरस्ति, भूर्भुवःस्वर्लोकानां स्रष्टैव न, किन्तु तेषा गुरुरप्यस्ति, सर्वज्ञः सर्वव्यापक-

---

१. मच. ३।१२१, स एव देवः परमात्मकः श्रीशानेश्वरो लोकगुरुर्नृपाणाम्।
पूज्य प्रणम्यः स (हि) भृत्यवर्गैश्चम्पर्द्धिहेतोर्जयतीह नित्यम्॥

श्चास्ति ( अभिलेख स० ७ ) । स त्रिभुवनहितहेतुः परपुरुषश्चास्ति । सर्वे प्राणिनस्तस्मात् प्रादुर्भवन्ति तत्रैव च लीयन्ते । अय स्रष्टैव नास्ति, किन्तु सहारकोऽप्यस्ति, योगिना ध्यान-विषयोऽस्ति, मनोगतिमतीतोऽस्ति, तस्य स्मृतिरनन्त फल ददाति । न केवलममूर्तोऽस्ति, किन्तु पुराणेषु वर्णितस्य शिवस्य सर्व वैशिष्ट्य चम्पादेशस्य शिवे समुपलभ्यते । स जटाजूटधरः ( सं० २४ ), त्रिनेत्रः ( स० २४ ) तथा शूली ( सं० १२ ) विद्यते । तस्य वासस्थान हिमाल-यस्तु मन्यते स्म, किन्तु चम्पादेशेऽस्य मलयवासी, अर्थाद् मलायापर्वतवास्यपि प्रतिपादितोऽस्ति ( स० ३१ ) । स गौरीपतिरस्ति ( स० १७ ), तस्य वाहन नन्दी अस्ति ( सं० १७ ) । स भस्म लिम्पति, श्मशाने च नृत्यति ( स० १२ ) । शिवकृतस्य कामदहनस्य ( १७, २१, २४ ) त्रयाणा पुराणा ध्वसस्य च ( स० १७, २४ ) कथाऽपि चम्पादेशस्याभिलेखेषूल्लिखिताः सन्ति। लिङ्ग-पुराणे ( १।१७।५-५२ ) कथेयमस्ति यत्कदाचिद् विष्णुब्रह्मणोर्विवादो जातो यद् द्वयोः को महान् अस्ति, तदानीमेव तयोः पुरस्तेजस्वि लिङ्ग प्रादुरभूत्, ताभ्या तन्मूलमन्वेष्टु निश्चितम् । ब्रह्मा हसस्य रूप धृत्वोपर्युत्पतितो विष्णुश्च वराहरूपेण पताल प्रविष्टः । द्वावपि तस्य मूलं प्राप्तुमक्षमौ अभूताम्, प्रत्यागत्य ताभ्या शिवः स्तुतः । होआक्वेप्रदेशस्य भद्रवर्मणोऽभिलेखे ( स० २९ ) कथेय विस्तरेण वर्णिताऽस्ति । अनेन ज्ञायते यच्चम्पानिवासिनः पुराणकथाभि-रतीव परिचिता आसन् ।

**शिवस्य लिङ्गानि मूर्तयश्च**—शिवस्य पूजा मुख्यतया शिवलिङ्गरूपेण भवति स्म । चम्पादेशस्य शिवलिङ्गानि वेल्लनाकाराणि भवन्ति । तानि प्रायश्चतुरस्रस्नानद्रोण्या प्रतिष्ठाप्यन्ते । कदाचित् शिवलिङ्गेष्वेकमुखमूर्तिरुत्कीर्यते स्म, तानि मुखलिङ्गान्युच्यन्ते स्म । एतत्प्रतिपादन कठिनमस्ति यदिद शिवस्यैव मुख भवति स्म, अथवा कस्यचन मनुष्यविशेषस्य ? एमोनिये-महोदस्य मतानुसारेणेय शिवस्य मूर्तिर्भवति स्म । फीनोमहोदयस्य च कथनमस्ति यदिय लिङ्गस्थापकस्य राज्ञः प्रतिकृतिर्भवति । बहुवारं प्रतिष्ठापका मुखमिद स्वपित्रोरथवा कस्यचनान्य-स्यादरणीयस्य जनस्य मुखसदृश समुत्कारयन्ति स्म । शिवस्यानेका मूर्तयोऽप्युपलब्धाः सन्ति, तासु तस्य जटायाः, मुकुटस्य सर्पस्य च सम्यक् प्रदर्शनमस्ति । तस्य मूर्तयो यज्ञोपवीत-धारिण्यः सन्ति ।

**शिवलिङ्गानां प्रतिष्ठापनं मन्दिरेभ्यो दानञ्च**—शिवलिङ्गानि प्रायो राजभिस्तथा राज्यस्यान्यकर्मचारिभिः प्रतिष्ठाप्यन्ते स्म । भद्रवर्मणा चतुर्थस्य शतकस्यान्तेऽथवा पञ्चमस्य शतकस्य प्रारम्भे स्थापित शिवलिङ्ग चम्पादेशस्य राष्ट्रियो देव आसीत् । अय भद्रेश्वर इति नाम्ना व्यपदिश्यते स्म । मिसोनप्रदेशे यत्रेद प्रतिष्ठापितमासीत् तत्र पश्चादनेकानि शोभनानि मन्दिराणि निर्मितानि । ४७८–५७८ खीष्टीयाब्दमध्येऽग्निना प्रज्वलितेषु तेषु शम्भुवर्मणा एषा जीर्णोद्धारः कृतः । पूर्वमेव वर्णितमिद यद् राजानस्तेभ्यो भूमिप्रभृतिदाने स्पर्द्धन्ते स्म । एका-दशस्य शतकस्य मध्यतः श्रीशानभद्रेश्वरश्चम्पादेशस्य राष्ट्रियो देवोऽभूत् । सम्भवत इदं प्राचीनस्य देवस्यैव नवं रूपमासीत् । राजा एषा मन्दिराणा निर्वाहार्थ दासम्, दासीम्, गाम्, महिषीम्, हस्तिनम्, सुवर्णम्, रजतं प्रभूतमणिमाणिक्यञ्च ददाति स्म । अस्य किञ्चिदनुमान जय-इन्द्रवर्मणोऽष्टमस्य ११६३–११७० तमखीष्टीयाब्दमध्ये दत्तेन दानेन कर्तु शक्यते । तेन मन्दिर

मणिखचित कारितम्। सौवर्णानि राजतानि च भाजनानि दत्तानि, तथा चन्दनमयमन्तर्गृह निर्मापितम्। तेन श्रीशानभद्रेश्वरस्य मन्दिर रजतेनालङ्कारितानि, शिखरञ्च सौवर्ण कारितम्। इद गणितमस्ति यदेतत्कार्यार्थ प्राय. २७½ सेकटमित सुवर्ण १७,५०० सेकटमित रजत वीतमभूत् (मच० २८२–३)। इद स्पष्टमस्ति यच्चम्पादेशस्य मन्दिराणा वैभव तदीनीन्तनेभ्यो मन्दिरेभ्यो न्यून नासीत्।

चम्पादेशस्य राजानः प्राचीनाना मन्दिराणा मूर्तीनाञ्च सरक्षणेन सह, नवानपि देवान् स्थापयन्ति स्म, किन्तु तेषा नामानि स्वानि नामानि भवन्ति स्म। अभिलेखेषु द्वादशभिर्नृपैः स्वनाम्ना स्थापितस्य मन्दिरस्योल्लेखोऽस्ति (मच० पृ० १८४–५)। भद्रवर्मणा भद्रेश्वरस्य, शम्भुवर्मणा शम्भुभद्रेश्वरस्य, इन्द्रवर्मणा इन्द्रभद्रेश्वरस्य, हरिवर्मणा हरिवर्मेश्वरस्य मन्दिराणि निर्मितानि। भारतेऽपीय परिपाटी प्रचलिताऽऽसीत्। राजतरङ्गिणीग्रन्थाद् (५।२३) ज्ञायते यत् शूरनाम्ना प्रसिद्धेन विष्णुशूरस्वामिनस्तथा तस्य द्वाभ्यामनुजाभ्यां स्वनाम्ना मन्दिराणि निर्मापितानि[1]।

**शिवस्य शक्तिः**—शिवः शक्तिमन्तराऽपूर्णोऽस्ति। चम्पादेशेऽस्या उमा गौरी-भगवती-महाभगवती-मातृलिङ्गेश्वरी-भूमीश्वरी प्रभृत्यनेकनामभिः पूजा भवति स्म। कौठारप्रदेश-स्याधिष्ठात्र्याः कौठारेश्वर्या भगवत्या मन्दिरमत्यधिक प्रसिद्धमासीत्। ८१७ तमे खीष्टीयाब्दे हरिवर्मणाऽत्र नूतना शिलामयी मूर्तिः स्थापिता (स० २६)। ९१८ तमे खीष्टीयाब्दे इन्द्रवर्मणा पाषाणप्रतिमास्थाने स्वर्णमयी प्रतिमा प्रतिष्ठापिता (स० ४५)। ९४४–४७ तमखीष्टीयाब्दमध्ये कम्बुजवासिनस्ता नीतवन्त.। ९६५ तमे खीष्टीयाब्दे पुनरेतत्स्थाने पाषाणमूर्तिः प्रतिष्ठापिता। अस्याः स्वरूप जयपरमेश्वरवर्मणः पोनगराभिलेखस्य (स० ५५) निम्नस्रग्धराछन्दसा सूच्यते—

भूताभूतेशभूता भुवि भवविभवोद्भावभावात्मभावा
भावाभावस्वभावा भवभवबभवाबभावैकभावा।
भावाभावाग्रशक्तिः शशिभकुरतनोरर्द्धकाया सुकाया
काये कायेशकाया भगवति नमतो नो जयेत्र स्वसिद्धया॥

(मच० ३।१५२)।

अनेन श्लोकेनेदमपि स्पष्टमस्ति यच्चम्पादेशेऽर्द्धनारी कल्पनाऽपि प्रचलिताऽऽसीत् (मच० १८९)। अस्या एका मूर्तिरप्युपलब्धाऽस्ति। अपरञ्च शिवसम्बद्धाना नन्दिनो गणेशस्य कार्तिकेयस्य चानेका मूर्तयः प्राप्यन्त। कार्तिकेयविषये तथ्यमिदमुल्लेखनीयमस्ति यत् स मयूरा-रोपणेन साक गण्डकमप्यारोपितोऽस्ति। कम्बुजदेशेऽप्येतादृशी स्थितिरस्ति (मच० पृ० १९२), किन्तु भारतीये साहित्ये कुत्रापि गण्डकः कुमारवाहनरूपेण न प्रतिपादितोऽस्ति। हिन्दचीनदेशेऽस्य प्राणिनः प्राचुर्येणोपलब्धिरेवास्य कुमारवाहनत्वे मुख्य कारण प्रतीयते।

---

१. मध्यकाले चन्देलराजेन पृथिवीदेवेन पृथ्वीदेवेश्वरनामा शिवस्य मूर्त्तिर्निर्मापिता, तथा चालुक्यराजस्य विक्रमादित्यद्वितीयस्य लोकमहादेवीत्रैलोक्यमहादेवीभ्यां राज्ञीभ्यां लोके-श्वरत्रैलोकेश्वराभिधाने मूर्ती प्रतिष्ठापिते (मच० पृ० १८६)।

**वैष्णवधर्मः**—चम्पादेशे शैवधर्मापेक्षया वैष्णवधर्मस्य स्थान गौणमासीत्, किन्तु पुनरपि चम्पादेशस्य धार्मिकजीवने विष्णुपूजायाः पर्याप्त महत्त्वमासीत्। चम्पादेशे विष्णोः पुरुषोत्तम-नारायण-हरि-गोविन्द-विक्रम-त्रिभुवनाक्रान्तनामभिः स्मरण भवति स्म। शिववत् सोऽनादिनिधनोऽशेषगुरुः समस्तभुवनपरिरक्षणसमर्थश्च मन्यते स्म। विष्णुसम्बन्धिन्योऽनेकाः पौराणिक्यः कथा लेखेषु वर्णिताः सन्ति। स मधुकैटभसहर्ता मन्दराचलेन समुद्रमन्थनकर्ता (स० ९५) अस्ति, किन्तु विष्णोरवताररूपेण महती प्रतिष्ठाऽऽसीत्। रामकृष्णयोः (स० ७४) स्पष्टमुल्लेखो विद्यते। विष्णुः कृष्णरूपेण कसस्य, मधोः, केशिनः, चाणूरस्य, अरिष्टस्य, प्रलम्बस्य च घातको गोवर्द्धनगिरिधारकश्चास्ति। चम्पादेशस्यानेके राजान आत्मान विष्णोरवतार मन्यन्ते स्म। जयरुद्रवर्मा जयहरिवर्मदेवश्च तथाविधौ नृपती आस्ताम्। विष्णोः स्थूलरूपमपि पौराणिककल्पनानुकूलैवाऽऽसीत्। स क्षीरसागरेऽनन्ते वासुकौ वा शयितोऽस्ति। तस्य चतुर्भुजमूर्तयः शङ्खचक्रगदा बिभ्रति। विष्णोः पत्नी लक्ष्मीः पद्मा अथवा श्रीर्भारतीयवाङ्मयवत् चञ्चला मताऽस्ति। भारतीयपरम्परानुसारेण तस्या उद्गमस्थान समुद्रोऽस्ति, किन्तु चम्पादेशे सा कैलासात् प्रादुर्भूतेति मन्यते स्म। शम्भुवर्मणा तस्या एका सौवर्णी एका राजती च मूर्ती स्थापिते आस्ताम्। विष्णुवाहनस्य गरुडस्यापि चम्पादेशेऽनेका मूर्तय उपलभ्यन्ते। भारतीयसाहित्ये पक्षिराजः सर्पशत्रुश्च मन्यते। चम्पादेशे उपलब्धासु गरुडस्य मूर्तिषु शिरः पक्षिसदृशमस्ति, तथाऽस्य राजत्वसूचनार्थ तस्य शिरः मुकुटित मणिजटितञ्च निर्मितमस्ति, किन्तु तत्र सर्पास्तस्य भक्ष्या न सन्ति, तेषा चित्रण तस्य मित्ररूपेण विद्यते (मच० पृ० १९६)।

**ब्रह्मा**—पौराणिकस्य त्रिमूर्तेस्तृतीयस्य देवस्य ब्रह्मणः कतिपयेष्वभिलेखेषु वर्णनमस्ति, किन्तु चम्पादेशेऽस्य महत्त्व पूजा चान्यदेवापेक्षयाऽतीव न्यूनमासीत्। अयं चतुराननोऽस्ति। त्रयोदशस्य शतकस्यानेकेषु लेखेषु स्वयम्भूः कथितोऽस्ति। १२३३ खीष्टीयाब्दे जयपरमेश्वरवर्मणा फनरङ्गप्रदेशेऽस्य मूर्तिः स्थापिता, तदर्थं बहुधनञ्च दत्तम्। अस्य प्रधानेन सेनापतिनाऽभिमन्युदेवेन युवराजेन नन्दभद्रेण चापीत्थमेव दान दत्तम्। त्रयोदशशतकात् चम्पादेशे वैष्णवधर्मस्य प्रवृत्तिः प्रबला जाता। पारमेन्तियेमहोदयेनास्येद कारण प्रतिपादितमस्ति यदनामवासिभिरन्यशत्रुभिश्च पौनःपुन्येन पराजितानां चमानां महादेवे श्रद्धा शिथिलाऽभूत्, तैर्विष्णुप्रभृतिदेवानामुपासना तयाऽऽशया प्रारब्धा यत् ते तेषां रक्षा कुर्यात् (मच० १९९)।

चम्पादेशाद् ब्रह्मणो मूर्तिद्वयमुपलब्धमस्ति। ते चतुर्मुखी कमलपाणी च स्तः। एकस्या मूर्तौ ब्रह्मण उत्पत्तिर्विष्णोर्नाभिकमलात् जातेति प्रदर्शितं विद्यते।

**समन्वयवादः**—भारते बहुवार ब्रह्मणो विष्णोः शिवस्य च–विशेषतोऽन्त्ययोर्द्वयोर्देवयोरुपासकाना महान् विरोधः प्रचलितोऽस्ति। चम्पादेशे एषा त्रयाणा समन्वयो दरीदृश्यते। अत्र शङ्करनारायणनामभ्यामेको नूतनो देवः कल्पितोऽस्ति (अभिलेखस० २४), द्वावपि समकक्षौ प्रतिपादितौ स्तः। अस्य देवस्य मूर्तेरर्धो भागः शिवोऽर्धश्च भागो विष्णुरासीत्। समन्वयस्यान्यः प्रकारोऽयमप्यासीद् यदेकस्य देवस्य मन्दिरं देवान्तरस्य मूर्तिभिः सज्जीक्रियते स्म। यथा फोगलीप्रदेशस्य शिवमन्दिरस्याग्रभागो विष्णुमूर्त्याऽलङ्कृतः (मच० पृ० १९९)।

उपर्युक्तदेवतातिरिक्तानामिन्द्रयमचन्द्रसूर्यकुबेराग्निदेवाना भारतीयदेवैः सदृश वर्णन समुपलभ्यते । यथा कुबेरो महादेवस्य मित्र धनाध्यक्षश्च कथितोऽस्ति ( अभिलेखसं० १२,१३ ) । तदतिरिक्तास्तत्र सिद्धाः, विद्याधराः, यक्षाः, किन्नराः, गन्धर्वाः, दैत्याः, असुराः, राक्षसाः, प्रेताः पिशाचाश्चापि वर्णिताः सन्ति । अप्सरसामत्यधिक चित्रणमस्ति । मणिजटितमुकुटधारिण्योऽप्सरसो हस्तेषु कमलान्यादायोड्डीयमानाश्चित्रिताः सन्ति । राक्षसाना चित्रणमपि भारतवदस्ति, तेषा मूर्त्तिषु तेषामनेकानि शिरासि हस्ताश्च तथा बहिर्लक्ष्यमाणा दन्ता अदृश्यन्त ।

**बौद्धधर्मः**—चम्पादेशे समुद्रमार्गेण बौद्धधर्मप्रचारकास्तृतीयशतकादेव गन्तु प्रारब्धवन्तः । प्रथमे भिक्षवः सम्भवतो हिन्दूशकः, कल्याणरुचिः ( २५५–५६ खी० ), मुग्धिभिक्षुः, सोगहोई ( प्रायः २८० खी० ), माराजीवकः क्षुद्रश्च ( २९४ खी० ) आसन्, किन्तु बौद्धधर्मस्य सर्वप्रथम उल्लेख ८२९ खीष्टीयाब्दे एकस्मिन्नभिलेखेऽस्ति । अत इद स्पष्टमस्ति यत् चम्पादेशेऽस्य धर्मस्य प्रचारोऽतीव विलम्बेनाभूत् । पुनरप्यस्याष्टस्वभिलेखेषु ( स० २८, ३१,३७,४३,९३,१०३,१२३,१२६ ), वर्णनमिद सूचयति यदस्य धर्मस्य महान् प्रभाव आसीत् । बुद्धो जिन-लोकनाथ-लोकेश्वर-सुगत-डामरेश्वर-स्वभयद शाक्यमुनि अमिताभ-वैरोचन-वज्रपाणिप्रभृतिनामभिः स्मर्यते स्म । तस्य मुख्य वैशिष्ट्य दुःखसन्तप्तप्राणिना मोचनमस्ति । ते पूर्वकर्मण्यनुरज्यन्तो मारप्रेरिता दुष्कृत कुर्वन्ति । अतस्ते लौहदण्डेन ताड्यन्ते, किन्तु लोकेश्वरस्य स्मरन्तस्तेभ्यः कष्टेभ्यो मुच्यन्ते । अत एव दुःखसन्तप्ता नरकगामिनः प्राणिनो बुद्धस्य तथैव दर्शन कर्तु वाञ्छन्ति यथा ग्रीष्मे सूर्यसन्तप्तो मनुष्यः शीतं जलं वाञ्छति—

दुःखेनाभिहता नराश्च नरके केचित् तथा नारका
रात्रौ वा च दिवा तदा च सततं काङ्क्षन्ति ते दर्शनम् ।
तर्षाभिश्च नरा दिवाकरहता ग्रीष्मे जलं शीतल
ये ते द्रष्टुमनेकदुःखविहता वेच्छन्ति भूमौ यथा ॥

( मच. पृ० ७९ )

चम्पादेशे यथा राजकीयं सरक्षण शैवधर्मेण प्राप्तम्, न तथा बौद्धधर्मेण । ८२९ तमे खीष्टीयाब्दे एकस्मिन्नभिलेखे समन्तनामकेन सर्वप्रथम द्वाभ्या जिनमन्दिराभ्यां विहाराभ्याञ्च दत्तस्य दानस्य वृत्तान्तो दृश्यते । ८७५ खीष्टियाब्दे जय-इन्द्रवर्मणा लोकेश्वरस्यैका मूर्तिः प्रतिष्ठापिता ( अभि सं० ३१ ) । तेन भिक्षुसङ्घायैको विहारोऽपि निर्मितः । सम्भवतस्तदानीमेव बौद्धर्मेण राजकीयसरक्षणं प्राप्तुमारब्धम् । इन्द्रवर्मणा कार्यमेतद् धर्मप्रचारार्थमेव कृतम् । स बौद्धधर्मस्यातीवानुयायी आसीत्, मृतेन तेन परमबुद्धलोकपद प्राप्तम् ( अभि. ३६ ) । ९०२ खीष्टीयाब्दस्यैकस्याभिलेखस्य ( सं० ३७ ) अनुसारेण भद्रवर्मणा इन्द्रवर्मणा च स्थविरनागपुण्यस्य प्रार्थनाया मन्दिरमठौ कारितौ । ९११ खीष्टीयाब्दस्यैकस्मिन्नभिलेखे ( स० ४३ ) चम्पादेशस्य केनचिदधिकारिणा निर्मितस्यावलोकितेश्वरमन्दिरस्य वृद्धलोकेश्वरमन्दिरस्य च वृत्तान्त उपलभ्यते ।

इत्सिङ्गमहोदयेन यद्यपि चम्पा हीनयानानुयायिनीति प्रतिपादितम्, किन्तु तथ्यमिद न प्रतीयते, अभिलेखेषु अवलोकितेश्वरस्य, अमिताभस्य, वज्रधातोः, चक्रधातोः पद्मधातोश्चोल्लेखो-

ऽस्ति। इन्द्रवर्मदेवः स्पष्टमात्मान महायानसिद्धान्तस्य पण्डित प्रतिपादयति। तेनानेके महायानदेवाः प्रतिष्ठापिताः। ततो ज्ञायते यत् चम्पादेशे बौद्धधर्मस्य महायानसम्प्रादायस्य प्रचार आसीत्।

दोगदुओगप्रदेशश्चम्पादेशे बौद्धधर्मस्य केन्द्र प्रतीयते। अत्रोत्खननाद् बौद्धमन्दिर-मेकमुपालभ्यत यत् चम्पादेशस्य विशालतमहिन्दुमन्दिराद् विस्तारेऽधिक बृहदस्ति। अत्र बुद्धस्यानेका मुर्त्तय उपालभ्यन्त। अपरञ्च बोधिसत्त्वस्यैका कास्यप्रतिमा बिन्हदिन्हप्रदेशसमीपे समुपलब्धाऽस्ति, तस्या वेशो गान्धारमूर्तिवद् लहरिवद्रेखाङ्कितो न भूत्वा बौद्धमूर्तिवत् पारदर्शकोऽस्ति। इत्थ प्रतीयते यदत्र गुप्तकलायाः पर्याप्तः प्रभाव आसीत्।

**यज्ञः**—यद्यपि चम्पादेशे पौराणिको धर्मः प्रबल आसीत्, किन्तु वैदिकयज्ञा अपि प्रोत्साह्यन्ते स्म। अनेकेष्वभिलेखेषु (स० १२,१३) यज्ञाना फलस्य महिमा विद्यते। तैः सामारिकसिद्धिरेव न प्राप्यते, अपि त्वलौकिकी शक्तिरपि। द्वयोरभिलेखयोर्यज्ञाना स्पष्ट वर्णनमस्ति। यूरोपीयपण्डिताना मतमिदमस्ति यदेकस्मिन् लेखे (सं० ३) नरमेधः सकेतितोऽस्ति। चीनदेशीयेतिहासाद् ज्ञायते यत् फनवेननामकेन राज्ञा न्हुतनामप्रदेश विजित्य तस्य प्रान्तशासकस्य बलिदान कृतम्। भारतेऽश्वमेधस्य परिपाट्यासीत्। चम्पादेशे तस्य सकेतस्त्ववश्य समुपलभ्यते, किन्तु केन राज्ञा यज्ञोऽय विहित इति निश्चितं प्रमाण नोपलभ्यते।

**धार्मिको विश्वासः**—चम्पादेशस्य कतिपयेष्वन्यधार्मिकविश्वासेषु भारतीयविचार-धाराया गभीरः प्रभाव आसीत्। भारतीये वाङ्मये भौतिकपदार्थाना नश्वरताऽत्यधिका प्रोत्साहिता विद्यते, तथा तेषा भङ्गुरताविचारे धर्मकर्मणी विशेषेण ध्यातव्ये इति विधानमस्ति। चम्पादेशे अपीयमेव विचारधारा प्रचलिताऽऽसीत्—

विभूतिरेषा विपुलाप्यसार्थिका
समुच्छ्रितापि क्षणभङ्गताङ्गता।
अतीव निस्सारतया महीतले
महर्षिणोक्ता सकले सदागमे॥ (मच० ३।१३२)।

राजानः शरीर समुद्रफेनवदस्थिर मत्वा सुकृतैः शिवलोक मुक्तिं वा प्राप्तु प्रयतन्ते स्म। बहुवार तानि सुकृतानि देवमन्दिरदानान्येव मन्यन्ते स्म, किन्तु बहुवार ध्यानयोगद्वाराऽपि मुक्तिं प्राप्तु यत्नो भवति स्म[1]। 'वार्द्धक्ये मुनिवृत्तीनाम्' अयमादर्शश्चम्पादेशे प्रसिद्ध आसीत्। स्वकीयस्य जीवनस्यान्त्यभागस्य तपस्यया यापनस्य तथा तीर्थयात्रायाः परिपाट्यासीत्। पूर्वमिद कथितमस्ति यद् गङ्गाराजोऽन्तिमेषु दिनेषु राज्य परित्यज्य स्वकीयं जीवन गङ्गातीरे यापयितु भारतमागतः।

---

१. मच० ३।१४१, योगध्यानसमाधिकृच्छिवपदेच्छा यो निजात्मश्रियः
स्मृत्वाम्भःप्लवमानफेनसदृश कायं त्वनित्यं महत्।
तत्पुण्यं भवसागरात् स कुरुते पित्रोर्मुचे स्वात्मनः
(इन्द्रवर्मणस्तृतीयस्य लेख.)

**कर्मफलम्**—कर्मफलसिद्धान्तस्य हिन्दुधर्मेऽत्यधिक महत्त्वमस्ति। स्वकृताना कर्मणा फल भोक्तु नानायोनिषु भ्रमण क्रियते। वर्तमानस्य जीवनस्य समीचीनाऽसमीचीना वा स्थितिः पूर्वजन्मनः कर्मणा परिणामो भवति। चम्पादेशे इमे सर्वे विश्वासा इत्थमेव प्रचलिता आसन् ( अभि० ४,१२ )। राज्ञो जय-इन्द्रवर्मण इय धारणाऽऽसीद् यत् स पूर्वजन्मना विशिष्टायास्तपस्यायाः फलेनैव चम्पादेशस्य राजा सवृत्तः ( अभि० ३१ )। 'अनेक पूर्वजन्मान्तरतपःफलविशेषात् समधिगतचम्पाधिराजः' ( मच० ३।८० )। तत्रेदमपि मन्यते स्म यद् ग्रहा नक्षत्राणि च मनुष्यजीवनं प्रभावयन्ति ( स० ३१ )। स्वर्गनरकयोर्विश्वासोऽपि पुराणेषु प्रतिपादितैर्विचारैः संवदति। स्वर्गः सर्वप्रकारकाणामानन्दाना स्थानमासीत्, तथा स रुद्रलोक ईश्वरलोको वा प्रतिपाद्यते स्म ( अभि० २४ )। नरका अष्टावासन्, तेषु त्रयाणा नामानि रौद्र इति, महारौरव इति अवीचीति चासन् ( स० ३३ )। प्रायो दानपत्राणामन्ते मन्दिरविध्वसका नरकगामिनो भवन्ति, तथा तत्रत्याभिर्विकरालाभिर्ज्वालाभिर्दह्यन्त इति शापोऽदीयत। चम्पादेशे कृते द्वापरे कलियुगे चापि विश्वास उपलभ्यते स्म। कृतयुगे धर्मस्य राज्यमासीत् ( स० ७४ ), द्वापरे विचित्रसागरो नामा राजा बभूव ( स० २९ )। तेन ५९११ सवत्सरे कौठारप्रदेशे मुखलिङ्गं स्थापितम्। कलिरधर्मेण परिपूर्णोऽस्ति, राज्ञा कर्तव्यमिदमस्ति यत्ते त निष्कासयन्तु। अभिलेखेषु ( स० २६–२९ ) आदर्शराज्ञा विषये वर्णनमिदमस्ति यत् कलिस्तेषा राज्ये धर्मस्य लोपेऽसमर्थ आसीत्। जयहरिवर्मण. प्रथमस्य विषये कथितमस्ति—

राज्यश्रिय यस्य बलार्णवस्य कलिर्बली लोपयितु न शक्तः।
उत्पातभूतोऽपि मणिप्रदीप समीरसघस्तरसा यथा वै॥

( मच० पृ० १८५ )।

**सहिष्णुताभावना**—चम्पादेशे भारतवद् धर्मक्षेत्रे सहिष्णुताया भावनाऽधिकाऽऽसीत्। शैवबौद्धप्रभृतिविविधसम्प्रदायानुयायिना कश्चन धार्मिको विद्वेष आसीदिति न प्रतीयते। प्रकाशधर्मणा शिवलिङ्गेन सहैव विष्णुमन्दिर निर्मापितम्। इन्द्रवर्मणा शैवबौद्धधर्माभ्या समानतया दानं कृतम्।

चम्पादेशे भारतीयधर्मस्य विजयोऽनेकदृष्ट्या महत्त्वपूर्णोऽस्ति। अद्यत्वे प्रायो हिन्दुधर्मः प्रचारकधर्मो न मन्यते, अधुना तत्र धर्मप्रचारस्य, अन्येषामात्मसात्करणस्य धर्मान्तरकरणस्य च भावनाऽत्यल्पा विद्यते, किन्तु चम्पादेशे यो हिन्दुधर्मो गतस्तस्य जीवनशक्तिः पाचनशक्तिश्चाद्भुते आस्ताम्। तेन तत्रत्याः सर्वा आदिमजातयः पूर्णतया हिन्दूकृताः। यदा चम्पादेशस्योपरि विहितानामाक्रमणाना विचारः क्रियते, तदाऽस्य महत्त्व ततोऽप्यधिक वर्द्धते। वैदेशिकाक्रमणवात्यायामपि तैर्हिन्दुधर्मप्रदीपस्य निर्वाणता निरुद्धा। इदमपि पूर्व कथितमस्ति यद् आक्रमणकारिणो मन्दिराणा मूर्तीः पुनः पुनर्नयन्ति स्म, किन्तु चम्पादेशवासिनस्ता प्रत्यावर्तयितु प्रयतन्ते स्म, तासा स्थाने नूतनाः स्थापयन्ति स्म। अष्टमे शतके सिन्धप्रान्तस्य हिन्दुधर्मावलम्बिनस्तथाऽन्धविश्वासे निमग्ना आसन्, यद् देबलप्रदेशस्य मन्दिरस्य रक्तपताकापतनेन व्याकुला अभूवन् रणक्षेत्रञ्च परित्यज्य पलायिताः, पर तस्मिन्नेव शतके बृहत्तरभारतस्योपरितने भागे जावावासिभि. शिवलिङ्गे हृतेऽप्यार्यप्रायाश्चमाः शौर्येण तानाक्रान्तवन्तः।

चम्पादेशश्चीनदेशस्य समीपवर्ती प्रान्त आसीद्, भारतीयाना तत्र गमनात्पूर्वं चीनवासिनस्तं स्वायत्तीकृतवन्तः। ततश्चम्पाचीनदेशयोः शताब्दीर्यावद् गाढः सम्बन्धोऽभूत्, किन्तु चीनवासिनश्चम्पादेश स्वसस्कृतिसभ्यताभ्या रञ्जयितु नाशकन्, स्वधर्मे दीक्षित कर्तु नापारयन्। अनेकशतक्रोशदूरभारतादागता अल्पसख्याका आर्या आवासका येषा पश्चाद् भारतेन कश्चनापि सम्बन्धो नावशिष्टश्चम्पादेश पूर्णतया स्वरागेण रञ्जितवन्तः। इद तेषा भारतीयावासकाना भारतीयधर्माणा भारतीयसस्कृतीनाञ्च महाप्राणतायाः सूचकमस्ति।

**भाषा साहित्यञ्च**—भारतीया आवासकास्तान् प्रदेशान् स्वा लिपिं भाषा साहित्यञ्चापि नीतवन्त। पूर्व प्रतिपादितमस्ति यद् धर्मद्वारा सभ्यताप्रसारस्य प्रधानमुपकरण भारतीया वर्णमालाऽऽसीत्। चीनदेशीयेतिहासेन ज्ञायते यत् ३४० तमे खीष्टीयाब्दे चम्पादेशस्य राज्ञा फेनवेननामकेन चीनदेशस्य सम्राजः समीपे भारतीयाक्षरैर्लिखितं पत्रमेक प्रेषितम्, किन्त्वभिलेखाना साक्ष्येण ज्ञायते यद् भारतीया वर्णमाला सस्कृतभाषा चेतो बहुपूर्व चम्पादेश प्राप्ताऽऽसीत्। सुवर्णद्वीपस्य सर्वेभ्यः प्राचीनो वोचन्ह (खान होआ) अभिलेखः सस्कृतेऽस्ति। यद्यप्यत्र कश्चन सवत्सरोऽङ्कितो नास्ति, किन्तु लिपिविशारदास्त द्वितीयस्य तृतीयस्य वा शतकस्य प्रतिपादयन्ति। ततो दशमशतकपर्यन्त तत्र निरन्तर सस्कृतभाषानिबद्धा अभिलेखा उपलभ्यन्ते। तेभ्य इद ज्ञायते यत् तत्र संस्कृतवाङ्मयस्य प्राय सर्वाण्यङ्गानि काममधीयन्ते स्म काव्यानि विशेषरूपेण पठ्यन्ते स्म। सस्कृत तत्रत्या प्रधाना भाषाऽऽसीत्, तदानीं यदि क्वापि स्थानीया भाषाऽऽसीत् तर्हि सोपेक्षिताऽऽसीत्। एकादशशतकात् तत्र चमभाषायाः प्रचारो वर्द्धितुमारेभे। ततः पूर्वं तत्र न केवल भारतात् तत्र ग्रन्था नीयन्ते स्म, किन्तु नूतनानि पुस्तकान्यपि निबद्ध्यन्ते स्म। एकस्मिन्नभिलेखे (स० ७४) पुराणार्थनामक तादृश पुस्तक समुल्लिखितमस्ति।

भारतीयवाङ्मयस्य शीर्षस्थाने वैदिकसहिताः सन्ति। इदं पूर्व प्रतिपादितमस्ति यत् पञ्चमशतकस्य भद्रवर्मा चतुर्णा वेदानां पण्डित आसीत् (चातुर्वैद्यः)। इन्द्रवर्मा तृतीयः षड्दर्शनाना बौद्धतर्कशास्त्रस्य सकाशिकावृत्तिपाणिनीयव्याकरणस्य, आख्यानस्य, शैवानामुत्तरकल्पस्य च पण्डित आसीत् (अभि० ४५)। जय-इन्द्रवर्मा सप्तमो व्याकरणस्य, फलितज्यौतिषस्य, महायानदर्शनस्य नारदीयभार्गवीयधर्मशास्त्रस्य च ज्ञाताऽऽसीत् (अभि० ८१)। इद सम्भाव्यते यत् कविभी राज्ञा मिथ्याप्रशसाया तेषा सर्वविद्याविशारदत्व प्रतिपादित भवेत्, किन्त्वत्र कश्चन सन्देहो नास्ति यत्तत्रैतेषा शास्त्राणामध्ययन भवति स्म।

चम्पादेशे धर्मशास्त्राणा रामायणस्य, महाभारतस्य पुराणानाञ्चाध्ययनमपि पर्याप्त भवति स्म। शास्त्रनिष्णातः शास्त्रज्ञश्च मन्त्री इन्द्रवर्माण तृतीय स्तौति स्म। धर्मशास्त्रेषु मनुस्मृतेः स्पष्टमुल्लेखोऽस्ति (स० ६५)। रामायणस्य महाभारतस्य पुराणस्य चानेकासां कथाना मुख्यपात्राणाञ्चाभिलेखेषु सकेतोऽस्ति। रामस्य (सं० १२) कृष्णस्य (स० ७४) च लीलाभिः सह दशरथस्य युधिष्ठिरस्य दुर्योधनस्य च युयुत्सो. (स० ४१) नामान्युल्लिखितानि सन्ति, तथा पौराणिकदेवाना कथा अनेकत्र चर्चिताः सन्ति (मच० पृ० २३२-३)।

अपरञ्च संस्कृतकाव्यान्यपि तत्र गम्भीरतयाऽधीयन्ते स्म। शिलालेखाना गद्यपद्य-रचना एतत् सम्यक् पोषयन्ति। एतेषा लेखकाना संस्कृतसाहित्ये प्रयुक्ताना शार्दूलविक्रीडित-मन्दाक्रान्तास्रग्धरा-उपजाति-इन्द्रवज्रा-वसन्ततिलका अनुष्टुप्प्रभृतिच्छन्दसा रचनायाः सम्यग् अभ्यास आसीत्। पूर्वमेतेषा छन्दसामुदाहरणानि प्रस्तुतानि सन्ति। कादम्बरी-हर्षचरित नैषध-चरितेषु यादृशालङ्कारबहुलस्य समासप्रधानस्य च ललितसंस्कृतस्य दर्शनं भवति तादृश्येव रचना एषु अभिलेखेषूपलभ्यते। एषु अनुप्रासस्य, उपमायाः, विरोधाभासस्य, श्लेषस्यान्येषा चालङ्काराणा भूयान् प्रयोगोऽस्ति। उपरि गौर्या वर्णने 'भूताभूतेशभूता' इति यत् स्रग्धराछन्द उद्धृतमस्ति तद् अनुप्रासस्य मनोरममुदाहरणमस्ति (स० ५५)। इन्द्रवर्मणः प्रथमस्यालङ्कारसमासप्रधान निम्न-वर्णन द्रष्टव्यम्—

'स जयति विक्रमेण भुजद्वयेनोद्वहन्निव धरिणीं सकलचम्पाधिराज्यवसुमतीतलपतित-शतमख इव धनञ्जय इवाप्रतिहतपराक्रमोऽपि हरिरिव विजिताशेषरिपुवृन्दवृद्धसुरासुरगुरु-चरणद्वयारविन्दजनितसुस्फीतदेशातिशयविक्रमस्तु भुवि देवराजसदृशः, पूर्वजन्मानवरतमखकुशल-तयः फलतया धनद इव धनत्यागातिशयेन······राजलक्ष्मीलिङ्गितमृदुनरशरीरप्रदेशः।' (मच० ३।४५)।

यदिद साधयति यत्तत्र गद्ये पद्ये चातीव ललिता रचनाः क्रियन्ते स्म।

## चम्पादेशस्य कला

चम्पादेशस्य मूर्तिकला वास्तुकला च न च कम्बुजदेशकलावदुन्नताऽभूत्, न च ताभ्या-मङ्कोरवत् सदृशो विलक्षणोऽवशेष एव परित्यक्तोऽस्ति। तदारम्भिकस्वरूपविषये विदुषा महान् मतभेदोऽस्ति, किन्त्वधुना सर्वत्रैकमता. सन्ति यच्चमकशाया. सर्वोत्तमसमय. सप्तमशतकाद् दशमशतकमध्ये आसीत्, तथा तत्प्रारम्भो भारतीयकलाकारैर्विहितः।

चम्पादेशे शैवमन्दिराणा रचना भद्रवर्मणः (४०० खी०) प्रथमस्य समयादेव प्रारभ्यत। मिसोनप्रदेशस्य शैवमन्दिरेषु शिवोमास्कन्दगणेशप्रभृतीनामतीवसुन्दरमूर्तय. समुपालभ्यन्त। प्राचीनानि मन्दिराणि दारुमयानि भवन्ति स्म। नवमशतकत इष्टकाभिर्निर्मीयन्ते स्म। पोनगरसमीपे न्हागङ्गप्रदेशे ८१७ खीष्टीयाब्दे सर्वप्रथम पार्वतीमन्दिरमिष्टकाभिर्निर्मितम्। प्रायः ९०० तमखीष्टीयाब्दे दोगद्दुओगप्रदेशे इन्द्रवर्मणा लोकेश्वरबुद्धः स्थापितः। अत्रोप-लब्धाया बुद्धस्य कास्यप्रतिमाया उपरि उल्लेखो वर्तते। इय तृतीयस्य चतुर्थस्य शतकस्यामरावत्या अनुराधपुरस्य च कलानुरूपाऽस्ति। चम्पायाः प्रारम्भिकवस्तुनः किमप्युदाहरणं नोपलभ्यते। तदानीन्तनानि मन्दिराणि दारुमयत्वेन निश्शेषतया नष्टान्यभूवन्। पश्चाद् मन्दिरवास्तुविषये

---

१ चम्पायाः कम्बुजस्य च संस्कृताभिलेखानां तुलया निश्चयरूपेण स्पष्टं भवति यच्चम्पादेशे संस्कृतस्याध्ययनं तथा गभीरं शुद्धञ्च नासीद् यथा कम्बुजदेशे। चम्पादेशे कतिपयेषु लेखेषु संस्कृतस्याक्षम्या अशुद्धयः सन्ति, यथा होनककाभिलेखे (सं० ६, मच ३।९) सम्प्रदान-कारकस्य स्थाने षष्ठी प्रयुक्ताऽस्ति–'नमो भगवतो महादेवाय भद्रेश्वरस्वामिन.।'

इद कल्पितमस्ति यत्तान्यनेकभूमिकबौद्धसङ्घारामाणामथवा द्राविडमन्दिराणामनुकरणेन निर्मितानि सन्ति। दक्षिणस्मिन् मामल्लपुरस्य, काञ्चीवरस्य, बादामीत्यस्य च मन्दिराणा चम्पादेशस्य देवालयैः साक काम सादृश्यमस्ति। चम्पादेशस्य मन्दिराणा शिखराणामिद वैशिष्ट्यमस्ति यत् तान्यनेकभूमिकाविभक्तानि भवन्ति। उत्तरभारतस्य मन्दिराणां शिखराणि त्रिकोणवदुपरि कृशानि भवन्ति, दक्षिणस्मिन् तानि गृहखण्डकान्युपलभ्यन्ते। अतस्तत्रत्यवास्तुमूल दक्षिणभारतमेव मन्यते स्म ( मच० पृ० २३५–७४ )।

## सामाजिकसङ्घटनम् आचारव्यवहाराश्च

**चातुर्वर्ण्यम्**—भारतीयसमाजस्य प्रधानवैशिष्ट्यस्य चातुर्वर्ण्यस्य विचारः प्राचीनचम्पादेशेऽप्यासीत्। तत्राभिलेखानाम् ( स० ६५, ३१ ) अन्ते मन्दिरस्य मूर्तेश्च विध्वंसका ब्राह्मण-क्षत्रियवैश्या नरकगमनाय शप्ताः सन्ति। चम्पादेशस्य मुख्यतयोपनिवेशका ब्राह्मणक्षत्रियवैश्या एव आसन्। अतस्तेषा स्पष्टमुल्लेखोऽस्ति, किन्तु शूद्राणा वर्णन नास्ति। अस्य विषयस्य किञ्चित्प्रमाण नास्ति यदुपनिवेशकैर्विजिताश्चम्पावासिनः शूद्रा मता भवेयुः।

किन्तु चम्पादेशस्य समाजस्येद वैशिष्ट्यमासीद् यत् तत्र वर्णा वस्तुतो वर्णा आसन्, ते जातिरूप न गृहीतवन्तः। ब्राह्मणक्षत्रियाः समाजस्य द्वौ विभिन्नौ वर्गौ सूचयन्ति स्म, किन्तु वर्तमानजातिवदेषामन्तर्विवाहः खानपानादिकं च न भवेदिदं नास्ति। रुद्रवर्मणः पिता ब्राह्मणो माता च क्षत्रियाऽऽसीत्। अत एव स ब्रह्मक्षत्रियकुलतिलकः कथितोऽस्ति (अभि० १२)। भद्रेश्वरवर्माऽपि अन्तर्जातीयविवाहप्रसूतिरासीत्। तस्य विषये कथितमस्ति यत् तेन क्षात्र-ब्राह्मयोरुभयोः कुलयोर्गौरव वर्द्धितम्। सम्भवतो द्वयोर्वर्णयोः सम्मिश्रणेन ब्रह्मक्षत्रियनामिका एका नवा जातिरुत्पन्ना।

**ब्राह्मणानां क्षत्रियाणाञ्च प्रतिष्ठा**—ब्राह्मणाना समाजे महती प्रतिष्ठाऽऽसीत्। ब्रह्महत्या महापाप मन्यते स्म ( अभि० स० १२ ), किन्तु ब्राह्मणाना सर्वोच्चताविषये किमपि वक्तु कठिनमस्ति। अनेकेष्वभिलेखेषु ( स० १२, १३, ३१ ) ब्राह्मणक्षत्रिययोः क्षत्रियः पूर्व-मुल्लिखितोऽस्ति। बौद्धेषु जैनेषु च ग्रन्थेष्वप्येवैव स्थितिर्दृश्यते। सम्भवतस्तत्र ब्राह्मणस्य क्षत्रियात् समुन्नता स्थितिर्नासीत्, किन्त्वनयोर्द्वयोर्महान् भेदो नासीत्। द्वौ च समाजस्याभिजातौ वर्णावास्ताम्। इद स्पष्ट नास्ति यदनयोः शेषैर्जनैः साकं भोजनविवाहयोः सम्बन्ध आसीन्न वा। इद निश्चितमस्ति यत् क्षत्रियेभ्यो राज्ञा साधारणजनापेक्षयाऽऽभूषणधारणस्य वाहनोपयोगस्य च विशिष्टोऽधिकारो दीयते स्म[1]। चम्पादेशस्य राज्ञा भारतीयनृपतिवत् स्वमन्त्रिभ्य उच्चाधिकारिभ्यश्चोपाधयो दीयन्ते स्म। अभिलेखेषु ( स० ३५ ) ईश्वरकल्प-शिवकल्प श्रीकल्पप्रभृतिराजप्रदत्तपदवीना वर्णनमस्ति।

---

१. मच० ३।११४–५, भद्रवर्मणा स्वस्मै महासामन्तायाज्ञाय निम्नो लोकदुर्लभोऽधिकारः प्रदत्त आसीत्–'आज्ञा जयेन्द्रपतिनामाऽमात्योऽनेकपरिभोगदौलिकामायूरकनकनिबद्ध-खड्गकोशकलशश्रृङ्गाररजतभाजनकटिसूत्रकुण्डलगणधिराण्डयुगलवसनादीनि प्राप्तवान् राजप्रसादादिति।' मि० श्लोकसं० २०,।

**विवाहः**—चम्पादेशस्य सामाजिकप्रथासु सामाजिकपर्वसु चापि भारतीय. प्रभावः स्पष्टतयाङ्कितोऽस्ति। तत्र विवाहः पवित्रः संस्कारो मन्यते स्म। विवाहे गोत्रस्य ध्यानं रक्ष्यते स्म (मच० १२६)। मृतसंस्कारो भारतीयान्त्येष्टिसदृश आसीत्। चम्पादेशे नारिकेलक्रमुकनामकयोर्द्वयोर्गोत्रियोरुल्लेखोऽस्ति। अनयोर्नामत्वे कारणमिदमासीद् यत् प्राचीनकिंवदन्त्यनुसारेणानयोः संस्थापकौ नारिकेलक्रमुकवृक्षयोर्नीचै. शिशुरूपेण प्राप्तावास्ताम्। चीनदेशीयग्रन्थेषु प्रतिपादितं चमानां विवाहविवरणं भारतीयपद्धत्या कामं संवदति। एतदनुसारेण पूर्वं घटका नापिता वा कन्यागृहं कतिपयैरुपहारैः सह विवाहप्रस्ताव समादाय गच्छन्ति स्म, सम्बन्धे स्वीकृते संस्कारस्य कृते शुभतिथिघटिके निश्चीयेते स्म, नियते दिवसे स स्वमित्रैः सह वरयात्रारूपेण कन्यागृहं गच्छति स्म, तत्र वैवाहिकवेषेण सुसज्जिताया वध्वाः पुरोहितो मन्त्रैः पाणिग्रहणं कारयति। विवाहानन्तरं दाम्पत्यजीवने भारतीयादर्शस्य पालनं भवति स्म। पतिमरणानन्तरं न्यूनातिन्यूना एका स्त्री अवश्यं सती भवति स्म। १३२५ तमे खीष्टीयाब्दे चम्पादेशमागतेन योरोपीययात्रिणा ओडोरिकमहोदयेन राज्ञि दिवङ्गते राज्ञीनां चितारोहणं वर्णितमस्ति (मच० पृ० १६२)। पूर्वं प्रतिपादितमस्ति यद् जयसिंहवर्मणश्चतुर्थस्यानामदेशीया पत्नी सतीत्वतो रक्षिता। या स्त्रियः सत्यो न भवन्ति स्म, ता हिन्दुविधवावद् जीवनं यापयन्ति स्म। चम्पादेशे बहुभार्यत्वकुरीतिरासीत्। १२८५ खीष्टीयाब्दे अत्रागतेन मार्कोपोलोमहोदयेन लिखितमस्ति यद् राज्येऽस्मिन् कस्याश्चन कन्याया विवाहस्तावद् भवितुं नार्हति, यावद् राज्ञा सा दृष्टा न भवेत्। यदि कन्या तस्मै रोचते तर्हि स तां पत्नीं करोति, यदि न रोचते तर्हि वैवाहिकदक्षिणां दत्वा पतिं प्राप्तुं तां समादिशति। मार्कोपोलोमहोदयस्यागमनकाले चम्पाराजस्य ३२६ अपत्यान्यासन्। अस्य चत्वारिंशद् वर्षानन्तरमत्रागतेन ओडोरिकमहोदयेन लिखितमस्ति—राज्ञ. २०० अपत्यानि सन्ति, यतस्तस्यानेकाः स्त्रिय उपपत्न्यश्च सन्ति (यूल-मार्कोपोलो स० २, पृ० २४९–५०)।

चमानां मृतकसंस्कारोऽपि भारतीयान्त्येष्ट्या संवदति। शवं विमानमारोप्य गानैर्वाद्यैः साकं श्मशानं यावत् शोभायात्रारूपेण नयमानाः परिवारस्य सर्वे सदस्याः कृतक्षौरा रुदन्तो गच्छन्ति स्म। नद्यास्तटे च चितामारोप्य प्रज्वालयन्ति स्म। भस्म मृण्मयभाजने संगृह्य नद्यां प्रक्षिपन्ति स्म। मासद्वयं परिवारसदस्याः प्रतिसप्ताहं श्मशानं गत्वा शोकं प्रदर्शयन्ति स्म। बहुवारं पारसीकवत् शवोऽरण्येषु पक्षिणां कृतेऽनावृत्त. परित्यज्यते स्म।

चम्पादेशस्य समाजे दासप्रणाली अतीव प्रचलिताऽऽसीत्। साहसिकसामुद्रिकत्वेन च चमा अतीव दासान् प्राप्नुवन्ति स्म। तस्मिन् समये युद्धे पराजिता बन्दिनो जना दासाः क्रियन्ते स्म। विद्रोहिणामपीयं दशा भवति स्म। परमेश्वरदेवेन पाण्डुरङ्गविद्रोहानन्तरमर्द्धं जना दासाः कृताः। राजभिर्मन्दिरेभ्यो वस्त्वन्तरैः सह दासा दास्यश्च कामं दीयन्ते स्म।

चम्पादेशे पर्वाणि हिन्दुपञ्चाङ्गानुसारेण निश्चिततिथिषु मन्यन्ते स्म (मच० १।२९)। नूतनवर्षारम्भे सकले वर्षे हानिकारकशक्तिपाशाद् मोचयितुमेको हस्ती परित्यज्यते स्म। आषाढमासे चम्पादेशस्य नौकाधावनं वङ्गप्रदेशस्य दुर्गापूजाकालिकनौकाधावनेन संवदनीयं विद्यते। इत्थमेव मकरसङ्क्रान्त्या दोलायात्रया च सदृशानि पर्वाण्यपि चम्पावासिभिर्मन्यन्ते स्म (मच० पृ० २२९)।

## राजा शासनपद्धतिश्च

**राज्ञो देवत्वसिद्धान्तः**—भारतवत् चम्पादेशेऽपि राजा देवांशो मन्यते स्म। अभिलेखेषु (स० २९ अ०, श्लोकः २, ३१ भा०, श्लोकः ८)। प्रायोऽयं विचारो दृश्यते यद् राजा भूस्वामी देवोऽस्ति। राजा चन्द्रेन्द्राग्नियमकुबेराणां शरीरधारकोऽस्तीति प्रतिपादितमस्ति ('चन्द्राग्नियमस्य विग्रहमधाद्यक्षाधिपस्यौजसा' मच० ३।८५)। इदं मनुस्मृति (७।७) वर्णनेन कामं संवदति। चम्पादेशे राजभक्तिः परां काष्ठामारूढवत्यासीत्। विक्रान्तवर्मण एकस्मिन् लेखे कथितमस्ति यद् ब्राह्मणपुरोहिताग्रासनगृहीतक्षत्रियान्यनरपतयश्च राज्ञश्चरणारविन्दं सेवन्ते (ब्राह्मणपुरोहितजुष्टचरणारविन्दः, मच० ३।७२–३।)। इदं चम्पादेशे राजप्रभावस्य चरमोत्कर्षं सूचयति। दिव्यांशसम्भवेनेदं स्वाभाविकमेवासीत्।

**राज्ञो निरंकुशोऽधिकारः**—नराकारदेवत्वेन राज्ञः सर्वतन्त्रस्वातन्त्र्यं निरंकुशत्वञ्च स्वाभाविकमासीत्। सम्भवतः कदापि राज्ञि कस्याश्चित् सभाया यत् किञ्चिद् नियन्त्रणं भवति स्म। वोचह्नप्रदेशस्य प्राचीनतमेऽभिलेखेऽस्य स्पष्टः संकेतोऽस्ति। तत्र वंशपरम्परया राजसिंहासने उपवेशनस्य सामान्यो नियम आसीत्। निर्वाचनमतीव स्वल्पं भवति स्म। बहुवारमसाधारण्यामवस्थायां संकटकाले च कस्यचन समुचितस्याधिकारिणोऽभावेनाधिकारिभिर्निर्वाचितो भवति स्म राजा, किन्तु राज्यप्राप्त्यनन्तरं तस्य शक्तिरसीमाऽनियन्त्रिता च भवति स्म। ११४७ तमे खीष्टीयाब्दे जयवर्मणो मरणानन्तरं प्रजास्तस्य पुत्रं हरिवर्माणं राज्यप्राप्तये आमन्त्रितवत्यः (अभि० स० ७५)।

**अभिषेकः**—भारतीयराजवत् चम्पादेशस्य राज्ञामप्यभिषेको भवति स्म। बहुवारमशान्तायां परिस्थितौ राजसिंहासनारोहणस्य बहुकालानन्तरं विधिनाऽभिषेको भवति। हरिवर्मणोऽभिषेको वर्षद्वयानन्तरं भद्रवर्मदेवस्याभिषेको द्वात्रिंशद्वर्षानन्तरमभूत् (मच० १५७)। अभिषेकसमये राजा नूतनं नाम गृह्णाति स्म। यथा प्रकाशवर्मणा श्रीविक्रान्तवर्मेति नाम धृतम्।

**राज्ञो गुणाः**—अभिलेखेषु चम्पादेशस्य राजानः सर्वगुणसम्पन्नाः प्रायश्च तदावश्यकवैशिष्ट्ययुक्ता भवन्ति स्म इति प्रतिपादितमस्ति, यानि वैशिष्ट्यानि भारतस्य प्राचीनाः कवयो राज्ञां कृते आवश्यकानि मन्यन्ते स्म—शारीरिकं सौन्दर्यं शक्तिमत्त्वं पराक्रमः प्रबन्धकौशलं वैदुष्यं तथा नैतिका धार्मिकाश्च सर्वे गुणा राजसु प्रदर्शिताः (मच० ३।४३)। रूपेण ते कामदेवसमा भवन्ति, किन्तु पुनरप्युग्रतया तेषामाकृतिर्गरुडोपमाऽस्ति। ते सकलशास्त्रविशारदाः पराक्रमशालिनः, युद्धे छिन्नशत्रुशिरस्काः सन्ति, चतुर्णामुपायानामष्टादशविवादपदानां सन्धिविग्रहादिषड्गुणानां ज्ञातारः प्रजारक्षकाः सन्ति। ते विदितचतुष्षष्टिकलाः सन्ति (स० ६२,७२)। ते वशीकृतकामक्रोधमोहलोभमदमात्सर्याः सन्ति (स० ६५)। औदार्यदयादाक्षिण्यधैर्यसहिष्णुताप्रजापालनादिगुणसम्पन्ना भवन्ति। ते न केवलं योगं ध्यानं समाधिञ्च विदधति स्म (सं ६५), किन्तु मन्दिरेभ्यो दानं कुर्वन्ति स्म, इष्टापूर्तिञ्चापि कुर्वन्ति स्म (९४,११०)। वर्णाश्रमधर्मस्य रक्षा तेषां प्रधानं कर्तव्यमासीत् (अभि० स० २३)।

चम्पादेशस्य राजानः कूटनीतौ भारतीयनीतिज्ञैः प्रदर्शितानुपायान् व्यवहरन्ति स्म। प्रातिवेशिकानि राज्यानि मित्रोदासीनारीति त्रिधा विभक्तान्यासन्। तैः सह सामदानभेददण्डोपायानां प्रयोगः क्रियते[1]। दण्डस्य स्थाने बहुवारमुपप्रदानस्य प्रयोगो भवति[2]। सन्धिविग्रहयानासनसंश्रयद्वैधीभावेति षाड्गुण्यस्यापि प्रयोगो भवति[3]। कौटिलीयार्थशास्त्रे कामन्दकीये नीतिसारे चैषां विस्तरेण प्रतिपादनमस्ति। इत्थं प्रतीयते यत् चम्पाराजनीतिज्ञास्तान् ग्रन्थानधीत्य भारतीयकूटनीतेश्च नियमान् पूर्णतयाऽनुसरन्ति स्म।

**हिन्दुसभ्यताया आधुनिका अवशेषाः**—प्राचीनचम्पादेशस्य वर्तमानप्रतिनिधित्वकारकाश्चमा अधुना अनामदेशे कम्बोडियादेशे च निवसन्ति। एषु केचन अद्यापि हिन्दवः सन्ति, शेषा यवना अभूवन्। हिन्दवो ब्राह्मणा वा चमा 'जाते'ति पदेन व्यपदिश्यन्ते[4], यवनाश्च चमावनी अथवा असलमचमेति। हिन्दुचमानां धर्मो मुख्यतया शैवोऽस्ति, किन्तु तेन सह यवनस्थानीयधार्मिकविश्वासानां तथाधिकं सम्मिश्रणं जातमस्ति यत् तत्र मूलहिन्दुधर्मस्य अत्यधिकं न्यूनं तत्त्वमवशिष्टं विद्यते, तदप्यतीव विकृतं दूषितञ्चास्ति। शिवलिङ्गस्य नन्दिनश्च पूजया सह चमा निम्नलिखितसंस्कृतमन्त्राणां नितरां भ्रष्टचमभाषायां[5] प्रयोगं कुर्वन्ति—

'ओं तत्पुरुष तत्पुरुषाय नमः तत्पुरुषमुखाय नमः शिवाय नमः।'

एषां पुरोहितो बोंग इति (सं० वश) अथवा वसैहेति उच्यते। एषु उच्चकक्षः पुरोहितः पोर्दीमोग्रु (प्रथमगुरुः) तथा त्रयो महान्तः पुरोहितः पोआध्याय (सं० आद्य) कथ्यन्ते। वसेह इति (पालि-उपज्झाय, सं० उपाध्याय)[6] प्रत्येकं ग्रामे उपलभ्यते। इमे स्वपूजायां कलैह इति (कलशं) शख इति च (शङ्खं) प्रयुञ्जन्ति। इदं ध्यातव्यं तथ्यमस्ति यद् यवनचमानां पुरोहित आचार इति (सं० आचार्यः) कथ्यते, तथा यवनसमाजस्य नायको ग्रु इति (सं० गुरुः) उच्यते।



---

१. मच. ३।१४, यस्य त्वद्दण्डभेदा सकलमरिमयीर्भिनत्ति शक्तिभृत इव। तथा मच ३।१७१।

२. मच. ३।१७।

३. तत्रैव।

४. एषां विस्तृतं वर्णनं द्रष्टव्यम्, इंसा. रि. ई. ख० ३, पृ० ३४१–५।

५. एषां चमरूपाणीत्थं सन्ति–ओं तं पुरुषशत्यनोमो तत्पुरुशं मुखे नोमे, शिबंय नामो (इंसा. रि. ई. पृ० ३४२)। नमः शिवायेति यजुर्वेदस्य षोडशेऽध्याये ४१ तमे अयं मन्त्रो वर्तते।

६. केचन विद्वांस उपासकशब्दस्यापभ्रंशः वसैह इति प्रतिपादयन्ति। ह्यूरेण्डमहोदयेनेदं न स्वीकृतम्। केदेमहोदयस्येदं मतमस्ति यद् वसैहेति चीनयात्रिणा चौ-ता कुआननामधेयेन वर्णितस्य प-स्सेउ इत्यस्याधुनिकं रूपमस्ति। प-स्सेउ प्रायः पाशुपतो मन्यते। परं केदेमहोदयेनायं शब्दः एकादशशतकस्य कम्बुजाभिलेखे तपस्विशब्देन संवादितः, इयञ्चोपर्युक्तशब्दस्य सर्वोत्तमा व्याख्या प्रतीयते (नीसौ इं इं पृ० ६१–६२)।

—:०:—

# द्वादशोऽध्यायः

## सुवर्णद्वीपम्

### सामान्यः परिचयः

**सुवर्णद्वीपस्य वैशिष्ट्यानि**—एशियामहाद्वीपस्य दक्षिणपूर्वभागस्य मलायाद्वीपकल्पस्य तथा तत्सम्बद्धस्य १५०० क्रोशपर्यन्तं विस्तृतस्यार्द्धभूमण्डलस्य परिक्रमणकारिणः ससारस्य सर्वेभ्यो महान् द्वीपपुञ्जो हिन्द्र्वद्वीपसमूहोऽत्रत्वे मलयेशिया प्राचीनकाले च सुवर्णद्वीपमुच्यते स्म। परलेहिन्दस्यान्यप्रदेशैः साकमिदमपि भारतीयोपनिवेशकैरावासितम्, तथा भारतस्य विशालसांस्कृतिकसाम्राज्यस्याङ्गमभूत्। प्रदेशस्यास्यानेकानि महत्त्वपूर्णानि वैशिष्ट्यानि सन्ति। रामायणस्य महाभारतस्य सस्कृतकाव्यसाहित्यस्य चात्र सर्वतोऽधिकः प्रभावोऽभूत्। बृहत्तरभारतस्य देशान्तरेषु जावावद् रामायणस्य दृश्यान्येतावदधिकसख्याया तथा तथा मनोहरपद्धत्या शिलातलेपूत्कीर्णानि नाभूवन्। हिन्दुकर्मकाण्डस्य कम्बुजदेशवत् चम्पादेशवच्चात्र गभीरः प्रभावो जात', किन्तु द्वाभ्या देशाभ्या पश्चाद् हीनयानबौद्धधर्मोऽङ्गीकृतः। अद्य भारताद् बहिः पौराणिको हिन्दुधर्मः पूर्णतया यदि कुत्रचिद् जीवितो विद्यते तर्हि सुवर्णद्वीपस्य बालिद्वीपे लोम्बोकद्वीपे चैव। प्रदेशस्यास्येद तृतीय वैशिष्ट्यमस्ति यद् वर्मास्यामकम्बुजचम्पाप्रभृतिदेशेष्वधिका जना अद्यावधि भारतीया सस्कृतिमनुसरन्ति, किन्तूपर्युक्तद्वीपद्वयातिरिक्तस्य सुवर्णद्वीपस्याधिका भागा यवनाः सवृत्ताः। मलाया-जावा-सुमात्रादेशेष्वादिवासिना भारतीयाना यवनानाञ्च विशिष्टाना संस्कृतीना त्रयः क्रमाः स्पष्ट दृश्यन्ते, किन्तु अनाम-स्यामवर्मादेशेषु यवनधर्मस्य प्रसारस्य न्यूनत्वेन तत्र भारतीयसस्कृतेः प्राधान्यमक्षुण्णमभूत्। अस्य कारण स्पष्टमस्ति। अतिप्राचीनकालात् मलाया तत्समीपवर्तिद्वीप योरोपमहाद्वीपस्य भारतस्य चीनदेशस्य च मध्ये व्यापारस्य महत् केन्द्रमासीत्। व्यापारस्य विजयस्य च हिन्दुयवनयूरोपीयप्रवाहाः पूर्वं भारतात् श्रीलङ्कायाश्च मलाया प्राप्ताः, पुनः जावा गच्छन्त उत्तरस्या दिशि-चीनाभिमुख गताः, अन्ते चीनात् प्रतिनिवृत्यानाम कम्बुजञ्च प्राप्ताः। दूरत्ववृद्ध्या साकमेतेषा प्रभावस्य ह्रासोऽभूत्। मलाया-जावादेशयोरस्य सर्वेभ्योऽधिकः प्रभावोऽभूत्, तथा चम्पाकम्बुजयोः सर्वेभ्यो न्यूनः। बर्मा स्यामश्चास्य प्रवाहस्य मार्गाद् बहिरासीत्। अतस्तौ देशावअधिकतया यवनप्रभावात् सुरक्षितावभूताम्। बालिलोम्ब्रोकद्वीपयोरपि हिन्दुसंस्कृतेः सुरक्षाया इदमेव कारण विद्यते।

**सुवर्णद्वीपस्यावासनारम्भः**—भारतीयै. खीष्टीयसवत्सरस्य प्रथमेषु शतकेषु सुवर्णद्वीपस्यावासन प्रारब्धम्। अस्य सर्वप्रथम उल्लेखः खीष्टीयाब्दस्य षष्ठशतकात् पूर्वं जातकसाहित्येषु समुपलभ्यते। अनेकेषु जातकेषु साहससम्पन्ना व्यापारिणः सुवर्णद्वीपं गच्छन्तो दृश्यन्ते। यथा विदेहस्यैकस्मिन् राज्ञि हते सति तस्य विधवा पत्नी वेशं परिवर्त्य स्वपुत्रेण निधिना च साक चम्पा

(भागलपुरम्) समागता। तरुणत्व प्राप्तेन पुत्रेण माता प्रतिपादिता यन्मह्यमर्द्धकोष देहि, अहं सुवर्णभूमेर्व्यापारेण सम्पत्तिं प्राप्स्यामि राज्यञ्च जेष्यामि (कावेल २२)। जातकान्तरे च भरुकच्छतः (भड़ोच) सुवर्णभूमेर्यात्राया वर्णन विद्यते (कावेल ३।१२४)। बृहत्कथा-मुपजीव्य लिखितेषु कथासरित्सागरबृहत्कथामञ्जरीबृहत्कथाश्लोकसग्रहादिषु सुवर्णभूमियात्रिणा-मनेकाः कथाः सन्ति। कथासरित्सागरे सुवर्णद्वीपगामिना समुद्रशूरस्य (तरङ्ग ५४-८६) ईश्वरवर्मणः (५७-७२) यशःकेतोश्च (८६।३३, ६२) व्यापारिणा वृत्तान्ताः सन्ति। मिलिन्दप्रश्नेनेद स्पष्ट भवति यत् प्रथमशतकख्रीष्टीयाब्दपर्यन्तं स्वर्णभूमौ-तक्कोल( तकुआपा )-चीनदेशीयसमुद्रपर्यन्त भारतीया अत्यधिक पोतसञ्चालनं कुर्वन्ति स्म। पालित्रिपिटकस्य (प्रथमशतकात् तृतीयशतकमध्ये लिखितस्य) निद्देसनामकग्रन्थे चतुर्विंशतेरेतादृशाना पोतनिरोधस्थानाना नामानि लिखितानि सन्ति, यत्र धनलोलुपा जना गच्छन्ति स्म। एष्वेकादश स्थानानि परलेहिन्द इत्यनेन सम्बद्धानि सन्ति (मसु० १।५६)। प्रसिद्धेन फ्रांसदेशीयेन विदुषा लेवीमहोदयेन तेषु वङ्गल्यस्य प्रत्यभिज्ञानं सुमात्राद्वीपात् पूर्वं बङ्काद्वीपेन विहितम् (मसु० १।५८)। एतावदधिकाना दूरवर्तिनाञ्च पोतनिरोधस्थानाना परिचयो नौचालनस्य तस्मिन् प्रारम्भिके युगेऽनेकेषु शतकेष्वेव सम्भवति। अतः ख्रीष्टीयाब्दात् पूर्वं षष्ठशतकात् प्रथमशतकपर्यन्तकालः सुवर्णद्वीपस्यावासनस्योपक्रमस्य कालो मन्तव्यः।

**वैदेशिकसाहित्यस्य साक्ष्यम्**—वैदेशिकसाहित्येनाप्युपर्युक्तस्थापनायाः पुष्टि-र्भवति। ख्रीष्टीयाब्दपूर्वं तृतीयशतके मेगस्थनीजमहोदयेन भारतस्य दक्षिणभागताद् गङ्गातटे आनीतानामुपस्करसामग्रीनामुल्लेखः कृतः। ख्रीष्टीयाब्दस्य प्रथमे शतके पोम्पोनियसमेलापेरिप्लस-प्लिनी (७७ ई०) इत्येते तथा ततः पाश्चात्त्याः टालमी (२ श०) प्रभृत्यनेकरोमनलेखकाः सुवर्णद्वीपस्य तस्य लैटिनभाषानुवादक्रिसे( स्वर्ण )द्वीपनाम्ना वर्णन कुर्वन्ति। टालमी-महोदयः क्रिसेकोरा (स्वर्णभूमि) क्रिसे किरसोनिसस (स्वर्णद्वीपकल्पम्) इति सज्ञाद्वयं प्रयुङ्क्ते (मसु० ४-६, ४२-५०)। प्रथमे द्वितीये च शतकयोर्मिश्रं रोमञ्च यावत् प्रदेश-स्यास्य परिचय उपर्युक्तलेखकैर्भारतीयनाविकेभ्योऽथवा भारताद् ज्ञान प्राप्य प्रतिनिवृत्तेभ्यो रोमवासिभ्यो यूनानसामुद्रिकेभ्यश्च प्राप्त इति सम्भवति। इदं तदैव सम्भवति यदा भारतीयाः ख्रीष्टीयाब्दस्योपक्रमस्य पूर्वमेवैतान् प्रदेशान् गच्छेयुः।

**आवासनस्योद्देश्यानि**—भारतीयैरिमे प्रदेशाः प्रारम्भे आर्थिकोद्देश्येनान्विष्टाः। अस्यानेकानि प्रमाणानि दातुं शक्यन्ते। प्राचीनसाहित्ये एतेषां प्रदेशानां यावन्मात्रवर्णनानि विद्यन्ते, तानि सर्वाणि प्रायो व्यापारिणा कथाभिः सम्बद्धानि सन्ति। भारतीयैस्तेषां स्थानानां यानि नामानि कृतानि, तानि प्राधान्येन तस्मिन् देशे प्राप्तान् खनिजपदार्थान् वनस्पतिपदार्थान् कृषिपदार्थांश्च सूचयन्ति स्म। सुवर्णद्वीप हेमकूटं सुवर्णकूटं सुवर्णकुड्यं रूप्यकद्वीप ताम्रद्वीपं यवद्वीप शङ्खद्वीप कर्पूरद्वीपं नारिकेलद्वीपमित्थं नामानि सन्ति (मसु० पृ० ५२-५४)। कौटलीयार्थशास्त्रे विदेशाना चर्चा तेषा प्राकृतिकीमौद्योगिकीं च सम्पत्तिं प्रदर्शयितुं विद्यते। इत्थं प्रतीयते यत् चिरकालं यावद् विदेशगमनस्य प्रधानप्रेरको व्यापार आसीत्,

किन्तु व्यापारेण साक भारतीया व्यापारिणः स्वकीयसस्कृतेरपि वाहका आसन्, यत्र सौविध्यमभूत् तत्रैव न्युषिताः सन्तस्तत्रत्या राजनीतिकसत्ता स्वहस्ते गृहीतवन्तः। अनेके साहसिका राजकुमारा भारतभूमौ राज्यासन प्राप्तुमसफला अथवा पैतृकराज्यादसन्तुष्टा भूत्वा विदेशेषु नव राज्य स्थापयितु गच्छन्ति स्म। धर्मप्रचारकाः स्व धर्म प्रचारयितुमभ्यगच्छन्त, पर ताः प्रवृत्तयः पश्चात् प्रारब्धाः। राज्यस्थापनस्य प्रथममुदाहरण षष्ठे शतके खीष्टीयाब्दे विजयस्य सिंहलविजयोऽस्ति, तथा धर्मप्रचारस्य प्रवृत्तिस्तु तृतीयशतके खीष्टीयाब्दे सम्राजाऽशोकेन प्रोत्साहिता। सुवर्णद्वीपस्यावासनस्य मूल कारण वाणिज्यमासीत्। अनेनोद्देश्येन तदभिमुख प्रस्थितैर्भारतीयैर्मलायाद्वीपकल्पस्य जावा सुमात्रा-बालि-बोर्नियोद्वीपाना वन्यजातिषु ज्ञानस्य सभ्यतायाश्च ज्योतिः प्रज्वालितम्। तत्र स्वोपनिवेशो राज्यञ्च स्थापितम्। पूर्वमेतेषा प्रदेशाना राजनीतिकस्य पश्चात् सास्कृतिकस्य चेतिहासस्य वर्णन भविष्यति। राजनीतिकेतिहासस्य चतुर्षु महत्सु भागेषु विभागो विधातुं शक्यते—

(१) आरम्भिकयुगम्–(सप्तमशतकं यावत्)–विभिन्नप्रदेशेषु हिन्दुराज्याना स्थापना।

(२) शैलेन्द्राणा प्रभुतायुगम् (सप्तमतो दशमशतकम्)।

(३) जावादेशीयहिन्दुराज्यम् (दशमशतकात् चतुर्दशशतकम्)।

(४) दीपनिर्वाणम्—इस्लामप्रवेशस्तथा हिन्दुराज्यानामन्त।

**आरम्भिकयुगम्**—मलायाप्रदेशः (कटाहद्वीपम्)।

**स्थितिः**—मलाया एशिया-महाद्वीपस्य पूर्वदक्षिणतटस्य चीनसमुद्रे वृद्धः सकुचित-स्थलीयखण्डो विद्यते। इद प्राचीने साहित्ये मलयद्वीपम् (वायुपुराणम् ३।४८) तथा कटाहद्वीप (गरुडपुराणम् ५५।५०), (वामनपुराणम् १३।१०) कथ्यते। सुवर्णद्वीपे सर्वप्रथम मलाया-राज्यमेव भारतीया आवासितवन्तस्तथा पूर्वद्वीपसमूहे तेषामुपनिवेशनस्य प्रसारस्य च प्रधान केन्द्र बभूव। मलायाराज्यस्य पूर्वतटे चतुरो मासान् चीनसागरोऽतीव क्षुब्धो भवति। अतः सकलो व्यापारः पोतनिरोधस्थानञ्च निरुद्ध भवति, किन्तु पश्चिमतटः सुमात्राद्वीपेन संरक्ष्यते, अतो मलायाराज्यस्य सर्वोत्तमानि पोतानिरोधस्थानानि पिनागं स्वेटनहम सिगा-पुरञ्च पश्चिमतटेऽस्ति। प्राचीनेतिहासेऽनया भौगोलिकपरिस्थित्या गभीरः प्रभावः पातितः।

प्राचीनकाले सुवर्ण मसालापदवाच्यमरिचाद्युपस्करसामग्री च द्वय मलायाप्रदेशस्य प्रधानमाकर्षणमासीत्। अस्य रत्नगर्भाया वसुन्धराया सुवर्णस्य खनिरासीत्। उपहागराज्ये प्राचीने काले उत्खातसुवर्णखनीनामधिका अवशेषा उपलभ्यन्ते। अत एव सम्भवतोऽस्य सुवर्णद्वीपेति नाम जातम्। रोमन चीन-अरब-देशीयलेखका अपि प्रदेशस्यास्य कृते येषा शब्दाना प्रयोग कुर्वन्ति ते सुवर्णद्वीपस्यानुवादाः सन्ति। अनेन साकमेवेद मरीचलवङ्गप्रभृतिपदार्थाना-मुत्पादनस्य व्यापारस्य चापि महत् केन्द्रमासीत्। सस्कृतभाषाया मरीच धर्मपत्तनमुच्यते। अस्य कारणमिद प्रतीयते यदिदमुदीच्यमलायाराज्यस्य-श्रीधर्मराज(लिगोर)नामकपत्तनाद् भारतमगच्छत्। प्रथममिद प्रत्यपाद्यत यत् सुवर्णद्वीपे भारतीया व्यापारिण खीष्टीयाब्दपूर्वात् षष्ठशतकादागन्तु प्रारभन्ते स्म। एतेषामुद्देश्य सुवर्णप्राप्तिरासीत्। चीनदेशीयैतिहासिकानुसारेण

तस्य देशस्य पोता अपि सम्भवतः खीष्टीयाब्दपूर्वाद् द्वादशशतकादेव मलायाराज्यमागन्तु प्रारभन्ते स्म, खीष्टीयाब्दपूर्वचतुर्थशतकात् तु तेषां यात्राया निश्चित प्रमाणमुपलभ्यते। तृतीय-शतके खीष्टीयाब्दे मेगस्थनीजेत्याख्यस्य विवरणानुसारेण मलायाराज्येन साकं भारतस्योपस्कर-सामग्रीव्यापारः प्रारभ्यत। मलायाद्वीपावलेर्द्वीपेषूष्णोपस्करसामग्रीणा बाहुल्यमासीत्। इदं प्राचीने मध्ये च युगे प्रधान पण्यमासीत्। पञ्चदशे षोडशे च शतकयोः मलक्काद्वीपः ससारेऽस्य व्यापारस्य सर्वतो महत् केन्द्रमासीत्। अत्र पुर्तगाल-डच-अरब-भारत-चीनव्यापारिण आगच्छन्। इदमसम्भव नास्ति यत् १५०० वर्षपूर्वमिदमित्थ विभिन्नदेशाना नाविकाना केन्द्र भवेत्।

## प्रथमशतके खीष्टीयाब्दे मलायायां हिन्दुराज्यानां स्थापना

मलायाराज्येन साक भारतस्य व्यापारसम्बन्धस्तु खीष्टीयाब्दस्य प्रारम्भिकशतकेषु प्रारभ्यत, पर तत्रोपवेशन हिन्दुराज्यस्थापनञ्च प्रथमशतकखीष्टीयाब्दात् ( ५०–१५० ) अभूत्। निम्न-प्रमाणानि पुष्णन्त्येतत्।

प्रथमे शतके पेटिप्लस इत्याख्येनास्य प्रदेशस्य सुवर्णद्वीपनाम्ना उल्लेख एव कृतः, किन्तु द्वितीयशतके ( १३० ई० ) टालमीमहोदयेन मलायाराज्यस्य पार्श्वे पञ्चदशाना पोतनिरोध-स्थानाना नगराणामखातानामन्तरीपाणाञ्च नामानि लिखितानि। इत्थमस्मिन्नेव युगे लिखिते पालिनिद्देसे सुवर्णद्वीपस्य पोतनिरोधस्थानाना विशदः परिचयोऽस्ति, मिलिन्दप्रश्ने तु चीन यावत् पोत वाहयता नाविकानामुल्लेखो विद्यते। भारतीयाना समुद्रज्ञानस्य वृद्धिरियम् ५०–१५० खीष्टीयाब्दमध्ये बभूवेति प्रतीयते। लियागवंशस्य ( ५०२–५५७ ) चीनदेशीयेतिहासे लिखितं विद्यते यत् सुवर्णद्वीपस्यैकस्य भारतीयराज्यस्य लग-या-सू इत्यस्य स्थापना ४०० वर्षपूर्वमभूत्। अनेनापि भारतीयराज्याना स्थापनाकालः प्रथमशतक खीष्टीयाब्दस्य सगच्छते।

**मलायाहिन्दुराज्यम्**—मलायायाः सप्तमशतकपर्यन्तमनेकेषा लघूना हिन्दुराज्याना स्थापनाऽजायत। एषा कश्चन व्यवस्थित इतिहासो नोपलभ्यते। चीनदेशीयेतिहासैराधुनिकोत्खननैश्चैतेषा न्यूनाधिक. प्रकाशो भवति। प्रथमेन स्रोतसेद ज्ञायते यदत्र खीष्टीयाब्दस्य प्राथमिकेषु पञ्चसु शतकेषु लग या सू, कियोलो-चो फेन, पान-पान, कला अथवा कोरा, पहो-अग तथा कनतोली इत्येतानि राज्यान्यासन्। एतेषा राज्यानामाधुनिकनामविषये महान् मतभेदोऽस्ति, किन्तु पुनरप्येतानि क्रमेण मलायाद्वीपकल्पादुत्तरस्मिन् लिगोरम् अथवा ( क्रास्थलडमरुमध्याद् दक्षिणस्मिन् ) कलशपुरम् ( सिताङ्गनदीमुखे ), बन्दोन-अखातम्, केद्दाराज्यम्, पहाङ्गम् तथा कडारम् ( कटाहं केद्दा इति वा ) ज्ञातु शक्यते ( मनु० १।८० )। लग-यु-सु इत्येव भारतीय-साहित्ये वर्णित कर्मरङ्गेति चर्मरङ्गेति वा राज्य कथ्यते। लियागवंशस्येतिहासेऽस्य स्थापना १०० खीष्टीयाब्दे प्रत्यपाद्यत। अस्यैकस्य प्राचीनस्य राज्यस्याभिधान भगदातो इति कथित विद्यते। ५१५ खीष्टीयाब्देऽनेन राज्येन चीनदेशस्य सम्राजः पार्श्वे स्वकीय आदित्यनामको दूतः प्रहितः। ५२३ तथा ५३१ खीष्टीयाब्देऽप्यस्य दूताश्चीनदेशे गताः।

कलशपुर-बन्दोन( पान पान )राज्यविषये चीनदेशीयेतिहासः कमपि प्रकाश न करोति, किन्तु कलाविषयेऽथवा कोरा ( केद्दा ) विषये तांगवशस्य नूतने इतिहासे लिखितमिदमस्ति यद् राज्ञो वशस्य नाम श्रिपोरा ( श्रीपुरम् ) अस्ति । राज्यं चतुर्विंशतिमण्डलैर्विभक्त विद्यते । सैनिका धनुर्वाणान् असिं शक्तिं चर्मकवचञ्चोपयुञ्जन्ति, तेषा ध्वजो मयूरबर्हैः सुसज्जितो भवति, ते हस्तिन आरुह्य युध्यन्ते । पहागराज्यविषये इद प्रत्यपाद्यत यत् ४४९ खीष्टीयाब्दे पहागराजेन सरि ( श्री ) पालवर्मणा चीनदेशस्य राजसभायां राजदूताः प्रहिताः । अनेन एकचत्वारिंशत्प्रकारकाः पदार्था उपहृताः । ४५१, ४५६, ४६४, ४६६ खीष्टीयाब्देष्वित्थमेव दूतमण्डलानि चीनदेशं जग्मुः सम्राजे चोपहार ददुः । सम्राजा महागराजाय तथा तत्रत्याय प्रसिद्धाय ऐतिहासिकाय देनपातये दसूखनाय चोपाधयः प्रदत्ताः ( मसु० १।७७ ) । अत्र द्वयोरैतिहासिकयोः सत्ता राज्यस्यास्योच्चसास्कृतिककक्षा सूचयति । अनेनेदमपि स्पष्टमस्ति यत् पञ्चमे शतके मलायायाश्चीनेन साक प्रगाढः सम्बन्ध आसीत् । कनतोलीत्यपि केद्दा ( कडार ) इत्यस्यैवैक राज्य ज्ञायते । लियांगवशीयेतिहासस्यानुसारेणास्य रूढयः कम्बोजवत् चम्पावच्चासन् । देशस्यास्य राज्ञा श्रीवरनरेन्द्रेण ( चे-पो-लो-ना लियेन तो ) सम्राजः हिया वू ( ४५४-४६५ ई० ) इत्यस्य पार्श्वे रुद्रनामक उक्तोऽधिकारी बहुमूल्यसौवर्णराजतपदार्थोपहारेण साक प्रहितः । ५०२ खीष्टीयाब्दे राज्ञा गौतमसमुद्रेण सम्राजं प्रति दूतः प्रेषितः । ततः ५१९, ५२० खीष्टीयाब्दयोर्विजयवर्मनामकेनाथवा प्रियवर्मनामकेन च राज्ञा सोपहारो दूतः प्रहितः । चीनविवरणैरेषा राज्ञा भारतीयत्वे कश्चन सन्देहो नावशिष्यते । तानि तान् बौद्धधर्मोपासकान् प्रतिपादयन्ति ।

**अभिलेखानां साक्ष्यम्**—आधुनिकैरुत्खननैश्चीनविवरणाना पुष्टिरभवत् । एवमस्मिन् प्रदेशे वर्तमानस्य भारतीयप्रभावस्य नवानि प्रमाणानि समुपालभ्यन्त । एतत्कालं यावत् सप्तदशोल्लेखनीयाः संस्कृताभिलेखा उपालभ्यन्त । एषु द्वादशसु गतशतकस्य पूर्वार्द्धे लेफ्टकर्नल जेम्सलो इत्याख्यविदुषा केद्दाराज्यतो बेलेजलीप्रान्ताश्च गवेषिताः । तैः प्रतीयते यदुत्तरभारताद् दक्षिणभारताच्च समागता उपनिवेशका अत्र चतुर्थशतकपर्यन्त पञ्चमशतकपर्यन्त च न्युषितवन्तः । इमे बौद्धधर्मानुयायिन आसन् । एतेषु चतुर्ष्वभिलेखेषु रक्तमृत्तिकावास्तव्यस्य महानाविकस्य बुधगुप्तस्य वर्णमस्ति । रक्तमृत्तिकायाः परिचयो मुर्शिदावादजनपदस्य रागामाही इत्यनेन कृतो विद्यते । अत इदं स्पष्टमस्ति यद् वङ्गतोऽत्रानेके उपनिवेशका आयाता भवेयुः । इमे सर्वे लेखा वेलेजलीप्रान्ते एकस्मात् भग्नाद् बौद्धमन्दिरादुपालभ्यन्त । तस्मिन् काले बौद्धधर्मस्य प्रचलनस्य ज्ञान केद्दा-अभिलेखस्य निम्नश्लोकाद् भवति–( मसु० १।९० ) ।

ये धर्मा हेतुप्रभवास्तेषा हेतु ( म् ) तथागतो ( ह्यवदत् ) ।
तेषाञ्च निरोध एव ( म् ) वादी महाश्रमणः ( : ) ।
अज्ञानाच्चीयते कर्म जन्मनः कर्म कारणम् ।
ज्ञानान्न क्रियते कर्माभावा ( न्न ) जायते ।

तकुआस्थानात्, लिगोस्थानात्, चय्यास्थानातश्चापि चतुर्थपञ्चमशतकयोर्लेखा उपालभ्यन्त । बौद्धधर्मेण साक तत्र शैवधर्मस्यापि प्रचार आसीत् । केद्दा इत्यत्र पेराक इत्यत्र च मर्दकारामतो

रङ्गखनितश्च श्रीइवान्स इत्याख्येन विदुषा यानि प्राचीनानि वस्तूनि अन्विष्टानि तैश्चतुर्थपञ्चम-शतकयोरत्रोक्तयोर्द्वयोर्धर्मयोः प्रसिद्धेर्दर्शनं भवति। पेराके पञ्चमे शतके खीष्टीयाब्दे एकस्या भारतीयाया वसतेः सूचना प्राप्यते। इतः पल्लवग्रन्थलिपौ 'श्री विष्णुवर्मणः' इति लेखा एका मुद्राऽपि तथा अवलोकितेश्वरस्य तिस्रः कांस्यप्रतिमाः प्राप्ताः। श्रीवेल्साख्यविदुषा मलाया-पुरातत्त्वानुसन्धानार्थं कृतासु स्वयात्रासु केदातः पेराकतो जोहोरतश्च बहूनि नवानि वस्तूनि गवेषितानि, तेषु कतिपयानि स्तूपानामाधाराः सन्ति। तेषु महायानबौद्धधर्मस्य सिद्धान्तानां प्रतिपादकाः श्लोकाः चतुर्थस्य षष्ठस्य च शतकयोः दक्षिणभारतीयलिपौ उत्कीर्णाः सन्ति। कतिचित् सप्तमाष्टमशतकयोः खीष्टीयाब्दे हिन्दुमन्दिराणि सन्ति। तेषु शैवमूर्तीनां खण्डिता अंशाः प्राप्यन्त। अपरं बोधिसत्त्वानां नामाङ्कितानि सौवर्णानि राजतानि च चक्राणि प्राप्यन्त। तानि नामानि नवमस्य शतकस्य दक्षिणभारतलिपौ उत्कीर्णानि सन्ति। तैरन्वेषणैरिदं स्पष्टमस्ति यदयं प्रदेशो विभिन्नेषु समयेषु समागतानां भारतीयानामावासकानामनेकाभिर्धाराभिः सिक्तः।

**प्रधानभारतीयवसतयः**—प्राचीनैरवशेषैर्भग्नगृहादिभिश्चेदं ज्ञायते यत् तस्मिन् काले पूर्वतटे चुम्फो, चय्या, बन्दोन, नखोन, श्रीधम्मरट (धर्मराज) यला, (पटनी समीप) सले-सिङ्ग इत्यत्र तथा पश्चिमतटे तनासरिमे तथा लन्यानदीमुखे तकुआपा (तक्कोल) बेलेजली-प्रान्ते तथा मलक्का इत्यत्र भारतीयवसतय आसन् (मसु० १।८३–४)। एतासु तकुआपा-श्रीधर्मराजवसती अतीव महत्त्वपूर्णे आस्ताम्। अत्र समुपलब्धानि मूर्तिमन्दिराणि किञ्चित्परवर्त्ति-कालिकानि सन्ति, किन्त्वभिलेखानां लिप्या ज्ञायते यत् तानि स्थानानि चतुर्थपञ्चमशतकपर्यन्त-मावासितानि। श्रीधर्मराजस्थानं बौद्धोपासकानां वसतिरासीत्। बौद्धैरत्र महास्तूपा निर्मिताः। इत उत्तरस्मिन् चय्यावसतिः पूर्वं हिन्दूधर्मं पश्चाद् बौद्धधर्ममवलम्बितवती। एतद् द्वयं कृषकावासकै-रावासितम्, किन्तु तकु-आपा पुकेत-सलेदसिंग-पाङ्गा इत्येताः सुवर्णनिष्कासकानां वसतय आसन्। तकुआपा इत्यस्य प्रधानमाकर्षणमुत्तमानि पोतनिरोधस्थानानि रङ्गखनिश्चासीत्।

## जावा

**भौगोलिकी स्थितिः**—मलायाद्वीपकल्पस्य पश्चिमे पूर्वं सुमात्राद्वीपमस्ति, ततः पूर्वस्मिन् जावाद्वीपम्, किन्तु सुमात्राद्वीपात् प्राग् जावाया उपनिवेशनमभूत्; यतो हि तत्स्थानं सुमात्रापेक्षया कामं सुप्रवेशमुर्वरञ्चासीत्। इदं मलयद्वीपपुञ्जस्यानेकद्वीपेभ्यो लघु सदपि काममुर्वरत्वेन केन्द्रीय-स्थित्या चास्य हृदयमुच्यते। अस्य दक्षिणभागे एका ज्वालामुखपर्वतमाला विद्यते, उत्तरस्मिन् भागे ततः प्रभवन्तीनां नदीनां तटा उर्वरभूभागाश्च सन्ति। प्रसिद्धानि बटावियासेमरांगसुखाया-पोतनिरोधस्थानानि तथाऽन्यानि विशालानि नगराण्यस्मिन्नेव प्रदेशे सन्ति। जावाद्वीपस्य मृत्तिका ज्वालामुखपर्वतानामुत्क्षेपाः सन्ति। अतः प्रदेशोऽयं संसारस्य सर्वतोऽधिकोर्वरप्रदेशे-ष्वेकतमोऽस्ति। चतुष्षष्टिः प्रतिशतं भूमयः पर्वतमय्यः सन्ति, किन्तु सेके पूर्णतया नदीरुपयुज्य सर्वं द्वीपं नन्दनकाननीकृतम्। उत्तरप्रदेशापेक्षयाऽर्द्धक्षेत्रफलस्याप्यस्य जनसंख्या (पञ्चकोटयः) तस्मात् प्रान्तादल्पमेव न्यूनत्वं भजति। प्रत्यर्द्धक्रोशं सप्तशतानां जनानां पोषणानन्तरमपि द्वीपस्यास्य

पार्श्वे निर्यातार्थमधिकाः शर्करा अवशिष्यन्ते। भौगोलिकदृष्ट्यैतिहासिकदृष्ट्या च जावा प्रतीच्य-केन्द्रीयपूर्वीयनामकेषु त्रिषु विभागेषु विभक्ता विद्यते। खीष्टीयाब्दस्य प्रारम्भिकेषु पञ्चसु शतकेषु प्रतीच्यजावायामागामिषु पञ्चशतकेषु वर्षेषु मध्यजावायामेकादशशतकात् पञ्चादशशतकपर्यन्तञ्च पूर्वीयजावाया प्रतापशालिना हिन्दुराज्याना स्थापनाऽभूत्।

**जावासम्बन्धे प्राचीना उल्लेखाः—**जावा इत्यस्य भारतीयसाहित्ये सर्वप्रथम उल्लेखो रामायणे (प्रथमे शतके खीष्टीयाब्दे) तथा वैदेशिके साहित्ये टालमी(द्वितीयशतके खीष्टीयाब्दे)महोदयस्य भूगोले विद्यते। सुग्रीवः सीतान्वेषणार्थं येषु विविधेषु देशेषु कपीन् प्राहिणोति, तेष्वेकतम सप्तराज्य सुवर्णरजताकरमण्डित यवद्वीपमप्यस्ति "यत्नवन्तो यवद्वीप सप्त-राज्योपशोभितम्। सुवर्णरूप्यकञ्चैव सुवर्णाकरमण्डितम्"(रामा० ४।४०)। टालमी इत्याख्येन विदुषा इआबदिओ ( Iabadiou ) नाम्नात्यधिकोर्वरस्य, सुवर्णाकरस्य पश्चिमे रजतनगरराजधानीकस्य द्वीपस्य वर्णन कृतन्। इआबदिओ इति यवद्वीपस्य लैटिन-अनुवादोऽस्ति। फेरांप्रभृतिभिः कैश्चि-द्विद्वद्भिर्यवद्वीप सुमात्रा साधयितु प्रयतितम्, यतो हि सुवर्ण सुमात्रायामेव प्रादुर्भवति, किन्तु टालमीमहोदयस्य सकेतोऽत्र जावायामेवास्ति। एव निश्चितमेवावगन्तव्य यद् द्वितीयशतकखीष्टी-याब्दपर्यन्तं भारतीया उपनिवेशका जावाया न्युषिवन्त.।

**उपनिवेशनस्यानुश्रुतयः—**जावाद्वीपस्यानुश्रुतिष्वपि भारतीयैरावासितस्य तस्य द्वीपस्य स्पष्ट वर्णन विद्यते ( मसु० १।९४–६ )। इमा अनुश्रुतयोऽनेकधा विभक्तुं शक्यन्ते। कासुचित् किंवदन्तीषु द्वीपस्यास्य प्रथमोपनिवेशनस्य गौरवम् आस्तिनस्य ( हस्तिनापुरस्य ) शासकस्या-जिशकस्यास्तीति श्रूयते। अन्या गाथाः कलिङ्गात् समागतान् भारतीयान् प्रथमान् आवासकान् मन्यन्ते, किन्तु तैः साक महाभारतकालिकाना पराशर( पुलसर ) व्यास ( अवियास )-पाण्डूना नामानि सयोजयन्ति। तृतीयवर्गस्य लोककथासु प्रथमानामावासकाना गूर्जरादागमनस्योल्लेखो विद्यते। कतिपयासु गौर्जरकिंवदन्तीष्वपि द्वयोरनयोर्देशयोः सम्बन्ध. प्रत्यपाद्यत। एकस्या पश्चिमानुश्रुतौ ५६ खीष्टीयाब्दे हिन्दुराज्यस्य स्थापना वर्णिता विद्यते। अजिशकप्रवर्तिजावीय-संवद् भारतस्य शकसवत्सदृशम् ७८ खीष्टीयाब्दात् प्रारभ्यते। एताभ्योऽनुश्रुतिभ्य एतदवश्य प्रतीयते यद् जावोपनिवेशने प्रधानो भागः कलिङ्गाना गौर्जराणाञ्चासीत्। आवासनमिद प्रथमशतकमध्यपर्यन्त जातम्, यतो हि चीनदेशीयेतिहासे इदमकथ्यत यत् १३२ खीष्टीयाब्दे जावा-( येति आओ )द्वीपस्य राज्ञा देववर्मणा ( तिआ-ओ-पीनेन ) एक दूतमण्डल चीनदेशे प्रहितम्।

**जावाचीनयोः सम्बन्धः—**मलयाद्वीपपुञ्जे जावाद्वीपेन चीनेन साक सर्वप्रथम सम्पर्कः स्थापितः, किन्त्वागामिवर्षशतत्रयपर्यन्त जावाराज्येष्वितिहासः कमपि प्रकाश न पातयति। ४३० खीष्टीयाब्दे जावाद्वीपस्य हो-लो-तननामकेन राज्येन चीनसम्राजः सेवाया वज्राङ्गुलीयकम्, पद्मरागसारिका, भारतस्य समीचीन सूत्रवस्त्रमूर्णावस्त्रञ्चोपायन प्रेषितम्। ४३५ खीष्टीयाब्दे दूतप्रेषकस्य राज्ञश्चीनदेशीयनाम्ना ( चेलीपोता तो-आलो-पामो ) रूपान्तर श्लीगल इत्याख्येन विदुषा श्रीपादधरा( धर ) वर्मा, फेरां इत्याख्येन विदुषा भटारद्वारवर्मा तथा रौफेअर इत्याख्येन विदुषा श्रीपादपूर्णवर्मा इति कृतम् ( मसु० १।१०२ )।

**फाहियानः**—( ४१४ ई० )—चतुर्थशतकस्य प्रारम्भे ( ४१४–१५ ) चीनदेश प्रतिनिवर्तमानेन फाहियानेन समुद्रोपद्रवेण पञ्च मासान् यवद्वीपे ( यो-पो-ती ) अवस्थातुमवसरः प्राप्तः। तस्य विवरणाद् ज्ञायते यत् तदानीं जावाद्वीपे पौराणिकधर्मस्य विभिन्नाना सम्प्रदायानामधिकः प्रचार आसीत्। बौद्धधर्मस्य प्रमाणेऽनीव न्यून आसीत्।

**गुणवर्मणा जावाद्वीपे बौद्धधर्मस्य प्रचारः**—फाहियानस्य किञ्चित्समयानन्तर जावाद्वीपे बौद्धधर्मस्य प्रबलस्य प्रथमस्य च प्रचारकस्य गुणवर्मण आगमनमभूत्। चीनविवरणानुसारेणाय किपिनस्य ( कपिशाया अथवा कश्मीरस्य ) राजपरिवारेण सम्बद्धस्य सघानन्दस्य पुत्र आसीत्। बाल्यादेव तस्य प्रवृत्तिः धर्मे आसीत्। यदा स त्रिंशद्वर्षदेशीय आसीत्, तदा किपिनस्य नृपे दिव प्रयाते सति तस्मै राजसिंहासनदानस्य प्रस्तावोऽभूत, किन्तु मातृभूमिं परित्यज्य लङ्का समागत, ततो जावाद्वीप प्राप्तः। उच्यते यद् यस्मिन् दिने तस्य पोतो जावातट प्राप्तः, ततः पूर्वरात्रौ स्वप्ने राजमात्रा पोतारूढ एको भिक्षुर्जावा प्राप्तो दृष्टः। गुणवर्मणः प्रभावेण सा बौद्धत्व स्वीकृतवती, तथा मातुः प्रेरणया भूभृदपि तथागतस्योपासकोऽभूत्। तस्मिन्नेव काले जावाशत्रुसेनयाऽऽक्रान्ता। राजा गुणवर्मा पृष्टो यत् किं शत्रुभिः सग्रामो बौद्धधर्मशिक्षाप्रतिकूला तु नास्ति। भिक्षोः प्रतिवचनमासीद् यद् दस्यूना दण्डः प्रत्येक कर्तव्य विद्यते। राजा शत्रुभिः साक युद्धं कृतवान् साफल्यञ्च प्राप्तवान्। ततो बौद्धधर्मः सकले राज्ये प्रसृतः। राजा भिक्षुत्व वाञ्छति स्म, मन्त्रिभिः पणेनानेन स सघे प्रवेशाद् निरुद्धो यत इतः पर सकले राज्ये कस्यापि प्राणिनो वधो न भविष्यति। गुणवर्मणः ख्यातिः सर्वत्र दूरदूर प्रसृता। ४२४ खीष्टीयाब्दे चीनभिक्षुभिः सम्राट् प्रार्थितो यद् गुणवर्मा चीनदेशे आमन्त्रणीयः, सम्राजा दूताः बौद्धभिक्षु चीनदेशे समानेतुं जावाद्वीपे प्रहिताः। ४३१ तमे खीष्टीयाब्दे नन्दिनामकहिन्दुव्यापारिणः पोतमारुह्य चीनदेशे गतः।

उपर्युक्ते चीनदेशीयवर्णनेऽत्यधिका अत्युक्तयः सन्ति, किन्तु स्पष्टमिद विद्यते यद् जावाद्वीपे बौद्धधर्मप्रचारस्य गौरव गुणवर्मण एवास्ति। एतत्प्रतिपादन कठिनमस्ति यत्तेन बौद्धधर्मस्य कस्य रूपस्य प्रचारः कृतः। स लङ्काद्वाराऽऽगत आसीत्, अतस्तस्य शिक्षासु हीनयानस्य प्रभावो भवितुमर्हति। उत्तरपश्चिमभारतभूभागस्तस्मिन् काले महायानधर्मस्य केन्द्रमासीत्। जावाद्वीपमागामिषु शतकेषु महायानस्य प्रबल केन्द्रं द्रक्ष्यते। ७७८ खीष्टीयाब्दे कलसन-अभिलेखे ताराया मन्दिर महायानविहारस्थापन च वर्णित विद्यते। तारानाथो वसुबन्धुशिष्यैः कोथी इत्यत्र ( सुवर्णभूमौ, सुवर्णद्वीपे ) महायानस्य प्रचारः कृत इत्युल्लिखति। गुणवर्मणश्चीनदेशे सादरमाह्वानमपि तस्य महायानसम्प्रदायानुयायित्व साधयति।

**पूर्णवर्मा**—गुणवर्मण उपर्युक्तचीनविवरणादिद स्पष्ट भवति यत् सकलो जावादेशो बौद्धत्व स्वीकृतवान्, किन्तु प्रतीच्यजावाभिलेखो मध्यजावाभिलेखश्च ततो भिन्नमेव चित्र समुपस्थापयतः। ताभ्या ज्ञायते यत् चीनदेशीयवृत्तान्तमतिरञ्जित विद्यते, वस्तुतस्तत्र पौराणिकधर्मस्य प्राबल्यमासीत्। प्रतीच्यजावाद्वीपस्य बटावियाजनपदतः पूर्णवर्मणश्चत्वारः सस्कृताभिलेखा

उपालभ्यन्त। तेषु त्रयस्तु 'डच ईष्टइंडीज'प्रदेशस्य राष्ट्राध्यक्षस्य (गवर्नर जनरल) निवासस्थानसमीपवर्त्तिषु चि-अस तोन-जम्बु केब्रोन-मकोपीस्थानेषु तथा चतुर्थो बटावियापोतनिरोधस्थानात् पूर्वस्मिन् समुद्रतटे समुपालभ्यन्त। एतेभ्योऽभिलेखेभ्यो ज्ञायते यत् षष्ठशतके ख्रीष्टीयाब्दे प्रतीच्यजावाद्वीपे तारुम इत्याख्याया राजधान्या पूर्णवर्मा शास्ति स्म। अस्य वंशो न्यूनातिन्यूनत्रिवंशपरम्परातस्तत्रत्यः शासक आसीत्। तेषामभिलेखाना लेखनकाले शासनं विदधतस्तस्य द्वाविंशतिर्वर्षाण्यतीतानि। तस्य शासन बुइतनजोर्गपर्वतप्रदेशे चि लिवोगचितारुमनामकयोर्नदीतटयोरासीत्। तस्य राज्ये राजसभायाश्च पौराणिकधर्मस्य प्राबल्यमासीत्, तथा सस्कृतस्य प्रचार आसीत्। चिअसतोन इत्यस्याभिलेखेऽनुष्टुप्छन्दसि कथितमिद विद्यते यत् "विष्णुतुल्यमेतच्चरणयुगल तारुमनगरस्याधिपतेर्विक्रमशालिनो भूपतेः श्रीमतः पूर्णवर्मणोऽस्ति।" पाषाणे एतल्लेखातिरिक्तयोः पादयोः प्रतिबिम्बमस्ति, तथा कानिचित् तादृशि चिह्नान्यक्षराणि चोत्कीर्णानि सन्ति येषामर्थस्य ज्ञान विदुषामद्यापि न जातम्। सूत्रैः पादयोर्द्वयोरङ्गुष्ठद्वय बद्धमस्ति। द्वितीयस्मिन् जम्बुलेखेऽपि चरणयुगलस्योल्लेखो विद्यते। श्रीपूर्णवर्मनामकस्तारुमनगरस्य य ऐश्वर्यसम्पन्नो दाता भृत्यवत्सलोऽद्वितीयो राजा वर्तते यस्य कवचः शत्रूणामसख्यबाणैरभेद्यो विख्यातश्च वर्तते, तस्य पदयुगलस्येद बिम्बमस्ति, यः शत्रूणा नगराणा विध्वसे सदा समर्थः, मित्राणा सुखदः, शत्रूणा शल्यभूतो विद्यते। तृतीयस्य कब्रौनकोपीलेखस्य पाषाणे कदाचिद् महिष्यः स्व पृष्ठ मर्दयन्ति स्म, अतोऽस्य कतिपयान्यक्षराणि अतीवास्पष्टानि सन्ति, पुनरपि तान्यपठ्यन्त। अस्याप्यर्थः पदयुगलमेव विद्यते। चतुर्थे तुगुलेखे राज्ञः पूर्णवर्मणः सार्द्धक्रोशत्रयमिता दीर्घा निर्मलोदका रम्या गोमती कुल्यायाः खनन ब्राह्मणाना सहस्रगोदक्षिणा च वर्णिताऽस्ति। वर्षर्तौ, जावाद्वीपस्य नदीना हानिकारकः प्रवाहः कुल्यया समुद्रे प्रक्षिप्यते स्म। तादृश्यैका चन्द्रभागा कुल्या पूर्णवर्मणः पूर्वजैर्निर्मापिता। इयमेकाऽतीव विस्मयावहा वार्ता विद्यते यत् पूर्णवर्मणा सार्द्धक्रोशमिता तादृशी दीर्घा कुल्या फाल्गुनकृष्णाष्टमीतश्चैत्रशुक्लत्रयोदशीपर्यन्त केवलैकोनविंशत्या दिनैः कारिता। ज्ञात नास्ति यदत्र तेन कियन्तो भृत्या नियुक्ताः।

एतेषामभिलेखाना ललितं सस्कृतम् ऐरावतविष्णुपदानामुपमा, ब्राह्मणेभ्यो गोदान भारतीयतिथिमानप्रयोग इत्येते प्रतिपादयन्ति यत् पश्चिमजावानिवासिनस्तत्काल यावद् भारतीयं धर्मं साहित्य कर्मकाण्ड च पूर्णतया स्वीकृतवन्तः। एवमार्यावर्तस्य सस्कृतिरागेण काम रञ्जिता आसन्। चीनदेशीयेतिहासेषु जावाद्वीपस्य यस्य हो-लोतनराज्यस्य वर्णन लभ्यते तत् सम्भवतः प्रतीच्यजावाद्वीपस्य पूर्णवर्मण एव राज्यमासीत्।

**होलिङ्ग इति—(कलिङ्गम्)**—पूर्णवर्मणो राज्यमतीव लघ्वासीत्। तदतिरिक्ता न्यन्यानि राज्यान्यपि तत्रासन्। सुईवंशस्य (५८९–६१८) इतिहासयोर्द्वयोर्जावाद्वीपे दशाधिकाना राजधानीनामुल्लेखो विद्यते। तागवंशीय (६१८–९०६) विवरणेषु जावाद्वीपस्य राज्ञः पारतन्त्र्यभाजोऽष्टाविंशतिः सामन्ता वर्णिताः सन्ति। एषु होलिङ्गेत्येकं विशाल राज्यमासीत्। होलिङ्गेति कलिङ्गस्य चीनदेशीयरूपान्तरं मन्यते।

## ३—सुमात्रा

इद मलयद्वीपपुञ्जस्य बोर्नियोद्वीपानन्तर सर्वतो महद् द्वीपमस्ति तथा भारतस्य निकटतम द्वीपं विद्यते। क्षेत्रफलं ( १,८०,००० व० मी० ) पार्श्वस्थद्वीपसहितमुत्तरप्रदेशस्य क्षेत्रफलतः प्रायो द्विगुण विद्यते, तथा जावाद्वीपात् प्रायश्चतुर्गुण वर्तते, किन्तु जनसख्या ( ८० लक्षाणि ) द्वभ्यामपि पञ्चमाशतोऽपि न्यूना विद्यते। अस्य कारणमिदमस्ति यदस्याधिको भागः पश्चिमतटस्य समानान्तरपर्वतमालाभिरावृतो विद्यते। पूर्वदक्षिणयोः इमाः पर्वतमालास्तटपार्श्वपर्यन्त विस्तीर्णा सन्ति, किन्तु पूर्वोत्तरयोः कश्चन विशालो भूभागो विद्यते, तथा तदुर्वरत्वसम्पादिका नद्यः सन्ति। एतासु सम्बी-मूसीनद्यौ उल्लेखनीये स्तः। सम्बी इन्द्रपुरपर्वततो नि सृताऽस्ति, तथा मूसीतटे सुमात्रायाः प्राचीना राजधानी पलेम्बोगेत्याख्या विद्यते। अत्र सुवर्णरजतताम्रकतकगन्धकटीनशीसकप्रभृतिपदार्थाना खनिरस्ति। भूमिर्जावावदुर्वरा विद्यते। जातिफलमरीचप्रभृत्युष्णोपस्करसामग्र्यस्तथा कहवा इत्याख्यपेयविशेषा नारिकेलमिक्षवश्च पर्याप्त भवन्ति, किन्त्वन्यासा प्राकृतिकसम्पत्तीनामतीव न्यूनो विकासोऽजायत।

**सुमात्रायां विलम्बेन भारतस्य न्यूनप्रभावस्य कारणम्**—अन्यद्वीपापेक्षाया भारतस्य सान्निध्येन सुमात्राविषये कल्पनेयं स्वाभाविक्यस्ति यद् जावाप्रभृत्यपेक्षयाऽत्रोपवेशन प्रथमं जातं भवेत्, तथा हिन्दुसभ्यताया गम्भीरः प्रभावो भवेत्, किन्तु सुमात्राया भूरचनैवैतादृशी विद्यते यदयं देशः पश्चिमत आगामिना दुष्प्रवेशोऽस्ति। पश्चिमतटसम्बद्धाः पर्वतमालाः दुष्प्रवेशानि काननान्यावासकाना कृते बाधा आसन्, तत्र तेषा निवासाय नदीनां तीरमुर्वरभूमिभागान्तरञ्च नासीत्, पूर्वोत्तरयोस्तादृशस्य प्रदेशस्य सत्त्वेनास्योपनिवेशन जावाद्वीपादागामिभिः कृतम्। सुमात्राद्वीपे हिन्दुनामरबदेशीयाना यूरोपवासिनाञ्च सर्वतो न्यून प्रभावोऽभूत्।

## सुमात्रायाः प्रारम्भिकं हिन्दुराज्यम्

द्वीपस्यास्यारम्भिकेतिहासस्य मुख्य स्रोतश्चीनदेशीया ग्रन्थाः सन्ति। ततो ज्ञायते यत् तस्मिन् काले सुमात्राद्वीपे एकं शक्तिशालि राज्य नासीत्, किन्त्वनेकानि लघूनि राज्यान्यासन्। तेष्वेकम् "मोलो–ये–उ" आधुनिक नाम (जम्बी) इत्यासीत्। इद सम्भवतो भारतीयमलाययोर्विकृत रूपमासीत्। राज्यान्तरस्य नाम 'तोलंग–पओ–होउ अङ्ग' इत्यासीत्। अस्यै तस्माद् द्वीपात् पूर्वदक्षिणयोर्वर्तमानेन तुलङ्गबङ्गेनाभिज्ञान विहितम्, किन्तु पश्चादनयोर्द्वयोः स्थान श्रीविजयेन ( अरबी–श्रिबज, चीनी–फो–छे ) गृहीतम्। सम्भवतो राज्यमिद चतुर्थशतकखीष्टीयाब्दे स्थापितमासीत् किन्तु सप्तमशतकमध्यपर्यन्त तस्य राजनीतिक उत्कर्षो न जातः। ६८९–६९२ मध्ये चीनयात्रिणा इत्सिङ्गेन लिखित यत् "श्रीविजयेन ( श्रीभोजेन ) मलायु-( जाम्बी ) राज्यस्य स्थान गृहीतम्।" दक्षिणसमुद्रस्य द्वीपेषु श्रीविजया बौद्धधर्मस्य केन्द्र विद्यते। अत्र मूलसर्वास्तिवादसम्प्रदायस्य प्रचारोऽस्ति, राजा त्रिरत्नस्य भक्तो विद्यते, नगरे सहस्रभिक्षवः सन्ति। सुवर्णमतीवोत्पद्यते बुद्धमूर्तौ च सुवर्णपुष्पाणि समारोपयतः श्रीविजयस्य भारतेन चीनेन च साकं पोतैः सम्बन्धो वर्तते। श्रीकेदेमहोदयेन श्रीविजयस्याभिज्ञान पालेम्बाङ्गेन कृतम्।

## श्रीविजयः

श्रीविजयस्य स्थानमवश्यमनिश्चित विद्यते, किन्तु सप्तमे शतकेऽस्य प्रबलराजनीतिक-प्रभावस्य निश्चित साक्ष्य चतुर्भ्योऽभिलेखेभ्यः प्राप्यते। ते मलयभाषाया सन्ति। तेभ्य इदं ज्ञायते यत् ६८३ खीष्टियाब्दपर्यन्त श्रीविजय एक शक्तिसम्पन्न राज्य सञ्जातम्। तेन मलायुराज्ये (जाम्बी) वङ्काद्वीपे च प्रभुता स्थापिता। अत्रत्यो राजा जयनाशो बौद्ध आसीत्।

श्रीविजयः सप्तमे शतके सुवर्णद्वीपस्य न केवल राजनीतिकमपि तु सास्कृतिकमपि केन्द्रं बभूव। क्रोम इत्याख्यविदुषेद लिखित यद् जयनाशस्याक्रमणात् पूर्वं सुमात्राद्वीपे द्वे धार्मिककेन्द्रे आस्ताम्। प्रथम मलायुराज्यस्य पश्चिमे बौद्धमन्दिरमेक द्वितीयञ्च ततः पूर्वं हिन्दुधर्मस्य सिद्धयात्रा कर्तुं तीर्थस्थानमासीत्। द्वीपादस्मादुपलब्धा बुद्धस्य पाषाणमयी महती प्रतिमा अत्र बौद्धधर्मस्य प्रचारं सूचयति। हिन्दुप्रभावः फाहियानस्य वर्णनेन स्पष्ट भवति। सोऽत्रातिन्यूनान् बौद्धानुल्लिखति। इत्सिंगस्य वर्णनेनापि स्पष्टमस्ति यत् पूर्वमत्र हिन्दुप्रभावो महानासीत्, ६८१ खीष्टीयाब्दे तेनात्र शब्दविद्याधीता, किन्तु जयनाशस्य जयानन्तर द्वीपमिद महायानस्य केन्द्रमभूत्।

## ४. बालिः

## भौगोलिकः परिचयः

जावाद्वीपस्य पूर्वं बालिद्वीपमस्ति। द्वयोर्मध्ये पादोनक्रोशमिता विशाला जलग्रीवा विद्यते। इदमतीव लघु द्वीप विद्यते। अस्याधिकतम दैर्घ्य सार्द्धषट्चत्वारिंशत्क्रोशमित विशालता च पञ्चविंशतिक्रोशमिता, क्षेत्रफलञ्च २०९५ वर्गमीलमित वर्तते। जनसख्या ९,४६,३८७ विद्यते। सकले द्वीपे ज्वालामुखपर्वताना शृङ्खला प्रसृता विद्यते, किन्त्वेतदुभयत उर्वरा उपत्यका भूभागाश्च सन्ति।

## बालिवैशिष्ट्यम्

भूमिलघीयसोऽस्य द्वीपस्येद वैशिष्ट्यमस्ति यद् हिन्दुसभ्यताऽत्राद्यापि इस्लामधर्मेण द्वीपान्तरेषु हिन्दुसस्कृतिरन्त नीता, किन्तु द्वीपेऽस्मिन् तेनाय धर्मो न प्रतिहन्तुमशाकि। भारतीयोपनिवेशनस्यारम्भिकस्वरूपे बालिद्वीपस्य गम्भीरतयाऽध्ययनेनातीव प्रकाशो भवितु शक्नोति, तथा सहैवेदमपि ज्ञातु शक्यते यद् भारतीया सस्कृतिरादिवासिना विश्वासश्च कथङ्कार परस्पर प्रभावयतः स्म। बालिद्वीपस्य इस्लामात् सुरक्षायाः कारण तस्य दुर्गमताऽस्ति। उत्तमाना पोतनिरोधस्थानानामभाव आसीत्, मध्ययुगे यवनैर्जावाया विजिताया तत्रत्या रक्षार्थमस्मिन् सुरक्षिते स्थाने समागताः।

## बालेः प्रारम्भिक इतिहासः

बालिद्वीपे भारतीयसस्कृनावद्यापि जीवन्त्यामपीयमतीव विलक्षणा घटना विद्यते यत् तत्रैतत्कालपर्यन्त कश्चन प्राचीनोऽभिलेखो मूर्तयोऽन्ये वाऽवशेषा न प्राप्ताः। प्रारम्भिके

काले तस्येतिहास ज्ञातुमेकमेव साधन चीनदेशीयविवरणमस्ति। लियाङ्गवंशेतिहासेषु (५०२–५५६ खी०) पोली (सम्भवतो बालिद्वीपस्य चीनीयरूपान्तरम्) राज्यस्य वर्णन विद्यते[1]। तेन ज्ञायते यत् षष्ठशतकस्य प्रारम्भे एक हिन्दुराज्य स्थापितमासीत्। अत्र बौद्धधर्मस्य प्रचार आसीत्। राज्ञः परिवारस्य नाम कौण्डिन्य आसीत्। ५१८ खीष्टीयाब्देऽनेन स्वकीयो दूतश्चीनदेशे प्रहितः। ततः पूर्वमस्य चीनदेशेन कश्चन सम्बन्धो नासीत्। राजा स्वपूर्वजविषये किमपि न जानाति स्म, किन्तु पुनरपि तस्येद कथनमासीत् यत् शुद्धोदनस्य पत्नी बालिद्वीपस्य कन्याऽऽसीत्। राज्ञः परिधान पुष्पवत् सौवर्णपत्रयुक्त दुकूलमासीत्, तस्य मुकुटो बहुमूल्यैर्मणिभिर्मण्डित आसीत्। यदा स सौवर्णं सिंहासनमधितिष्ठति तदा तस्य पादौ राजत पादपीठमवलम्बते स्म। सर्वालङ्कारालङ्कृतपरिचारिकासु काश्चन श्वेतपक्षैर्मयूरबर्हैर्निर्मितैश्चामरैस्त सेवन्ते स्म। राजा पीठस्थापितचन्दनपीठ हस्तिनमारुह्य बर्हिनिर्गच्छति स्म। तस्योपरि पक्षच्छत्रमुभयतश्च कुथो भवति स्म। शङ्ख मृदङ्ग च वादयन्तो जनास्तस्याग्रे पृष्ठे न गच्छन्ति स्म (मसु० १।१३४–५)।

एतत् सकलं वर्णन भारतस्य प्राचीनाना राज्ञा वैभवपूर्ण जीवनं स्मारयति। गौतमबुद्धस्य मात्रा स्वसम्बन्धस्थापनेनास्य राज्ञो बौद्धत्वे भारतीयत्वे च सन्देहो नावशिष्यते। चीनदेशीयविवरणानुसारेण बालिद्वीपस्य काश्यपीरतिभि' ५१८ तथा ५२३ खीष्टीयाब्दे चीनदेशीयसम्राजः पार्श्वे दूतमण्डल प्रहितम्। सुईवंशस्येतिहासे बालिराजस्य पारिवारिक नाम 'चत्रिक' इति प्रतिपादितम्। ६१६ खीष्टीयाब्देऽनेनैक दूतमण्डल चीनदेशे प्रहितम्। गोएनवैन्टेल्याख्यविदुषा चारियक इति संस्कृतक्षत्रियशब्दस्य चीनरूपमस्तीति समर्थितम्। सुई-इतिहासेषु बालिद्वीपे चक्रनामकशस्त्रप्रयोगस्य शारीनामकपक्षिविशेषस्य च वर्णन विद्यते। चक्र स्पष्टत पुराणे वर्णित श्रीकृष्णस्य विशिष्टमायुधमासीत्, शारीपक्षी च भारतीयः सारिका पक्ष्यासीत् (मसु० १।१३५–६)।

सप्तमस्य शतकस्यान्ते इत्सिंगमहोदयेन दक्षिणसमुद्रे बालि (पोली) विषये लिखित यत् तत्र मूलसर्वास्तिवाद सर्वेऽङ्गीकुर्वन्ति[2]। उपर्युक्तविवरणात् स्पष्ट विद्यते यत् षष्ठशतके खीष्टीयाब्दे च बालिद्वीपे भारतीयसंस्कृतेः प्रसारो जातः।

## सुवर्णद्वीपस्य प्राचीना संस्कृतिः (ई० सप्तमशतकपर्यन्तम्)

सप्तमशतकं यावत् सुवर्णस्य विविधेषु द्वीपेषु स्वतन्त्राणि राज्यान्यासन्। अष्टमे शतके शैलेन्द्रैः शक्तिसम्पन्नमेकं साम्राज्य सस्थाप्य स्वतन्त्राणि राज्यानि विलय नीतानि। तेन सुवर्णं

---

१. पोली इत्येतत् ग्रइनवैल्डमहोदयेन सुमात्रा तथा इलियटमहोदयेन बोर्नियो इत्यमानि (इलियट ३।१६३)।

२. इत्सिंग ए रेकर्ड आफ दी बुद्धिष्ट रिलीजन एज प्रोक्टेस्ट इन इण्डिया एण्ड मलय आर्कि पे लेगो (ए० डी० ६७१–६९५) तकाकुसु इत्यस्यानुवादः, आक्सफोर्ड १८९६।

द्वीपस्य राजनीतिकेतिहासे नवयुगस्य प्रारम्भो जातः। तस्यावलोकनात् पूर्वं खीष्टीयाब्दप्रथमसप्तशतकानां सुवर्णद्वीपस्य सभ्यताया विहङ्गमावलोकनं समुचितं प्रतीयते।

## धर्मः

मलाया-जावा बोर्नियो इत्येतेषामभिलेखैस्तथोपरितनेन वर्णनेन स्पष्टमिदं विद्यते यत् सुवर्णद्वीपं भारतीयां संस्कृतिं पूर्णतया स्वीचकार। तत्र हिन्दुबौद्धधर्मयोः प्रसार आसीत्। हिन्दुधर्मस्य याज्ञिकपौराणिकयोरुभयोरूपयोः प्रचार आसीत्। बोर्नियोद्वीपस्याभिलेखेषु यज्ञानां स्पष्टमुल्लेखोऽस्ति, किन्तु तदपेक्षया शिवविष्णूपासनासमर्थकस्य पौराणिकधर्मस्याधिकः प्रचार आसीत्। मलायाद्वीपाद् दुर्गाया गणेशस्य नन्दिनश्च मूर्तयः प्राप्यन्ते। बोर्नियोद्वीपाद् विष्णोर्ब्रह्मणः शिवस्य गणेशस्य नन्दिनः स्कन्दस्य महाकाल्याश्च प्रतिमा उपालभ्यन्त। जावाया शिलातलेषु शङ्खचक्रगदापद्मत्रिशूलाना चिह्नान्यङ्कितानि सन्ति। पञ्चमशतकस्य प्रारम्भ यावद् बौद्धधर्मस्यात्रातीव न्यूनः प्रचार आसीत्। अस्य शतकस्य प्रथमे चरणे गुणवर्मणः प्रयत्नेनात्र बौद्धधर्मस्य प्रचारो वृद्धिं गन्तुमारेभे। सप्तमशतकं यावत् श्रीविजयः (सुमात्रा) बौद्धधर्मस्यैतावन्महत् केन्द्रमासीद् यदित्सिगो भारतं गच्छन्नत्र षण्मासान् स्थितः। तेन स्वयात्राविवरणे भारतं गत्वा बौद्धधर्माभिलाषाणां चीनवासिनामामन्त्रणा कृता। यदि तेऽत्र स्थित्वा व्याकरणाभ्यासानन्तरं भारतं गमिष्यन्ति तदातीव शोभनं भविष्यति। तेन स्वयं तथैव शब्दविद्याऽधीता। चीनदेशात् प्रतिनिवर्तनान्तरं पुनः श्रीविजयं समागतस्तथात्र तेन भारतात् स्वेन साकं समानीतानां ग्रन्थानां प्रतिलिप्यनुवादौ कृतौ। तस्मिन् काले श्रीविजयो बौद्धधर्मशास्त्राणां भारतीयविज्ञानस्य प्रसिद्धमेकं केन्द्रमासीत्। तत एव सकले सुवर्णद्वीपे महायानबौद्धधर्मः प्रसृतः। अत्रानेके विख्याता भारतीया विद्वांस आजग्मुः। सप्तमे शतके खीष्टीयाब्दे काञ्चीनिवासी नालन्दायाः प्रसिद्धोऽध्यापको धर्मपालः सुवर्णद्वीपे समागतः। अष्टमस्य शतकस्य प्रारम्भे चीनं गच्छद्भ्याममोघवर्षवज्रबोधिभ्यां श्रीविजये पञ्च मासान् न्युषितम्। चीनदेशे तान्त्रिकमहायानस्याद्यौ प्रचारकौ इमावेव मन्येते। इदं स्मर्तव्यं यदस्य युगस्यान्तिमेषु शतकेषु एवात्र बौद्धो धर्मः प्रबलोऽभूत्। प्रारम्भे शैवधर्मस्य प्राधान्यमासीत्, तत्तुलाया विष्णोस्तथागतस्य चोपासकानां सङ्ख्या नगण्याऽऽसीत्।

## साहित्यं कला च

युगेऽस्मिन् सुवर्णद्वीपे संस्कृतभाषाया महान् प्रचार आसीत्। तत्रत्या अभिलेखा अनुष्टुप्स्रग्धरोपजातिप्रभृतिच्छन्दोभिरालङ्कारिकभाषाया निबद्धाः सन्ति। तत्रैरावतस्य विष्णोर्भारतीयोपमाना भारतीयमासस्य भारतीयतिथिमानयोश्च प्रयोगो विद्यते। गङ्गा पवित्राऽस्तीति हिन्दुविचारस्तत्रोपलभ्यते। भारतीया आवासका मातृभूमितो दूरे स्थिता अपि गङ्गां न विस्मृतवन्तः। ते यदा नूतनानि भौगोलिकनामानि रक्षन्ति स्म, तदाऽऽर्यावर्तं स्मरन्ति स्म। जावायाश्चन्द्रभागागोमतीकुल्ये तस्योदाहरणमस्ति। कलाक्षेत्रेऽत्र भारतीयः प्रभावस्तथाऽधिकोऽस्ति यत् सुवर्णद्वीपस्य प्राचीनमूर्तीनां भारतीयप्रतिमानाञ्च कश्चन भेदो दृष्टिगोचरो भवति।

## आचारव्यवहाराः

चीनदेशीयविवरणेन ज्ञायते यत् सामाजिकव्यवस्थाया साधारणाचारव्यवहारयोश्च सुवर्णद्वीपवासिनो भारतस्यानुकुर्वन्ति स्म। तत्र ब्राह्मणक्षत्रियजाती अस्ताम्। तनतननामकस्यैकस्य राज्यस्य ( अस्य परिचयोऽद्यापि न जात. ) विषये इद कथ्यते यत् तत्रत्यो राजा क्षत्रियो विद्यते। तस्याष्टौ ब्राह्मणेभ्यो निर्वाच्यन्ते। कलनामके एकस्मिन् राज्ये भारतीयवीणाया वश्याः खञ्जतालस्य प्रयोगः प्रत्यपाद्यत। इदञ्चापि कथित यदत्रत्या जना मृतानामग्निसस्कार कुर्वन्ति, पुष्पभस्मनी एकस्मिन् पात्रे निधाय समुद्रे निक्षिप्येते।

## शैलेन्द्र-श्रीविजययोरुत्कर्षापकर्षौ ( अष्टमशतकात् चतुर्दशशतकं यावत् )

अष्टमशतकाद् द्वादशशतक यावत् शैलेन्द्रराजानः सुवर्णद्वीपस्य प्रधानशक्तिरासन्। तैर्लघूनी राज्यानि स्वयात्तीकृत्यैकं विस्तृत शक्तिशालि समृद्ध साम्राज्य स्थापितम्। अरबयात्रिणोऽस्य 'जाबगयाजाबज' इति नाम कृतवन्तः, अस्य विस्तारं वैभव च गीतवन्त.। मसऊदीमहोदयस्य शब्देषु ( ९४३ खी० ) अत्रत्यो महाराजोऽसीम साम्राज्य शास्ति। तस्य सेनाऽसख्या द्रुततमगामिनः पोताश्च तस्य वशवर्तिना द्वीपाना परिक्रमण वर्षद्वयेऽपि समाप्नुवन्ति। राज्ञोऽस्य प्रदेशेष्वनेकप्रकारकोपस्करसामग्र्यो व्यञ्जनानि सौरभद्रव्याणि चोत्पद्यन्ते, ससारस्यान्येन केनचन सम्राजा स्वभूमितोऽनेन यावती सम्पत्ति. प्राप्यते न तावती। अलबेरूनी इत्याख्यविदुषा जाबज इत्यस्य सुवर्णद्वीपनामकरणे इद कारण प्रतिपादितं यत् तत्रत्या स्वल्पाऽपि भूमि. किञ्चित्काल निरीक्ष्यते, तदा बहु कनक समुपलभ्यते। इब्नखुर्दादवेह (८४४–८४८) महोदयेन राज्ञो दैनिक आयः २०० मणपरिमित सुवर्ण प्रतिपादितम्। स तस्येष्टका निर्माय जले प्रक्षिपति (मसु० १।१६०)। जैदहसन( ९१६ खी० )महोदय इष्टकावृत्तान्तमावर्तयन् त प्रायो मलयद्वीपावलीसमस्तद्वीपाना शासक प्रतिपादयति। सुलेमान ( ८५१ खी० ) इत्याख्येन विदुषा जाबजमहाराजेन कम्बुजो विजित इत्यप्युल्लिखितम्।

सर्वतो महत् स्मारकं बरबुडुर इत्याख्यः स्तूपो वर्तते। अग्रेऽस्योल्लेखो भविष्यति, अत्रास्मिन् विषये कतिपयाना नवीनाना तथ्यानामुल्लेखो भविष्यति। अद्य यावद् बरबुडुर इत्यस्य नवभूमयो मन्यन्ते स्म। द्वितीयस्मिन् विश्वयुद्धे जापानवासिभिर्जावा विजित्य १९४२–४५-पर्यन्त स्वस्मिन् स्वल्पे शासनकालेऽस्याधारस्य विदलनेनेद ज्ञात यदस्य मूलाधारे पाषाणेषु तादृशान्येव चित्राण्युत्कीर्णान्यासन् यादृशानि उपरितनीना भूमिना वरण्डेषु ( द्वाहि० सौ०, पृ० ४३ )। इत्थमद्यत्वेऽस्य नव नहि किन्तु दशभूमयो मन्तव्याः। ८४२ खीष्टीयाब्दस्यैकेन शिलालेखेन कैस्पेरिसमहोदयेनाय परिणामः प्राप्तो यद् बरबुडुरस्य वास्तविक नाम भूमिसम्भारभूधरोऽर्थाद् बोधिसत्त्वस्य दशानामवस्थाना सग्रहपर्वतः। भूमिर्महायानबौद्धधर्मस्यैकः पारिभाषिकः शब्दोऽस्ति, निर्वाणाय बोधिसत्त्वसोपानस्य दशभूमिष्वारोहणं कुर्वन् जनो बुद्धत्व-

मारोहिति। असङ्गदशभूमिशास्त्रे एतेषां विस्तरेण वर्णनं विद्यते[1]। कैस्पेरिसमहोदयमतानुसारेण बरबुडुरस्य दशभूमयो दशभूमीनामासां प्रतीकरूपाः सन्ति। सर्वतो निम्ना भूमिः प्रथमां भूमिं प्रकटयति, उपरितनी भूमिः बोधिसत्त्वोन्नतामवस्थां द्योतयति। अस्य समर्थनमस्यालङ्करणैरपि भवति। यत्र मानवात्मनोऽर्द्धगोविकासः प्रदर्शितो विद्यते। निम्नासु चतसृषु भूमिषु यान्यलङ्कारणानि चित्राणि च सन्ति, तानि बुद्धस्य बोधिसत्त्वस्य च जीवनेन सम्बद्धानि सन्ति। अत्र मनुष्यो-ऽद्यापि स्वकामाद् दृश्यजगतो बन्धाच्च मुक्तो नाभूत्। अत इमा भूमयः कामधातवो रूपधातवश्च उच्यन्ते। तदस्तिसृषु वृत्ताकारासु भूमिषु किमप्यलङ्करणं नास्ति, इदं कामरूपयोर्बन्धनाद् विमुक्तस्यात्मनः प्रतीकमस्ति। अयमरूपो धातुरुच्यते, अत्र ७२ स्तूपेषु ध्यानावस्थानां बुद्धानां मूर्तयः सन्ति।

शैलेन्द्राणां जावायां महायानधर्मोऽतीव समन्वयात्मक आसीत्। केलुरकाभिलेखे मञ्जुश्रीः बौद्धधर्मस्य त्रिरत्नस्य हिन्दुधर्मस्य त्रिमूर्त्या साकमभेदं प्रतिपादयति, सर्वदेवमयत्वं प्रतिपादयति। विभिन्नदेवानां मौलिकैकतासिद्धान्तेन द्वौ महत्त्वपूर्णौ परिणामौ समुत्पादितौ स्तः। प्रथमस्त्वयमासीद् यदनेन जावावासिनामादिमधार्मिकविश्वासानां भारतीयधर्मेण साकं सम्मिश्रण-मतीव सुगममभूत्, द्वितीयश्चायं यदनेन बौद्धहिन्दुधर्मावैकत्वं प्राप्तवन्तौ। शैलेन्द्राणां प्रधानं प्रेरणास्रोतो वङ्गदेश आसीत्, तथा तात्कालिकसङ्गीतस्य परिचयोऽस्माभिरधुना प्रचालितेन स्लेन्द्रो नामकेन नूतनेन रागेण प्राप्यते[2]।

## इस्लामधर्मस्यागमनम्

श्रीविजयस्य सांस्कृतिकविघटनस्य विशिष्टं कारणं सुमात्रायाम् इस्लामधर्मस्य प्रवेश आसीत्। अस्य प्रथमः सङ्केतोऽस्माभिः १२८१ तमे ख्रीष्टीयाब्दे प्राप्यते, अनेन सुलैमानशम-सुद्दीननामानौ द्वौ यवनव्यापारिणौ स्वदूतत्वेन चीने प्रेषितौ। १२९२ ख्रीष्टीयाब्दे मार्कापोलो इत्यनेन उदीच्यसुमात्रायां कानिचिद् लघूनि राज्यानि इस्लामधर्मानुयायीनि दृष्टानि, समुद्रनामक-राज्ये १२९७ ख्रीष्टीयाब्दस्यैकस्मिन् लेखे यवनशासकस्य विधभृत्योरुल्लेखो विद्यते। इत्थं शैलेन्द्राणां बौद्धसाम्राज्यं स्याम-जावा इस्लाम इत्येषां सम्मिलितप्रभावेण क्षीणमभूत्। अस्य च स्थानम् अरब-देशीयैर्गृहीतम्।

---

१. इमा दश भूमयो निम्नाः सन्ति—मुदिता, विमला, प्रभावकरी, अर्चिष्मती, सुदुर्जया, अभिमुक्तिः, दुरङ्गमा, अचला, साधमती, धर्ममेघः। एतस्य संक्षिप्तपरिचयार्थं द्र० बलदेव-उपाध्याय-बौद्धदर्शनम्, पृ० १६८—१७१।

२. इयमस्य नाम्ना नवीनतमा व्याख्याऽस्ति। १८११—१६ सर्वप्रथमस्यान्वेषणमुत्खननकर्त्रा इन्डोनेशिया इत्यस्य ब्रिटिश ले० गवर्नर-सर-स्टैम्फोर्ड रैफल्समहोदयेन कृतं तदनुसारे-णास्य जनपदस्य बोरो इति नामासीत्। बुडुरशब्दः प्राचीनस्य वाचक आसीत्, क्रोम इदं जावीयभाषायां नाम मन्यते, अन्ये विद्वांस बरेति बोरेति वा।

३. एतस्य विस्तृतपरिचयार्थं द्र० नी० हि० श्री०, पृ० ६२—७५।

## जावाराज्यानि ( ८ शतकात् १५ शतकं यावत् )

शैलेन्द्राणां प्रतापसूर्योऽष्टमे शतके मध्यजावायामुच्चतमां कोटिं प्राप्तः। तेन जावाद्वीपस्य शैववंशेन पूर्वाभिमुखं गन्तुं विवशता अनुभूताऽऽपरं नवमे शतके शैलेन्द्रेषु सुमात्रां प्राप्तेषु जावाद्वीपेऽनेकानि राज्यानि प्रबलान्यभूवन्। चतुर्दशे शतकेऽत्रत्यं बिल्वतिक्तसाम्राज्यं सुवर्णद्वीपस्य सर्वतो महती शक्तिरभूत्। पञ्चदशे शतके आन्तरदौर्बल्येन बाह्याक्रमणेन च साम्राज्यस्यास्यान्तो जातः, ततश्च किञ्चित्समयानन्तरं सुवर्णद्वीपे हिन्दुराज्यानां भारतीयसंस्कृतेश्च लोपोऽभूत्।

जावायां राजनीतिकशासनस्य केन्द्रं शनैः शनैः पश्चिमतः पूर्वाभिमुखमपससार। पञ्चमषष्ठशतकयोः पूर्णवर्मणो राजधानी तारुमस्थाने प्रतीच्यजावाद्वीपमासीत्। आगामिषु सहस्रेषु वर्षेषु पूर्वं मध्यजावायां मतरामराज्यं पश्चात् पूर्वजावायाः कद्रिश्रीराज्यम् ( ११०४–१२२२ खी० ), सिंहसारीराज्यम् ( १२२२–१२९२ खी० ) अजयहिलराज्यं च शक्तिसम्पन्नान्यभूवन्। तदनन्तरं षोडशे शतके इस्लामधर्मावलम्बिनां राज्यप्रसारेण भारतीया संस्कृतिरत्र निर्बला समजनि।

## ३ बालिः

मलयद्वीपावलौ बालिर्लोम्बोकश्चैव तथाविधे द्वीपे स्तः, यत्र हिन्दुसंस्कृतिरद्यापि जीवति। अत्रत्यस्य हिन्दुराज्यस्य समाप्तिं गतस्येदानीमर्द्धशतकमपि नाभूत्। पूर्वमिदं प्रत्यपाद्यत यत् षष्ठशतकस्य प्रारम्भेऽत्रैकं हिन्दुराज्यं स्थापितमासीत्। अस्य स्थापका भारतीया जावाप्रभृतिसमीपस्थद्वीपेभ्यो न, किन्तु साक्षात् भारताद् समागता, यतो हि बालिद्वीपस्य प्राचीनाभिलेखभाषाया जावाभाषया कश्चन सम्बन्धो नास्ति। अत्र भारतीयावासकानां प्रयत्नैर्दशमशतकं यावत् स्वातन्त्र्येणैव हिन्दुसंस्कृतेर्विकासः समपद्यत। जावाद्वीपस्य प्रतिवेशिनामपि द्वीपस्यास्य निवासिनां भाषा वर्णमाला यवद्वीपाद् भिन्ने स्तः।

**बालिद्वीपस्यारम्भका राजानः**—बालिद्वीपस्य निश्चयेन ज्ञातः प्रथम ऐतिहासिको राजा उग्रसेनो विद्यते। अस्य शासनकालः सम्भवतः ९१५–९३३ खीष्टीयाब्दे विद्यते। ततस्तबनेन्द्रवर्मदेवः ( ९५५ खी० ) चन्द्रभयसिंहवर्मदेवश्च ( ९६२ खी० ) ज्ञायेते। ततो जनसाधुवर्मदेवस्य ( ९७५ खी० ) श्रीविजयमहादेव्याश्च ( ९८३ खी० ) शासनमभूत्। दशमस्य शतकस्य श्रीकेशरिवर्मा सर्वेषां प्रतिवेशिनां राज्ञामीश्वरः प्रत्यपाद्यत।

**बालिद्वीपे जावाया आधिपत्यम्**—एकादशशतकस्य प्रारम्भतो बालिद्वीपे जावायाः पूर्णप्रभावः प्रारभ्यत। जावेश्वरस्य श्रीमुकुटवंशवर्द्धनस्य कन्या महेन्द्रदत्ता उदयनेन परिणीता। इमौ द्वौ १०२२ खीष्टीयाब्दे बालिद्वीपशासकावास्ताम्। अस्यापत्यम्मेरलिङ्ग आसीत्। महेन्द्रदत्ता बालिजावाप्रभाववर्द्धनस्य प्रधानं कारणं भवेत्। सम्भवतः शतद्वयवर्षपर्यन्तं बालिजावाधीनोऽभूत्। त्रयोदशस्य शतकस्य प्रथमे चरणे कडिरीसिंहसारीसंघर्षोऽभूत्। इत्थं प्रतीयते यद् बालिस्तेन स्वाधीनतां लब्धवान्। तस्य समयस्यैक एव राजा परमेश्वरः श्रीह्यङ्गनिङ्गह्यङ्ग—आदि-

लाञ्छनः ( शा० का० १२५० खी० ) ज्ञातो विद्यते । बालिद्वीपस्येद स्वातन्त्र्यं बहुकालं न स्थिर जातम् । १२८४ खीष्टीयाब्दे जावेश्वरेण कृतनगरेण तद् विजितम् । कृतनगरस्य दुःखपूर्णान्तात् परम् ( १२९२ खी० ) इद स्वतन्त्र जातम् , किन्तु चतुर्दशे शतके इदं विल्वतिक्तस्य साम्राज्य-स्याधीन जातम् । ततो जावाद्वीपेन साक तस्य सम्बन्धो गाढो भवितु प्रवृत्तः ।

**जावराजस्य बालिद्वीपाश्रयणम् ( १५२२ खी० )**—यदा जावाद्वीपे विल्वतिक्तस्य राजा यवनसेनापराभूतोऽभूत् ( १५२२ खी० ), तदा स्वधर्मं रक्षितु स बालि शरण प्रापत् । राजपरिवाराः कुलीनाश्च जना अस्मिन् द्वीपे समागताः । इदं हिन्दुसस्कृतेरन्तिम केन्द्रमभूत् । अत्र जावायाः प्रभावस्य प्राधान्यमभूत् । अद्य यावद् बालिद्वीपस्याधिका जना आत्मान विल्व-तिक्तस्य जन ( वोङ्गमजयहित ) कथयन्ति । विल्वतिक्तस्य राजपरिवारो बालेः शासकोऽभूत् । षोडशशतकमध्ये तैः शासकैः स्वराज्यविस्तारो विहितः । अष्टादशशतकान्त यावद् बलवङ्गनेति ( जावायाः दक्षिणपूर्वकोणः ) एषामधिकारेऽभूत् । बालिद्वीपं शासनदृष्ट्या नवजनपदेषु विभक्त-मासीत् । तेषामधिकारिण. स्वतन्त्रा राजानः सवृत्ता आसन् । हालैण्डवासिभिरतीवकाठिन्येन ते विजिताः ।

**बालिद्वीपस्यान्त्यस्य राज्ञः स्वातन्त्र्याय प्राणविसर्जनम् ( १९०८ खी० )**—१९०८ खीष्टीयाब्दे विल्वतिक्तवशस्यान्तिमो राजा क्लुङ्ककुगदेव अंगग इति हालैण्डदेशवासिना दासताया मुक्त्यैऽन्तिम प्रयत्न कृतवान् । हालैण्डवासिभी राजप्रासादे आवृते साफल्यस्याशाऽभावेऽपि तेनात्मसमर्पणेन प्राणरक्षाऽपमानजनकः प्रस्तावो न्यक्कृत. । क्षत्रियशौर्य पुरस्कृत्य स स्वमित्रैः स्त्रीबालकैः साक खड्गमादाय बहिरागतो युध्यमानश्च वीरगति प्राप्त ( मसु० १।४२८ ) । १९११ खीष्टीयाब्दे बालिद्वीप हालैण्डसाम्राज्यस्याङ्गमभूत् , किन्तु बलिभूताना जनाना रक्त व्यर्थ न भवति । द्वितीयविश्वसग्रामानन्तर बालिद्वीपसहितः सकल. हिन्देशियाप्रदेशो हालैण्डवासिना पराधीनताया मुक्तः ।

**सांस्कृतिकेतिहासः ( अष्टमशतकात् पञ्चदशशतकं यावत् )**—सुवर्णद्वीपे भारतीय-संस्कृतेः सर्वतोऽधिकोऽवशेषो जावायामुपलभ्यते । अत्र मुख्यतया तानाश्रित्याष्टमशतकात् १५ शतक यावद् मलयद्वीपावलेर्भारतीयधर्मसाहित्यसामाजिकावस्थाराजनीतिव्यवस्थाकालाना परिचयो दास्यते । सप्तमशतकपर्यन्त सास्कृतिकेतिहासस्य पूर्वमुल्लेखो जातः । ततः पूर्व जावाद्वीपस्य राजनीतिककेन्द्र मध्यजावा तथा पश्चात् पूर्वजावाऽभूत् । सस्कृतिरेतेषु स्थानेष्वधिक विकसिताऽ-भूत् । अष्टमे नवमे च शतकयोर्मध्यजावाद्वीपे हिन्दुबौद्धधर्मयोर्विलक्षणौ जागरोत्साहौ दृश्येते । तौ सम्भवतो नवीनानामावासकाना शैलेन्द्राणाञ्च कारणादास्ताम् । पञ्चदशशतक यावदत्रार्या-वर्तस्य सस्कृतिः पुष्पिता विकसिता च ।

**धर्मः**—सुवर्णद्वीपे बौद्धपौराणिकौ द्वावपि धर्मौ प्रचलितावास्ताम् । तयोः प्राधान्य पौराणिकधर्मस्यासीत् । पञ्चमशतक यावत् सम्भवतो जावाद्वीपस्यायमेक एव धर्म आसीत् । ४२३ खीष्टीयाब्दे गुणवर्मणा बौद्धधर्मे प्रवेशितेऽप्यस्य लोकप्रियता क्षतिग्रस्ता नाभूत् । अभिलेखैर्मन्दिरैर्मूर्तिभिः प्राचीनधर्मग्रन्थैश्चेद ज्ञायते यदत्र ब्रह्मणो विष्णोर्महेश्वरस्य च तेषा

शक्तीना तत्सम्बद्धदेवानाञ्चातीव पूजाऽभवत्। शैवधर्मो वैष्णवधर्मापेक्षया कामं लोकप्रिय आसीत्। मूर्तिषु शिवस्य प्राधान्यमासीत्।

**शैवधर्मः**—जावाद्वीपे शिवस्य मूर्तयो मन्दिराणि चान्यसर्वदेवापेक्षयाऽऽधिक्येनोपालभ्यन्त। ७३२ खीष्टीयाब्दे चङ्गलाभिलेखे राज्ञा सजयेन स्थापितस्य शिवलिङ्गस्य वर्णन विद्यते। अत्र कृत शिववर्णन पौराणिककल्पनया पूर्णतया संवदति।

**शिवस्य विभिन्नं रूपम्**—जावाद्वीपे भारतवत् शिवस्य लोकोपकारकत्वेन सृष्टिसहारकत्वेन च पूजा क्रियते स्म। इमौ द्वौ क्रमेण महादेवो महाकालोऽथवा भैरव उच्यते स्म। महादेवो मूर्तौ त्रिलोचनत्वेन प्रदर्श्यते, शिरसि चन्द्रो भवति, एको नागस्तस्य यज्ञोपवीत भवति। प्रायस्तस्य चतुर्षु हस्तेषु चामरम्, अक्षमाला, त्रिशूलम्, कमल कमण्डलुः पुस्तकञ्च भवति। भैरवस्य मूर्तिरतीव विकराला भवति। तस्य भयङ्करे नयने बहिर्निःसृतदन्ताः, इतस्ततो निक्षिप्ता जटाः, मुण्डमाला च द्रष्टॄणा मनसि भयमुत्पादयन्ति। अस्य हस्ते चामरत्रिशूलाक्षमालातिरिक्ता गदाखड्गपाशसर्पशङ्कुला भवन्ति। अस्य चक्रनामकमूर्तिस्तु अतीव भयङ्करा भवति। शृगालश्चवाहनमारूढो भैरव. परितः कपालैः परिवेष्टितो भवति। तस्य कर्णौ ग्रीवा भुजामुण्डैरलङ्कृता भवन्ति। चतुर्षु हस्तेषु मृण्मयभाजनखण्डः शङ्कुला डमरुः त्रिशूलञ्च भवन्ति (मसु० २।१०८)।

**देवीमूर्तयः**—शिवस्येव तस्य सौम्य विकरालञ्च द्वे रूपे भवतः।

(१) गिरितनयायाः (उमायाः, महादेव्या देव्याश्च) पार्वत्याः चतुर्षु हस्तेषु कमलचामराक्षमालापुष्पत्रिशूलतालपत्रपुस्तकनागा भवन्ति।

(२) महिषासुरमर्दिनीरूपायास्तस्याः ६,८,१२ हस्तेषु विविधानि शस्त्राणि भवन्ति, तथा सा महिषासुर मर्दयन्ती भवति। महाकालस्य भैरवस्य वा शक्तिर्महाकाली भैरवी वा मृतशरीरमारूढा प्रदर्श्यते। तस्याः कण्ठे मुण्डमाला द्वयोर्हस्तयोः त्रिशूलं रक्तस्थापक मृण्मयभाजनशकल भवति। अनेका मूर्तयो महाकालवद् विशालाभ्या भयावहाभ्याञ्च नेत्राभ्या बहिर्निःसृतदन्तैश्च सहिताः कस्यचिद् दुष्टस्य दलन विदधत्यो भीषणत्वेनाङ्किता भवन्ति। जावायामर्द्धनारीश्वरस्यापि मूर्तय उपालभ्यन्त।

**गणेशः कार्तिकेयश्च**—पार्वत्याः पुत्रस्य गजाननस्य गणेशस्य विघ्ननाशकदेवत्वेनातीव पूजा अभवत्। शिवस्य द्वितीयपुत्रस्य कार्तिकेयस्य मयूरारूढा षण्मुख्यः प्रतिमा उपालभ्यन्त। मूर्तेरतिरिक्तस्य लिङ्गस्यापि पूजा प्रचलिताऽऽसीत्। सजयेन स्थापितस्य लिङ्गस्योपरि उल्लेखो विद्यते। अनेकेषा विदुषामय विचारोऽस्ति यज्जावाद्वीपे हिन्दूनामागमनात् पूर्व प्रचलितया पितृपूजयाऽस्य कश्चन सम्बन्धो विद्यते।

विष्णुना जावाद्वीपे शिवसदृश महत्त्व कदापि न प्राप्तम्। अत्र न केवल विष्णोर्मूर्तीनामल्पसङ्ख्याया प्राप्तिः प्रमाणम्, किन्त्विदमपि विद्यते यद् धार्मिकसाहित्ये अस्मै गौणस्थानमदीयत। जावीयशिल्पिभिर्विष्णोर्मूर्तीनां निर्माणे भारतीया अनुकृताः। अस्य गदाशङ्खचक्रपद्मधरा मूर्तयो निर्मीयन्ते स्म। जावावासिभ्यो विष्णोरनन्तशयनमुद्रायाश्चित्रण विशेषेण

रोचते स्म। अस्य वाहनो गरुडो बहुत्र मानवाकारः, बहुत्र चञ्चुपक्षसहितः प्रदर्श्यते। विष्णोरवतारेषु कृष्णराममत्स्यवराहनरसिंहाना मूर्तयो निर्मीयन्ते। बहुत्र बालिद्वीपे विष्णुमुभयतो लक्ष्म्याः सतियावनस्य च मूर्ती भवतः। सतियावनेति सत्यभामात्वेन कल्प्यते। सम्भवत इय रुक्मिणीसत्यभामापरिवेष्टितस्य कृष्णस्य मूर्तिरस्ति। विष्णोः शक्तिर्लक्ष्मीः श्रीर्वा धृताक्षमालाचामरकमलगोधूमवाला चतुर्भुजा मूर्तिरस्ति ( मसु० २।१०३-४ )।

**अन्याः पौराणिक्यः प्रतिमाः—**त्रिमूर्तिमध्ये ब्रह्मणो मूर्तयः सर्वतो न्यूना उपालभ्यन्त। हंसवाहनस्य ब्रह्मणः प्रतिमाश्चतुर्मुख्यः सन्ति। अस्य शक्तिः सरस्वती मयूरवाहना विद्यते। त्रिमूर्तेः समुदिताना प्रतिमानां मध्यस्था चन्द्रमण्डितभाला मूर्तिः शिवस्यास्ति। जावाद्वीपे भट्टारकगुरोर्मूर्तिरतीव लोकप्रिया विद्यते। अत्र श्मश्रुपूर्णो धृतहस्तद्वयत्रिशूलकमण्डलुचामराक्षमालो वृद्धतुन्दिलो जनोऽङ्कितो विद्यते। इय पूर्व महायोगिनः शिवस्य मूर्तिर्मन्यते स्म, किन्त्वधुना अगस्त्यस्य ऋषेः प्रतिमा मन्यते ( मसु० २।१०५ )। ततः पर जावाद्वीपे अग्नियमेन्द्रवरुणकुबेरसूर्यचन्द्रकामप्रभृतिभारतीयदेवाना मूर्तय उपलभ्यन्ते। आनिमेषिमारोहति। इन्द्रो यमो वरुण एते क्रमेण वज्र गदा पाशञ्च दधति। कुबेरो निम्नमासनमारूढस्तुन्दिलो भवति। अस्य पार्श्वे द्रव्यग्रन्थिर्विशकलितो भवति। सूर्यः सप्ताश्वरथमारोहति, चन्द्रो वैजयन्तीं हस्ते आदाय चतुरश्व दशाश्वं वा रथमारोहति, कामदेवो धनुर्बाणञ्चादाय मकरारूढो भवति। प्रतिमाविषये क्रापर्ड इत्याख्यविदुष इद कथन सर्वथा सत्य विद्यते यत् सम्भवतः कश्चन पौराणिको देवो न स्याद् यस्य मूर्तिर्जावाद्वीपे निर्मिता न भवेत्।

**धार्मिककर्मकाण्डम्—**जावाद्वीपस्य धार्मिकविधयो दार्शनिकविचाराश्च पौराणिकाः सन्ति। जावाद्वीपे महादेवरूपेण सूर्यस्य उपासनाविधिर्हिन्दुधर्मानुष्ठानेन सवदति। तदा उच्चार्यमाणा मन्त्रा अपि त एव सन्ति येषा पाठ भारतस्य धर्मपरायणा हिन्दवः प्रतिदिन कुर्वन्ति। यथा उपासका निम्नश्लोकैः शिव प्रार्थयन्ते—

पापोऽहं पापकर्माह पापात्मा पापसम्भवः।
त्राहि मां सर्वपापेभ्यः केनचिद् मम रक्षतु॥

नमस्कारमन्त्रास्तथा नदीमन्त्रा अपि भारतीयाः सन्ति—

ओं ओ परमशिवशून्यात्मने नमः,
ओ ओं सदा शिवनिष्कलात्मने नमः।
ओ ओं महादेवनिरात्मने नमः
ओं गङ्गा सिन्धु सरस्वती सुयमुना गोदावरी नर्मदा
कावेरी सरयू महेन्द्रतनया चर्मण्वती वेतुकम्।
मेद्रनेत्रवती महासुरनदी ख्यात च या गन्धकी ( गण्डकी )
पुण्य पूर्णजले समुद्रसहितं कुर्वन्ति मे मङ्गलम्॥

यज्ञोपवतीतधारणाय 'यज्ञोपवीतं परम पवित्रम्' इति प्रसिद्धो मन्त्रः पठ्यते। विष्णोर्विविधनामभिः शरीरस्य विभिन्नानि अङ्गानि विविधाश्च दिशः सरक्षितुं विचारा अपि

जावाद्वीपस्य प्राचीनेषु ग्रन्थेषु विद्यते। विष्णुपञ्जरनामके ग्रन्थे उद्धृते द्वे उदाहृणे पर्याप्ते भविष्यतः—

पादौ रक्षतु गोविन्दो जङ्घाभ्याञ्च [जङ्घे च] त्रिविक्रमः।
उर्वन्त केशवो रक्षेत् पृष्ठ रक्षतु वामनः॥
पूर्वेष्या ( पूर्वस्या ) पुण्डरीकाक्ष आग्नेये श्रीधरस्तथा।
पुरुषोत्तमो वारुण्या वायव्या पीतवाससः॥

इमे श्लोका एतत् सूचयन्ति यज्जावाद्वीप हिन्दुधर्मरागेण पूर्णतो रक्तमासीत्, तथा तत्रत्यो विधिर्भारतीय आसीत्।

**जावाद्वीपे भारतीयदर्शनस्य विचारः**—प्रणवप्रधानपुरुषसयोगप्राणायाम-पञ्चमहाभूत-पञ्चतन्मात्राप्रभृतिभारतीयदर्शनस्यानेके विचारा जावीयधार्मिकसाहित्ये कामं समुपलभ्यन्ते। इद दौर्भाग्यं यदस्य साहित्यस्य गाम्भीर्येणानुशीलनाय विद्वासो न प्रवृत्ताः। अधिक साहित्य हस्तलिखितग्रन्थरूपेण विद्यते, अद्यापि अप्रकाशितमस्ति। पुनरपि तन्तुपग्गेलरप्रभृतयः केचन ग्रन्था. प्रकाशिताः सन्ति। ग्रन्थेऽस्मिन् समुद्रमन्थन राक्षसैरमृतहरणं मोहिनीरूपेण राक्षसाना वञ्चनम्, राहोः सूर्यचन्द्राभ्या वैरमित्यादिबह्व्यः पौराणिकगाथाः सन्ति (मसु० २।११३–१६)। अस्य पारायणेन प्रतीयते यत् पौराणिकहिन्दुधर्मेण जावाद्वीपस्य पूर्णतया विजयः कृतः।

## बौद्धधर्मः

जावाद्वीपे बौद्धधर्मस्य प्रवेशः पञ्चमशतकस्य प्रारम्भे अभूत्, सप्तमशतकपर्यन्तमत्रहीन-यानस्य प्राधान्यमभूत्। मध्यजावाद्वीपे हिन्दुधर्मेण साकम् ७७९–९०० खीष्टीयाब्दपर्यन्त विस्मयाव-हाना बौद्धमन्दिराणा निर्माणमभूत्। ततश्च समयादत्र बौद्धधर्मस्य विलक्षग उत्कर्षो भवितु प्रवृत्तः।

**बौद्धधर्मस्योत्कर्षस्य कारणम्**—अस्मिन् विषये प्रश्नद्वयं विचारणीय विद्यते। तदा बौद्धधर्मस्य सहसाऽभूतपूर्वोत्कर्षस्य जागरणस्य च किं कारणमासीत्? तयोश्च किं रूपमासीत्? प्रथमाया घटनायाश्चत्वारि कारणानि सम्भवन्ति। तारानाथस्य कथनानुसारेण वसुबन्धो. शिष्यैः पूर्वदेशेषु बौद्धधर्मः प्रचारितः। तेपा प्रचारेणात्रास्योत्कर्षोऽभूत्। द्वितीयमिद कारणमासीद् यत् सुवर्णद्वीप भारतचीनयोर्मध्ये आसीत्, तस्मिन् काले देशद्वये बौद्धधर्मोऽत्युन्नत आसीत्। तृतीय कारण भारतान्नवीनानामावासकानामागमन सम्भवति। चतुर्थ कारण शैलेन्द्राणामुत्कर्षस्तत्कृत बौद्धधर्मस्य सरक्षणञ्चासीत्।

**महायानमतस्य प्रसारः**—शैलेन्द्राणामुत्थानेन बौद्धधर्मस्य स्वरूपेऽपि प्रभावः स्था-पितः। इत्सिंगकथनानुसारेण पूर्वमत्र मूलसर्वास्तिवादिहीनयानसमुदायः प्रचलित आसीत्। अधुना तस्य स्थानं महायानबौद्धधर्मेण गृहीतम्। अस्य प्रधानं कारणं शैलेन्द्रा आसन्। ७७८ खीष्टीयाब्दस्य कलसन-अभिलेखे शैलेन्द्रमहाराज-पनङ्करणेन कृतस्य तारामन्दिरस्य महायाना-चार्याणा निवासाय निर्मितस्य भवनस्य चोल्लेखो विद्यते। शैलेन्द्राणा प्रभुत्वेन साक हीनयानस्थाने महायानस्य प्रभुत्वमपि सकलाया जावाया सुवर्णद्वीपे च प्रसृतम्।

**महायानदेवानां मूर्तयः**—शैलेन्द्रैर्महायानबौद्धधर्मस्य बरबुडुरप्रभृतिमहामन्दिराणि निर्मापितानि। सुवर्णद्वीप महायानस्य तथा प्रबल केन्द्रमभूद् यद् दीपङ्करश्रीज्ञानः काञ्चीवासी धर्मपालश्चैतत् शिक्षितुमत्रागतौ। एतेषु द्वीपेषु महायानस्य सर्वेषा देवानाम्–आदिबुद्धस्य प्रज्ञापारमिताया ध्यानिबुद्धस्य बोधिसत्त्वस्य तारायाश्च मूर्तय उपालभ्यन्त। तेषु गौतमबुद्धोऽवलोकितेश्वरो मञ्जुश्रीश्च काम लोकप्रियाः प्रतीयन्ते।

**महायानस्य विभिन्नं रूपम्**—शैलेन्द्राणा वङ्गेन साक गाढः सम्बन्ध आसीत्। अतो जावाद्वीपस्य महायाने भारतस्य परवर्तिनो महायानस्य सर्वाणि रूपाणि समुपलभ्यन्ते। तेषु निम्नानि विशेषत उल्लेखनीयानि सन्ति—(१) हिन्दुदेवाना बौद्धदेवेषु सम्मिश्रणम्, (२) अनेकेषा नवाना गौणदेवाना पूजायाः प्रारम्भः, (३) तन्त्रयानवज्रयानयोर्विकासः, (४) शनैः शनैर्महायानबौद्धधर्मयोः सम्मिश्रणम्।

**हिन्दुदेवानां बौद्धमन्दिरेषु पूजा**—बौद्धधर्मे प्रारम्भत एवेन्द्रब्रह्मप्रभृतिदेवा भगवतो बुद्धस्यानुचरत्वेन सगृहीता आसन्। पुनस्तत्र शिवगणेशयोरपि सन्निवेशोऽभूत्। अय बौद्धधर्मस्य समन्वयप्रवृत्ते. परिणाम आसीत्।

**नूतनदेवानां पूजायाः प्रारम्भः**—तस्मिन् काले त्रैलोक्यविजयहयग्रीवमरीचिकुबेरहेवज्रादिबहूना नवाना देवाना पूजा प्रारभ्यत। एतेषा स्थान बुद्धाना बोधिसत्त्वानाञ्चापेक्षया निम्नमासीत्। एतेष्वनेके बौद्धधर्मस्य रक्षका देवा मन्यन्तेऽतस्ते पौराणिकदेवाना दलन कुर्वन्तः प्रदर्शिताः। मध्यजावायास्त्रैलोक्यविजयस्य चतुश्शिरस्काऽष्टभुजी मूर्तिरुत्तानयोर्गौरीशङ्करयोरुपरि वज्रहुङ्कारमुद्राया स्थिता विद्यते (द्र० चि० से०)। तस्या हस्ते खड्गवज्रचक्रपाशादीनि शस्त्राणि सन्ति। हयग्रीवादयोऽन्ये नवा देवा अपि अतीव विकरालाः सन्ति। एते तिब्बतीयदेवाना स्मरणं कारयन्ति।

**तान्त्रिकमतस्य प्राधान्यम्**—सप्तमेऽष्टमे च शतकयोर्हिन्दुबौद्धधर्मयोस्तान्त्रिकः प्रभावोऽतीव वृद्धि गतः। अतो मद्यादिपञ्चमकाराणा निर्बन्धनं प्रयोगोऽभूत्। शैलेन्द्राणा वङ्गेन साक गाढः सम्पर्क आसीत्। अतस्तान्त्रिकमतस्य प्रभावो वङ्गात् सुवर्णद्वीपे समागन्तु प्रवृत्तः। शैलेन्द्राणा समये बौद्धतन्त्रस्य प्रसिद्धो ग्रन्थः कमहायानिकननामा लिखितः। अस्मिन् कमहायाननमन्त्रयाने च मन्त्रतन्त्रप्रधानमहायानस्य सिद्धान्ता आदृताः सन्ति। एकस्मिन्नन्यस्मिन् ग्रन्थे इद बुद्धत्वप्राप्तेः साधनममन्यत (मसु० २।१३०)।

एष मार्गवरः श्रीमान् महायानमहोदयः।
येन यूय गमिष्यन्तो भविष्यथ तथागताः॥

तथागतत्वप्राप्तये सरल साधनमासीत् पञ्चमकारसेवनम्—

नास्ति किञ्चिदकर्तव्य प्रज्ञोपायेन चेतसा।
निर्विशङ्कः सदा भूत्वा प्रभुङ्क्ष्व कामपञ्चकम्॥

मार्गेऽस्मिन् गुरुर्बुद्धतुल्यो मतः। तस्मै च पुत्रदारा अपि अदेया न मताः—

नित्य स्वसमयाचार्य प्राणैरपि निजैर्भजेत्।
अदेयैः पुत्रदारैर्वा किं पुनर्विभवैश्चलैः॥

दशमे शतके तन्त्रयान जावाद्वीप प्राप्तम्, एकादशद्वादशशतकयोस्तत्रास्य प्राबल्यं समभूत्। ऐरलिङ्गजयभयकालेऽनेके प्रसिद्धास्तान्त्रिका गुरवोऽभूवन्। त्रयोदशशतकखीष्टीयाब्दे सुमात्राया राजाऽऽदित्यवर्मा जावाया राजा कृतनगरश्च तस्यात्यन्तमुपासकावास्ताम्। इद प्रथम निवेदितमस्ति यत् क्रोममतानुसारेण कृतनगरस्य तन्त्रवादे महती निष्ठा पञ्चमकारसेवनञ्च तस्यान्तस्य शोचनीयस्य कारणमभूत्।

**महायानस्य हिन्दुधर्मस्य च सम्मिश्रणम्**—एतद्वीभत्सप्रसङ्गानन्तर महायानस्यैकस्य मनोहरस्य रूपस्य वर्णनमुचितं प्रतीयते। इय महायानहिन्दुधर्मयोः सम्मिश्रणस्य समन्वयस्य च सुखदा चर्चा विद्यते। जावाद्वीपे सामान्यतो हिन्दुधर्मस्य विविधेषु सम्प्रदायेषु महत् सौहार्द दृश्यते। चंगलस्योपरि वर्णितेऽभिलेखे शिवेन साक विष्णुब्रह्माणावपि स्तुतौ स्तः। ११५० खीष्टीयाब्दे निर्मित पनतरनस्य शिवमन्दिर प्राम्बानानस्य देवालयवद् रामायणवैष्णवपुराणवर्णितभित्तिचित्रैरलङ्कृत विद्यते। यदौदार्य विशालत्वञ्च पूर्व शैववैष्णवसम्प्रदाये आसीत्, तत् पश्चाद् हिन्दु-बौद्धधर्मयोरपि स्थापितमभूत्। ऐरलङ्गजयभयौ च पौराणिकधर्मस्योपासकावास्ताम्, किन्तु तस्मिन् काले बौद्धधर्मस्यापि नव जागरण जातम्, तस्य हिन्दुधर्मेण साक विचित्र सम्मिश्रण प्रवृत्तम्। शैलेन्द्राणा समये बौद्धपौराणिकधर्मौ सहैव विकसितौ भवतः स्म, किन्तु तयोः परस्परसम्मिश्रणस्य प्रक्रिया न प्रारभ्यत, सम्प्रत्येकोऽपरस्य समीपमागन्तु प्रारभत।

इय प्रक्रिया तदैव देशान्तरेष्वप्यभवत्। कम्बुजदेशस्य राज्ञो जयवर्मणः सप्तमस्य (११८५) अभिलेखेषु पूर्ववर्तिना राज्ञा लेखापेक्षया बौद्धधर्मस्याधिकः प्रभावः प्रतीयते। १२९६ खीष्टीयाब्दे चीनयात्री चौ-ता-कुआन इत्यनेनाय देशो बौद्धः प्रतिपादितः। लङ्कायाः पराक्रमबाहुरपि (११५३-११८६ खी०) बौद्धधर्मस्य प्रबलो भक्त आसीत्। इलियट इत्याख्यविदुषो विचारो विद्यते यद् बौद्धर्मस्यास्योत्कर्षस्य मुख्य कारण पगान (१०५०-१२५० खी०) राज्ये (बर्मा) बौद्धधर्मस्य प्रबल सरक्षणमासीत्। अस्य लङ्कायाः स्यामे कम्बुजे च महान् प्रभाव आसीत्। जावायास्ताभ्या देशाभ्या सम्बन्धः आसीत्। तारानाथस्य वर्णनानुसारेण यवनानामाक्रमणेन पीडिता भूत्वा बौद्धभिक्षवो देशान्तरे पलायिताः, इद सम्भवति यदेतेषा जावाया महान् प्रभावो भवेत्। यद्यपि सम्मिश्रणप्रक्रियायाः मूल कारणमद्य यावत् पूर्णतया स्पष्ट नाभूत्, किन्त्वत्र सन्देहो नास्ति यद् विल्वतिक्तयुगस्य शैवधर्मौ बौद्धधर्मश्चाभिन्नावास्ताम्। अद्यत्वे धार्मिकजीवनस्य मूल स्रोतो बौद्धधर्म आसीत्, किन्तु स तादृशो बौद्धधर्म आसीत् यः पौराणिकधर्मेण काम सम्बद्ध आसीत्। साधारणा जनाः शैवा आसन्, किन्तु ते प्राचीन स्व धर्म बौद्धमेव मन्यन्ते स्म। सुतसोमजातकस्य नूतनानुवादकमहायानिकनकुञ्जरकर्णप्रभृतिग्रन्थैर्हिन्दुबौद्धधर्मयोः सम्मिश्रणे समीचीनः प्रकाशो भवति (इलि० ३।१६६)।

प्रथमो ग्रन्थो राजसनगरकाले (१३५०-१३८९ खी०) निर्मितः। अत्र सुतसोमो बुद्धावतारः प्रतिपादितो बुद्धश्च ब्रह्मविष्णुमहेशरूपेण मतः। 'भगवान् बुद्धो महादेवात् शिवाद् भिन्नो नास्ति' धर्मे किमपि द्वैत न भवति। विभिन्ना हिन्दुदेवा बोधिसत्त्वैः पञ्चभिरिन्द्रियैः साक मिश्रिताः सन्ति। अमिताभामोघसिद्धी क्रमेण विष्णुमहादेवौ कथितौ स्तः। कमहायानिकन

इत्यत्र सर्वे हिन्दुदेवाः शाक्यात् प्रादुर्भूताः सन्तीति सिद्धान्तः समर्थितः। अस्मिन् मते सृष्टेर्मूल तत्त्वमद्वयमासीत्। ततस्तथा प्रज्ञापारमितातो बुद्ध उत्पन्नोऽभूत, तस्यैकस्माद् वशजातशाक्यमुनेर्ब्रह्मविष्णुमहेशा निःसृताः। कुञ्जरकर्णेऽप्यद्वैतवादसिद्धान्त व्याचक्षाणेऽपि बौद्धशैवमतयोरभेदः प्रतिपादितो विद्यते (इलि० ३।१७२-६)। एव सम्मिश्रण जावातिरिक्ते देशे नोपलभ्यते।

**वर्तमानयुगे जावाद्वीपे हिन्दुधर्मस्यावशेषाः**—यवनधर्मस्य प्रवेशेऽप्य समन्वयकारको धर्मो जावाद्वीपे स्थिरो नाभूत्। इदमदृश्यत यद् हिन्दुधर्म रक्षितु जावावासिनो बालिद्वीप गताः, किन्त्विद नावगन्तव्य यद् जावाद्वीपे हिन्दुधर्मो लोपं गतो विद्यते। जावावासिनो यवनत्व प्राप्ता अपि भूतेषु विद्याधरेषु च विश्वासमादधति, यवनधर्मस्य काममुपासका अपि लक्ष्मीमात्मनो देवीं मन्यन्ते। मूर्तिभञ्जका अपि जावावासिनः पर्वसु बरबुडुरमन्दिरेषु च भ्रमितु फलपुष्पाणि समर्पयितु गच्छन्ति। प्राचीनाना मूर्तीना नूतना व्याख्या कृत्वा तासा पूजा प्रारभ्यत। रहस्यवाद-पुनर्जन्म-कर्मफल विश्वक्षणभङ्गुरता-प्राणायाम-तपोरूपा हिन्दुविचारास्तत्राद्यापि प्रचलिताः सन्ति। जावाद्वीपे भिक्षया जीवननिर्वाहकाः समाधिस्थाश्चाप्यनेके साधवः सन्यासिनश्च सन्ति (इलि० ३।१८२-८३)।

**बालिद्वीपस्य हिन्दुधर्मः**—बालिद्वीपम्—जावाद्वीपे हिन्दुधर्मो यवनधर्मेण पराभूतोऽभवत्, किन्तु बालिद्वीपे स जावाद्वीपस्य प्राचीनपरम्परामक्षुण्णा रक्षितवान्। बालिवासिना हिन्दुत्वप्राप्तेर्गौरव विद्यते। तत्रत्याः शिल्पिनो गणेशेन्द्रविष्णुकृष्णसूर्यगरुडशिवाना महाभारतस्यानेकपात्राणाञ्च मूर्तीर्विदधति। दुर्गाशिवयोर्लिङ्गत्वेनोपासनापि भवति। गरुडारूढस्य विष्णोः प्रतिमा अनेकत्रोपलभ्यन्ते। बालिशिल्पिन आदेश प्राप्य कस्यापि हिन्दुदेवस्य मूर्तिं विदधति। वेदाना महाभारतस्य रामायणस्य ब्रह्मपुराणस्य नीतिशास्त्रस्य च प्रधानाना भारतीयग्रन्थाना नामानि बालिवासिनः सम्यग् जानन्ति। जावाद्वीपे बौद्धधर्मस्य महान् प्रभावोऽभूत्, किन्तु बालिद्वीपे तस्य किमपि चिह्न न दृश्यते।

बालिवासिना देवाना भूतानाञ्च प्रभावे महान् विश्वासोऽस्ति। तेषा सर्वा अपि धर्मप्रवृत्तयस्तेषा प्रसादाय तेषाञ्चोपद्रवादात्मनो रक्षणाय च सन्ति। तेषा सम्प्रदाये मलयो हिन्दुश्चेति द्वौ देवौ स्तः। स्थानीयदेवाना पूजकाः 'पेमगकू' शब्देन व्यपदिश्यन्ते। पौराणिकदेवाना पूजाकारयितारः पेडण्डेब्राह्मणजातीया भवन्ति। सस्कृतस्य कविधर्मग्रन्थानाञ्चाध्ययनानन्तर गुरोः शिक्षा प्राप्त्यनन्तरञ्च 'पेडण्डे' पद लभन्ते। तेषा पूजापद्धतिरतीव भारतीया। शिवस्य सूर्यत्वेनोपासना विदधतस्ते पूर्वमुखा जलपात्रं मालामक्षतान् धूपं दीप घण्टिकाञ्चादायोपविशन्ति, कतिपयमन्त्राणा पाठ कुर्वन्ति, तेन साक जलेऽभिमन्त्रिते पुष्पाणि प्रक्षिपन्ति। बालिद्वीपे गृह्यसूत्रे प्रतिपादिता जातकर्मनामकरणकर्णवेधविवाहान्त्येष्टिप्रभृतिसस्काराः क्रियन्ते।

धार्मिकसस्कारेषु पूजासु च कुशाग्रासतिलघृतमधूनामुपभोगो भवति। तत्र पवित्रत्वेन परिगण्यमानां नदीना जलमुपयुज्यते। बालिद्वीपेऽपि गङ्गासिन्धुयमुनाकावेरीसरयूनर्मदाः सन्ति, किन्तु

बालिवासिना विश्वासो विद्यते यत् सत्या नद्यः कलिङ्गे ( भारते ) एव सन्ति'। अनुष्ठानेषूपयुज्यमानं गङ्गाजलं सर्वैरिष्यते। तत् क्रीयतेऽपि पेडण्डेपदवाच्यास्तेन कर्मणा स्वां जीविकां निर्वहन्ति।

बालिद्वीपे वर्णव्यवस्था स्वजातिविवाहपरिपाटी सतीप्रथा च प्रचलिताऽस्ति।

## साहित्यम्

बृहत्तरभारतस्य देशान्तरेषु भारतस्य धार्मिकस्य दार्शनिकस्य च साहित्यस्याधिकः प्रसारस्तथा विकासोऽभूत्, किन्तु सुवर्णद्वीपस्येदं वैशिष्ट्यं विद्यते यदत्र काव्यमन्यदेशापेक्षया अधिकं लोकप्रियमभूत्, रामायणं महाभारतञ्चाश्रित्य जावीयभाषास्वनेकानि काव्यनि लिखितानि।

**जावीयसाहित्यस्य युगत्रयम्**—जावाद्वीपस्य राजनीतिकेतिहासवद् जावायाः साहित्यिकविकासोऽपि प्रतीच्यकेन्द्रीयपूर्वीयनामकेषु त्रिषु युगेषु विभक्तुं शक्यते। प्रथमस्य युगस्य तु कश्चनावशेषो नोपलभ्यते, किन्तु पूर्णवर्मणोऽभिलेखैः स्पष्टं भवति यत् तदा जावाद्वीपस्य राजसभायां संस्कृतस्य महती प्रतिष्ठाऽऽसीत्। लेखेषु ललितसंस्कृतस्यानुष्टुभादिभारतीयच्छन्दसां च प्रयोगोऽभवत्। द्वितीयस्मिन् युगे संस्कृतप्रयोगस्याधिकं प्रमाणमुपलभ्यते। चङ्गल ( ७३२ ख्री० ) विनय ( ७६० ख्री० )-कल्सन ( ७७८ ख्री० )-अभिलेखेषु शार्दूलविक्रीडितस्रग्धरावसन्ततिलकोपेन्द्रवज्रावृत्तानां प्रयोगोऽस्ति, भाषा प्रौढा कवित्वपूर्णा विद्यते। अत्र लिखितैर्ब्रह्मविष्णुमहेशपरैः स्तुतिश्लोकैस्तस्यानायासेनानुमानं भवति। ततः परं मध्यजावायुगस्य प्रम्बननबरबुडुरप्रभृतिस्मारका अपि तत्र संस्कृतसाहित्यस्य गभीराध्ययनं सूचयन्ति। अत्रानेका मूर्तयः चित्राणि च रामायणललितविस्तरप्रभृतिभारतीयग्रन्थान् आश्रित्य निर्मितानि सन्ति। तद्युगपर्यन्तं

---

१. डा० रघुवीरमहोदयः १९५१ ख्रीष्टीयाब्दे अगस्तमासेऽस्य द्वीपस्य यात्रां विधायास्य मनोहरं ज्ञानवर्द्धकञ्च वर्णनम् ( क्र० प० ३० ) सरस्वतीविहारनामकपत्रिकायाः १९५३ ख्रीष्टीयाब्दे १५ सितम्बरतिथौ अङ्के ( पृ० १७–२३ ) कृतवान्। अत्र मृत्तराणां नामानि रामायणाधारेण सम्पातिजटायु-इत्यादीनि सन्ति। मूर्तिकारा हलधरस्य वृषभारूढस्य शिवस्य विष्णोर्ब्रह्मणः पार्वत्या गणेशस्य च समीचीना मूर्तीर्विदधति। डा० रघुवीरक्रीतायां गजदन्तमूर्तौ इन्द्रकीलपर्वतेऽर्जुनस्य तपस्या तत्र च विघ्नोत्पादिका विद्या धर्मश्च चित्रिताः सन्ति। तत्रत्यानां नृत्यानां विषयोऽपि शस्त्रप्राप्तयेऽर्जुनस्य तपस्या तत्राप्सरसां विफला उपद्रवाः, अन्ते तपस्यया प्राप्तैः शस्त्रैर्निवातकवचस्य संहारो भवति। तत्रत्याः पदेण्डेपदवाच्या धर्मप्राणाः पुरुषा अद्यापि जम्बुद्वीपस्य यात्रां कर्तुं समुत्सुका भवन्ति। 'इण्डोनेशिया' इत्यस्य गणराज्ये स्थापिते यदा नवनिर्वाचिताः संसत्सदस्याः स्वस्वधर्मग्रन्थं हस्ते समादाय शपथं गृहीतवन्तः, तदा बालिप्रतिनिधिः स्वहस्ते श्रीमद्भागवतपुस्तकं समादाय राष्ट्रं प्रति भक्तिं प्रतिज्ञातवान् ( रघुवीरः–जावाद्वीपे भगवद्गीता–गुरुकुल पत्रिका फरवरी १९५५ पृ० २१३ )।

भारतात् समानीतस्य संस्कृतसाहित्यस्य प्राधान्यमासीत्, किन्त्विदमसम्भवं नास्ति यत् केचन ग्रन्था जावायाः प्राचीनभाषायामपि लिखिता भवेयुः ।

## साहित्यस्य स्वर्णयुगम् ( १०००–१५०० ख्री० )

जावायाः साहित्यिकविकासस्य तृतीय युग पूर्वीयजावाद्वीपे १००० खीष्टीयाब्दात् प्रारभत। अग्रे पञ्चशतवर्षपर्यन्तमिद युग साहित्यस्य स्वर्णयुग वक्तु शक्यते। तत्काल यावद् जावासाहित्य संस्कृतभाषायामासीत्, अधुना जावायाः प्राचीनभाषासु भारतीयसाहित्याधारेण नूतना ग्रन्था लिख्यन्ते, तत् प्राचीन जावासाहित्यमुच्यते। कडिरीसिंहसारीविल्वतिक्तराजभिरिद पूर्णतया संरक्षितम्। विल्वतिक्तसाम्राज्यपतनानन्तरं जावावासिनो बालिद्वीपं गताः। तत्र तैर्यत् साहित्य विकासित तन्मध्यजावीयवाङ्मयमुच्यते। जावाद्वीपे यवनशासनस्थापनानन्तर विकसितस्य साहित्यस्य नवजावीयेति संज्ञा प्रसिद्ध्यति। एषु त्रिष्वत्र प्रथमयोर्द्वयोरेव चर्चा भविष्यति।

**प्राचीनं जावीयसाहित्यम्**—अस्य साहित्यस्याधिकांशो भागः संस्कृतग्रन्थाना स्वतन्त्रोऽनुवादो विद्यते। केचन ग्रन्थाः संस्कृतश्लोकाना भाष्यभूताः सन्ति। तेषा भाषा कविभाषा कथ्यते। पूर्वमिद साहित्य कविसाहित्यमुच्यते स्म, किन्त्वद्यत्वेऽस्य शब्दस्य प्रयोगो जावाया वर्तमानभाषाकृते विशेषतो भवति। अतोऽस्य साहित्यस्य भाषा प्राचीनजावीया एवोच्यते। प्राचीनजावीयसाहित्यस्य त्रयो महान्तो भागाः सन्ति—( क ) काव्यसाहित्यम्, ( ख ) धार्मिक साहित्यम्, ( ग ) गद्यसाहित्यम्। पूर्वमत्र प्राचीनग्रन्थाना वर्णन काव्यसाहित्यस्य च विवेचन भविष्यति, पश्चाद् भागान्तराणाम्।

प्राचीनजावीयस्य प्राचीनतमो ग्रन्थः 'तन्तु पग्गलरन' इत्यस्ति। अस्य कालः प्रायः खीष्टीयाब्द उच्यते। अत्र पुराणवत् सृष्टिविज्ञानेन साक भारतीयाना जावीयाना च विचाराणा विचित्र सम्मिश्रण वर्तते। पुराणेषु यासा घटनाना स्थानानि भारतीयानि सन्ति तानि सर्वाणि जावाद्वीपे निर्दिष्टानि सन्ति। प्रारम्भे लिखित यत् पूर्व महामेरुर्मन्दरश्च पर्वतो जम्बुद्वीपे ( भारते ) आस्ताम्। भगवान् जगत्प्रमाणः ( शिवः ) स्वभक्त्या परमेश्वर्या साक तपः कर्तु जावाद्वीपे दिह्यङ्ग ( दियेंग )पर्वते समागतः। तत्र तस्याज्ञया ब्रह्मविष्णुभ्या मनुष्याः सृष्टाः। तस्मिन् काले जावाद्वीपे भूकम्पाः पुन. पुनर्भवन्ति स्म। भगवता महाकारणेन भुव स्थिरयितु देवैर्भारताद् मन्दारपर्वत आनायितः। तस्योपरितनो भागो भग्नः। ब्रह्मणा कच्छपरूप धृतम्, पर्वतः कच्छपे स्थापितः, तस्य कर्षणाय विष्णुर्नागरूपरज्जुर्जातः, अन्ये देवाः प्रबलवात्यावर्षयोः त जावायामानीतवन्तः। अस्मिन्नेव प्रकरणेऽमृतोत्पत्तेः राक्षसेन तद्धरणस्य विष्णुना मोहिनीत्वेन राक्षसाना वञ्चनस्य राहुणा सूर्यचन्द्रयोर्बद्धवैरस्य च पौराणिक्यः कथा निबद्धाः सन्ति ( हि० इ० इ० पृ० १४२–४८ )।

प्राचीनजावीयस्यैकोऽन्यः प्राचीनतमो ग्रन्थोऽमरमाला विद्यते। अत्रामरकोषवद् देवानां विविधपदार्थानाञ्च पर्याया उट्टङ्किताः सन्ति। तदैव प्राचीनं जावीयं रामायण प्रादुरभवत्, अय

स्वतन्त्रो ग्रन्थोऽस्ति, न त्वनुवादः। अत्र लङ्काकाण्डपर्यन्तघटनाना वर्णन विद्यते। उत्तरकाण्ड-वर्णितसीतानिष्कासनादिपाश्चात्त्यघटनाना कोऽप्युल्लेखो नास्ति ( मसु० २।६५ )। धर्मवशकाले ( ९९२–१००७ खी० ) अस्य प्रोत्साहनेन महाभारतस्यादिविराड्भीष्मपर्वणा प्राचीनजावीयभाषया गद्यानुवादोऽभूत्, विराट्पर्वणो भाषान्तर पश्चादभूत्। अनुवादोऽय मूलानुसारी सक्षिप्तश्च विद्यते, किन्तु भाषाया साहित्यिक सौन्दर्य नास्ति। अत्र कश्चन सन्देहो नास्ति यदग्रे लिखिष्य-माणाना प्रौढकाव्यानामाधारोऽयमेवानुवाद आसीत्। तादृश प्रथम काव्यमर्जुनविवाह आसीत्। ऐरालिङ्ग ( १०१९–४२ ) काले १०३५ खीष्टीयाब्दे कण्वेन ऋषिणा स लिखितः। तत्र निवात-कवचनामकराक्षसविरोधाय सयति अर्जुनेन कृतस्य देवसाहाय्यस्य वर्णनमस्ति ( हि इ० इ० पृ० २६०–७२ )। चण्डीजागोमन्दिरे एतदुपजीव्यानेकानि दृश्यान्यङ्कितानि सन्ति, अद्य यावत् तत्र नृत्यानामाधारोऽय ग्रन्थो विद्यते।

द्वादशे शतके प्राचीनजावीये साहित्येऽनेके प्रसिद्धा ग्रन्था अलिख्यन्त। कडिरीराज्यस्य ( ११०४–१२२८ खी० ) प्रारम्भे त्रिगुणेन कृष्णायनस्य रचना कृता। अत्र कृष्णेन रुक्मिणी-हरणस्य जरासन्धेन सह युद्धस्य च कथा विद्यते। कालिदासेन रघुवशे आकाशात् पतिताया पुष्प-मालाया अजस्य पत्न्या इन्दुमत्या मरणस्य अजस्य विलापस्य चातीव सुन्दर वर्णन कृतम्। 'सुमनसान्तके' ( पुष्पेण मृत्युः ) अस्यैवोल्लेखोऽस्ति ( हि इ० इं० पृ० २२४–२९ )। अस्य निर्माणम् ११०४३ खीष्टीयाब्देऽभूत्। द्वादशशतकस्य प्रसिद्धतमो ग्रन्थः 'भारतयुद्धम्' अस्ति। अय जयत्रयकाले ( ११३५–११५७ खी० ) लिखितः। अस्याधारे महाभारतस्य युद्धसम्बन्धीनि उद्योग-भीष्म द्रोण-कर्ण-शल्यपर्वाणि सन्ति। अस्य भाषाऽतीव प्रौढा मनोहरा चास्ति ( हि इ० इं० पृ० २४८–५४ ) अयं सेदहेल्याख्येन प्रारब्धः, किन्तु तेन पूर्ति न नीतः। मयुपतुलुह इत्याख्येन पूर्णता नीतः। तथा हरिवंशकाव्यमपि रचितम्। हरिवंशपुराणवदत्र कृष्णेन कृतरुक्मिणी-हरणप्रभृतिघटना वर्णिताः सन्ति। कुमारसम्भवे वर्णिता मदनदहनकथामादाय कामेश्वरस्य द्वितीयस्य ( ११८५ खी० ) समये स्मरदहनस्य रचना जाता ( हि इ० इ० पृ० ३०७–१६ ), तदैव भौमकाव्ये भौमस्य नरकासुरस्य वा कृष्णद्वारा वधस्य कथाऽलिख्यत १३६५ खीष्टीयोब्दे प्रपञ्चे-त्याख्येन लिखित नागरकृतागमनामकमैतिहासिक विद्यते। अत्र जावाद्वीपस्य राज्ञां वर्णनं विद्यते ( हि इ० इं० पृ० ३८५–७ )।

उपर्युक्तकाव्यातिरिक्ता नीतिशास्त्रस्य ग्रन्था अपि काव्यान्तर्गता विद्यन्ते। बालिद्वीपे इमे ग्रन्था नीतिसारपदेनोच्यन्ते,। चाणक्यनीतिशतकवत् पञ्चतन्त्रवच्च तत्र नीतिश्लोकाः सगृहीता विद्यन्ते।

## धार्मिकं तथा गद्यसाहित्यम्

प्राचीनजावीयसाहित्यस्यापरस्मिन् विभागे धार्मिकवाङ्मये सूर्यसेवनगारूडेयमन्त्रादयः केचन ग्रन्थाः सन्ति। तृतीयो भागो गद्यसाहित्यस्य विद्यते। अत्र भारतीयमहाकाव्यपुराणसम्बद्धा ग्रन्थाः सन्ति। महाभारतस्य विभिन्नाना पर्वणामनुवादस्य पूर्वमुल्लेखोऽजायत। कोरवाश्रमेऽनेकैः

परिवर्तनैः साकमस्यैव काव्यस्य कथा विद्यते। सारसमुच्चयेऽनुशासनपर्वतः पञ्चतन्त्रप्रभृतितश्च संगृहीताः सन्दर्भाः सन्ति। नवरुचौ भीमस्य शौर्य वर्णितं विद्यते। उत्तरकाण्डस्यैकस्मिन्ननुवादेऽन्ययोर्द्वयोरध्यायोर्नामनी रामप्रस्थानिक स्वर्गारोहणञ्च स्तः। एते जावाद्वीपे रामायणे महाभारतस्य प्रभाव सूचयतः। पुराणेषु ब्रह्माण्डपुराणमधिकं महत्त्वपूर्णमस्ति। अगस्त्यपर्वणि अगस्त्येन स्वपुत्रकृतायाः सृष्टेरितिहासः प्रत्यपाद्यत। अपरञ्चेतिहासचिकित्सा भाषाशास्त्रादिविषयका अनेके ग्रन्थाः सन्ति।

## मध्यजावीयं साहित्यम्

इद गद्यात्मक पद्यात्मकञ्चोभयमस्ति। पद्ये रत्नानां छन्दसा प्रयोगा विद्यन्ते। रामायणमहाभारतपुराणाना कथा आश्रित्य अनेकानि काव्यानि लिखितानि। तेषु सावित्रीसत्यवतोर्वृत्तान्तनिवेदकः 'सङ्गसत्यवान्' ग्रन्थो विशेषत उल्लेखनीयोऽस्ति। गद्यग्रन्था विशेषत इतिहासविषयकाः सन्ति। ऐतिहासिकपुराणेषु पकरतोन इति, उसानजव इति च ग्रन्थौ मुख्यौ स्तः। प्रथमः १६१३ खीष्टीयाब्दे लिखितस्तत्र च जावाद्वीपस्य सिंहसारीविल्वतिक्तयुगयोः शतत्रयवर्षाणामितिहासोऽस्ति। द्वितीयस्मिंश्च बालीतिहाससम्बद्धा अनुश्रुतयः सन्ति। कथासाहित्यस्यैको भागः 'तन्त्री' इत्युच्यते। तन्त्रीग्रन्थानामाधारः पञ्चतन्त्रस्य हितोपदेशस्य च कथाः सन्ति। काश्चन नूतना आख्यायिका अपि सन्ति। ततश्च स्याम-बालि लओसभाषासु तन्त्रीसत्ता पञ्चतन्त्रस्यासाधारणलोकप्रियता सूचयति। पञ्चतन्त्रादेकस्तद्भेदोऽवश्य ध्यातव्यः। विष्णुशर्मणा राजपुत्राणा नीतिशिक्षार्थं पञ्चतन्त्रकथाः श्राविताः, किन्त्वेताः सहस्ररजनीचरित्रवत् ( अलिफलैला ) कयाचिद्राज्ञ्या स्वप्राणरक्षार्थं श्राविताः।

## राजनीतिकविचारः शासनप्रबन्धश्च

कामन्दक–इन्द्रलोक–नीतिप्रियनामकास्त्रयः प्राचीना जावीया ग्रन्थास्तदानीन्तनराजनीतिविचारान् प्रकाशयन्ति ( मसु० १।४२९ )। प्राचीनभारतीयराजनीतिग्रन्थैस्ते विचाराः कामं सत्रदन्ति। राजा दिव्यांशसम्भवस्तथा ईश्वरावतारो मन्यते स्म। राजा कृतनगरो धर्मावतारो जयनगरश्च विष्णोरवतारः प्रत्यपाद्यत। मृत्योरनन्तर राजा देवत्व प्राप्नोतीति प्रतिपाद्यते स्म। देवमूर्तिर्मृतराजाकारिका निर्मीयते स्म। वेलहनस्य विष्णुमूर्तौ सेरलङ्गस्य मुखच्छविः प्रतिबिम्बिता विद्यते ( धि० स० )। सिपिङ्गस्य हरिहरमूर्तिः कृतराजस्य प्रतिमोच्यते। प्रज्ञापरामिता राज्ञ्याः डेडेस इत्यस्या मूर्तिः प्रतिपाद्यते। मृत्योः पश्चाद् राजा तस्य स्थानस्य देव उच्यते स्म, यत्र तस्याग्निसंस्कारोऽभूत्। राज्ञो देवत्वारोपेण तस्य निरङ्कुशत्व स्वाभाविकमासीत्। तस्याधिकारोऽनियन्त्रितोऽसीमश्चासीत्, किन्तु भारतीयनीतिग्रन्थवद् जावाद्वीपस्योपर्युक्तग्रन्थेषु प्रजासंरक्षणलोकरञ्जनादिराजकर्तव्यानि विशेषतो निर्दिष्टानि सन्ति ( मसु० १।४३० )।

शासनप्रबन्धो भारतीयपद्धत्याऽभवत्। राजा प्रान्ताना मण्डलानाञ्चाधिपतीन् नियुङ्क्ते स्म। ग्रामेषु च ग्रामण्यो ग्रामसभा चाभवन्। राजकीयाधिकारिकर्मचारिणामनेकानि नामानि भारतीयानि सन्ति। तेषु मन्त्री, सेनापतिः, सेनापतिसर्वजसम् ( समुद्रनौकाध्यक्षः ) चोल्लेख

नीयाः सन्ति । अन्यच्च भारतवद् न्यायविभागस्याधिकारी धर्माधिकरणपदेन व्यपदिश्यते स्म । शैवबौद्धमन्दिरमठाना निरीक्षकाणा नाम धर्माध्यक्षोऽभवत् ।

## सामाजिकव्यवस्था आचारव्यवहारश्च

**वर्णव्यवस्था**—हिन्दुधर्मस्य प्रधान वैशिष्ट्य चातुर्वर्ण्यव्यवस्थाऽस्ति । इयं जावाया सुमात्रायाश्च प्राचीनकाल एव प्रचलिता नासीत्, किन्तु बालिलोम्बकद्वीपयोरद्य यावत् समुपलभ्यते । द्वीपयोरनयोर्जना ब्राह्मणक्षत्रियवैश्यशूद्रवर्णेषु विभक्ता॰ सन्ति । प्रथमे त्रयो वर्णा द्विजातय उच्यन्ते, अन्त्यो वर्ण एकजातिरुच्यते । ब्रह्मण॰ शिवबुद्धयोरुपासनाभेदेन द्वयोर्महतो भागयोर्विभक्ताः सन्ति । प्रतिलोमविवाहैनैनु विभागेष्वप्यनेका जातयो जाताः । क्षत्रियाः पञ्चसूपजातिषु विभक्ताः सन्ति । तत्र राजकुलसम्बद्धाना कतिपयाना जनाना समावेशो भवति, किन्तु राजवशैः सम्बद्धा अधिका जना वैश्यवर्णे सम्मिलिताः सन्ति । शूद्राः कौलपदेन व्यपदिश्यन्ते, किन्तु भारतवत् तेऽस्पृश्या न मन्यन्ते । वर्णाः स्वपैतृकव्यापारेण नियन्त्रिता न सन्ति, सर्वे वर्णाः कृपि कुर्वन्ति । शूद्रा कमपि व्यापार कर्तु प्रभवन्ति । भारतवत् प्रतिलोमोद्वाहेषु नियमा अनिवार्यत्वेन न पाल्यन्ते स्म । पुरुषः सवर्णा निम्नवर्णा वा कन्यामुद्वोढुमर्हति, किन्तु स्त्री सवर्णमुच्चवर्ण वा पुरुप वरीतुमर्हेत् । यदि काचन स्त्री निम्नवर्णस्य पुरुपस्यर्द्धाङ्गिनी भवितु साहस कुर्यात् तदा तस्यै मृत्युदण्डो दीयते स्म । असवर्णविवाहेऽपत्य पितृवर्णकमेव मन्यते ।

**ब्राह्मणस्य श्रेष्ठत्वम्**—वर्णव्यवस्थाया अन्यद् विशिष्टद्वय बालिद्वीप उपलभ्यते । चतुर्षु वर्णेषु ब्राह्मणः सर्वश्रेष्ठो मन्यते । क्षत्रिया भूमिपालनत्वेनेश्वरावतारो भवेन्नाम कामम्, किन्तु ते ब्राह्मणकन्या परिणेतु नार्हन्ति, किन्तु किंवदन्त्येषा यदनुरागोऽन्धो भवति । यदि कदाचित् कश्चन राजकुमारो ब्राह्मणकन्यायामनुरक्तो भवति तदैक विचित्र साधनमवलम्ब्यते । ब्राह्मणः पिता स्वजन्या निराकृत्य गृहान्निष्कासयति, राजकुमार॰ क्षत्रियो वा ता सवर्णा मत्वा उद्वहति ( मनु० २।४३ ) । मनुस्मृतिप्रभृतिभारतीयशास्त्रेषु दण्डव्यवस्थाया सर्वान् वर्णान् तुल्यान् अमन्यमानेषु वर्णानामापेक्षिकश्रेष्ठता ख्याता ( मनु० ७–२६७–२६९ ) । बालिद्वीपेऽपि इत्थ वर्णश्रेष्ठताया दण्डेन साक व्यस्तानुपातो विद्यते, श्रेष्ठवर्णस्य न्यूनस्य निम्नवर्णस्याधिकस्य दण्डस्य व्यवस्था विद्यते । यथा यदि शूद्रो ब्राह्मणस्यापमानमथवा ताडन करोति, तदा स मृत्युदण्डभागभवत्, किन्तु-यदि ब्राह्मणशूद्रस्यैवपराध करोति, तदा सार्ध्यशतद्वयरूप्यक दण्ड्यते स्म ।

**धर्मशास्त्राणां प्रभावः**—जावाबालिद्वीपयोः समाजव्यवस्थासम्बद्धा आचारव्यवहारनियमाः प्रायो मनुस्मृतिप्रभृतिधर्मशास्त्रेभ्योऽगृह्यन्त । अस्मिन् विषये दासनियमाना समानताया उदाहरण पर्याप्त भविष्यति । मनुवत् ( ८।४०५ ) जावायामपि ध्वजहृतानां दासानां सन्ततयो गृहजा दण्डदासा भक्तदासा जावाद्वीपे दासा मन्यते ( मनु० २।४३ ) ।

**स्त्रीणां दशा**—जावाद्वीपे बालिद्वीपे च प्राचीनभारतवद् बहुविवाहपरिपाटी श्रेष्ठवर्णेषु राजसु च प्रचलिताऽऽसीत् । प्रपञ्चेत्याख्येन नागरकृतागमे हयमवसकस्य वर्णन कुर्वता लिखित

यद् जङ्गालकडिरीप्रदेशयोः सर्वाः सुन्दर्यस्तदर्थं विचिता भवन्ति, तथा वैदेशिकयुद्धेषु वन्दीभूतासु स्त्रीषु सर्वोत्तमलावण्यास्तस्य कृते आनीयन्ते ( हाहिसौ० पृ० ८१ )। बहुविवाहपद्धतावपि तत्र स्त्रीणा दशा राजनीतिकाधिकारदृष्ट्याऽतीव समुन्नताऽऽसीत्। शासने ताभिरुन्नतं पदं प्राप्यते स्म। ऐरलिङ्गस्य माता महेन्द्रदत्ता गुणप्रिया वा शासिकैव नासीत्, किन्तु राजकीयलेखेषु तस्या अभिधान तत्पतेरुदयनस्य नाम्नः पूर्वं निबद्धयते स्म। ऐरलिङ्गकाले राजानन्तर सर्वतो महत्त्वपूर्ण स्थानं श्रीसंग्रामविजयधर्मप्रसादोत्तुङ्गदेवीनामकस्त्रिय आसीत्। जयनगरानन्तरं राजपत्नी राज्यासन समारूढा। विक्रमवर्द्धनानन्तरं तस्य दुहिता सुहिता सतोर्द्वयोस्तद्भ्रात्रो राज्यासनमलङ्कृतवती। ९२७ खीष्टियाब्दे केनाभिलेखेनेद स्पष्ट विद्यते यत् तत्र स्त्रियो राजपदेष्वासीना भवन्ति स्म। सम्पत्तौ पूर्णतया स्वत्वं रक्षन्ति स्म, तथा स्वेच्छया तां विनियोक्तु स्वतन्त्रा आसन्। अवगुण्ठनपरिपाटी नासीत्, ताः स्वतन्त्राः पुरुषैर्वार्तालापादिक विदधति स्म। बालिद्वीपादिष्वद्यापि सैव दशाऽस्ति। स्त्रियः स्व पतिं वरीतु स्वतन्त्राः सन्ति। स्वयवरस्य कतिपयान्युदाहरणानि प्राप्यन्ते (मसु० २।४५)। अतिनिकटसम्बन्धेऽपि किं बहुना विमातुर्दुहिताऽपि परिणीयते स्म।

**सतीप्रथा**—भारतीयस्त्रीभ्य उपर्युक्तभेदे सत्यपि सुवर्णद्वीपस्य नार्यो दाम्पत्यानुरागे पतिभक्तौ च सतीत्वरूप भारतीयादर्शमपालयन्। पञ्चदशशतकस्य चीनदेशीयविवरणेषु बङ्काद्वीपस्य नारीणा विषये इद प्रत्यपाद्यत यद् यदा पतिर्दिवङ्गतो भवति, तदा पत्नी केशान् कृन्तति, मुख विक्षतं करोति, सप्त दिनानि किमपि न भक्षयति, पत्युर्मृतशरीरेण साक शेते, अनेकाः स्त्रियोऽस्मिन्नेवावधौ म्रियन्ते, यदि काचन जीवति, तदा सा पुनर्विवाह न करोति। यस्मिन्नहनि पत्युरग्निसस्कारो भवति तदाऽनेकाः स्त्रियोऽग्नौ आत्मानं प्रक्षिप्य प्राणान् त्यजन्ति। बालिद्वीपेऽशतः सतीपद्धतिरद्यापि प्रचालिता विद्यते (मसु० २।४६–७)। प्राणविसर्जनस्य प्रकारद्वयमासीत्—प्रथमे पत्नी खड्गेनात्महत्या करोति, सा पत्या साक प्रज्वाल्यते, द्वितीयस्मिन् सा पत्युः प्रज्वाल्यमानाया चिताया प्रविशति।

**अन्त्येष्टिकर्म**—अत्रापि मृतस्य दाहो भस्मसचयः, भस्मनः पवित्रनदीषु प्रक्षेप इत्येवमादयो विधयः भारतीया परिपाटीमनुसरन्ति।

जावावासिना खाने पाने प्रमोदे चापि भारतीयः प्रभावो लक्ष्यते। प्राचीनभारतवत् तत्रापि ताम्बूलसेवनपरिपाट्यासीत्। तेषा सगीत नृत्यञ्च भारतीयपरम्परानुकूलमस्ति। जावाद्वीपे मनोरञ्जनसाधनेषु वयङ्गेति विशिष्ट महत्त्वमादधाति। इद छायानाटक भवति। तत्र चलचित्रवत् पृष्ठतः पाञ्चालिकाना छाया प्रकाशधवलिताया जवनिकाया प्रक्षिप्यते। वस्त्रनिर्मिताः पुत्तलिकाः पात्रस्थानीया भवन्ति। एकतो नाटकघटनाः पठ्यन्तेऽन्यतः प्रकाशपृष्ठे सूत्रधारो घटनानुरूपाः पाञ्चालिकाना क्रियाः प्रदर्शयति। छायानाटकैः प्रायो रामायणस्य महाभारतस्य च घटनाः प्रदर्श्यन्ते ( मसु० २।५७–६० )।

## कलाः

प्राचीने युगे कला धर्मस्य दास्यासन्। भारतीयधर्मेण साक भारतीयकला अपि सुवर्णद्वीप प्राप्ताः। जावाद्वीपस्य बरबुडुरप्रभृतयः कतिपयेऽवशेषास्तु विश्व विस्मये व्यामोहे च निपात-

यन्ति। तत्र वास्तुमूर्तिकलयोः समीचीनो महान् विकासो जातः। कलाया विकासो महतोर्द्वयोर्युग-योर्विभज्यते—( १ ) मध्याजावायुगम् (७००-९०० खी०)—( २ ) पूर्वीयजावायुगम् ( १२००-१५०० खी० )। अत्रानयोर्द्वयोर्युगयोः प्रसिद्धाभिः कृतिभिः तत्परिचयो दास्यते, किन्तु ततः पूर्वं जावाद्वीपस्य कलाया वैशिष्ट्यस्य साधारणस्य च विषयस्य च चर्चा समुचिता प्रतीयते।

**जावाद्वीपस्य कलाया वैशिष्ट्यम्**—जावाद्वीपे धार्मिकस्थानानि मन्दिराणि च चण्डीपदव्यपदेश्यानि भवन्ति। तेषा कानिचिद् वैलक्षण्यान्युल्लेखनीयानि सन्ति—( १ ) तेषु स्तम्भानां नितरामभावो भवति, स्तम्भाना साहाय्येन भारते विशालभवनानि मन्दिराणि निर्मीयन्ते। जावाद्वीपे तेषा निर्माणाभावस्य कारण भूकम्पः प्रतीयते, ( २ ) अत्राकृत्रिम-निरोधनीना ( डाट ) प्रयोगः सर्वथा नास्ति, सर्वेषा तोरणाना ( मेहराब ) निरोधन्यः कृत्रिना भवन्ति। दिगन्तसमसिद्धान्तमाश्रित्य निर्मिताः सन्ति। स्तम्भाना निरोधन्याश्चाभावे विशालाना भवनाना निर्माण दुःशकमासीत्। अस्य दोषस्य परिहारो जावाद्वीपस्यावासकैरनेकानि मन्दिरा-ण्येकत्र निर्माय कृतः। जावाद्वीपे एकाकि मन्दिरमतीव न्यूनमस्ति। प्रायः केन्द्रे वर्तमानमेक-मनेकानि वा मन्दिराण्यभितोऽनेकैर्मन्दिरैरावृतानि भवन्ति। तेन केन्द्रमन्दिरस्याल्पत्वेऽपि सकला रचना विशाला प्रभावोत्पादिका च भवति।

**मन्दिराणां योजनाः**—सर्वेषा मन्दिराणा योजना प्रायः समाना भवति। तेषा त्रयो भागा भवन्ति—( १ ) **आधारः**—उन्नताऽलकृता च वेदी भवति, ( २ ) मन्दिरस्य वर्गा-कारो मुख्यो भागः, अस्मिन् गर्भगृहं सर्वतश्च वृद्धं भवति, ( ३ ) **शिखरम्**—इदमनेकभूमिकं भवति। शिखराण्युपरि क्रमेण लघूनि भवन्ति। तानि प्रायो लघुपरिमाणे मन्दिरस्य योजनामनु-कुर्वन्ति। एकस्या घनाकाररचनायाश्चतसृषु दिशासु चत्वारो गवाक्षा भवन्ति। चतुर्षु कोणेषु चत्वारि लघूनि शिखराणि भवन्ति। विशालेषु भवनेष्वेकतानताशेष निराकर्तुं पटलप्रान्तस्यो-परिष्टात् खण्डश्चतुष्कोणो न भवति, अपि त्वष्टकोणो भवति। मन्दिरस्याभ्यन्तरो भागो रचना-विरहितो वर्गाकारप्रकोष्ठो भवति। भित्तयः किञ्चिदौन्नत्य यावद् लम्बरूपेणोत्तिष्ठन्ति, तासाञ्च मूले दिगन्तसमप्रस्तरसमुदायाना श्रेणयो भवन्ति। इमाः परस्पर पुरो वर्द्धमाना उपर्युत्तिष्ठन्ति। अन्ते समुन्नतसाश्मरिक्तगर्भशङ्कुरूपेण तेषा समाप्तिर्भवति। सर्व पटल बाह्यतोऽनेकभूमिकस्य पिरामिडपदवाच्यस्य रूप दधाति। आभ्यन्तरो भागो भारतीयपुष्पपत्रैस्तथा भारतगृहीतशुण्डा-काराकृत्यलङ्करणैः सज्जितो भवति। अत्र कालमकरनामकालङ्करणयोः शैलीयद्वीप विशेषेणो-ल्लेखनीयमस्ति। कालो विकरालः कालदेवताऽथवा भारतीयसिंहस्य शीर्षं मन्यते। कुमारस्वामी महोदयस्त विकृताकृतिमुखं कथयति। अस्य नेत्रे बहिर्निःसृते स्तः, नासिका दीर्घा, उपरितनोऽ-धरः स्थूलः, उभयतो द्वौ महान्तौ दन्तौ निस्सरन्तौ भवतः। अस्य निर्माण द्वाराणामुपरि गवाक्षस्य वा तोरणकशीर्षस्य केन्द्रे निर्माण भवति। अस्य द्वयोः शिरसोर्द्वाराणा पक्षेषु सोपानस्य चोपरि मकरस्याकृतिर्निर्मीयते। एते द्वे पृथक् सहत्य वा हिन्दजावीयकलाया एकमत्यन्तं लोक-प्रियमलङ्करण विद्यते।

## मध्यजावाद्वीपस्य कला ( ७००–९०० )

**दिह्यङ्गपठारस्य मन्दिराणि**—मध्यजावीयकलायाः प्रधानानि मन्दिराणि मध्यजावाद्वीपस्य दिह्यङ्गपठारस्य प्राम्बानानोपत्यकाया सन्ति। दिह्यङ्गेति जैनाना पालीताणा-आबूप्रभृतिवद् महानगरमसदपि प्राचीन तीर्थमासीत्। दिह्यङ्गस्य पठारसञ्ज्ञको देशः ६५०० फीटपरिमितमुन्नतं विद्यते। तत्र गन्तु राजमार्गाः सोपानानि चासन्। तेषु ४००० सोपानान्यद्याप्यवशिष्टानि। जावीयेतिहासे वर्षे सकृद् जावाराजस्य तीर्थयात्राया उल्लेखो विद्यते। सम्भाव्यते यदिय यात्रा दिह्यङ्गसदृशस्थाने भवति स्म। दिह्यङ्गस्य सर्वाणि मन्दिराणि हिन्दुधर्मसम्बद्धाः सन्ति। पूर्वमत्र ४० मन्दिराण्यासन्, सम्प्रत्यष्टावेवाशिष्टाः सन्ति। तेषा नामानि महाभारतस्य पात्रनामानुसारेण सन्ति। यथा चण्डी-अर्जुनः, चण्डी भीमः, चन्डी-पुन्तदेवः ( जावाया युधिष्ठिरस्येदमेव नामाऽस्ति ) चण्डी-घठोत्कचः, चण्डी-नकुलः सहदेवो चण्डी-परीक्षित् चेति। अत्र सन्देहो नास्ति यत्तानि नामानि पाश्चात्यानि सन्ति। सर्वाणि मन्दिराणि आयताकाराण्येकप्रकोष्ठकानि च सन्ति। अत्र शिवगणेशब्रह्मविष्णुमूर्तयः प्राप्यन्त। अवशेषैः प्रतीयते यत्तानि शैवमन्दिराण्यासन्। दिह्यङ्गपठारस्य मन्दिराणा भव्यता गम्भीरता चास्माक गुप्तकालिकमन्दिराणा स्मारयतः।

**प्राम्बानानोपत्यकाया मन्दिराणि**—अत्र मध्यजावीयकलायाः सर्वोत्तमान्युदाहरणानि समुपलभ्यन्ते। उपत्यकायामस्या जावाद्वीपस्यानेका राजधान्योऽवस्थिता आसन्। अतोऽत्रात्यधिकानि भव्यानि हिन्दुबौद्धमन्दिराणि निरमीयन्त। अत्रत्येषु बौद्धमन्दिरेषु चण्डीकलसनं चण्डीसरी चण्डीसेवु इत्यादीनि हिन्दुदेवालयेषु लर-जोंगरगेति च प्रधानानि सन्ति। चण्डीकलसने शैलेन्द्रवंश्येन महाराजपनङ्करणेन ७७८ खीष्टीयाब्दे स्वगुरोरादेशानुसारेण भगवत्यास्ताराया: प्रतिमा मन्दिरञ्च निर्मापितम्, चण्डीसरी इत्यत्र च महायानबौद्धभिक्षूणा कृते विहारो निर्मापित'।

**चण्डीसेवुमन्दिराणि**—चण्डीसरीपार्श्वे एव चण्डीसेवुर्जावाया बरबुडुरानन्तर सर्वतो महान् बौद्धमन्दिरसमूहो विद्यते। अत्र केन्द्रीय मुख्य मन्दिरम् २४० मन्दिरैः परिवृत्त विद्यते। द्विशतगजमितदीर्घैकशतगतमितविशालपक्वकुट्टिम सभोपगृहमभितो मन्दिराणा युग्मपंक्त्याऽऽवृत विद्यते। अस्य सख्याः १६८ सन्ति। अस्या बाह्यशालायाः केन्द्रे मुख्य मन्दिर पुनर्द्वादशगजमिते दीर्घेऽष्टगजमिते विशाले चायताकारक्षेत्रे मन्दिराणा युग्मपङ्क्तिभि' परिवेष्टितमस्ति। अत्र सर्वाणि ७२ मन्दिराणि सन्ति। तेषु सर्वेषु सम्भवतो ध्यानावस्थितबुद्धस्यैकैका मूर्तिरासीत्। अत्र किञ्चिदन्यमन्दिराणामप्यवशेषः प्राप्यते। इत्थमत्र सर्वाणि २५० मन्दिराणि प्रतीयन्ते। मध्यस्थ मन्दिर सर्वोन्नतं विद्यते। बहिर्मुखाना मन्दिराणा पङ्क्तीनामौन्नत्य क्रमेण न्यूना भवति। सर्वा रचना पिरामिडाकाराऽस्ति। तन्निर्माणं सम्भवतो नवमशतके खीष्टीयाब्देऽभूत्।

प्राम्बानानस्योपत्यकासमीपे केडूप्रदेशस्य समानभुवि चण्डीपवोनचण्डीमेन्हुतमन्दिरे स्तः। मेन्हुत इत्यत्रासीनमुद्राया बुद्धमञ्जुश्री-अवलोकितेश्वराणा विशालकायाः प्रतिमाः समुपा-

लभ्यन्त। अन्तिमायाः प्रतिमाया मुखमुद्रा तथा मनोहराऽस्ति यदनेके कलाविदो बौद्धकला-द्वाराणां तक्षणीविरचितां सर्वोत्तमां कृतिं व्याहृतवन्तः।

**लरजोङ्गरङ्गस्य १५६ मन्दिराणि**—प्राम्बानानोपत्यकाया लरजोङ्गरङ्गस्य मन्दिरसमूहो जावाद्वीपस्य सर्वाधिकमहत्त्वपूर्णो हिन्दुदेवालयो विद्यते। कतिपयैरंशैरयं बरबुडुरस्य साम्यमादधाति। अत्र केन्द्रेऽष्टौ मुख्यानि मन्दिराणि सन्ति। पश्चिमे पूर्वस्मिन् च त्रयाणां मन्दिराणां द्वे पङ्क्ती स्तः, द्वे च मन्दिरे मध्ये स्तः। पश्चिमदिशायां विष्णोः शिवस्य ब्रह्मणश्च मन्दिरेषु शिवस्य मन्दिरं सर्वतो विशालमस्ति। ततः पूर्वस्मिन् नन्दिमन्दिरं विद्यते। अष्टौ मन्दिराणि सर्वतो भित्तिभि-रावृतानि सन्ति। पुनश्च तद्बहिर्मन्दिराणां तिस्रः पङ्क्तयः सन्ति। अत्र मन्दिराणां सर्वाः संख्याः १५६ सन्ति।

**केन्द्रस्य शिवमन्दिरे रामायणस्य घटनानां चित्रणम्**—एतेषु केन्द्रीयं शिवमन्दिरं विशेषेणोल्लेखनीयं विद्यते। इदं दशफीटमिते उन्नते नवतिफीटमिते च दीर्घे पक्वे वेदीभागेऽ-वस्थितमस्ति। सर्वतः सप्तफीटविशालभूः प्रदक्षिणार्थं रिक्ता विद्यते। वेदीमभितो गवाक्षाः सन्ति। तेषां गवाक्षाणां बाह्याभ्यन्तरयोः पार्श्वयोश्चित्राण्यङ्कितानि सन्ति। आभ्यन्तरपार्श्वे आराम-जन्मन आलङ्काभियानाद् रामायणस्य विशिष्टा घटना द्विचत्वारिंशतिचित्रेषूत्कीर्णाः सन्ति। प्रथमे चित्रे क्षीरसागरे शेषनागे शयनीये आसीनो विष्णुरङ्कितो विद्यते। वामतः पञ्चदेवास्तं याचितुं समागताः सन्ति यद्रावणस्य विध्वसाय भगवान् अवतरतु। अस्य चित्रस्योपजीव्यं वाल्मीकिरामायणं नास्ति, किन्तु कालिदासस्य रघुवंशस्य दशमः सर्गोऽस्ति। ततो दशरथस्य राजसभायां विश्वामित्रस्यागमनम्, ताडकावधः, सीतास्वयंवरः, धनुर्भङ्गः, परशुरामप्राकट्यम्, कैकेयीदशरथमन्त्रणा, सीतारामलक्ष्मणानां वनगमनम्, भरतस्य पादुकादानम्, विराधवधः, शूर्पणखाघटना, स्वर्णमृगाखेटकम्, सीताहरणम्, रावणजटायुषोर्युद्धम्, रामहनुमतोर्मैत्री, बालिवधः, हनुमतो लङ्कागमनम्, लङ्कादहनम्, रामस्य समुद्रदमनम्, सेतुनिर्माणमित्येता घटना महता साफल्येन पाषाणेषूत्कीर्णाः सन्ति।

**रामायणस्य चित्राणां वैशिष्ट्यम्**—एतेषां चित्रणमत्यधिकं सप्रभावं विद्यते। शिल्पिभि-र्मानवभावानां चित्रणे पूर्णा सफलता प्राप्ता। अनेकत्र हास्यरसस्य प्रदर्शनेन तेषु चित्रेषु प्राणाः समागता इव। यथा लङ्कादहनदृश्ये तदानीन्तनीं व्याकुलतां प्रदर्शयितुं चित्रकारेणैकं साधुमपि स्वसदनस्य बहुमूल्यं वस्तु बहिर्निष्कासयन्तं विलिख्य स्वहस्तलाघवमतीव सुन्दरं प्रदर्शितम्। बरबुडुरस्य चित्रेष्वादर्शवादस्य सौन्दर्यमस्ति, तत्र निश्चलता शान्तिश्च स्तः, किन्तु लरजोङ्ग-रङ्गचित्रेषु यथार्थवादस्य कमनीयता गतिश्च स्तः। भारते भारताद् बहिः स्यामदेशे कम्बुजदेशे चानेकत्र रामायणस्य घटना उत्कीर्णाः सन्ति, किन्तु यावता विस्तारेण कौशलेन च लरजोंगरंगे (प्राम्बानाने) तदङ्कनमभूत्, तावताऽन्यत्र कुत्रापि न।

**लरजोङ्गरङ्गस्य निर्माता**—एषां मन्दिराणां चित्राणाञ्च निर्माणं कदा कथञ्चाभूदिति न ज्ञायते, किन्तु जावाद्वीपस्य जनश्रुत्या तेषामुद्गमेन साकमेका शोकपरिपूर्णा प्रणयकथा संयोजिता। श्रूयते यल्लरजोङ्गरङ्गनाम्नी काचनानुपमा रूपयौवनसम्पन्ना राजकन्याऽऽसीत्। तया स्वां परिणिनीषोः पुरो विवाहार्थमयं पणः समुपस्थापितो यदेकस्यां रात्रौ षड् मन्दिराणि स

विदध्यात् । तेन पण पूरयितुं प्रयतितम्, किन्तु राजकन्यायाः कौशलेन पूर्तिर्विघटिता । मन्दिर-निर्माणपूर्तेः पूर्वमेवारुणोदयोऽभूत् । अनुरक्तो जनो निराशोऽभूत् । तेन प्रदत्तेन शापेन राजकन्या पाषाणत्वं प्राप्ता (मसु० २।२१२–३)। तस्या मूर्तिर्जावावास्तव्यैरद्य यावदेकस्मिन् मन्दिरे प्रदर्श्यते । आधुनिकानामैतिहासिकाना मतानुसारेण तेषा मन्दिराणा निर्माता राजा दक्ष (९१५–९१९ खी०) आसीत् । इमानि सर्वाणि मन्दिराणि समीपस्थज्वालामुखीपर्वतस्य रेपीनामकस्य गर्भान्नि:सृतैर्लाजैराक्रान्तान्यासन् । अनेकशतकानन्तर समुद्धृतानां तेषा पुष्पफलैर्धूप-दीपैश्च जावीययवना अपि पूजा प्रारभन्त । तेष्वनेके निर्वर्तितमक्कायात्रा अपि सम्मिलिता आसन् ।

**बरबुडुरेति**—मध्यजावाकलायाश्चूडामणिर्जगत्प्रसिद्धो बौद्धदेवालयो बरबुडुराभिधो विद्यते । तस्य भीमकाया रचनामनुलक्ष्य विश्वोऽय विस्मयाविष्टो विद्यते । इद ससारस्याश्चर्यं मन्यते । स्वमहापरिणामसमनुपातैरत्यन्तविस्तृतालङ्करणानामनुपमसौष्ठवेन चाङ्कोरवदतिरिक्तं विश्वस्य किमप्यन्यद् भवन साम्यमासादयितु न प्रभवेत् ।

**बरबुडुरस्य योजना**—७५०–८५० खीष्टीयाब्दमध्ये शैलेन्द्रमहाराजैर्विश्वस्य चमत्कारस्वरूपस्यास्य विशालस्तूपस्य केडुभूभागे निर्माण कृतम् । तन्निर्माणायावश्यक परिश्रम-मुपकरणसमवायश्च विधातु तादृशा एव प्रतापशालिनः सम्राजः प्रभवन्ति स्म । अभितः सस्य-श्यामलभूभागस्य मध्ये समुन्नतस्य पर्वतकस्यास्य केन्द्रत्वस्थापकाना शिल्पिना यावती प्रशंसा भवेत् सा न्यूनास्ति । अय बौद्धो वास्तुर्भूमौ समुन्नताभिर्नवभिस्तादृशीभिः परस्पर समुन्नताभि-र्भूमिभिर्निर्मिता विद्यते । यासु प्रत्येकं बाह्याभिमुखी निःसृता विद्यते । उपरिष्टाद् भूमयो निम्नभूमेरुन्नता ह्रस्वाश्च क्रमेण सन्ति । केन्द्रे सर्वतः समुन्नताया भूमौ घण्टाकृतिः स्तूपो विद्यते । निम्नाः षड भूमयो वर्गाकारा उपरितन्यस्तिस्रो वृत्ताकाराश्च सन्ति । निम्नतमभूमे-रधिक दैर्घ्यम् १३१ गजमितमस्ति । सर्वत उपरितन्या व्यासः ३० गजमितोऽस्ति । पञ्चनिम्ना भूमयोऽभ्यन्तरे एकया भित्त्याऽऽवृताः सन्ति । यत्रैको गवाक्षो निर्मितो विद्यते । आभिः पञ्चभिर्भित्तिभिस्चतस्रो दीर्घाः सजाताः । उपरितन्यश्चतस्रो भूमयः स्तूपानामेकैकेन वलयेन परिवेष्टिताः सन्ति । नवमीतो भूमित एकावृत्ताकारा सोपानपङ्क्तिः शीर्षस्तूपं यावद् गच्छति । वेदिकाना गवाक्षेषु तोरणकशीर्षाकारगवाक्षाणा पङ्क्तयः सन्ति । तेषा सर्वाः सख्या ४३२ सन्ति, तेषु च ध्यानावस्थितबुद्धाना ५०५ मूर्तयः सन्ति ।

प्रत्येक दिशि मध्ये एक तोरणमग्रिमभूमिगामि सोपानञ्च स्तः । तोरणस्यालङ्कारणमतीव सुन्दरमस्ति । उन्नततमतोरणावस्थानेन पादयोर्नीचैर्निम्नतमतोरणपर्यन्तं सकला रचना भव्या दृश्यते । एषा रचना बरबुडुराया द्वितीय सौन्दर्य प्रदत्तवान् ।

**बरबुडुरस्योद्गतचित्रम्**—बरबुडुरस्य द्वितीय वैशिष्ट्यमुद्गतचित्राणा चित्रपरिवेष्टनाना-मेकादश मालाः सन्ति । तेषां १५०० चित्रपरिवेष्टनेषु गौतमबुद्धस्य जीवनस्य जातकेष्ववदानेषु च वर्णिता घटना अङ्किताः सन्ति । बरबुडुरस्य निर्मातृणामुद्देश्यमादर्शबौद्धमन्दिरनिर्माणमासीत्, तत्र च ते पूर्णतया सफला जाताः । १५० फीटपरिमितस्य स्तूपस्यास्य सार्द्धक्रोशप्रदक्षिणा कुर्वन् भक्तो भगवतो बुद्धस्य बौद्धधर्मस्य च सम्बद्धाना सार्द्धसहस्रघटनाना दर्शनमकरोत् । अत्र बुद्धस्यैका

सुन्दरमूर्तिरपि प्राप्यत। मेन्डुतः प्राप्ता अवलोकितेश्वरस्योपरि वर्णिता प्रतिमेवेयं भारतीयकलया प्रभावितो जावीयशिल्पस्यैकोऽतीव मनोहरो दृष्टान्तो विद्यते। अनयोर्द्वयोर्मांसपेशीना सूक्ष्मतया चित्रणकारक यूनानसौष्ठवन्तु नास्ति,किन्तु बोधिज्ञानलब्धस्य परमानन्दस्य या दिव्या छटाऽस्य मुखमण्डलेऽङ्किताऽस्ति, सा संसारेऽन्यत्र कुत्रापि नोपलभ्यते।

बरबुडुरे उत्कीर्णाना बुद्धजीवनसम्बद्धाना चित्राणा मुख्य आधारो ललितविस्तरग्रन्थो विद्यते। जातककथाश्च दिव्यावदानमलम्बन्ते। इमौ द्वौ मूलसर्वास्तिवादिना ग्रन्थावास्ताम्। इत्सिङ्गस्य कथनानुसारेण सुवर्णद्वीपेऽस्यैव सम्प्रदायस्य प्रचार आसीत्। तृतीयस्या दीर्घाया मैत्रेयस्य चित्राण्यधिकानि सन्ति, स स्वमित्राणि किमप्यनुशास्ति। श्रूयते यन्मैत्रेयेणासङ्गाय पञ्चाना पुस्तकाना ज्ञान प्रदत्तम् ( इलि०—३।१६६ )। इदञ्चापि प्रसिद्ध यत् पूर्व-एशियास्था धर्मदूता असङ्गस्य वसुबन्धोश्च शिष्या आसन्। अतः सम्भवति यद् बरबुडरस्य चित्रेष्वस्या एव घटनाया वर्णन भवेत्। अत्र बुद्धनिर्वाणस्य किमपि दृश्य नोपलभ्यते। सम्भवतोऽस्य कारणमिद वर्तते यद् ललितविस्तरेऽस्य किमपि वर्णन नोपलभ्यते। ध्यानावस्थितबुद्धातिरिक्ताना मञ्जुश्री-मैत्रेयावलोकितेश्वराणामधिक चित्रणमस्ति।

अस्य स्तूपस्य भूमिमारोहतामिद प्रतीयते यद् वय मर्त्यलोकाद् देवलोक गच्छामः। साम्प्रतिकोत्खननेन प्राप्ताया निम्नाया भूमौ सासारिकघटनाना पृथिवीनरकयोर्जीवनस्य बौद्धपारिभाषिककामधातुपदवाच्यस्य च चित्रणमस्ति। उपरि गच्छद्भिः शनैः शनै रूपधातु परित्यज्य अरूपधातुर्निर्वाणपथश्चाभिगम्यते, अन्ते च दशम्या भूमौ बुद्धत्वप्राप्तिदशाया गम्यते। ९१५ खीष्टीयाब्दे सम्भवतः समीपस्थज्वालामुखीमेरापिपर्वतोत्क्षेपेण बरबुडुरस्थान लाजैराक्रान्तमभूत्। १८११–६ मध्ये सरस्टैम्फोर्डरैफल्समहोदयेनास्योद्धारः कृतः।

## पूर्वीयजावाद्वीपस्य कला

**चण्डीजगो इति**—पूर्वीयजावाद्वीपे चण्डीजगो-चण्डीसिंहसारी-पनतरन, इत्येतेषां मन्दिराणि विशेषेणोल्लेखनीयानि सन्ति। चण्डीजगो इत्यस्य निर्माण सम्भवतो द्वादशस्य शतकस्यान्तेऽभूत्। नागरकृतागमस्य कथनानुसारेण राजा विष्णुवर्द्धनोऽत्र ( १२४८–६८ ) निखात आसीत्। सोऽत्र बोधिसत्त्वामोघपाशरूपेण चण्डीम्लेरी इत्यत्र च शिवरूपेण चित्रितो विद्यते। मन्दिरमिदं त्रिभूमिकं पिरामिडाकारकञ्चास्ति, किन्तु सोपानानि प्रथमभूमिपर्यन्तमेव गच्छन्ति। अत्र कतिपयान्युद्गतचित्राणि सन्ति, किन्तु तानि समीचीनानि न सन्ति, मध्य-अमेरीकादेशीय-चित्राणि च स्मारयति।

**चण्डीसिंहसारी इति**—चण्डीसिंहसारीति कम्बुजमन्दिरवत् सरलायताकारक पञ्चशिखर भवनं विद्यते। इदम् १२०८ खीष्टीयाब्दे कृतनगरेण निर्मापितम्। अनेन राज्ञा शिवबुद्धोपाधिर्धृत आसीत्, तेन च स शिवबुद्धालय उच्यते स्म। तद्द्वयोर्धर्मयोरभेद समन्वय वा सूचयति। तादृश्येव सूचना नागरकृतागमे वर्णितेन द्विभूमिकेनैकेन मन्दिरेण प्राप्यते, तस्य निम्नाया भूमौ शिवस्योपरितन्या च भूमौ अक्षोभ्यस्य ( बुद्धस्य ) मूर्तिरासीत्। सिंहसारी-

मन्दिरस्य मूर्तिष्वप्ययमेव प्रभावो दृष्टिगोचरीभवति। अत्रैकतः प्रज्ञापारमितामञ्जुश्रीताराणा-मन्यतश्च गणेशलिङ्गदुर्गाब्रह्मशिवमहाकालनन्दीश्वरप्रभृतिविविधरूपाणा प्रतिमाः प्राप्यन्ते, किन्तु तेषु सर्वेषु शिवतत्त्वस्य प्राधान्य विद्यते।

**पनतरनमन्दिराणि**—पूर्वीयजावाद्वीपस्य श्रेष्ठा प्रसिद्धा च रचना बिलतरस्थानात् पूर्वस्मिन् पनतरनस्य (पलह) मन्दिरसमूहोऽस्ति। अस्य निर्माण त्रयोदशे चतुर्दशे च शतकयोरभूत्। एषा मन्दिराणामर्वाचीनतमो लेखः १३४७ खीष्टीयाब्दस्य विद्यते। अय विल्वतिक्तस्य राज्ञ्या जयविष्णुवर्द्धिन्या. शासनकालिकोऽस्ति। इद प्रतीयते यत् तत्काल यावद् मन्दिर प्रायः पूर्ति गतमासीत्, तच्छैवमन्दिरमासीत्। राजसनगरः (हम-मवरुक) शिवमुपासितुमत्र बहुवार समागतः। तानि मन्दिराणि बरबुडुरस्य लरजोंगरगस्य (प्राम्बानान) वा मन्दिरवद् विशिष्टयोजनानुसारेण न निर्मितानि, किन्तु शनैः शनैर्विना योजनां प्रथमैर्मन्दिरैः साक सम्बद्धान्यभूवन्। मन्दिराणा सकल क्षेत्रम् १९६ गजमित दीर्घ ६५ गजमित विशालं विद्यते, अभितो भित्तिभिः परिवृतमस्ति। भित्तिवेष्टितः परिधि-र्द्वाभ्या भित्तिभ्या त्रिधा विभक्तो विद्यते। मुख्य मन्दिरं पूर्वस्य भागस्यान्तेऽस्ति। इदं परस्पर लघुषु भिन्नाकृतिषु च वेदिषु निर्मित विद्यते। मन्दिरस्याधिको भागो नष्टो जातः।

**पनतरने रामायणचित्राणि**—अस्य मुख्यं वैशिष्ट्य मध्यवर्तिनि भागे रामायणस्य कृष्णायनस्य चोद्गतचित्राणामङ्कन विद्यते। रामायणस्य दृश्येषु लङ्काकाण्डे वर्णितानि हनुमता सम्पादितानि वीरकार्याण्याधिक्येन चित्रितानि सन्ति। तेषु हनुमतो लङ्कागमनम्, रावणस्या-शोकवाटिकाया सीतापार्श्वे आगमनम्, त्रिजटया साक समुपविष्टायाः सीतायाः पार्श्वे हनुमत आगमनम्, हनुमतो राक्षसानाञ्च युद्ध प्रदर्शित विद्यते। अन्तिमे चित्रे उत्खाताना वृक्षाणा मृताना मुमूर्षूणां राक्षसानाञ्च राशिः, व्यूहेन राक्षसाना सेनाया हनुमति आक्रमश्च सुचारुतया प्रदर्शितौ स्तः। ततो रावणस्य राजसभाया दृश्यमस्ति। हनूमान् रावणस्य सुतस्याक्षस्य भुजा भनक्ति, इन्द्रजित् त नागपाशेन बद्ध्वा राजसभायामानयति, हनुमतः पुच्छमग्निना प्रज्वाल्यते, किन्तु यदा रावणस्य प्रासादादग्निज्वालोत्तिष्ठति, तदा रावणः स्वकान्ताभिः साकं कस्यचन सरसस्तटमाश्रयति। सीता साक्षात्कृत्य हनूमान् प्रतिनिवर्तते। अन्तिमेषु दृश्येषु सेतु-निर्माणम्, रणभूमौ युद्धारम्भः, हमुमता वज्रेणैकस्य राक्षसस्य वधः, कुम्भकर्णस्य मृत्युः प्रादर्शि।

एषा चित्राणा लरजोङ्गरङ्ग(प्राम्बानान)चित्रैरुपमाया कृताया प्रतीयते यदिदं पनतरनस्य शिल्पिनः प्रवीणा नासन्। तैर्वानराणा राक्षसानाञ्च चित्रणेऽवश्य साफल्य प्राप्यते, किन्तु तेषा मानवमुखचित्राणि काम विकृतानि सन्ति। इयमेव दशा पूर्वजावाया मूर्त्यन्तराणा विद्यते। तत्रानुपातस्य सयोजनस्य च किमपि ध्यान नास्ति। आकृतयो निष्प्राणा भावरहिताश्च सन्ति, अलङ्काराणामाधिक्य वर्तते, परमस्य युगस्य काश्चन मूर्तयोऽतीव मनोहराः सन्ति। जावायाः कलाया. प्रधान वैशिष्ट्य मुखस्यालौकिकसौन्दर्यप्रकटनम्। अवलोकितेश्वरस्य बुद्धस्य च मध्यजावाया मूर्तीना पूर्वमुल्लेखो जातः। युगेऽस्मिन् सिंहसारीत्यस्य प्रज्ञापारमिता, वेलहनस्य विष्णुः, सिङ्घिमस्य हरिहरस्नादृश्य एव मूर्त्तयः सन्ति, किन्तु सामन्यतोऽस्मिन् युगे मूर्त्तिवास्तु-कलयोर्ह्रासप्रारम्भो भवति।

**जावीयकलाया ह्रासस्य कारणम्**—अस्य ह्रासस्य कारण पूर्वजावायाः स्थानीयतत्त्वस्य प्राधान्यमासीत् । मध्यजावायाः प्राचीना कला भारतीयप्रभावेणानुप्राणिताऽऽसीत् । वास्तुकलाया जावाया गुप्तपालकले अनुकृते आस्ताम् । भितरग्रामस्य (कानपुर) नचनाकथरस्य (बुन्देलखण्ड) देवगढस्य (बेतवा) गुप्तकालिकैः पहाड़पुरस्य पालकालिकैश्च मन्दिरैर्जावामन्दिराणामत्यन्तं साम्य विद्यते । मन्दिराणामलङ्करणमपि भारतीयमस्ति । तेषु भारतवर्षस्य पशवः पक्षिणो वनस्पतयः पुष्पाणि पत्राणि च सन्ति, जावाया एकमपि पत्र वृक्षश्च नास्ति, किन्तु गच्छता कालेन स्थानीयः प्रभावो बलवान् अभूत् । भारतवर्षेऽपि मध्ययुगे कलाया क्षीणता समागच्छत् । द्वादशे शतके राजनीतिकपराभवेण सार्कं वैदेशिकप्रेरणाप्रदायकं भारतीयं स्रोतः शुष्कमभूत् । अस्यामवस्थाया जावायाः स्थानीयकलायाः प्राबल्यं स्वाभाविकमासीत् । अतोऽस्माभिर्मध्यजावापूर्वीयजावयोः कलाया भूयान् भेदो दृश्यते ।

यावद् भारतीयं स्रोतः शुष्क नासीत्, तावद् जावाया धर्मे, साहित्ये, समाजे रीतौ कलायाञ्च भारतेन महान् प्रभावः स्थापितः, किन्तु तस्य स्रोतसः शोषणसमकालमेव जावायाः कलाया ह्रासो भवितुं प्रारेभे ।

**उपसंहारः**—भारतेन सुवर्णद्वीप नृशंसतापङ्कादुद्धृतमासीत्, तस्य प्रभावे क्षीणतां प्राप्त एव द्वीपपुञ्जोऽय वन्यपङ्के निमग्नोऽभूत् । सुवर्णद्वीपस्य कलात्मककृतीनामितिहासेन तथ्यमिद सम्यक् समर्थ्यते । पञ्चदशशतकपर्यन्त तत्र भारतीयः प्रभाव आसीत्, तथा बरबुडुरप्रम्बननअङ्कोरवत्-अङ्कोरथोमसदृशी रचना जगत्प्रसिद्धा निर्मिताऽभूत् । ततस्तत्र यवनधर्मः प्रबलो भवितुमारेभे । सुवर्णवासिभिश्चैकाऽपि भव्या कृतिर्न सम्पादिता । पूर्ववास्तुशास्त्रस्य प्रकाण्डेन विदुषा श्रीफर्गुसनमहोदयेन जावाया यवनविजयविषये सत्यमेव लिखितं यद् यवनजयानन्तर तत्र तादृशी घटना घटिता यस्या अल्पा सम्भावनाऽऽसीत् । इत्थं प्रतीयते यत्, मन्ये भवननिर्माणकर्तारः स्वसाधनानि प्रचिक्षिपुः, पाषाणोत्कर्तनकारिणा हस्तेभ्यश्छेदनसाधनानि पतितानि । ततो जावाया किमपि तादृग भवन न निर्मितम्, कापि तादृशी मूर्तिर्न सम्पादिता यस्याः कश्चनोल्लेखो भवेत् । नव शतानि वर्षाणि वैदेशिका आवासका द्वीपमिद तादृगैर्भवनैर्भूषयितु सतत प्रयत्नमकुर्वन्, यानि स्वक्षेत्रस्याद्वितीया रचनाः सन्ति, किन्तु कालस्यास्यान्ते आवासकानां रक्तस्य संचारो न्यूनोऽभूत्, वशः शुद्धो नावशिष्टः, शक्तिः क्षीणाऽभूत् । प्राचीना आवासका मन्ये मन्त्रदण्डस्पर्शेन सहसा लुप्ता अभूवन्, स्थानीयाः कलाशून्या जातयः पुनः प्रभुता प्राप्नुवन्ति, सम्भवतश्च देशात् कलायाः शाश्वतिको लोपो भवति ।

या वार्ता कलाविषये उच्यते सा धर्मसाहित्यप्रभृतिसंस्कृतेरन्यतत्त्वानां विषयेऽपि सत्यास्ति, तथ्यमिदञ्च निर्विवादतया घोषयति यत् सुवर्णद्वीपं सभ्यतां पाठयितु भारतीया आसन् । यावत्तेषां सम्पर्कः प्रभावश्चासीत् ते सभ्या आसन्, तेषा सम्बन्धे विच्छिन्ने प्रभावे च न्यूनता गतेऽस्य द्वीपपुञ्जस्य निवासिनः पुनः स्वा प्राचीना दशामुपगताः ।

## बकुलपुरमथवा तज्जुगपुरम् ( बोर्नियो )

जावाद्वीपस्योत्तरस्मिन् बोर्नियो इति मलयद्वीपपुञ्जस्य सर्वतो महद् द्वीपमस्ति। अस्य क्षेत्रफलम् (२,८९,९९३ व० मी०) यद्यपि जावाद्वीपात् सप्तगुणमष्टगुणं वाऽस्ति, किन्तु जनसंख्या ( २९,६६,५३६ ) जावाया जनसंख्याया विंशो भागो विद्यते। अस्य मुख्यं कारणमिदं विद्यते यदिदं निबिडारण्यैः पूर्वोत्तरतो दक्षिणपश्चिमाभिमुखं गच्छन्तीभिः पर्वतमालाभिश्चावृतमस्ति। अस्य समुद्रतटे दुष्प्रवेशः कर्दमो विस्तृतो विद्यते भूमिश्चोर्वरा नास्ति। प्राचीनकालतोऽस्य द्वीपस्य प्रधानमाकर्षणमत्रत्या खनिजा सम्पत्तिः सुवर्णं ताम्रक लोहश्चाभूवन्। द्वीपमिदं चीनभारतयो-र्व्यापारिमार्गेऽवस्थानेन विशिष्टं महत्त्वमादधाति स्म। द्वीपस्यास्य महानद्यः पश्चिमे ब्रूनेई साम्ब्रासः कापुआसः इति पूर्वस्मिंश्च महाकाम. ( कूतेई ) बारितो इति च सन्ति। दुष्प्रवेशं द्वीपमिदमुपनिवेशकास्ताभिस्ताभिर्नदीभिः साकमेव प्रविष्टा अग्रे गताश्च, यतो हि तासां प्रवाह-पथो द्वीपे प्रवेशस्य सर्वोत्तमः सुरक्षितश्च मार्ग आस्ताम्। तासां मुखानि समीचीनपोतनिरोध-स्थानव्यापारिकेन्द्रस्थानीयान्यासन्। बोर्नियो इत्यत्र हिन्दुसभ्यताया अधिका अवशेषा महाकाम-( कूतेई ) कापुआस-साम्ब्रास-नदीनां तटेषूपालभ्यन्त।

**मूलवर्मणो यूपलेखाः**—१८७९ तमे खीष्टीयाब्दे पूर्वीयबोर्नियोद्वीपे महाकामनदीमुखे कूतेई स्थाने मोयेराकामनस्थाने च मूलवर्मणश्चत्वारोऽभिलेखा उपालभ्यन्त। इमे मलयद्वीपपुञ्जे उपलभ्यमानाः प्राचीनतमा अभिलेखाः सन्ति। तेषु कश्चन तिथिरङ्कितो नास्ति, किन्तु लिप्या-धारेण तेषां कालश्चतुर्थशतकस्यान्त्यो भागो निश्चितो विद्यते। एते लेखाश्चतुर्षु पाषाणयूपेषु अथवा यज्ञीयस्तम्भेषु ललितसंस्कृतच्छन्दसोत्कीर्णाः सन्ति। तेषु मूलवर्मणा राज्ञा सम्पादितस्य बहुसुवर्णकस्य यज्ञस्य तथा तस्य स्मृतौ यूपस्थापनस्य वर्णनमस्ति। अस्मिन् लेखे प्रतिपादित-वंशावल्यनुसारेण कुण्डङ्गनामकस्य महात्मनो राज्ञोऽश्ववर्माख्य एकः पुत्रो बभूव, अयं वंश-प्रवर्तक आसीत्, अस्य त्रिषु पुत्रेषु सर्वोत्तमो मूलवर्माऽऽसीत्। अनेन बहुसुवर्णको यज्ञः सम्पादितः, तत्स्मृतौ च श्रेष्ठविप्रैः सङ्कल्पितोऽयं यूपः स्थापितः। द्वितीयो यूपस्तैः पुरोहितैः स्थापित आसीत्, ये वप्रकेश्वरे पवित्रतमे क्षेत्रे विंशतिगोसहस्रकमादातु समागताः। तृतीयोऽपि यूपः पुरोहितैः स्थापितः। अत्र मूलवर्मणा प्रदत्तयोः कल्पवृक्षस्य भूमेश्चोल्लेखो विद्यते। चतुर्थस्य यूपलेखस्य कश्चन खण्डितोऽंश एवोपालभ्यत, अत्र सगरस्य वंशे समुत्पन्नस्य भगीरथस्य सादृश्यं सम्भवतो मूलवर्मणः पुत्रेण कृतम्।

१९४० तमे खीष्टीयाब्दे उपर्युक्तात् स्थानात् त्रयोऽन्ये एतादृशा यूपलेखा उपालभ्यन्त। एतेष्वपि मूलवर्मणो दानस्य वर्णनं विद्यते। प्रथमे लेखे अनुष्टुभ आर्यायाश्च च्छन्दसोर्द्वयोः श्लोकयोर्जलधेनुघृतधेनुकपिलातिलैकादशवृषभाणां दानस्य वर्णनमस्ति। धेनुशब्दस्यार्थो गौरथवा तदाकारवस्तुनो दानमस्ति। द्वितीयस्मिन् लेखे एकेनानुष्टुभा च्छन्दसा सदीपमालस्यै-कस्य तिलपर्वतस्य दानमुल्लिखितमस्ति। तृतीयस्य लेखस्य चतुर्षु खण्डितेषु अनुष्टुप्सु श्लोकेष्विदं कथितं विद्यते यन्मूलवर्मणाऽनेके राजानो युद्धे पराजिताः, तथा युधिष्ठिरवत् ते स्वकीया वशंवदाः

कृताः । अत्र वप्रकेश्वरे चत्वारिंशत्सहस्राणां तथा त्रिंशत्सहस्राणां सम्भवतः स्वर्णमुद्राणां दानस्य तथा विविधप्रकारकजीवदानस्य राजधान्या नभोदीपस्थापनस्य चोल्लेखो विद्यते । तस्य समाप्तौ चेदं कथितं विद्यते यद् विभिन्नदेशेभ्यः समागतैर्ब्राह्मणैरय यूपः स्थापितः ।

एतेषां सप्तानां यूपलेखानां दोषरहितं संस्कृतम्, दक्षिणभारतलिपिः, विभिन्नदानवर्णनम्; वंशावली, अंशुमतः सागरस्य भगीरथस्य चोपमाः, ४०० ख्रीष्टीयाब्दे पूर्वीयबोर्नियोद्वीपे प्रबलभारतीयप्रभावस्यासन्दिग्धं प्रमाणं विद्यते । यूपवत्स्थानात् सुवर्णमयी एका महती चतुर्भुजा मूर्तिस्तथा विष्णोरेका लघुमूर्तिस्तत्रत्यस्य शासकस्य सम्राजो मुहम्मदसालिदुद्दीनस्य काले प्राप्ता । तथा स उभे मूर्ती कण्ठे धारयति स्म ।

**पूर्वीयबोर्नियो-प्रदेशे हिन्दुमूर्तयः**—१९२५ तमे ख्रीष्टीयाब्दे पूर्वमध्य एशियामध्ये प्राचीनानामवशेषाणामनुसन्धानार्थं प्रहितेनैकेन मण्डलेन कोम्बेङ्गपर्वतगुहायां तिरोहिता द्वादश हिन्दुबौद्धमूर्तयः प्राप्ताः । तासु महादेवस्य नन्दिनः कार्तिकेयस्य ब्रह्मणः स्कन्दस्य महाकालस्य गणेशस्य च पाषाणप्रतिमा उल्लेखनीयाः सन्ति । शिवसम्बन्धिनीनां मूर्तीनामाधिक्येनात्र शैव-धर्मस्य प्राधान्यं सूच्यते । एतासां मूर्तीनां नीचैः संलग्नाभिश्चूडाभिरिदं ज्ञायते यत् ताः स्वमूलरूपेण केषाञ्चिद् मन्दिराणां प्रतिमाधारे संलग्ना आसन् । कस्मिंश्चिद् महति संकटे समापतिते सति ता गुहायां सुरक्षिता भवेयुः । ता मूर्तयोऽधुना बटेविया-संग्रहालये सन्ति ।

डा०वाशमहोदयेनैतासां मूर्तीनां भारतीयाभ्यो जावीयमूर्तिभ्यश्च भेदं प्रदर्शयताऽयं परिणामो निष्कासितो यत् ता भारतीयावासकानां कृतयो न सन्ति, तथा न भारतजावीयोपनि-वेशकानाम् । सम्भवतस्ता हिन्दूत्वमाप्तानां तादृशां डायकानां ( बोर्नियोस्थानामादिवासिनाम् ) रचनाः सन्ति, येषां सम्बन्धो भारतात् चिरकालतो विच्छिन्नो जातः । बोर्नियोद्वीपस्य पूर्वीयतट-सागरवेगागनिकटे एकः पल्लवाभिलेखोऽप्युपालभ्यत ।

**पश्चिमबोर्नियो इत्यस्यावशेषः**—कापुआस नदीतटे तथा तेकारेकोद्गमे बटोईपदाराभिधे स्थाने शिलासु स्तूपानामाकृतय उत्कीर्णाः सन्ति, तथा पाश्चात्त्या लिपिर्बौद्धधर्मस्य प्रसिद्धः श्लोकश्च 'ये ते धर्मा हेतुप्रभवाः', 'अज्ञानाद्धीयते ज्ञानम्' उत्कीर्णौ स्तः । मलावी इत्यत्रैक लिङ्ग योनिश्च प्राप्तं विद्यते । सितागे ( सेया ओ एक ) एकं सर्वस्ममुखलिङ्गमुपालभ्यत । यत्र निम्नो वर्गाकारो ब्रह्मभागः, मध्योऽष्टकोणो विष्णुभागः, उपरितनो वेल्लनाकरः शिवभागः समानलम्बाः सन्ति । सारावाकप्रवेशाद् गणेशस्य प्रतिमा प्राप्यत ।

**साम्बासप्रदेशादुपलब्धा नवा मूर्तयः**—कतिपयेभ्यो वर्षेभ्यः पूर्वमुत्तरपश्चिमबोर्नियो-प्रदेशेऽवस्थितात् साम्बासनामकनगरात् सार्द्धसप्तक्रोशदूरे पालगई सालोग-नामकग्रामाद् नवशती सौवर्णराजतबौद्धमूर्तीनां महत्या विलक्षणपद्धत्या प्राप्ता । अत्र कैश्चित् चीनदेशीयकर्मकरैरे-कामुन्नतां भूमिं खनद्भिर्द्विफुटपरिमिता उन्नताः कांस्याच्छादकाच्छादिता घटाः प्राप्ताः । तेषु भग्नतां नीतेष्वाश्चर्यचकितैर्भृत्यैरुपर्युक्ता बहुमूल्या मूर्तयः प्राप्ताः । अस्य स्थानस्य पार्श्वे कस्यचन भवनस्य चिह्नाभावेनेयं कल्पना कृता यत् कस्यचन संकटस्योपस्थितौ श्रद्धासम्पन्नै-र्भक्तैरेता मूर्तयोऽत्राच्छादिताः, यतो धर्मरहितानां पवित्रताशून्यैर्हस्तैर्भ्रष्टा मा भूवन् । पूर्वबोर्नियो-

द्वीपे कोम्बेंगपर्वतगुहाभ्योऽपि सम्भवतोऽनेनोद्देश्येन तिरोहिताः पाषाणमूर्तय उपालभ्यन्त । अद्यापि नाज्ञायतेद् यदस्य सकटस्य स्वरूप किमासीत् ।

साम्बासस्य नवसु मूर्तिषु चतस्रो बुद्धप्रतिमाः सन्ति, पञ्च चावलोकितेश्वरस्य बुद्धस्य प्रतिमाद्वयमुत्थितावस्थाया द्वे उपविष्टावस्थायाम् । उत्थितयोः मूर्त्योः षट्-इञ्चसमुन्नता महती प्रतिमा रजतमयी विद्यते, तत्र दक्षिणो हस्तो वितर्कमुद्रोऽस्ति, वामो हस्तोऽञ्चल गृह्णाति, तस्योष्णीष उन्नतो नास्ति, शिरसि चोर्णाऽतीव स्पष्टा निर्मिता विद्यते । पृष्ठे पृथक्करणयोग्यं प्रभामण्डल निर्मित विद्यते, मूर्तिरियञ्च कमले वर्तते । द्वितीयोत्थिता मूर्तिर्विद्यते ३०१″ उन्नता सुवर्णमयी चास्ति, अस्याः प्रभामण्डल स्कन्धेन सम्बद्ध विद्यते । द्वे मूर्त्ती रचनादृष्टया दीपङ्करबुद्धस्य प्रतीयते । द्वे उपविष्टे मूर्त्ती सौवर्ण्यौ स्तः १–८ इञ्चपरिमिते, तथा १–६ इञ्चपरिमिते उन्नतेस्तः, महत्यां मूर्त्यां बुद्धो भूमिस्पर्शमुद्राया तथा लघौ ध्यानमुद्रया विद्यते, चीवर रेखया प्रदर्शित विद्यते, दक्षिणश्च स्कन्धश्चीवरहीनो विद्यते । द्वयोः पश्चाद् भागे प्रभामण्डल निर्मित विद्यते ।

अवलोकितेश्वरेषु प्रथमा स्वर्णप्रतिमा पद्मपाणिवरदमुद्रायामस्ति, द्वितीया स्वर्णमूर्तिः षड्भुजी विद्यते, दक्षिणेषु त्रिषु हस्तेषूपरि निम्नाभिमुख क्रमेण अक्षमाला, पद्म वरदमुद्रा च सन्ति, वामयोर्हस्तयोः पुस्तक पाशश्च स्तः, सर्वतो निम्नो हस्तः क्रोडे विद्यते । इय सम्भवतोऽमोघपाशनामकस्य तान्त्रिकस्य बोधिसत्त्वस्य मूर्त्तिरस्ति । प्रथमायास्तृतीयस्याश्चतुर्भुजमूर्तेर्हस्तेषु पुस्तक वरदमुद्रा पाशः पद्मञ्च सन्ति । एतन्मुकुटे अमिताभस्य मूर्तिरङ्किता विद्यते । चतुर्थी मूर्तिरप्यक्षमालावरदमुद्रापुस्तकपद्मधारिणी वर्तते, परमस्या जटायाममिताभोऽतीव स्पष्टो विद्यते । इयम् ५.२″ उन्नता तथा १३ औंसमिता गुरुरस्ति, तथा सुवर्णकारस्य कौशल सम्यक् परिचाययति । पञ्चम्यपि मूर्तिः चतुर्भुजा विद्यते, अस्या अलङ्करणान्यप्यन्यमूर्तिवत् सन्ति, शरीरस्योपरितने भागे विशालोत्तरीयाकारक यज्ञोपवीतमात्रमस्ति, गुम्फितकेशा जटामुकुटस्थानीयाः सन्ति, जटायाः शिखायामेक देदीप्यमानं त्रिशूल विद्यते, एतन्मूर्तिपृष्ठसलग्नप्रभामण्डलस्य शीर्षे त्रिशूलाकृतिर्ज्वाला विद्यते, यत्र पद्मरागमणिविशेषो जटितो विद्यते ।

आसा मूर्तीना सूक्ष्मतयाऽध्ययनकर्तुः श्रीतानमहोदयस्य मतानुसारेण ता मूर्तयो मलायाद्वीपकल्पस्य प्रतिमाभिः काम सवदन्ति तथा तासा कालः षष्ठयाः सप्तम्या वा शताब्द्या अन्तरो नैव भवितुमर्हति । नीलकण्ठशास्त्रिमतानुसारेण निश्चितं प्रमाणमस्ति यत् ता मूर्तयोऽस्य पश्चिमबोर्नियोद्वीपे मलायाद्वीपकल्पवत् श्रीविजयसाम्राज्यस्याङ्गमासीत् ।

**बोर्नियोभाषासु भारतीयतत्त्वानि—**वर्तमानकाले द्वीपेऽस्मिन् भारतीयसस्कृतेः प्रभावः प्रायो लुप्तो जातः । केवल भाषाक्षेत्रे तस्याः स्मृतिरद्यावधि जीवति । गोण्डामहोदयेन मध्यबोर्नियोद्वीपे व्यवह्रियमाणाया बुसङ्गाभिधाया वाचि अनेकैर्बर्मीयविकारैः साकं निम्नलिखितसस्कृतशब्दाना प्रायस्तेष्वेवार्थेषु प्रचलन प्रतिपादितम्, तथा कोष्ठेषु तेषा वर्तमान रूपं लिखित विद्यते—अर्थ. ( अरेति ), रसः ( असभाव या स्वाद ), वचस् ( बस पढ़ना या वाचना ), दण्डः ( डेण्ड, सजा ), जागृ ( जग-जागृत या सावधान ), जालः ( जल, फन्दा ), गुडः ( गुल-

शक्कर ), गुणः ( गुन-लाभ ), गुरुः ( गुरु ), रूप्यम् ( लेपिया रूपिया ), प्रत्ययः ( पेरसय विश्वासनम् ), परीक्षा ( प्रीक्षा प्रच्छनम् ), राजा ( राजा लाजा ), साक्षी ( साक्षी-गवाही ), सूत्रम् ( सेतेर-रेशम ), बोर्नियोप्रदेशे एते सर्वे शब्दा मलयभाषाद्वारा गताः। यथा संस्कृत-रूप्यशब्देन मलये रूपिया इति जातम्, तस्माच्च बुमङ्गभाषाया लेपियेति। बोर्नियोप्रदेशे दक्षिणभागस्य नदीमुखानाञ्च जावया साकं विशेषसम्बन्धाद् जावाया अधिकः प्रभावो जातः चतुर्दशे शतके द्वीपमिदं जावाया मजयहितनामकसामुद्रिकसाम्राज्यस्याङ्गमासीत्, अतो बोर्नियो-भाषास्वनेके शब्दा जावाद्वाराऽपि समागताः—प्रयोगः ( प्रयोगो-उपाय, कार्य ), वयस् ( वयः, वजः, आयु ), कुसुमम् ( कुसुम )।

उपर्युक्तवर्णनेनेदं स्पष्टं भवति यद् बोर्नियोप्रदेशस्य विभिन्नभागेषु हिन्दुसंस्कृतेरवशेषा उपलभ्यन्ते। बोर्नियोपर्यन्तं तन्नायकाः के आसन्? किम् भारताद् यायिभिर्जनैर्बोर्नियो-प्रदेशस्यावासनं कृतम्? अथवा भारतीयप्रभावरागेण रक्तैर्जावावासिभिरस्योपवेशनं कृतम्? विदुषामस्मिन् विषयेऽद्यापि यावदैकमत्यं न जातम्। डा० बाशप्रभृतिहालेण्डवासि-पण्डितैरस्य गौरवं भारतीयेभ्यो न दीयते, किन्तु श्री डा० रमेशचन्द्रमजूमदारनीलकण्ठ-शास्त्रिणौ बोर्नियोप्रदेशस्यावासनं भारताद् गतैर्जनैः कृतमिति मन्येते। मूलवर्मणो यूपलेखानां पल्लवलिपिरिदं सूचयति यद् दक्षिणभारतीयैर्बोर्नियो-प्रदेशे भारतीयसंस्कृतेः प्रसारः कृतः।

**सेलीबीज इति**—बोर्नियोप्रदेशस्य पूर्वं सेलीबीजनामकं द्वीपमस्ति, अत्र भारतीय-संस्कृतेः प्रभावस्य परिचयस्त्रिप्रकारकैः प्रमाणैर्लभ्यते-पुरातत्त्वीयेन शब्दशास्त्रीयेण मानवशास्त्रीयेण च। अस्य द्वीपस्य पश्चिमतटे करमाख्यनदीतटे त्रिक्रोशाभ्यन्तरस्थानाद् बुद्धस्यैका मनोहरा कांस्यप्रतिमाऽलभ्यत। तत्र बुद्धस्य चीवराख्यावृत्तिर्महता सौन्दर्येण प्रकटिताऽस्ति, चीवरं वामस्कन्धे विद्यते। दक्षिणस्कन्धो रिक्तोऽस्ति, बुद्धस्य मुखमण्डाकारमोष्ठश्च स्थूलो विद्यते, मूर्तेरस्या हस्तौ पादौ च खण्डितौ स्तः। कलात्मकदृष्ट्या मूर्तिरियं हिन्दजावीयमूर्तितो भिन्ना विद्यते, तथा साक्षाद् भारतादानीता प्रतीयते। डा० बाशमहोदय इमाममरावतीशैलीकां मन्यते, किन्तु, श्रीमजूमदारः कस्यापि स्थानस्य सम्बन्धमकृत्वाऽऽरम्भिकगुप्तयुगस्य रचनां मन्यते।

शब्दशास्त्रिभिः सेलीबीजस्य भाषासु निम्नलिखिताः संस्कृतशब्दा अनेकवर्णविकारैस्तथा ध्वनिविकारैः साकं प्राप्ताः। काचः ( सेलीकच, हि० शीशा ), कुञ्ची ( कोची, चाबी ), कुण्डी ( गण्डी, घड़ा ), घण्टा ( गरघण्ट ), गुडः ( गोला, शक्कर ), वैडूर्यं ( वयडुरी ), मणिः ( मनि, मनका ), तम्र ( तेम्बग, ताबा ), दधि ( ददि ), चतुरङ्गम् ( चतोरो, शतरञ्ज ), चन्दनम् ( चन्दन ), छुरिका ( चुरिग, छुरी ), जालम् ( जल, फन्दा ), रागिन् ( राजी, रगीन ), रूप्यम् ( रुपिया ), रोटी, लाभः ( लाब, नफा ), शृङ्खला ( सक्कल, जंजीर ), सोपानम् ( सपन, सीढ़ी )।

इदं प्रतिपाद्यते यत् सेलीबीजनिवासिनः—आत्मानं बुगीनीज इति प्रतिपादयन्ति—अतीव कुशला नाविका आसन्, तैर्मलायावासिभिः साकं व्यापारं कुर्वद्भिरुपर्युक्ता भारतीयाः शब्दाः शिक्षितास्ते च स्वभाषाया सगृहीता। उपर्युक्ताः शब्दाः पण्यवस्तुवाचका गेहे च उपयुज्य-

मानवस्तुवाचकाश्चासन्। सम्प्रति कतिचन सांस्कृतिकशब्दा उदाहरिष्यन्ते। तेषु निम्ना उल्लेखनीयाः सन्ति—गुरुः (गुरु), पञ्चेन्द्रियाणि (पचनिदर), परमेश्वरी (परमेसुरी, रानी), विद्याधरी (विददरी, अप्सरा), भण्डागारम् (बडहर=कोषाध्यक्ष), विद्वान् (विदुवण, गवैया), मकुट (मकोट), मेघः (मेग, बादल), नागः (नग, साप), समुद्रः (समुद, सागर), रा त्सः (ओरोसस), प्रकारः (परकर, ढग), परीक्षा (पेरस्सा, जाच), उपवासः (पुवास, व्रत), भूतः (बोत), भट्टारः (बटर, राज्ञा तथा देवतानामुपाधि.), व्रतम् (बरत, शोकपालनम्), व्रततपः (वरतय, तपस्याचरणम्), मन्त्री (मन्तरी), महर्द्धिक (मरदेका, स्वतन्त्र), धूपः (दूप, सुगन्धित-द्रव्यम्), देवा अनेन रूपेण दृश्यन्ते, दोष. (दोस) शखकालः (सककल प्रलयकालो, यदा ईश्वरानुचरास्तत्सूचकवाद्य प्रकुर्वन्ति), शपथः (सपत्त), शिक्षा (सेस्स, दण्डनम्), आगमः (आगम, धर्म), कारणम् (करन), गज. (गज, हाथी), विचारः (बिचार), अभ्यासः (बियस, अभ्यसनम्), वृत्तम् (विरिता, समाचारः), लक्षम् (लस्स, दसहजार), समः (सम, बराबर), शेषः (सेस)। बूगीवासिना मकासखासिनाञ्च वर्णमालाऽपि भारता-दुद्भूतेति मन्यते।



# त्रयोदशोऽध्यायः

## बर्मादेशः

सामान्यः परिचयः—बौद्धमन्दिराणां देशः एशियाख्यमहाद्वीपस्य मानचित्रे बर्माख्यो देशः पूर्वस्यां दिशि भारतवर्षस्यैव वर्द्धमानो बाहुः प्रतीयते । भूगोलस्य वंशस्य भाषायाश्च दृष्ट्या बर्मादेशः भारतस्याङ्गं न वर्तते, किन्तु सांस्कृतिकरूपेणास्य देशस्यांशो विद्यते । बर्मादेशो भारतस्य तेषु विजितेषु प्रदेशेष्वस्ति, यैर्भारतीया भाषा संस्कृतिश्च पूर्णतया गृहीते स्तः, तथाऽद्य यावत् ते परित्यक्ते न स्तः । अतीते काले भारतेनानेकेषां देशानां धर्मविजयः कृतः, किन्तु वर्तमाने समये बालिस्यामदेशौ विहाय देशान्तरेषु भारतीयसंस्कृतेर्जनानां साधारणे जीवने तावान् गभीरो व्यापकश्च प्रभावो नास्ति । यावान् बर्माभिधे देशे वर्तते । श्रीलङ्कायाम्, चीने, जापाने, कम्बोडियादेशे, अनामप्रान्ते च बौद्धधर्मस्य प्राधान्येऽपि धर्मान्तराणां पूर्णः प्रचारो विद्यते । श्रीलङ्का स्थविरवादस्य केन्द्रं विद्यते, किन्तु तत्र बौद्धाः केवलमेकषष्टिः ( ६१ ) प्रतिशतं सन्ति । इस्लामखीष्टाद्यन्यधर्मावलम्बिनोऽपि तत्र पर्याप्ता विद्यन्ते । चीनदेशे जापानदेशे च ताओवादः कन्फ्यूशियसमतं शिन्तोधर्मश्च प्रचलिताः सन्ति, किन्तु बर्मादेशे बौद्धधर्मस्य प्रायो निष्कण्टकं साम्राज्यं वर्तते । अस्य प्रत्यक्षं प्रबलञ्च प्रमाणमत्रोत्तरस्मिन् मिचीनप्रदेशात् प्रायो रङ्गूनपर्यन्तं पदे पदे समुपलभ्यते । कश्चनापि ग्रामो नगरं वा एतादृशं नास्ति यत्र बौद्धमन्दिरं ( पगोडा ) न विद्यते । कश्चन महान् पर्वतकस्तथाविधो न वर्तते, यस्तैर्मुकुटितो मण्डितो वा न भवेत् । देशान्तरेषु बौद्धमन्दिराणि तथा प्रचुरसंख्यायां नोपलभ्यन्ते । अतो बर्मादेशो बौद्धमन्दिराणां देश उच्यते ।

बर्मादेशस्येतिहासो निम्नयुगेषु विभक्तुं शक्यते—

( १ ) प्राचीनयुगम् ( १०४४ खीष्टीयाब्दपर्यन्तम् )—इदं प्रारम्भिकहिन्दुराज्यानामुपवेशनस्य युगमासीत् । अस्य शृङ्खलाबद्ध इतिहासो नोपलभ्यते ।

( २ ) मध्ययुगम् ( १०४४–१८८५ खीष्टीयाब्दपर्यन्तम् ) ।

( ३ ) वर्तमानयुगम् ( १८८६–१९४८ खीष्टीयाब्दपर्यन्तम् ) ।

## प्राचीनयुगम्

युगस्यास्य प्रारम्भिकेतिहासस्यैकमात्रं स्रोतः पालिभाषानिबद्धा बर्मादेशस्य प्राचीनानुश्रुतयः सन्ति । आभिर्ज्ञायते यद् भारतीयैरुदीच्यबर्मादेशस्य दक्षिणबर्मादेशस्य चावासनमक्रियत । बर्मादेशोऽनेकैः स्थलपथैर्जलपथैश्च भारतेन सम्बद्धो विद्यते । तस्य रत्नगर्भा वसुन्धरा साहसिकानां व्यापारिणां कृते स्मरणातीतात् कालादेवाकर्षणस्य केन्द्रमासीत् । वीर्यसम्पन्ना राजपुत्रास्तेषु स्थानेषु गत्वा स्वानि राज्यान्यस्थापयन् । अस्य देशस्यैका प्राचीनानुश्रुतिः प्रतिपादयति यत् कपिलवस्तोः शाक्यवंश्येन राजकुमारेणाभिराजेन इरावदीनद्या उपरितन्या द्रोण्या सेनया साकमागत्य सग-

स्साख्या सक्किस्साख्या ( सकाश्य = तगौ ) वा नगरी आवासिता तथा पार्श्वस्थे प्रदेशे स्वकीय राज्य स्थापितम् । तगौंगस्थान पद्मरागमणिखनिप्रदेशे विद्यते । अतोऽस्यावासन सर्वप्रथमं स्वाभाविकमासीत् । अभिराजस्य पुत्राभ्या राज्य द्विधा विभक्तम् । ज्येष्ठः पुत्रोऽराकानप्रदेशस्य शासकोऽभूत् , कनिष्ठश्च तगौंगप्रदेशस्य । एकत्रिंशद्वशपरम्परानन्तर राज्यमेतत् पूर्वदिशः समागतयैकया जात्या नाशितम् । गौतमबुद्धकाले उदीच्यबर्मादेशे गङ्गायास्तीरात् दज इत्याख्यस्य ( दशस्य दासस्य वा ) नेतृत्वे क्षत्रियाणामेकमन्यद् दल गतम् । दज इत्याख्येन प्राचीना राजधानी स्वाधिकारे नीता, विधवा राज्ञी च परिणीता । तगौंगप्रदेशे आगामिषोडशवशपरम्परापर्यन्तमस्य वशस्य शासनमभूत् । पश्चाद् राज्यमिद वैदेशिकाक्रमणस्य लक्ष्यमभूत् । आक्रमणकारिभी राजा राज्यात् प्रभ्रंशितः ।

**श्रीक्षेत्रस्य पगानस्य च स्थापना**—तगौंगप्रदेशस्यान्तिमस्य राज्ञ एकः पुत्रश्चमत्कारयुक्तपद्धत्या सुरक्षितो भूत्वा पलायितः । अनेन प्रोमस्थानस्य समीपे स्वीया राजधानी आवासिता । अस्य सूनुर्दत्तबौंगः श्रीक्षेत्राभिधाम् ( थरेखेत्तर-प्रोमस्थानात् क्रोशचतुष्टयमुत्तरस्मिन् ह्मावज़ा वसति ) महानगरीं सस्थापितवान् । अष्टादश राजानोऽत्र ८४ तमखीष्टीयाब्दपर्यन्त शासनमकुर्वन् । ततोऽत्र न्युषिताना प्यूकनरन-म्रम्मनामकाना त्रयाणा विभिन्नजातीयदलानामेकादशवर्षाणि यावत् सघर्षः प्रचलितः । प्यूनामक दल विजय लेभे, कनरनदलनराकानप्रदेशे पलायितवत् । प्यूजनानामुत्कर्षो बहुकाल यावदक्षुण्णमभूत्, पर पश्चादिमे दाक्षिणात्यैर्मोनजातीयैस्तलैंगजातीयैर्वा पराजिताः । इतस्ततो भ्रमणानन्तर प्यूजातीयैः पगानप्रदेशे स्वीया राजधानी स्थापिता, किन्तु ते तत्रापि शान्त्या न स्थिताः । इमे उत्तरदिशो म्रम्मजात्याऽऽक्रान्ताः । वराकाः प्यूजना भाग्यचक्रेण चूर्णिता म्रम्मजातीयैः समिश्रिताः । अन्ते इमे म्रम्मजातीया जनाः सकलबर्मादेशशासकाः सवृत्ताः, बर्माशब्दो म्रम्मस्यैव रूपान्तर विद्यते ।

## दक्षिणबर्माप्रदेशे सुधर्म ( म्म ) वती-( थेतोन ) हंसावती-नगर्योः स्थापना–

पेगू इत्याख्यप्रदेशस्य बर्मावासिजनेषु स्वप्रारम्भिकेतिहासविषयेऽनेका अनुश्रुतयः प्रचलिता विद्यन्ते । तासु प्रदेशस्यास्योपनिवेशनस्य सकलमपि श्रेयो भारतीयेभ्यः प्रदीयते । एका परम्परेदं प्रतिपादयति यद् भारतीया आवासकाः कृष्णाया गोदावर्याश्च नद्योस्तीरत आगत्य इरावदी नद्या मुखपुलिने समीपवर्तिनि समुद्रतटे च न्युषितवन्तः । अत्रत्या आरण्यका जनास्तथा क्रूरा आसन् यत् तैर्गौतमबुद्धोऽपि पाषाणैरुपद्रुतः पलायितश्च । प्रदेशेऽस्मिन् सर्वप्रथमं निवसन्तौ द्वौ जनौ एकस्य भारतीयस्य राज्ञः तिस्सस्य ( तिष्यस्य ) प्राप्तपरिव्राजकौ पुत्रावास्ताम् । ताभ्या समुद्रतटे नागप्रसूतो बालकः सिंहराजः पालितः । तेन सुधम्मवती ( थेतोन ) नगरी स्थापिता । ५७३ तमे खीष्टीयाब्दे वशस्यास्य श्यामल-विमल-नामकाभ्या त्याजितोत्तराधिकाराभ्या राजपुत्राभ्या कैश्चन जनैरेकत्रीकृत्य हसावती ( पेगू ) नगरी स्थापिता । ७६१ तमखीष्टीयाब्दपर्यन्तं वशोऽय राज्य चकार । अस्यान्तिमो राजा तिस्सः ( तिष्यः ) स्वभार्याप्रभावेण बौद्धत्व स्वीकृतवान् ।

उपर्युक्तानुश्रुतितः स्पष्टमिद भवति यत् प्राचीने युगे बर्मादेशे तगौंग-अराकानश्रीक्षेत्र-थेतोन-पेगूराज्यान्यासन्, मोनवश्यैः श्रीक्षेत्रस्य प्यूराज्यं विध्वसितम्, नूतनपगानराज्य स्थापितम्।

उपर्युक्तविवरणेषु बर्मादेशे बुद्धस्यागमनादिसम्बद्धा अनेकेऽविश्वसनीया विचाराः सन्ति, किन्तु अनेन कारणेन सकला अनुश्रुतयोऽसत्याः सन्तीति न मन्तव्यम्। शिलालेखैश्चीनीयविवरणैश्चापि बर्मादेशे उपर्युक्तस्य राज्यस्यान्येषां भारतीयराज्यानाञ्च सत्ता सिध्यति। एतेष्वराकानराज्यस्य वैशालीताम्रपट्टनरामञ्जप्रदेशाः श्रीक्षेत्रस्य राज्यानि च मुख्यान्यासन्। निश्चितमिदमस्ति यद् नवमशतकं यावदुदीच्यबर्मादेशो म्रम्मदेशो दक्षिणश्च रामञ्जदेशो व्यपदिश्यते स्म। भारतीय-सभ्यतारागेण रक्ता म्रम्मप्यूमोनजातय एतेषु विविधप्रदेशेषु प्रभुताप्राप्तये संघर्षं कुर्वन्ति स्म। पूर्वं राज्यानां राजनीतिकेतिहासः प्रतिपादयिष्यते पुनश्च प्रथमसहस्राब्द्या बर्मादेशस्य सांस्कृतिके-तिहासस्योल्लेखो भविष्यति।

**अराकान-राज्यम्**—वङ्गीयाखातस्य ( पूर्वपयोधेः ) पूर्वस्मिन् तटे चिटग्रामस्य ( चिट-गाँव ) सीमावर्तिनो नाफ इत्याख्यनदीमुखाद् निग्रेस-भूशिरो ( अन्तरीपं ) यावद् द्विशतक्रोश-लम्बः संकुचितश्च खण्ड एव 'अराकान' राज्यं वर्तते। इदं यद्यप्यराकानयोमाद्वारा बर्मादेशात् पृथग् वर्तते, किन्तु अन-प्रदेशात् तौंगुपप्रदेशाच्च मिम्बुप्रोमप्रदेशगामिनो मार्गा सुगमाः सन्ति। अतोऽराकानराज्ये प्रायो बर्मावासिनामाक्रमणं भवति स्म। अराकानवासिनो जातिभाषादृष्ट्या बर्मावासिन एव सन्ति, किन्तु मायू-कलदननदीभ्यां सिच्यमान उत्तरप्रदेशः पूर्ववङ्गस्यांशो विद्यते। भारतीया एनं प्रदेशं प्राचीनकालादेवावासयन्ति स्म। अराकानराज्यस्य बर्मादेशस्य चानुश्रुतयः प्रतिपादयन्ति यदत्र कतिपयानि हिन्दुराज्यान्यासन्।

अराकाननिवासिनः स्वकीयमितिहासं २२२६ खीष्टीयाब्दपूर्वतः प्रारभन्ते। अत्र प्राचीनकालादद्य यावद् २२७ राजानोऽभूवन्। अराकानवासिनः प्रथमभारतीयराजवंशस्य संस्थापकं वाराणस्या राज्ञ एकं पुत्रं कथयन्ति। अनेन रामावतीनगरी राजधानी स्थापिता। तस्या अभिज्ञानं वर्तमानरामनीद्वीपेन क्रियते। द्वितीयो राजवंश एकेन ब्राह्मणेन स्थापितः। अस्यैव वंशस्यैकोत्तराधिकारिणी तृतीयस्य राजवंशस्य स्थापिकाऽभूत्। तदा धन्यवती ( वर्तमान रखैंगम्यू ) नगरी राजधानी निरमीयत। सकलो देशो धन्यवतीपदेन व्यपदिश्यते। चतुर्थो राजवंश-स्तगौंगप्रदेशस्यैकेन क्षत्रियराजकुमारेण स्थापितः। १४६ तमे खीष्टीयाब्दे चन्द्रसूर्यनृपतिकाले महामुनेर्बुद्धस्य मूर्तिर्निर्मिता। आगमियुगेषु मूर्तिरियम् अराकानराज्यस्य संरक्षिका देवी मन्यते स्म। ७८९ तमे खीष्टीयाब्दे महातैनचन्द्रेण धन्यवतीं नगरीं परित्यज्य वैशाली ( वेसली ) नगरी स्थापिता, यतो हि तस्य पितुः सूर्यकेतोः काले धनवतीनगर्यां विद्रोहोऽभूत्। दशमशतकखीष्टीयाब्दे वैशालीनगर्यां वंशस्याप्यन्तो जातः। मोनपरिवारस्य प्रधानेन अम्रतूनामकेन वैशालीराजसिंहासने कपटेनाधिकारः कृतः। प्यूनृपतये नेदमरोचिष्ट। तेन नवतिसहस्रजनैः सहाराकानराज्ये आक्रमणं कृतम्। अम्रतूभ्रातुष्पुत्रेण स पराजितः, विंशतिसहस्राणि जना हताः, प्यूनृपतिसेनायाः प्राप्तानि सुवर्णरजतमाणिक्यादीनि स्वर्णपर्वते ( श्वेडौंग ) निहितानि। १०१८ तमे खीष्टीयाब्दे वैशाली-नगर्या राजधानीरूपेणान्तोऽभूत्। अद्यत्वे म्रोहौंगाप्रदेशात् क्रोशचतुष्टये उत्तरपश्चिमयोर्वैशाल्या ध्वंसावशेषा उपलभ्यन्ते।

**ताम्रपट्टनम्**—शिलालेखैरिदं ज्ञायते यदराकानराज्ये धर्मराजानुजवंशः ६००-१००० खीष्टीयाब्द यावत् शास्ति स्म। म्रोहौंगनगरेऽवस्थितस्य शिथ्थ्यौगमन्दिरस्यैकस्मिन् स्तम्भे उत्कीर्णेन लेखेन वंशस्यास्यैकोनविंशते राज्ञा नामानि ज्ञायन्ते। एतेषा राज्ञा नाम्नोऽन्ते चन्द्रेत्यवलोक्यते। लेखोऽयमानन्दचन्द्रस्य समये उदकीर्यत। अनेन ज्ञायते यत् तेनानेकानि बौद्धमन्दिराणि बहवो विहाराश्च निर्मापिताः। भिक्षुभ्यः प्रतिदिन क्षौमवस्त्राणि दीयन्ते स्म। अनेन तेषा निवासायानेकान्यावासस्थानानि विहितानि, किन्तु तस्य सहानुभूतिः केवल बौद्धधर्मे एवासीदिति न तेन पञ्चाशते ब्राह्मणेभ्योऽपि सभृत्या भूमिर्दत्ता।

अस्मिन् स्तम्भलेखे आनन्दचन्द्रस्ताम्रपट्टनस्य राजा प्रत्यपाद्यत। ताम्रपट्टनेति सभवतोऽराकानराज्यस्य प्राचीन नामासीत्। पूर्वमिदमकथ्यत यदनुश्रुतिषु वैशालीवंशस्य वर्णनमुपलभ्यते। अराकाने शैववैष्णवचिह्नैरङ्किता अनेका मुद्राः प्राप्यन्त। आनन्दचन्द्रो बौद्ध आसीत्, अत इद कल्पित विद्यते यत्तदरिक्तः कश्चनान्यः शैवो वैष्णवो वा वंशोऽत्र शास्ति स्म। एकैव राजधानी वैशाली आसीत्, अन्यस्याधिकारक्षेत्रेऽवशिष्ट ताम्रपट्टनमासीत्। अद्याप्यय प्रश्नोऽनिर्णीत एवास्ते। प्रथम प्यूजात्या पुनश्चानिरुद्धेन अराकानराज्य विजितम्, किन्तु प्रदेशेऽस्मिन् तेषा प्रभुता न्यूनैवासीत्। अत्र प्राचीना राजान एव राज्य कुर्वन्ति स्म। १४०४ तमे खीष्टीयाब्दे बर्मादेशाक्रमणेनात्रत्यो राजा वङ्गं गतवान्, गौडस्य यवनशासकस्य साहाय्येन १४३० तमे खीष्टीयाब्देऽनेन राज्यं पुनः प्राप्तम्। तत एव कालादराकानस्य बौद्धनृपतिभिर्यवनोपाधीन् धर्तुं प्रारब्धम्। षोडशे शतकेऽत्र पुर्तगालवासिना प्रभुताऽभूत्, १७८२ तमे खीष्टीयाब्देऽयमशो बर्मादेशस्य भागः सवृत्तः। १८२६ तमे खीष्टीयाब्दे सोऽश आगूलदेशीयैर्विजितः। ततः समयादिद बर्मादेशस्याङ्ग जातम्, अयञ्च प्रदेशो बौद्धो विद्यते।

**रामञ्ञदेशः**—खीष्टीयाब्दस्य प्रथमाया सहस्राब्द्या बर्मादेशस्य दक्षिणो भागो रामञ्ञदेश इत्युच्यते स्म। उदीच्यभागश्च म्रम्मदेशः। रामञ्ञदेशे हिन्दुसभ्यतारागेण रक्ताना मोनजातीना प्यूजातीनाञ्च प्रभुत्वमासीत्, म्रम्मे च म्रम्मजातीनाम्। इद प्रत्यपाद्यत यन्मोनजातेः सम्बन्धो विन्ध्यमेखलानिवासिनीभिः खासीजयन्तियाप्रभृतिपर्वतनिवासिनीभिश्चारण्यकजातिभिर्विद्यते, किन्तु बर्मादेशस्य प्रारम्भिकैरितिहासैरिद ज्ञायते यदिमा जातय आर्यावर्तस्य भाषा सभ्यताञ्च पूर्णतया स्वीचक्रुः। तासामनेका वसतयः सकले दक्षिणबर्माप्रदेशे प्रसृता आसन्। प्रारम्भे इय सर्वेभ्योऽधिकशक्तिशालिनी जातिरासीत्। तस्याः प्राचीन नाम रमन इत्यासीत्, अत एव दक्षिणबर्माप्रदेशो रामञ्ञपदेन व्यपदिश्यते स्म। आधुनिकमोनशब्दस्य मूलमप्युपर्युक्त नामैवास्ति।

अभिलेखेषु साहित्ये चानेकानि मोनवसतीना विशुद्धानि भारतीयानि ( संस्कृत, पालि ) नामान्युपलभ्यन्ते। तेषु सुधम्मा ( थर्मा ), अथवा सुधम्मावती ( थेतोन ), हंसावती ( पेगू ), रामावती ( रामरीद्वीप ), असिताञ्जननगरम् (रंगूननिकटे), कुशीमनगरं मण्डल वा ( बसीन् ), रामपुरम् ( मौलमीन ), मुत्तिमण्डलम् ( मर्त्तबान ) एतानि मुख्यानि सन्ति। इरावदीनदीमुख ( डेल्टा ) रंगूनसीमावर्ती भूखण्डश्चोत्कलदेश उच्यते स्म।

युआन-च्वाङ्गस्य इत्सिङ्गस्य च यात्राविवरणैर्दक्षिणबर्माया राज्यद्वयं प्रकाश्यते—( १ ) शिहली-चऊ-तलो इति, अथवा श्रीक्षेत्र तथा ( २ ) लंग-चिआ-शू ( चिआ मो, लंग चिआ,

अथवा कामलङ्क ) इति। प्रथमस्य राज्यस्याग्रे वर्णन भविष्यति, द्वितीयस्य मन्याभिज्ञानविपये विदुपा महान् मतभेदो विद्यते, किन्त्वनेके विद्वास तद् बर्मादेशस्य तनासरिममण्डल मन्यन्ते। इत्सिगकालेऽत्र बौद्धधर्मस्य महान् प्रचार आसीत्, राजा चीनदेशादागतान् बौद्धभिक्षूनतीव सत्करोति स्म। इदमपि सम्भवतो मोनराज्यमासीत्।

तस्मिन् काले मोनाना प्रभुत्वं बर्मादेशपर्यन्तमेव नासीत्, तत् स्यामदेशेऽपि प्रसृतमासीत्। युआन-च्वाङ्ग इत्सिगश्च तोलो-पोती अथवा शी-हो-पो-ती इत्यस्योल्लेख कुरुतः। इद मीनमनद्या निम्ने भागे द्वारवत्या मोनराज्यमासीत्, यस्य राजधानी लवपुरी ( वर्तमान लोबपुरी ) आसीत्। अस्य पत्तनस्य भग्नगेहेभ्योऽनेके मोनाभिलेखा एका बुद्धमूर्तिश्च प्राप्यन्त। पञ्चदशशतकस्य चामदेवीवंशस्य पोडशशतकस्य च जिनकालमालिनीनामकस्य च पालीतिहासैरपीदमेव समर्थ्यते। एतदनुसारेण ऋषिवासुदेवः ६६१ तमे खीष्टीयाब्दे हरिपुञ्जमे ( उदीच्यस्यामदेशे ) लम्फूननामक चियेंगमनामकञ्च नगरे अस्थापयत्। वर्षद्वयानन्तर वासुदेवेन रामञ्ञनगरस्य विधवा तथा लवपुरीराजस्य कन्या चामदेवी आहूता। तया स्वेन सह बहवो बौद्धगुरव आनीताः। तदुत्तराधिकारिभिर्निकटवर्तिप्रदेशेषु स्वराज्य धर्मश्च प्रसारितौ। कदाचिद् महामार्याः प्रकोपे तद्देशवासिनो दक्षिणबर्माप्रदेश गता। पालीतिहासाः कथयन्ति यद् द्वयमप्येका भाषा प्रयुङ्क्ते स्म।

एतैर्विवरणैरिद स्पष्टं भवति यत् षष्ठसप्तमशतकयोर्मोनजातीया जना दक्षिणबर्माप्रदेशादुदीच्यस्यामपर्यन्तं लओसपर्यन्तञ्च स्व राजनीतिकप्रभुत्वं बौद्धधर्मञ्च प्रसारयन्ति स्म, तथाष्टमशतकपर्यन्त दक्षिणस्मिन् मोनजातीया जना मीनमनदीतीर प्राप्ताः।

**श्रीक्षेत्रम्**—श्रीक्षेत्रस्य ( प्रोम ) राज्यस्य स्थापनाया अनुश्रुतिसम्मत इतिहास उपरि निर्दिष्टो विद्यते। तदनुसारेण तगौंगप्रदेशात् ( इरावदीनद्या उपरितनद्रोणीतः ) अवतीर्णैर्भारतीयावासकैस्तदावासितम्। ते भारतात् स्थलमार्गेणागताः, किन्त्विदमपि सम्भवति यज्जलमार्गेणागतानामपि भारतीयाना तदुपनिवेशने भागो भवेत्। अस्य कारणद्वयमस्ति—प्रथम त्विदं यत् प्रोमराज्य तस्मिन् समये समुद्रस्यातिनिकटे आसीत्, द्वितीयश्चेदं यत् तदात्र निवासिन्याः प्यूनामकजातेरुदीच्यबर्माप्रदेशे निवासिभिर्म्रम्मैः कश्चन साक्षात् सम्बन्धो न प्रतीयते। प्यूजातीयास्तस्मिन् काले हिन्दुसभ्यतारागेण रक्ताना म्रम्मजात्यपेक्षया सास्कृतिकक्षेत्रेऽग्रगामिन्येका पृथग् राजनीतिकशक्तिरासीत्।

चीनदेशीयविवरणैरभिलेखैश्च श्रीक्षेत्रस्य हिन्दुसस्कृतिकेन्द्रत्वे बौद्धधर्मस्योपासकत्वे कश्चन सन्देहो न भवति। राज्यमिद तृतीयशतकाद् नवमशतक यावदासीत्। नवमशतक यावत् तावद्विशालमासीद् यत् तत्रोत्तरमध्यबर्माप्रदेशः सम्मिलित आसीत्। युआनच्वागसमये भारतात् पूर्व प्रथम महद् राज्यं शी ली-चा ता ली-श्रीक्षेत्रमेवासीत्। अष्टमनवमशतकयोरस्य विस्तारः पूर्वतः पश्चिमपर्यन्त सार्द्धशतद्वयक्रोशान् तथोत्तरतो दक्षिणपर्यन्त सार्द्धशतत्रयक्रोशान् चतुश्शतक्रोशान् वाऽऽसीत्। पूर्वस्मिन् तस्य सीमा कम्बुजदेशो द्वारवती वा, दक्षिणस्मिन् समुद्रः, पश्चिमे भारतम्, तथोत्तरस्मिन् युन्नान ( ननचओ ) राज्यमासीत्। प्यूजनानामभिमान आसीद्

यत् तैरष्टादश राज्यानि विजितानि। तेषां राजा 'महाराजः', प्रधानमन्त्री 'महासेन.' उच्यते स्म। तागवशस्य प्राचीनेतिहासानुसारेण राजधान्याः प्राकारः सार्द्धत्रयोदशक्रोशमितपरिधिपरिवृत आसीत्। तत्र परश्शता विहारा आसन्। तेषां गृहाणि सुवर्णरजतैः खचितान्यासन्। प्यूजातीया अनुराग हिंसाञ्च निन्दन्ति स्म। तेषा धर्मशास्त्रे दण्डनिगडादीनामुल्लेखो नासीत्। कौशेय-वस्त्रधारणस्य पद्धतिर्नासीत्; यतस्तत् कीट हत्वा निष्पाद्यते। प्यूजातीया भारतीयसभ्यता स्वीकृत्य ता कियतीमुन्नतामवस्था नीतवन्तः, एतत् तत्रत्यैर्वाद्ययन्त्रैः सम्यक् सूच्यते। तागवशस्य नूतन इतिहासे तत्र धातुतन्त्रीचर्मप्रभृत्यष्टपदार्थैर्विहिताना वाद्याना द्वाविंशतिर्भेदा निर्दिष्टाः सन्ति। चीनराजसभाया गायका वाद्येनानेन सह बौद्धधर्मसम्बद्धानि गीतानि गायन्ति स्म।

प्रोमप्रदेशोत्खनेन प्राप्ताभिर्मूर्तिभिः समुपलब्धैरभिलेखैश्चेदमज्ञायत यत् प्यूजातीयाः सप्तमे शतके पूर्वभारते प्रचलिता लिपिं सस्कृतभाषाञ्च व्यवहरन्ति स्म। राज्ञा जयचन्द्रवर्मणा गुरोरादेशेन कनिष्ठ भ्रातर हरिविक्रम प्रसादयितुमेका बुद्धप्रतिमा निर्मापिता। तस्या नीचैरनेके ललिताः सस्कृतश्लोकास्तेषामनुवादाश्च सन्ति। ६७३ खीष्टीयाब्दात् ७१८ खीष्टीयाब्दमध्ये दक्षिण-भारतलिपिनिबद्धा हरिविक्रमसूर्य( सुरिय )विक्रमाणामपि सप्त लेखा उपालभ्यन्त। एकस्मिन् प्यूजातीयेऽभिलेखे तद्दातुः श्रीप्रभुवर्मणः श्रीप्रभुदेव्याश्च (सम्भवतो राज्ञो राज्ञ्याश्च) नामनी अङ्किते स्तः। ऐतिहासिकानामेतादृशो विचारो विद्यते यदत्र विक्रमवर्माभिधानाभ्या द्वाभ्या वशाभ्या शासन कृतम्।

प्यूजातीयाना समुन्नते समृद्धे शक्तिशालिनि च राज्ये प्रथममाक्रमण युन्नानप्रान्तवर्तिना नन-चओप्रदेशस्य थाईराज्येन कृतम्। अष्टमे नवमे च शतकयोरुदीच्यबर्माप्रदेशेऽस्य प्रभावः प्रसृतः। ७५४ खीष्टीयाब्दे चीनदेशीयान् पराजित्य तेनोदीच्यसीमातः समुत्पन्नानामाक्रमणाना भय दूरीकृतम्, ततश्च दक्षिणपश्चिमयोर्दृष्टिर्निक्षिप्ता। ८३२ खीष्टीयाब्दे नन-चओप्रदेशस्य राज्ञा प्यूराज्यमाक्रान्तम्। मानश्नूनामकचीनीयेतिहासानुसारेण तेन प्यूराजधानी लुण्ठिता, सहस्त्रत्रया-दधिका जना निगडिताः, तत्पूर्वराजधान्या युन्नानफूनामधेयायां निर्वासिताः। तेन प्यूजातेः प्रायः सर्वनाशोऽभूत्। यत् किञ्चिदप्यवशिष्टमासीत् तन्मोनैः सम्पादितम्। अनेकाक्रमणेभ्यो रक्षार्थं प्यूजातीयैरिरावदीनदीतीरे उपरि गत्वाऽरिमर्दनपुर ( पगान ) स्थापितम्, किन्तु 'प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः' इति न्यायेनैकादशशतकस्य मध्ये म्रम्माः प्रबला जाताः, तेषाञ्चावशिष्टा शक्ति नामशेषा कृतवन्तः।

**म्रम्मजातीयानामुत्कर्षः**—म्रम्माः के आसन्? बर्मादेशीयेतिहासानुसारेण म्रम्म इति प्यू इति चैकस्या एव जातेः शाखाद्वयमासीत्, किन्तु विचारोऽय सत्यो न प्रतीयते, प्यूजातिः सभ्या शिक्षिता समुन्नता चासीत्, किन्तु म्रम्मजातिरतीव सस्काररहीना सभ्यतामूलतत्त्वानभिज्ञा च। अथ च यदा म्रम्माणा धर्मस्य लिपेर्भाषाणाञ्चावश्यकताऽभूत्, तदा तैर्मोनजातीया गुरवः कृताः। वस्तुतो म्रम्मजातिस्तिब्बतबर्मावशस्यैका शाखाऽऽसीत्, प्राचीनकालादेवोदीच्यबर्माप्रदेशे निवसन्ति स्म। पूर्व प्यूराज्यस्याधीना आसन्, नन-चओ-राज्यस्याक्रमणैर्यदा प्यूजातीया जना दुर्बलाः संजातास्तदा म्रम्मजातीयैः शिर उन्नमितम्, एकादशे शतके तेषा पूर्णतयोत्कर्षोऽभूत्। शनैः शनैस्ते सकल-

बर्मादेश व्याप्नुवन्, त देशश्च स्वनाम्ना व्याहृतवन्तः। बर्मेतिशब्दो म्रम्मशब्दस्यैव विकृतिरस्ति। १०४४ तमे खीष्टीयाब्दे अनिरुद्धस्य राजसिंहासने उपवेशनेन साकं बर्मादेशीयेतिहासे नवयुगस्य प्रारम्भोऽभवत्। तदवलोकनात्पूर्वं खीष्टीयाब्दस्य प्रथमसहस्राब्द्या बर्मादेशस्य सांस्कृतिके इतिहासे दृष्टिपात आवश्यको विद्यते।

**प्राचीनयुगे भारतस्य सांस्कृतिकः प्रभावः**—बर्मादेशस्य विविधप्रदेशेषुपनिवेशकैः सह भारतीयसंस्कृतेरनेके प्रवाहा भिन्ने भिन्ने काले समायाताः। ते प्रवाहाः पौराणिकबौद्धधर्माभ्या द्वाभ्या मुख्यभागाभ्या विभक्तु शक्यते। पौराणिको धर्मः शैववैष्णवाभ्यामुभाभ्या रूपाभ्या गतः, बौद्धधर्मश्चापि हीनयानमहायानरूपाभ्याम्। इदानीं पौराणिकधर्मो महायानधर्मश्च पूर्णतया लोप प्राप्तौ। हीनयानस्य सर्वत्र निष्कण्टक साम्राज्यं विद्यते, किन्तु स्मरणीयमेतद् यत् खीष्टीयाब्दस्य प्रथमसहस्राब्द्या यथा बर्मादेशस्य राजनीतिकजीवन ऐक्यं नासीत्, तथैव धार्मिकक्षेत्रेऽपि कार्यैकता नासीत्, सा अनिरुद्धस्य शक्तिशालिना साम्राज्येन साकमग्रिमयुगे एव प्रादुरभूत्। प्रथमे युगे त्रयोऽपि धर्माः प्रचलन्ति स्म।

**पौराणिको धर्मः**—वर्तमानकाले बर्मादेशे हीनयानबौद्धधर्मस्य साम्राज्य वर्तते। बर्मादेशस्य बौद्धेतिहासेषु पौराणिकधर्मस्य वर्णन नास्ति। अत्र यावदैतिहासिकाना कृते इयमेका विचित्रा समस्याऽऽसीद् यद् यः पौराणिको धर्मः कम्बुज-अनाम-जावा सुमात्राप्रभृति-दूरवर्तिप्रदेशेषु गतो महता वेगेन च प्रसृतः, स भारतेन सह सम्बद्धे बर्मादेशे कथन्न प्रसृतः? पुरातत्त्वीयोत्खननैः सा समाहिता। अभिलेखैर्भूमिगर्भान्निसृताभिर्ब्रह्मविष्णुमहेशसूर्यगणेशप्रभृतिपौराणिकदेवताना मूर्तिभिश्चात्र पौराणिकधर्मस्य प्रसारस्य प्रबल प्रमाणं समुपस्थापितम्।

बर्मादेशे षष्ठशतकात् चतुर्दशशतकं यावत् पौराणिको धर्मः (विशेषतो वैष्णवसम्प्रदायः) जनान् प्रभावयति स्म। पौराणिकधर्मस्य व्यापकप्रभावस्य त्रीणि मुख्यानि प्रमाणानि सन्ति—(१) स्थानीय नाम, (२) मोनानामभिलेखाः, (३) मूर्तयः। उदीच्यस्य दक्षिणस्य च बर्मादेशस्यानेकासा वसतीना नामानि हिन्दुदेवताना नामानि सन्ति। प्राचीनप्रोमराज्यस्य (हमवूजा) प्राचीन नाम विष्णुपुरम् (बिस्सुनोम्यो) अस्ति। प्रोमराज्यस्य स्थापनासम्बद्धबर्मीयेतिहासेऽस्य सम्बन्धो विष्णुना तद्वाहनेन गरुडेन चण्ड्या (परमेश्वरेण दुर्गया शिवेन च) च विद्यते[1]। श्रीक्षेत्रं पुर्याः प्राचीन प्रसिद्धञ्च नामास्ति। इदमपि प्रोमस्यैक प्राचीन नाम विद्यते। ८३७ खीष्टीयाब्दे तौगद्विनवसतिर्विष्णोरवतारस्य मर्यादापुरुषोत्तमस्य रामस्य नामादाय रामावतीति सञ्ज्ञिता। (२) मोनाभिलेखैर्ज्ञायते यद् ब्राह्मणाना राजसभाया महान् प्रभाव आसीत्। अत्र पौराणिकयज्ञ-कर्मकाण्डविधिश्च प्रचलति स्म। नारायणस्य (विष्णोः) पूजा भवति स्म। अभिलेखेषु ब्राह्मणाना ज्योतिर्विदा नारायणपूजाविधौ कदलीपत्राणा व्यवस्था सौवर्णे राजते च पात्रयोर्जलप्रक्षेपः शङ्खेऽक्षतदुर्वादलानामारोपणम्—इत्यादिविधीनामुल्लेखो विद्यते। बौद्धभूपालाना राज्याभिषेकसमये

---

१. विषयस्यास्य सर्वोत्तमं विशदञ्च प्रतिपादनं श्रीनीहाररञ्जनरायमहोदयस्य पुस्तके ब्राह्मणिकल गाईड्स इन बर्मा (कलकत्ता १९३२) इत्यत्र विद्यते। अत्र पौराणिकधर्मस्य वर्णनं तत्पुस्तकमनुसृत्य क्रियत।

ब्राह्मणकन्याभिर्युवतिभिश्च कृतसूत्रैर्निर्मितानि मङ्गलसूत्राणि राजसभायाः स्तम्भेषु वेष्ट्यन्ते स्म। राज्ञामिच्छा भवति स्म यत् सर्वे विप्रा वेदज्ञा भवेयुः, ब्राह्मणा धर्म पालयेयुः, चत्वारो वर्णाः स्वे स्वे कर्मणि निरता भवेयुः। (३) तृतीय प्रमाण मन्दिराणि मूर्तयश्च सन्ति। पगानराज्ये नाटह्लुआग-क्यौन प्रदेशस्य विष्णुमन्दिर बर्मादेशेऽतीतकालिकाना वैष्णवाना स्मरण कारयति। भारतीय-वसतीना तादृशान्यनेकमन्दिराणि भविष्यन्ति, यानि कालचक्रेण नाशमितानि, किन्तु ता अनेका मूर्तयः पिशुनयन्ति। विष्णुपुरे एव षष्ठस्य सप्तमस्य च शतकयोस्तिस्रो विष्णुमूर्तयो गणेशस्य ब्रह्मणोऽन्येषा देवाना प्रतिमाश्चोपालभ्यन्त। मरगुई ( तनासरीम )प्रदेशे विष्णोर्गणेशस्य हनुमतो ब्रह्मणश्च मूर्तय उपालभ्यन्त। नवमशतकस्योत्तरार्द्धे निर्मितेऽनन्तशय्याया शयाने विष्णो. प्रस्तरो-त्कीर्णे चित्रे उपलब्धे स्त., तथा शिवपार्वत्योर्मूर्तिरेका उपालभ्यत। अराकानराज्याद् दुर्गायाः, शिवस्य सूर्यस्य च गुप्तकालिक्यः प्रतिमाः प्राप्यन्त। तासा कालोऽष्टमशतकात् परतो भवितु नार्हति। अथ च विष्णुप्रभृतिदेवानामनेका मूर्तयोऽपि बर्मादेशस्य विभिन्नस्थानेषु प्राप्यन्त।

**बर्मादेशे पौराणिकधर्मस्य केन्द्राणि तेषामादिस्रोतांसि च**—उत्खनेन निःसृताभिः सामग्रीभिरिद ज्ञायते यत् तदानीं प्रोमे अराकाने थेतोने पगाने च पौराणिकधर्मस्य चत्वारि महान्ति केन्द्राण्यासन्। अराकानराज्य भारतस्य सीम्नि आसीत्, अत्र पूर्वभारतस्य धर्मस्य प्रभावः स्वाभाविक आसीत्। अत्र शासकस्य चन्द्रवशस्य प्रथममुल्लेखो जातः। अस्य वशस्य सप्तमशतकाद् दशमशतकपर्यन्त गुप्तपाललिपिबद्धा अनेके सस्कृताभिलेखा उपालभ्यन्त। आनन्द-चन्द्रेण बौद्धेन सतापि पञ्चाशते ब्राह्मणेभ्यो भूर्दत्ता। इदमकथ्यत यदत्रत्यासु कतिपयासु मुद्रासु वैष्णवशैवचिह्नमङ्कितं विद्यते।

द्वितीय केन्द्रं प्रोमराज्यमासीत्। अत्र षष्ठशतकादष्टमशतकपर्यन्तं विक्रमनामा राजवशः शास्ति स्म। दक्षिणबर्माप्रदेशे पौराणिको धर्मोऽस्य वशस्य सरक्षणेनात्यन्ताय पुष्पितः फलितश्च। एतत्कथन कठिन विद्यते यदत्राय प्रभावो भारतस्य कस्माद् भागाद् गतः। लक्ष्मीविष्ण्वोः प्रस्तर-खण्डः पल्लवशैल्या सवदति। हिन्दचीनस्य सुवर्णद्वीपस्य चान्येषु देशेषु चम्पाजावाप्रभृतिषु पल्लवाना लिपे. कलायाश्च निश्चित प्रमाणमुपलभ्यते, किन्तु बर्मादेशे तदवशेषा अतीव न्यूनाः सन्ति; पुनरपि दक्षिणभारतस्य बर्मादेशे निर्विवादः प्रभावोऽस्ति। प्राचीने प्रोमराज्ये द्वयोः स्वर्णपत्रयो', त्रिषु पाषाणलेखेष्वेकस्मिन् स्तूपे एकस्मिन् स्वर्णपुस्तके पालिभाषालेखने या लिपिः प्रयुक्ता विद्यते, सा पञ्चमषष्ठशतकयोः कन्नडतेलगू( कदम्ब )लिपिरस्ति। मृत्खण्डेषु पषाणप्रतिमास्वस्य युगस्य गुप्तकलायाः स्पष्टः प्रभावो विद्यते।

पौराणिकधर्मस्य तृतीय महाकेन्द्र थेतोनराज्यमासीत्। मोनजातीयेषु यद्यपि थेरवादस्य प्राधान्यमासीत्, किन्त्वत्र उडीसाप्रान्ताद् हिन्दुसस्कृतिरवश्य गता। पेगूप्रदेशस्य प्राचीन नाम उस्स इत्यस्ति। इदम् ओड्र इत्यस्य उडीसा इत्यस्य वा रूपान्तर विद्यते। अत इदमसभव न प्रतीयते यदस्योपनिवेशनस्य उडीसावासिभिः प्रारम्भः कृतः। तेषु नामसु प्राचीनस्योपनिवेशन-स्यास्पष्टम्, किन्त्वसन्दिग्ध स्मरणमवशिष्ट विद्यते। आन्ध्रकलिङ्गयोरपि दक्षिणबर्माप्रदेशावासने तथा तत्र पौराणिकधर्मप्रसारणे महान् योग आसीत्। कैश्चिद् विद्वद्भिस्तलैङ्गस्य सम्बन्धस्त्रिकलिङ्गेन

तेलिंगाना इत्यनेन च स्थापितः । प्रदेशस्यास्य पूर्वचालुक्यभूपालानामराकानराज्ये स्यामदेशे चोपलब्धा मुद्रा द्वयोर्देशयोः पारस्परिक सपर्क सूचयन्ति । अनेकेषा विदुषां विचारो विद्यते यत् तलैङ्गशब्दः तैलगुलिपिनो निष्पन्नोऽस्ति ।

उदीच्यबर्माख्ये प्रदेशे हिन्दुधर्मस्य चतुर्थ केन्द्र पगानराज्यमासीत् । एकादशशतकात् तत् सकलस्य बर्मादेशस्य राजनीतिक धार्मिकञ्च केन्द्रमभूत् । वर्तमानकाले बर्मादेशस्यैकमात्र प्राचीन हिन्दुमन्दिरमत्रैवोपलभ्यते । पगानराज्य सर्वेषा कृते विवृतमासीत् । अत्र पूर्वभारतस्य उडीसाप्रान्तस्य चोलस्य लङ्कायाश्च व्यापारिणः समागच्छन्ति स्म, तथा तैः साकं हिन्दुधर्मस्य विभिन्ना धारा गच्छन्ति स्म । अत्र दशमशतकाद् द्वादशशतकस्य नागरलिप्या अङ्किताः पक्वमृत्तिकाया अनेके खण्डास्तथा त्रयोदशशतकस्य तामिललेखान्विताः पूर्वचालुक्यशैलीका अनेका मूर्तयः प्राप्यन्त । अस्य स्थानस्य वास्तौ वङ्गस्य उडीसाप्रान्तस्य च स्पष्टः प्रभावो विद्यते । केचन व्यापारिणो भारताद् बर्मादेशपर्यन्त मूर्तिप्रापणरूपं लाभप्रद व्यापार कुर्वन्ति स्म, किन्त्वधिका मूर्त्तयः पूर्वभारताद् गतैः शिल्पिभिर्निर्मीयन्ते स्म ।

पौराणिके धर्मे बर्मादेश प्रविष्टेऽपि तस्य तत्रत्यजनताद्वारा राज्यद्वारा वा बौद्धधर्मवत् प्रबल सरक्षण न जातम् । हिन्दुधर्मः सम्भवतो भारताद् गताना पौराणिकोपनिवेशकाना व्यापारिणाञ्च धर्मरूपेणैव जीवितोऽभूत् । अत एव तेन कम्बुज (कम्बोडिया) चम्पाजावावत् साफल्यं नाधिगतम् । अस्यैतन्महत् प्रमाणमस्ति यद् बर्मादेशे पौराणिका अवशेषास्तद्देशापेक्षया अतीव न्यूना उपलभ्यन्ते, किन्त्वयं प्रश्नो भवितुमर्हति यदत्र पौराणिको धर्मः कथमसफलोऽभूत् । अस्य प्रधान कारणमिद प्रतीयते यदत्र हिन्दुधर्मविरोधी हीनयानबौद्धधर्मोऽथवा थेरवाद आसीत्, किन्तु हिन्दचीनस्यान्येषु देशेषु महायानधर्मः । हीनयानधर्म इस्लामधर्मवद् मूर्तिपूजाया विरोधी विद्यते, तेन साक पौराणिकधर्मस्य समन्वयः कठिनोऽस्ति । यदा बर्मादेशे एकादशे शतकेऽय राजधर्मोऽभूत् तदा पौराणिकधर्मस्यान्तोऽनिवार्य आसीत् । असहिष्णुत्वेन बौद्धधर्मस्य मन्दिरेषु कतिपयानां हिन्दुदेवताना श्वेसन्दाननपयाप्रभृतिनामभिर्गौण स्थानमभूत्, किन्तु हीनयाने महायानवद् हिन्दुदेवाना सम्मेलनस्य विलक्षण सामर्थ्य नासीत् । एकादशशतकात् परतो हीनयानस्य प्राबल्यस्य तथा त्रयोदशशतकादुत्तरभारतस्य तुर्काधीनत्वेन हिन्दुसमाजे प्राचीनोपनिवेशनस्य भावनाया नाशेन बर्मादेशे पौराणिकप्रभावस्यान्तोऽभूत् । चतुर्दशशतकात् परतः कापि पौराणिकमूर्तिः, कश्चनावशेषश्च नोपलभ्यते ।

**संस्कृतबौद्धधर्मस्तस्य स्रोतश्च**—बौद्धधर्मो बर्मादेशे हीनयान( थेरवाद )रूपेण महायानरूपेण चोभाभ्या रूपाभ्या गतः । हीनयानस्याधिका ग्रन्थाः पालिभाषायां सन्ति । अनेन बुद्धस्य मूलोपदेशा महताऽवधानेन सुरक्षिताः, किन्त्विद स्मरणीय यदस्य सर्वास्तिवादसदृशाना कतिपयाना सम्प्रदायाना ग्रन्थाः सस्कृतभाषायामप्यासन् । महायानस्य सकल साहित्यमस्यामेव भाषायामासीत् । सौविध्यायाय संस्कृतबौद्धधर्मो वक्तु शक्यते । पूर्वमस्य मुख्यकेन्द्राणा वर्णनं भविष्यति तथेदं प्रतिपादयिष्यते, यदय भारतस्य कस्मात् भागाद् बर्मादेशं गतः ।

संस्कृतबौद्धधर्मस्य केन्द्राणि द्विधा विभक्तु शक्यन्ते—( १ ) दक्षिणबर्मादेशे प्रोमराज्यं थेतोनराज्यञ्च, ( २ ) उदीच्यबर्मादेशस्य पगानराज्यम् । प्रोमराज्ये संस्कृतबौद्धधर्मस्य प्राचीन-

तमरूपो मूलसर्वास्तिवाद आसीत्। अथ सप्तमे शतके खीष्ट्रीयाब्दे मगधादत्र समागतः। अस्य मुख्य प्रमाणम् इत्सिङ्गस्य यात्राविवरण मूर्त्तीना गुप्तशैली गुप्तकालिकब्राह्मीसस्कृत-लेखाश्च सन्ति, किन्तु ततः पूर्वमेवात्र स्थविरवादः ( पालिहीनयानधर्मः ) चोलमण्डलात् तेलगुदेशाच्च षष्ठे शतके गतः। सर्वास्तिवादापेक्षया पौराणिकधर्मापेक्षया चाधिको लोकप्रिय आसीत्। अष्टमनवमशतकयोरत्र महायानबौद्धधर्मः समागतः। अवलोकितेश्वरमैत्रेय-तारा-मञ्जुश्री-लोकनाथ( अवलोवितेश्वरस्यैवैक रूपम् )वज्रसत्त्वाना तान्त्रिकाणामन्येषा देवानाञ्च पूजा प्रारब्धा। तेषां मूर्तिभिर्भित्तिचित्रैश्चेद ज्ञायते यल्लोकनाथः कम्बुजदेशवदत्राधिको लोकप्रिय आसीत्। ततोऽलोकितेश्वरस्य मैत्रेयस्य च स्थानमासीत्। इदमप्येक मनोरञ्जक तथ्यमस्ति यदधिक-मूर्तयोऽधिकानि चित्राणि चानिरुद्धस्य १०५७ तमे खीष्ट्रीयाब्दे थेरवादस्य राजधर्मस्वीकरणा-नन्तर निर्मितानि। मूर्त्तीना शैल्या रचनया च ज्ञायते यद् महायानधर्मोऽपि मगधाद् बर्मा गतः। नवमे शतके प्रोमप्रदेशस्य प्यूराज्य क्षीणता प्राप्तम्, तलैंगानामत्राधिकारोऽभूत्। इमे थेरवादस्य ( पालि-हीनयानस्य ) उपासका आसन्। अतः प्रोमराज्ये महायानस्यान्तोऽजायत।

किन्तूदीच्यबर्माप्रदेशे महायानस्य प्रवेशो दक्षिणबर्माप्रदेशात् प्रागभूत्, तथा सोऽत्र बहुकालं फलितवान् पुष्पितवान् च। तिब्बतीयैतिहासिकलामातारानाथानुसारेण पञ्चमे शतके खीष्टीयाब्दे वसुबन्धोः शिष्यैरत्र महायानः प्रचारितः। बर्मादेशीयेतिहासा अप्येतत् पुष्णन्ति। तेऽत्र अरीनामकसम्प्रदायस्य प्राधान्य प्रतिपादयन्ति। अरीति तान्त्रिकबौद्धमतस्यैवैक विक-सित रूपमासीत्। पालवंशस्य राज्ञो धर्मपालस्य काले बर्मादेशे महायानस्य तन्त्रयानस्य चाधिकः प्रसारोऽभूत्। तारानाथस्य विवरणं तथाऽस्य कालस्य बौद्धमूर्त्तयश्चित्राणि चैतत् पुष्णन्ति। थेरवादस्य ( पालि-हीनयानस्य ) चरमोत्कर्षस्य युगे ( १०५७-१३०० खी० ) महायानस्य महान् प्रचारोऽभूत्। राज्येन तान्त्रिकारीत्याख्यानामुग्र दमन न कृतम्, राजधान्याः पगानस्य निकट एव महायान-तान्त्रिकमन्दिराणि समुपलभ्यन्ते। थेरवादिना मन्दिरेषु महायानमूर्त्तयः समुप-लभ्यन्ते। थेरवादो महायानश्च सहैव पल्लवितौ, किन्तु थेरवादो राजसरक्षणरूपोत्पादकद्रव्येण जनसहानुभूतिसेकेन च शक्तिसम्पन्नो महान् वृक्षोऽभूत्। महायानस्तदभावे शुष्कोऽभूत्, किन्तु पुनरपि हीनयानेन महायानात् कश्चनांशो गृहीतः। बर्मास्थथेरवादिभिरवलोकितेश्वरो मैत्रेयश्च स्वीकृतौ।

**हीनयानः ( थेरवादः )**—पालिभाषानिबद्धाना भगवतो बुद्धस्य मूलोपदेशाना रक्षको हीनयानसम्प्रदायः ( थेरवादः ) बर्मादेशे सम्भवतो बौद्धधर्मस्य निखिलरूपेण सर्वतः प्रथम गतः। सम्प्रति तत्र तस्य निष्कण्टकं साम्राज्यं विद्यते। अनेकासु बर्मादेशीयानुश्रुतिषु भगवतो बुद्धस्य बर्मागमनस्योल्लेखो विद्यते ( इलि० ३।५० ), किन्त्विद विश्वासयोग्यं न प्रतीयते। धर्म-चक्रप्रवर्तनादपि प्राग् बुद्धत्वप्राप्तेः परतः तपस्सुमल्लिकनामानौ द्वौ व्यापारिणौ बुद्धं तक्रेण मधुपिण्डेन च सभाजितवन्तौ, एतौ उत्कलवास्तव्यौ प्रतिपाद्येते। बर्मीयैतिहासानुसारेण उत्कलेति वर्तमानरङ्गूनेऽप्यस्ति। प्रतिपाद्यते यदेतौ बुद्धस्य शिरसोऽष्टौ केशानानीतवन्तौ, ते च रङ्गूननिकटे श्वेदगोनबौद्धमन्दिरे प्रच्छन्ना विद्यन्ते। बुद्धस्य वाणी अत्र सर्वप्रथम

तृतीयखीष्ट्रीयाब्दात् पूर्वस्मिन् शतके गता। दीपवंशस्य (८।१२) महावंशस्य (१२।५४) चानुसारेण १५० खीष्ट्रीयाब्दपूर्वमशोकेन शोण-उत्तरनामानौ द्वौ स्थविरौ धर्मप्रचाराय सुवर्णभूमिं प्रति प्रेषितौ। अयं रामञ्ञप्रदेशो (दक्षिणबर्मायाः थेतोनस्य सुधर्मपुरस्य वा प्रदेशः) मन्यते। दीपवंशस्य रचना प्राचीनेतिहासाधारेण चतुर्थशतकखीष्ट्रीयाब्देऽभूत्। अत्र इदं वक्तुं शक्यते यत् शोणोत्तरौ अशोककाले न गतौ, किन्तु प्रथमशतकखीष्ट्रीयाब्दपर्यन्तं थेरवादो बर्मादेशं प्राप्तः। पञ्चमे शतके खीष्ट्रीयाब्दे बुद्धघोषेण श्रीलङ्काया आगत्य (४००-४५० खी०) दक्षिणबर्माप्रदेशस्य थेरवादे नवजीवनं सञ्चारितम्। दक्षिणभारतस्थेरवाद बर्मादेश नेतुं प्रयतते स्म। तलैंगानुश्रुतिषु 'काञ्जीवरम्' इत्यस्य तत्रत्याना धर्मपालादिप्रसिद्धाचार्याणा चोल्लेखो विद्यते। दक्षिणभारतात् थेरवादस्य बर्मागमनस्यैकं प्रबलं प्रमाणं प्राचीनप्रोमराज्यस्य पार्श्वे मौग्गनस्योत्खननाद् निःसृतं स्वर्णपट्टद्वयमस्ति। तत्र बौद्धधर्मस्य 'ये धम्मा' इत्याकारकं प्रसिद्धं वचन पालिभाषाया तथा दक्षिणभारतस्य पञ्चमशतकस्य कदम्बलिपौ उत्कीर्णं विद्यते। अभिधम्मस्यैकोनविंशतिभेदाः परिगणिताः। बावार्ग्यबौद्धमन्दिरस्य निकटत एकस्य प्रस्तरलेखस्य कतिचनांशा उपालभ्यन्त। अत्राभिधम्मस्यैकस्य पुस्तकस्य विभङ्गस्योद्धरण विद्यते। ह्मवूजाप्रदेशादुपलब्धे स्वर्णपत्राणा पुस्तकेऽभिधर्मस्य विनयपिटकस्य च केचनांशा उद्धृताः सन्ति। एतेषा सर्वेषा भाषा पालिर्लिपिश्च कदम्ब (तेलुगुकन्नडस्य प्राचीनं रूपम्) इत्यस्ति। एतेषा समयः पञ्चमी षष्ठी च शताब्द्यौ स्तः। अतस्तदा प्रोमे हीनयानस्य सत्ता तथा दक्षिणभारतेन सह तत्सम्बन्धश्च निर्विवादौ स्तः। सम्भवतः ५५०-९५० खीष्ट्रीयाब्दपर्यन्त प्रोमे हीनयानः पौराणिकेन धर्मेण सह महोन्नतावस्थोऽभूत्। थेनोनराज्यस्य तलैंगेष्वपि हीनयानस्यैव प्रचार आसीत्। एकादशे शतकेऽनिरुद्धेन इत एव थेरवादस्य सकले बर्मादेशे प्रचारः कृतः।

उपर्युक्तानामभिलेखाना पुस्तकानाञ्च प्रतिपाद्यविषयाणा भाषाया लिपेश्च सूक्ष्माध्ययनान्तर निम्नपरिणामाः प्रत्यपाद्यन्त—

(१) पञ्चमशतकखीष्ट्रीयाब्दस्यारम्भे प्रोमराज्ये थेरवादः सुप्रतिष्ठित आसीत्।
(२) थेरवादिना भाषा पालिरासीत्। सा चात्र कतिपयैर्जनैरवगम्यते स्म।
(३) पालिग्रन्थाना तत्सिद्धन्तानाञ्चात्र गभीरमध्ययन भवति स्म।

(४) बर्मादेशेऽयं थेरवादो दक्षिणभारतस्यामरावतीनागार्जुनी-कोंडाकाञ्चीपुरकावेरीपट्टन-उरगपुरप्रभृतिबौद्धकेन्द्रेभ्य आगतः, यतो ह्युपर्युक्ताना लेखाना कदम्बलिपिः कदम्बचालुक्यराज्ञा समये प्राचीने कुन्तले (कन्नडभाषाभाषिजनपदे) आन्ध्रदेशे (कृष्णागोदावरीजनपदे) च खीष्ट्रीयाब्दस्य चतुर्थे पञ्चमे च शतकयोः प्रचलिताऽऽसीत्। यस्थेरवादो बुद्धघोषेण लङ्काया आनीत इति प्रतिपाद्यते, तस्य वास्तविक स्रोतो दक्षिणभारतं विद्यते। नागार्जुनीकोंडाभिलेखैर्युआनच्वागस्य इत्सिंगस्य च वर्णनैरिदं स्पष्ट भवति यत् सप्तमशतक यावद् दक्षिणभारते थेरवादस्यानेकानि प्रसिद्धानि केन्द्राण्यासन्। वस्तुतो बर्मादेशे लङ्काया महत्त्वम् ११६७ तमखीष्ट्रीयाब्दाद् वृद्धिं गतम्, यदा बर्माराज्यस्य मुख्यपुरोहितेन पन्थगु इत्याख्येन लङ्का गुरुरूपेण स्वीकृता। तस्योत्तराधिकारी उत्तरजीवः ११८० तमे खीष्ट्रीयाब्दे लङ्काया यात्रा कृत्वा प्रत्यागतः।

स लङ्कायाः प्रथमस्तीर्थयात्रिकः प्रतिपादितः, तस्य शिष्यश्चपटाख्यः ११९० तमे ततः प्रतिनिवृत्य सकले देशे सिंहलीयबौद्धधर्मस्य प्रचारं कृतवान्।

सप्तमशतकस्य चीनदेशीयेत्सिंगस्य वर्णनेनेद प्रतीयते यत् तदा ( ६७५-७०० खी० ) बर्मायाः शिह-ली-चा-ता-लो( श्रीक्षेत्र-प्रोम )लग चियाशू , अथवा लङ्काम्रू ( तवासरिम ) राज्ययोः स्थविरनिकायनामकस्थेरवादी बौद्धसम्प्रदायः प्रचलितः। प्रायः ८०० तमखीष्ट्रीयाब्दस्य तागवशस्यैतिहासेषु प्राचीनप्रोमे पिआओराज्ये अथवा प्यूराज्ये यो हि धर्मो वर्ण्यते स थेरवाद एव प्रतीयते।

प्राचीनप्रोमस्य पार्श्वे उत्खननेनोपलब्धाभिः पुरातत्त्वीयसामग्रीभिः प्राचीनमूर्तिप्रभृतिभिरिदमेव प्रतीयते यत् ५००-९५० तमखीष्ट्रीयाब्दपर्यन्तमस्मिन् प्रदेशे थेरवादस्य प्रसार आसीत्। अत्र खिन-बारीप्रदेशात् पूर्व निवेदितेन स्वर्णपुस्तकेन साकमासीनस्य बुद्धस्य ध्यानमुद्राया द्वे स्वर्णप्रतिमे प्राप्येताम्। अत्रानेकासु मूर्तिषु प्यूलिपौ कतिपये लेखा उत्कीर्णाः सन्ति, सहैव च खीष्ट्रीयाब्दस्य षष्ठसप्तमशतकयोः पूर्वोत्तरगुप्तब्राह्मयाः केचन संस्कृतलेखाः सन्ति ( रे थे बु पृ० ६२ )। अत्रत्यासु थेरवादिनीषु बुद्धमूर्तिषु जातके महावस्तुनामके ललितविस्तरे च वर्णितयोः त्रपुसभल्लिकनामकयोर्व्यापारिणोश्चित्रे चतुर्भिर्लोकपालैर्बुद्धाय दत्तस्य भिक्षापात्रस्य कथा भूमिस्पर्शमुद्राया बुद्धस्यानेका मूर्त्तयश्च सन्ति। पाषाणप्रतिमातिरिक्ता इत. पक्वमृण्मय्यः शतानि मुद्राः प्राप्यन्त। तास्वधिकासु प्रसिद्धः पालिबौद्धमन्त्रः 'येधम्मा' अष्टमशतकाद् दशमशतकपर्यन्तस्य पूर्वभारतस्य लिपौ उत्कीर्णो विद्यते। अत्र पाषाणमूर्तिभिर्मृण्मयमुद्राभिश्चेद सूच्यते यदस्य प्रदेशस्य थेरवादस्य धर्मस्य कलायाश्च स्रोतो द्वयमासीत्। प्रथम स्रोतो दक्षिणभारतस्यान्ध्रपल्लवकदम्बप्रदेश आसीत्। सप्तमशतकपर्यन्तं प्यूराज्येन साक तस्य प्रदेशस्य गाढः सम्बन्धोऽभूत्, किन्तु सप्तमशतकाद् वङ्गस्य विहारस्य च प्रदेशेनानेन सह सम्बन्धो वर्द्धितुमारेभे। उत्तरगुप्तस्य पालयुगस्य च कलाशैली लिपिश्च प्रदेशमेनमाधिक्येन प्रभावयितु प्रववृत्ते।

दक्षिणबर्माप्रदेशे मोनजातेः प्रसिद्धं केन्द्रद्वयमासीत्–पेगू ( हंसावती ) इति थेतोनेति च। उभयत्रापि थेरवादस्य शोभनः प्रचार आसीत्। पालिसाहित्ये जातकानाम् इरे निदाने अशे अङ्गुत्तरनिकायस्य मनोरथपूरण्या टीकायामस्योल्लेखो विद्यते। भगवतो बुद्धस्य प्रथमा शिष्या सुजाता पूर्वजन्मन्यत्र प्रादुरभूदिति प्रत्यपाद्यत। इत्थ चित्रानामिका उपासिका तथा बौद्धसङ्घस्यानेके महत्त्वपूर्णा जना अत्र प्रादुरभूवन्नित्यपि प्रत्यपाद्यत। इमानि तथ्यानीद सूचयन्ति यत् पालिसाहित्यस्य टीकालेखनकाल ( खीष्ट्रीयाब्दस्य पञ्चमषष्ठशतक ) पर्यन्त हंसावती थेरवादिजगति महतीं प्रतिष्ठा प्राप्ता, किन्त्वनेन सहेदमपि स्मर्त्तव्य यत् प्रोमवत् थेतोनवच्चात्रानेन धर्मेण साक पौराणिकहिन्दुधर्मोऽपि प्रचलति स्म। बर्मादेशस्यैकस्मिन् स्थानीये इतिहासे स्लपतराजवनाख्ये इद प्रत्यपाद्यत यत् पेगूस्थ एको बौद्धधर्मद्वेष्टा राजा तिस्सो ब्राह्मणान् पूजयति स्म। तेन बौद्धमूर्त्तयो नालिकासु पङ्केषु च प्रक्षेपिताः। भद्रादेवीनामिका बुद्धस्य परमोपासिका युवतिर्यदा तथा प्रक्षिप्ताः काश्चन मूर्त्तीरेकस्मिन् बौद्धमन्दिरे प्रतिष्ठापितवती, तदा राजा ता हस्ति-

पादेन मर्दयितुमग्निना भस्मसाच्च कर्तुमैच्छत्, किन्त्वमफलो जातः। अन्ते च तस्याश्चमत्कारेण प्रभावितो भूत्वा महान् बौद्धोऽभूत् ( राथे बु०, पृ० ७४-५ )

पेगू ( हंसावती )वत् थेतोन( सुधम्भवती )राज्यस्यापि पालिसाहित्यटीकासु कामं वर्णन विद्यते, किन्त्वितः पुरातत्त्वीयसामग्री अतीव स्वल्पा समुपालभ्यत। प्राचीने काले पेगूराज्य-वदिदमेक महापोतनिरोधस्थानमासीत्, किन्तु पश्चात् तटे मृत्तिकाया आगमनात् खीष्ट्रीयाब्दस्य द्वितीयसहस्राब्न्यामस्य स्थानं मर्त्तबानेत्यनेन गृहीतम्। अत्रोत्खननेनाद्य यावदेकादशशतकात् प्राक्तन एकः स्तूप उपालभ्यत। यद्यप्यत्र प्राचीनाना बौद्धमन्दिराणमवशेषा अतीव स्वल्पाः सन्ति, किन्तु थेरवादस्यास्य केन्द्रत्वे कश्चन संशयो नास्ति। बर्मादेशीयेतिहासाः, शासनवशाः, कल्याण्यभिलेखाः स्पष्टतया थेतोन थेरवादस्य प्रधान केन्द्रं प्रतिपादयन्ति। अग्रे इद प्रतिपाद-यिष्यते यदनिरुद्धेन थेरवादस्य धर्मग्रन्थास्थेतोनराज्यादेव प्राप्ताः।

उपर्युक्तेन वर्णनेदं स्पष्ट भवति यद् बर्मादेशे पञ्चमशतकाद् दशमशतकपर्यन्त पौराणिक-हिन्दुधर्मस्य महायानस्य हीनयानस्य च त्रयाणा धर्माणा प्रचार आसीत्। मे इत्याख्यविदुषानु-मित यत् तदानीं तत्रत्याः साधारणा जना हीनयानबौद्धा आसन्, शासकवर्गश्च बौद्ध ब्राह्मणञ्च द्वावपि धर्मौ स्वीकरोति स्म। महायानबौद्धाना हिन्दूनाञ्चानेका वसतयोऽत्र शान्त्या जीवन यापयन्ति स्म।

## मध्ययुगम् ( १०४४-१८८५ खी० )

**राजनीतिकेतिहासः**—१०४४ तमे खीष्ट्रीयाब्दे अरिमर्दनपुरे ( पगान ) अनिरुद्धस्य ( अनात्रहत ) राजसिंहासनारोहणेन साकं बर्मादेशीयेतिहासे नवयुगस्यारम्भो भवति। पगानेति प्रारम्भे इरावदीचिन्दविननद्योः सगमे वर्तमानानामष्टादशग्रामाणा समूह आसीत्। बर्मादेशी-येतिहासेष्वनिरुद्धात् पूर्वम् १६७ तमखीष्ट्रीयाब्दात् पगानस्य पट्त्रिंशतो राज्ञा वर्णनमुपलभ्यते ( हाहिसौ ७३०-३१ ), किन्तु तत्रोल्लेखनीयः पोपासावरहन ( ६१३-६४० खी० ) इत्याख्यो विद्यते। अनेन नूतनो बर्मासवत्सरः प्रचालितः, यस्य प्रारम्भः ६३८ तमखीष्ट्रीयाब्दस्य मार्च-मासाद् भवति। अय १८८९ तमखीष्ट्रीयाब्दपर्यन्त स्यामदेशे प्राचलत्। ८०० तमखीष्ट्री-याब्दस्य पश्चात् प्रोमराज्यमान्तरमतभेदैः क्षीणता गन्तुमारेभे। अनिरुद्धकाले पगान-राज्य बर्मादेशस्य सर्वेभ्यः शक्तिशालिराज्यमभूत्। अनिरुद्धेन थेतोनराज्य शानराज्यञ्च विजित्य सकले बर्मादेशे प्रथमे वैकच्छत्र राज्य स्थापितम्। अस्योत्तराधिकारिणः शतद्वयवर्षाणि बर्माशासका आसन्। इदं बर्मादेशस्य स्वर्णयुगमासीत्।

१२९८ तमे खीष्ट्रीयाब्दे मङ्गोलाक्रमणैरनिरुद्धस्य वंशस्यान्तोऽभूत्। १२९८–१३६४ तमखीष्ट्रीयाब्दपर्यन्तमत्र पिन्यसगैंगनामकाभ्या शानराज्याभ्यां शासनं कृतम्। थेदोमिनवया इत्याख्येनानयोरन्त कृत्वा आवाराज्यस्य ( १३६४–१५५५ खी० ) मूल स्थापितम्। ततः १७५२ तमखीष्ट्रीयाब्दपर्यन्त बर्मादेशीयेतिहासोऽराजकताया विविधग्रामपतीनाञ्च पारस्परिक-सङ्घर्षस्य दुःखपूर्णा गाथा विद्यते। युगेऽस्मिन् बपिननौग इत्याख्य एव ( १५५१–१५८१ )

उल्लेखनीयः प्रतापी च राजाऽभूत् । तस्मादेव कालात् पुर्तगालवास्तव्या बर्माया प्रबला भवितुमारेभिरे । शानतलैङ्गयोः पारस्परिकः सङ्घर्षोऽतीव वृद्धिं गतः । अष्टादशस्य शतकस्य मध्ये अलौंगपयानामकेन, अथवा अलोम्प्रा( १७५२–१७६० )नामकेन राष्ट्रियमहापुरुषेणाराजकताया अन्तं विधायाल्पकाल एव उत्तरदक्षिणबर्मादेशे स्वकीय प्रभुत्व स्थापितम् । रगूननगरस्य स्थापना कृता, मणिपुरे स्यामदेशे चाक्रमण कृतम् । तस्मिन् काले पूर्व बर्मादेशस्य राजधानी आवा इत्यासीत्, किन्तु वोपापया इत्याख्येन अमरपुरम् ( १७८३ ) आवासितम्, तथा मिन्दोनमिन इत्याख्येन माडले ( १८५७ ) इति राजधानी कृता । अथ वशः १८८६ तमे थीवा इत्याख्येन नृपतिना साकं समाप्तिमगमत् । बर्मादेशश्च राजनीतिकदृष्ट्या भारतस्याङ्गमभूत् ।

यद्यपि मध्ययुगस्याधिकाशो भागो राजनीतिकदृष्ट्या रक्तरञ्जितसङ्घर्षाणामितिहासोऽस्ति, किन्तु तेन बौद्धधर्मस्य विकासे उन्नतौ वा काचन बाधा नागता । प्रत्येक राज्ञाऽस्य पूर्णतया सरक्षण कृतम् । अत्रैषा राज्ञा धर्म प्रोत्साहयता कार्याणामेव विशेषेणोल्लेखो भविष्यति । येनेदं स्पष्ट भविष्यति यद् बर्मादेशे बौद्धधर्मः केन प्रकारेणोन्नतिमकार्षीत् ।

## अरिमर्दनपुरसाम्राज्यम्, बर्मादेशस्य स्वर्णयुगम्

१०४४ तमे खीष्टीयाब्देऽनिरुद्धस्य राज्यारोहणेन साक बर्मादेशे स्वर्णयुगस्य प्रारम्भोऽभूत् । पगाननामक लघुराज्य तेन सकलस्य बर्मादेशस्य शक्तिशालिराज्य निर्मितम्, शिक्षाहीनाभिरसभ्याभिश्च म्रम्मजातिभिः सभ्यता पाठिता । अनिरुद्धो वस्तुतो राष्ट्रस्य जन्मदाताऽऽसीत् ।

यदा स राज्यासनमारूढस्तदा पगानराज्ये उदीच्यबर्माप्रदेशे च अरीनामकधार्मिकसम्प्रदायस्य प्राबल्यमासीत् । पगानराज्यात् किञ्चिद् दूर पूर्वदक्षिणयोस्थमहतीग्रामस्तेषा प्रबल केन्द्रमासीत् । बर्मादेशीयानुश्रुत्यनुसारेणात्र त्रिंशदरीगुरवः ६० सहस्राणि शिष्या वसन्ति स्म । तेषा साधारणेषु जनेषु धनिकेषु राजसभायाञ्चासाधारणः प्रभाव आसीत् । अस्यानुमानमनेनैव तथ्येन भवितुमर्हति यद् ह्मन्ताननामकप्राचीनबर्मीयेतिहासानुसारेण आनृपाद् आदरिद्रात् च सर्वैरपि जनैर्विवाहिता कन्या प्रथमाया रात्रौ तेषामिवारीगुरूणा पार्श्वे प्रेषणीया भवति स्म । अरीतितान्त्रिकमहायानेन सम्बद्ध एको बौद्धः सम्प्रदाय आसीत् । पूर्व बर्मादेशे प्राचीनकालतः प्रचलिता नागपूजा ते कुर्वन्ति स्म, तथा देवेभ्यो भीषणरक्तपातबलिप्रदान कुर्वन्ति स्म । अष्टमे शतके तेषु तान्त्रिकः प्रभावोऽभूत्, शाक्ताना ससर्गेण तेऽनेकप्रकारकवाममार्गपद्धतिमनुसरन्ति स्म । सम्भवतस्तेषु वङ्गस्य नेपालस्य च वज्रयानसहजियासम्प्रदाययोर्गभीरः प्रभावोऽभूत । एते कृतकश्रमणाः ( समनकुट्टक ) स्पष्टतयाऽनाचारस्य प्राचार कुर्वन्ति स्म ।

१०५६ तमे खीष्टीयाब्दे थेतोनवास्तव्य एकस्तलैंगथेरवादी भिक्षुः पगानराज्यमागतवान् । तस्य नाम धर्मदर्शी ( धम्मदस्सी ) अर्हत्, अथवा शिन-अर्हन आसीत् । एकदा स राजसभाया गतः, अरीणामनाचारेण खिन्नेऽनिरुद्धे तस्य पीतवस्त्राणां पवित्रस्य जीवनस्योदात्ताया

वाण्या महान् प्रभावोऽभूत्। पगानतनरेशेन स पृष्टः—'गुरुदेव ! भवान् कस्या जातेः कस्य देशस्य च भूषण विद्यते ? क सिद्धान्तमनुसरति' ? अर्हनमहोदयस्य प्रश्नाना समाधानं श्रुत्वा तस्य धर्मजिज्ञासा वृद्धिं गता। स थेरवादस्य भक्तोऽभूत्, किन्तु अर्हनमहोदयस्य पार्श्वे थेरवादस्य किमपि पुस्तक नासीत्। अर्हनमहोदयेन थेतोनराज्यात् त्रिपिटकमानाययितु राजा प्रेरितः। तदा तत्र त्रिंशत् पुस्तकान्यासन्। ग्रन्थभिक्षार्थं प्रेषिता राजदूता अपमानिता निरागाः प्रतिनिवृत्ताः। राज्ञः क्रोध उद्दीप्तोऽभूत्। तेनससैन्येन थेतोनराज्ये आक्रमणं कृतम्। मासत्रय मण्डलकरणानन्तरमनिरुद्धो विजेताभूत्। यत् कार्यं प्रार्थनया पूर्तिं न गत तदसिना पूर्तिमगात्। द्वात्रिंशति श्वेतेषु हस्तिषु धर्मग्रन्थान् पवित्रानवशेषान् चारोप्यानेकैर्बौद्धभिक्षुभिर्निगडबद्धेन तलैंगराजेन मनुहा इत्यनेन च साकम् अनिरुद्धः स्वा राजधानीमरिमर्दनपुर महता समारोहेण प्रविष्टोऽभूत्। मार्गे तेन प्यूराजधानी श्रीक्षेत्रस्य बौद्धमन्दिराणामवशेषा अपि लुण्ठिता। इतिहासेऽय विजयो विचित्र आसीत्। अनेके राजानः प्रदेशाना लोभेन स्वार्थान्धा भूत्वा देशान्तराण्याक्राम्यन्ति स्म, किन्त्वनिरुद्धेन धर्मग्रन्थार्थं पवित्रावशेषार्थञ्च थेतोनराज्यमाक्रान्तम्। अनेन पगानराज्ये थेरवादस्य प्रवेशोऽभूत्। अनिरुद्धस्य धर्मपिपासा थेतोनविजयेन पूर्णतया शान्ता नाभूत्, तेन श्रीलङ्कातोऽपि ता शमयितुं यतितम्।

स्वेन प्रतिद्वन्द्विना थेरवादेनारीणा वैर स्वाभाविकमासीत्। ते शिन-अर्हनमहोदयस्यात्यन्तं विरोधिनोऽभूवन्, यतस्तेन तेषा सम्माने लाभे च कुठाराघातः कृतः। राज्ञो भय समुत्पन्न यत् ते कदाचिद् अर्हनमहोदयस्य प्राणान् ग्रहीतु प्रयत्नं न कुर्युः। तेन प्रारम्भे कतिचनात्याचाराः कृताः। त्रिंशदरिगुरवः षष्टिसहस्राण्यनुयायिनश्च सेनासरक्षणे स्थापिताः, किन्त्विय परिस्थितिर्बहुकालं स्थिरा नाभूत्। तस्य कथनमासीद् यदरिगुरवो मम पितामहप्रपितामहकालादागच्छन्ति। यदि तेषा धर्मः समीचीनो भविष्यति तथा भाविनो जनास्ताननुसरिष्यन्ति, तस्येयं भविष्यवाणी सत्याऽऽसीत्, यतो भाविषु शतकेषु थेरवादस्य प्रभावे वृद्धिं गतेऽपि तेषा प्रभुत्वमक्षुण्णमासीत्, तथा तैर्बहुवार राज्याश्रयः प्राप्तः। इतिहासे तादृशामुदाहरणाना न्यूनता कदापि नाभूद् यद् राजनीतिकविजेतारो विजिताना संस्कृत्या पराभूता भवेयुः। उत्तरपश्चिमभारतं यूनानवास्तव्यैर्युइशिवास्तव्यैश्च विजितम्, किन्तु ते भारतीयया सस्कृत्या विजिताः, रोमवास्तव्यैर्यूनानस्य भूखण्डे विजयः प्राप्तः, किन्तु यूनानप्रदेशः सस्कृतिक्षेत्रे रोमदेशे विजयी अभूत्। इयमेव दशाऽनिरुद्धस्यासीत्; तलैङ्गस्य विजेता भूत्वापि स विजित एवासीत्।

अनिरुद्धेन पूर्णोत्साहेन बौद्धमन्दिरविहारान् विधातुं प्रारब्धम्। तलैङ्गस्य त्रिपिटकमेकस्मिन् भव्यबौद्धमन्दिरे सुरक्षितम्। लङ्कातो बुद्धस्य दन्ता धर्मशास्त्राणि भिक्षवश्च समानायिषत। यदा बुद्धस्य दन्तानामानेता पोत इरावदीनद्या पगानपार्श्वे समायातस्तदैका शोभायात्रा तेषा स्वागत कर्तुं तीरं प्राप्ता। राज्ञ उत्साहस्तथा महानासीद् यत् तेन नद्यामाकण्ठजल प्रविश्य धातुकरण्ड स्वशिरसि समारोपितं तथा तदर्थं निर्मितश्वेदगोन मन्दिरपर्यन्त नीतम्। बर्मादेशे हीनयानं समुन्नत कर्तुं कापि न्यूनता न कृता, किन्तु स्मर्तव्य यद् धार्मिकोत्साहेन राजा धर्मान्धो

नाभूत् । तेन लोकान् बलाद् बौद्धान् न कुर्वता समन्वयवादनीतिराहता । स जानाति स्म यद् जनाश्चिरकालतः प्रचलितान् विश्वासान् झटिति न परित्यक्ष्यन्ति । तेन पगानस्य श्वेदगोनबौद्धमन्दिरे बौद्धमूर्त्यतिरिक्ता बर्मावास्तव्यैः पूजिताना सप्तत्रिंशद्देवाना ( नातानाम् ) मूर्त्तयोऽपि स्थापिताः । तस्य कथनमासीत्—'यदि जना नूतनधर्मार्थमत्र नागच्छेयुस्तदा प्राचीन-धर्मार्थं त्ववश्यमागमिष्यन्ति ।' अरिसंज्ञकैः सार्द्धमपि तस्य व्यवहार औदार्यपूर्ण आसीत् ।

अनिरुद्धो बुद्धस्य भक्तः सन्नपि प्रचण्डो योद्धा महान् विजेता चासीत् । तेनोदीच्याराकानराज्य शानराज्यञ्च विजिते, ननचओदेशस्य राजधानीं तालीकू इत्याख्या वलयिता थाई-जातीयाः पराजिताः । कथ्यते यत् तेन भारते चिटग्रामस्य पूर्ववङ्गस्य चापि कश्चन प्रदेशो विजितः । तस्य राज्यस्य पश्चिमसीमा टिपरामण्डलस्य पट्टिकेरराज्यमासीत् । तनासरिमतिरिक्त सकलबर्मादेशमेकस्मिन् शासने स्थापयिता स प्रथमो बर्माराजो बभूव । वैशाल्या ( वेसली अराकान ) भारतीया राजकुमारीं पञ्चकल्याणीं परिणीय तेन भारतेन साक स्वसम्बन्धो वर्द्धितः । तस्य धर्मानुरागस्य दिग्विजयस्य ख्यातिर्दूरदूर प्रसृता । सर्वत्र स बौद्धधर्मस्य रक्षको राजा मन्यते स्म । लङ्काया यदा चौलैराक्रमण कृत तदा लङ्केशेन विजयबाहुना अनिरुद्धः साहाय्य याचितः । अनिरुद्धस्य निधनम् १०७७ तमे खीष्टीयाब्देऽभूत् ।

**क्यंजित्थः**—अनिरुद्धानन्तरं द्वितीय उल्लेखनीयो राजा पञ्चकल्याण्याः पुत्रः क्यं-जित्थः ( शासनकालः १०८४–१११२ खी० ) आसीत् । शत्रून् पराजित्य १०८४ तमे खीष्टीयाब्दे स राज्यासनमलङ्कृतवान् । तस्य राज्याभिषेकोऽरिमर्दनपुरे महता समारोहेण वैदिकमन्त्रैर्भारतीयविधिना समपद्यत । तस्य शासनकाले भारतबर्मादेशयोर्मैत्री वृद्धिं प्राप्ता । तस्य राज्ये भारतादनेके बौद्धा वैष्णवाश्च विद्वासो बर्मा गताः । बर्मीयानुश्रुतिषु प्रतिपाद-नानुसारेण त्रीन् मासान् अष्टौ भारतीयान् भिक्षून् स्वहस्तेन भोजयति स्म, तेभ्यश्च भारतस्य मन्दिराणा वर्णन शृणोति स्म । अन्ते सम्राजा उदयगिरिपर्वतस्य ( उडीसा ) अनन्तगुहा-मन्दिरानुकारिण आनन्दस्य प्रसिद्धमन्दिरस्य निर्माण कारितम् । एतन्निर्मातुं शिल्पिनो भारता-दाहूताः । अस्य मध्ये भारतीयशैल्या निर्मिता बुद्धस्याशीतिः प्रतिमाः सन्ति, बहिश्च १५०० मृद्द्वारेषु बुद्धस्य पूर्वजन्मना कथाः चित्रिताः सन्ति । कलेयं तदा विहारे बङ्गे चातीव प्रचलिताऽऽसीत् ।

शिन-अर्हननामा क्यजित्थस्यापि धर्मगुरुरासीत् । आनन्दमन्दिरस्य पश्चिमे भागे भगवतो बुद्धस्य चरणयोः प्रणते शिनस्य क्यजित्थस्य च पुरुषप्रमाणे मूर्त्यौ स्तः । एतेऽष्टशतीत इत्थमेव भगवतः पादपद्मयोर्नम्रे स्तः । एतदेव न, किन्तु सकलो बर्मादेश एव ततः कालादित्थं तथागतस्य चरणयोर्नतो विद्यते । क्यजित्थस्याकारो बर्मीयो नास्ति, भारतीयजनन्या उत्पन्नस्य तस्य मुखाकृतिर्भारतीया विद्यते । तस्य पितुः श्वेदगोनमन्दिरमद्यावधि अपूर्णमासीत् । शिन-अर्हनमहोदस्य कथनेन स तस्य पूर्तिं कृतवान् । चत्वारिंशदन्यानि बौद्धमन्दिराणि निर्मापितानि । बुद्धगयाया मन्दिरस्य जीर्णोद्धारः कृतः । एतदर्थं राज्ञा विविधैर्मणिभिः सम्भृत एकः पोतो भारते प्रहितः । अनेन बौद्धधर्म स्वीकर्तुं चोलराजः प्रेरितः । चीनराजसभायामनेन चोलराजा-

पेक्षया महत् पद प्राप्तम् । १२१२ तमे खीष्टीयाब्देऽयं परलोकं प्राप्तवान् । वर्षत्रयानन्तर शिन-अर्हन-महोदयेनापि निर्वाणत्व प्राप्तम् ।

बर्मादेशे विशुद्धहीनयानस्य मूलारोपः, अनिरुद्धस्य बौद्धत्वप्रापको बौद्धमन्दिरनिर्माण-स्वर्णयुगप्रवर्तकोऽयमेव शिव-अर्हन इत्यासीत् । यत् कार्यमाचार्य उपगुप्तो भारतेऽशोकेन कारितवान् तदेव तेन बर्मादेशे अनिरुद्धेन क्यजित्थेन च कारितम् ।

बौद्धधर्मस्य राज्ञा वैयक्तिकचरित्रेषु राजकीयादर्शेषु च महान् प्रभावो भवितुमारेभे । इद क्यजित्थस्यैकस्याभिलेखस्य निम्नपङ्क्तिभिः स्पष्ट भवति—'राजा क्यजित्थो दयालुतया तेषा जनानामश्रु प्रमार्क्ष्यति, ये स्वविश्वस्तमित्रेभ्यो वियुज्यन्ते । स्वप्रजाना कृते स तादृश एवास्ति, यथा बालकाना कृते मातुर्वक्षः ( राथेबु. पृ०. १०४ ) ।

इदमत्यधिक दुःखकर विद्यते यत् क्यजित्थस्य कतिपयैरुत्तराधिकारिभिरयमादर्शो न स्मृतः । नरथू( राज्यारोहणकालः ११६७ खी० )सदृशक्रूरभूमिपालैः स्वविमाता स्वहस्तेनैव हता । ते प्रायः पापकर्मसु व्यस्ता आसन् ।

किन्तु युगस्यास्यानेकै राजभिः सुन्दरबौद्धमन्दिरनिर्माणे स्पर्द्धा कृता, तैश्च बौद्ध-धर्मस्य शुद्धत्वं भव्यत्वञ्च रक्षितम् । अत्र बर्मादेशस्येतिहासलेखकस्य हार्वीमहोदयस्य शब्दाना-मुद्धरणलोभः संवरीतुं न शक्यते—'तेषां राज्ञा क्षणभङ्गुरशासनदायेन भाविपरम्परा अतीव सम-द्धिताः । इद तेषामेव पौरुषमासीद् यत् तैर्न्यिनग्याने निर्जनक्षेत्रे सूर्यसन्तप्ते प्रान्ते च पगान-राजस्य भव्यवास्तुकला प्रदर्शिता । संसारः थेरवादिबौद्धधर्मस्य सरक्षणार्थमनेकेष्वशेषु तथैव ऋणी विद्यते । पौराणिकधर्मेण बौद्धधर्मस्य जन्मभूमौ तस्य घातः कृतः । लङ्कायामस्य सत्ता पुनः पुनः संकटापन्ना भवति स्म । बर्मादेशात् पूर्ववर्तिदेशेष्वयं पौरोहित्यविकृतिवशात् कदापि शुद्धो नावशिष्टः, किन्तु पगानराज्यं धर्मस्यास्य शरणस्थलमासीत् । निस्तत्त्वकीर्त्तिलोलुपैरत्या-चारिभिः शासकैः स्वसमाधिस्थाने भवनं तु निर्मितम् , किन्तु तेष्वेकेनापि समाधिस्थानं न निर्मितम् , तैः स्वक्षणिकजीवनस्यावासस्थान सज्जितु न प्रयतितम् , तेषां गौरवं स्वधर्मविश्रुतिकरणे विद्यते ।'

युगस्यास्य द्वितीयं वैशिष्ट्य लङ्काया बौद्धधर्मस्य बर्मादेशेऽधिकप्रामाणिकरूपेण स्वीकरण-मस्ति । इदं प्रत्यपाद्यत यदनिरुद्धस्य राज्यारोहणकाले उदीच्यबर्माप्रदेशस्य बौद्धधर्मस्तान्त्रिक-प्रभावेणात्यधिकतया दूषितो विकृतश्चासीत् । तेन रामञ्ञदेशाद् भिक्षूनानाय्य स शोधितः । इत्थं प्रतीयते यद् दक्षिणबर्माप्रदेशस्य बौद्धधर्मो दक्षिणभारतेन लङ्कया च सम्बन्धेनातीव शुद्धोऽभूत्, उदीच्यबर्माप्रदेशे ( म्रम्ममण्डले ) वङ्गस्य उडीसाख्यस्य प्रान्तस्य च प्रभावस्याधिक्येन तन्महायानस्य केन्द्रमभूत् । आचार्यदीपङ्करस्य एकादशशतकखीष्टीयाब्दे थेतोन( सुधर्मवती )-राज्ये आगमनेनेद स्पष्ट भवति यदत्र महायानस्य कश्चन प्रभाव आसीत् , किन्तु प्राधान्यं थेर-वादस्यैवासीत् । त्रयोदशशतकस्यान्त यावद् बर्मादेशस्य धर्मं शोधयितु द्वावन्यौ प्रयत्नावभूताम् । तौ लङ्काया बौद्धधर्मस्य शिक्षा गृहीत्वा समागतैर्भिक्षुभिः कृतौ । तेभ्यः प्राक् थेरवादस्य प्रामाणिका आचार्यास्तलैंगा अवगम्यन्ते स्म, किन्त्वधुनाऽस्मिन् विषये लङ्कायाः प्रामाण्यं मन्यते स्म ।

प्रथमः प्रयत्नो द्वादशशतकखीष्टीयाब्दे चपटाख्येन भिक्षुणा तस्य शिष्यैश्च कृतस्य द्वितीयस्य प्रयत्नस्य नेतारः १२५० तमे खीष्टीयाब्दे सारिपुत्रस्तस्य सुहृदश्चासन्। प्रायः ११७५ तमे खीष्टीयाब्दे स्थविरोत्तरजीवः स्वशिष्येण चपटाख्येन साकं लङ्कां गतः। तत्र महाविहारे कानिचन वर्षाण्यध्ययनं कृतवान्, उपसम्पदाञ्च गृहीतवान्। पुनः पगानराज्यं प्रत्यागत्य (११८२ खी०) तेनेदं प्रचारितं यल्लङ्कायां महाविहारस्य भिक्षुभिर्दीयमानोपसम्पदा अशोकस्य पुत्राद् महेन्द्रात् प्रारब्धेति वैधी वर्तते। अन्यतस्तलैंगभिक्षूणां कथनमासीद् यदशोकप्रेषितयोः शोणोत्तरनामकथेरयोः परम्परायां वर्तमानत्वेन ते प्रव्रज्यां दातुं न्याय्या अधिकारिणः सन्ति, किन्तु चपट इत्याख्यः स्वासाधरणवैदुष्येण पौरुषपूर्णव्यक्तित्वेन लेखनशक्तिबलेन च राजसभायां सफलोऽभूत्। तस्य मतं सत्यममन्यत। बर्मादेशे थेरवादस्य सिंहलीयशाखा पुरातनबर्मीयशाखा चेति शाखाद्वयं प्रचलति स्म, सिंहलीयशाखा विशेषतः प्रामाणिकी मता। चपट इत्याख्यस्य चतुर्षु शिष्येषु योग्यतमो राहुल आसीत्। चपटस्यान्यैः; सिवतीमहास्थविरेण तामलिन्दमहास्थविरेण आनन्दमहास्थविरेण च; त्रिभिः प्रधानशिष्यैः पगानराज्ये लङ्कायाः थेरवादस्य प्रामाणिकतां वर्धयितुं पूर्णरूपेण प्रयतितम्, तथा त्रयः सम्प्रदायाः पृथक् स्थापिताः। त्रयोदशस्य शतकस्यारम्भे थेरवादस्य धर्मज्योतिः प्रखरया प्रभयोदीच्यबर्माप्रदेशमालोकयति स्म।

उदीच्यबर्माप्रदेशे सिंहलीयसम्प्रदायद्वारा पराभवानन्तरं म्रम्मसङ्घः (तलैंगसम्प्रदायः) स्वजन्मभूमावप्यनेन पराजितो भवितुमारेभे। पगानराज्ये उपसम्पन्नेन सारिपुत्रेण तथा लङ्कात उपसम्पदाप्राप्त्यनन्तरं मर्तवानप्रदेशस्य राज्ञा गुरुभूताभ्यां द्वाभ्यां भिक्षुभ्यां दक्षिणस्मिन् सिंहलीयशाखायाः प्रचारः कृतः। सारिपुत्रेण मनुमाश्रित्य प्रथमं धर्मशास्त्रं (धम्मथत) लिखितम्।

**पगानराज्यस्य दीपप्रशमः**—पगानेऽरिमर्दनेन प्रज्वालितो धर्मप्रदीपो मङ्गोलानामाक्रमणेन त्रयोदशस्य शतकस्योत्तरार्द्धे शान्तोऽभूत्। तदानीं पगाने कतिपयेऽयोग्या विलासिनश्च शासका अभूवन्। १२५४ तमे खीष्टीयाब्दे नरसिंहपती राज्यासनमारूढः। अस्यायूनस्य विलासिनश्च राज्ञः प्रतिज्ञेयमासीद् यत् स प्रतिदिनं त्रिंशत्कंसीमितं दाधिकं भक्षयति, तस्य च त्रीणि सहस्राणि रक्षिता भार्या आसन्। १२५३ तमखीष्टीयाब्दपर्यन्तम् 'कुबलैखा' इत्याख्येन युन्नानराज्यं विजितम्। १२७१ तमे खीष्टीयाब्दे तेन बर्माराजस्तस्य वश्यतां स्वीकुर्यादिति दूतः प्रहितः। १२७३ तमे खीष्टीयाब्दे एको राजदूतः प्रेषितः, किन्तु बर्मादेशे राजसभायामुपानहोरनवताराशिष्टतायां समित्रः स हतः। कुबलैखा इत्याख्यस्य कोपायेदमेव पर्याप्तमासीत्, किन्तु १२७७ तमे खीष्टीयाब्दे पगानस्य राज्ञा भामोप्रदेशात् पञ्चत्रिंशत्क्रोशेभ्य उपरि तेपिंगनरीप्रदेशस्य भूमिपाले अत एवाक्रमणं कृतं यत् तेन कुबलैखाँ इत्याख्यस्य वश्यता स्वीकृता। १२८३ तमे खीष्टीयाब्दे बर्मावास्तव्यैः पुनश्चीनदेश आक्रान्तः, किन्तु ते पराजिताः। राजा समाचारममुं श्रुत्वा राजधान्याः पलायितः, प्रजाभिर्विद्रोहः कृतः। १२८७ तमे खीष्टीयाब्दे तामी राजा हतः। समाचारममुमुपलभ्य कुबलैखाँ इत्याख्यस्य सेना पगानराज्ये आक्रमणं कृतवती, मङ्गोलानामसिरग्निश्च मनोहरस्यास्य नगरस्य नाशं कृतवन्तौ।

**अन्धयुगस्य ज्योतिः-धम्मचेतिः**—१२८७-१५५१तमखीष्टीयाब्दपर्यन्तमागामि सार्द्धशतकद्वयं बर्मादेशेऽराजकतायां गृहयुद्धानाञ्च दुःखमयमन्धकारपूर्णञ्च युगं विद्यते। तदानीं बर्मादेशः

त्रिभी राज्यैर्विभक्त आसीत् । ( १ ) उदीच्यबर्मादेशे इरावदीनद्या उपरि तटे पूर्वं पिन्याप्रदेशे पुनगावाप्रदेशे च शानजातेः शासनमभूत् । ( २ ) इरावद्या नदीमुखप्रदेशे पेगू इत्यत्र मोनराज्यं तलैंगराज्यञ्चासीत् । ( ३ ) आवापेगूराज्ययोर्मध्ये तौंगूराज्यमासीत् । अस्मिन्नन्धयुगेऽपि भारतीय-संस्कृतेर्ज्योतिरतीव क्षीणनया प्रज्वलति स्म । स्नेहदानेन तस्य प्रकाशको जनः पेगूराज्यस्य राज्याधिपतिर्धम्मचेतिः ( १४६०–१४९१ खी० ) अस्ति । प्रारम्भेऽयमेक आवाराज्ये साधरणो भिक्षुरासीत् । आवाराज्यस्य बर्माराजसभाद्वारा कारागारे बद्धा पेगूराजकन्या शिनसाबूनाम्नी कारागारात् पलायने साहाय्य तेन नीता । १४५३ तमे खीष्टीयाब्दे इय पेगूराज्ञी अभूत्, तया च स्वोपकारकः पूर्व प्रधानमन्त्री पश्चाच्च जामाता कृतः । अय तस्या उत्तराधिकारी चाभूत् । तेन बौद्धसङ्घायानेक दानं दत्तम् । अय कल्याणीप्रदेशस्य प्रसिद्धस्याभिलेखस्य रचयिता प्रतिपाद्यते । तदा बर्मादेशे सीमा-( स भूभागः, यत्राभ्यन्तरे उपोसथस्य सभास्तथोपसम्पदा भवन्ति) विषये पट्सु बौद्ध-सम्प्रदायेषु विवाद आसीत् । प्रश्नस्यास्य निर्णयायैको दूतो लङ्काया प्रहितः । तस्य प्रत्यागमनानन्तर महाविहारेण निर्दिष्टा पद्धतिमनुसृत्यैका कल्याणीसीमा निर्मिता । धम्मचेतिनृपतेः राज्ये १५,६६६ भिक्षवो नवीनपद्धत्या उपसम्पन्नाः ।

राज्ञा कल्याणीसीमालेखे प्रतिज्ञातं यत् तेन धर्मः पूर्णतया सशोधितः, इदानीं बर्मादेशे महाविहारसम्प्रदाय एवावशिष्टः । युगेऽस्मिन्नेव आवाराज्ये राज्ञो नरपतेः (१४४२–१४६२ खी०) समये शीलवश अरियवशनामकौ बौद्धविद्वासावभूताम् । ताभ्या धार्मिकसाहित्य सर्वप्रथम लोकभाषाया लिखितु प्रारब्धम् ।

सकले बर्मीयेतिहासे षोडशस्य शतकस्य पूर्वार्द्धे एवैकः समयः समायातः (१५२५–१५३०) यदा बौद्धधर्मेऽत्याचारो जातः । आवाराज्यस्यैकेन शानराजेन थोहनब्वा इत्याख्येन बौद्धसंघस्योन्मूलनाय जनाना हनन कृतम्, मन्दिराणि विहाराः पुस्तकालयाश्च प्राज्वालिषत, किन्त्विमेऽत्याचारा बहुकालं न स्थिताः । बर्मावास्तव्यास्तेन रुष्टा अभूवन्, १५५५ तमे खीष्टीयाब्दे च आवाराज्यस्य शानवशस्यान्तश्च बभूव ।

**बयिननौंगः ( १५५१–१५८१ खी० )**—अस्य समापको बयिननौंगनामा नृपतिरासीत् । इदमनिरुद्धेनालोम्प्रा इत्याख्येन च साक बर्मादेशस्य प्राचीनेतिहासस्य प्रसिद्धाना राष्ट्रियपुरुषाणा त्रिमूर्त्तेरङ्ग विद्यते । अनेन प्रोम-पेगू सान राज्य-आवा इत्यादीनि राज्यानि विजितानि, तथा १७५२ तम खीष्टीयाब्दपर्यन्तमस्य वंश आवाराज्यस्य शासकोऽजायत । अस्य बुद्धभक्तिः परा सीमां प्राप्ता । अनेनोत्तरजनपदाना यवनाः शानजातीया बौद्धधर्मस्वीकराय बाधिताः, लङ्काया बुद्धदन्तान् प्राप्तुं प्रयत्नः कृतः, पेगूराज्येऽनेकानि भवनानि निर्मापितानि । तस्मिन् समये कस्यचिन्महतो ग्रामपतेर्मृत्यौ तस्य परलोके साहाय्यार्थं शत वाजिनः, स्त्री-पुरुषाः, हस्तिनश्च हन्यन्ते स्म । बयिनेनेयं क्रूरा पद्धतिर्बौद्धधर्मस्य प्रभावेण निरुद्धा ।

आगामिन उत्तराधिकारिणो बयिनवद् योग्या नासन्, किन्तु तैर्बौद्धधर्मस्य पूर्णतया सरक्षणं भवति स्म । राजानो बौद्धमन्दिराणि विदधति स्म, विहारेभ्यो दान कुर्वन्ति स्म । १६००–१६५० खीष्टीयाब्दमध्ये आवा-सगैंगजनपदयोरभिधर्मस्यातीवाध्ययन भवति स्म । पालिग्रन्थातिरिक्त-

बर्मीयभाषायामभिधम्मस्यानेकेऽनुवादा व्याख्याश्चालिख्यन्त, किन्तु सप्तदशशतकस्योत्तरार्द्धे शासनवंशस्य शब्देषु धर्मचन्द्रो मेघाच्छन्नो बभूव, तस्य च प्रभा क्षीणा सजाता।

**अलोम्प्रा ( १७५२–१७६० )**—इमं धर्मचन्द्र पुनः प्रकाशयितु गौरवम् अलौगयपा अथवा अलोम्प्रा इत्याख्यस्यास्ति। अय बर्मीयेतिहासस्य तृतीयो महापुरुषो विद्यते। पूर्वमनेन आवा-प्रोम-श्वेदगोनग्रामा विजिताः। श्वेदगोनस्य नाम मनकून ( मनः विजयः, कूनः उपलब्धः ) रूपेण परिवर्तितम्। इदमेव पश्चाद् रङ्गुननाम्ना प्रसिद्धि गतम्। पुनः सिरियम इति पेगू इति च विजितम्, मणिपुरेऽधिकारः कृतः। स्यामदेशस्याक्रमणमस्याकालमृत्युना सफलं नाभूत्। अष्टौ वर्षाणि तावतो विजयान् कुर्वन्नपि धर्मोन्नतिं प्रत्युदासीनो नाभवत्। सम्राड् अशोक इव स उपोसथदिनानि पूर्णेन धार्मिकविधिना सम्मानयति स्म। बर्मावासिनस्त बोधिसत्त्व मन्यन्ते स्म ( शासनवशः पृ० १२३–सकलम्रम्मरट्ठवासिनो च अय अम्हाक राजा बोधिसत्तो ति वोहारिंसु )।

**बोदा-पा-या ( १७८२–१८१९ ख्री० )**—अलोम्प्रामरणानन्तर भावी महान् राजा बोदा-पा-या इत्यासीत्। त्रिंशद् वर्षाणि सुदीर्घकाल शासताऽनेन बर्माराज्यस्य विस्तारश्चरमा सीमा नीतः। अराकान-मणिपुर-ब्रह्मपुत्रतटानि तेन विजितानि, अनेन बुद्धगयातो मूर्तीः पवित्रवृक्ष-शाखाश्चानेतु केचन भिक्षवो भारते प्रेषिताः। आग्लदेशीयैरेतस्यायमर्थोऽमानि यदय भारतीय-राजभिः सम्बन्ध स्थापयितु वाञ्छति। तत एव बर्मादेशस्य राज्ञ आग्लदेशीयानाञ्च सघर्पः प्रारभ्यत योऽन्ते बर्मादेशस्य पराधीनतायाः कारणमभूत्।

ख्रीष्टानुयायिधर्मप्रचारकैः बोदा-पा-या इत्याख्यो नृशसराक्षसरूपेण चित्रितः। एकस्य इटलीदेशीयधर्मप्रचारकस्य कथनानुसारेण तस्य राज्येऽसिना निहताना सख्या सयति शत्रुभिर्हताना सख्यापेक्षयाऽधिकाऽऽसीत्। भूमण्डले तादृशो निरङ्कुशो राजाऽन्यो नासीत्। यदि स कस्मैचित् क्रुध्यति तर्हि निरपराधमपि त घातयति स्म, किन्तु तस्य क्रूरस्य राज्ञो बुद्धभक्तिरतीवाश्चर्यजनिकाऽऽसीत्। तेनासख्याकानि मठमन्दिराणि च निर्मापितानि, तेभ्यश्च दानानि प्रदत्तानि। तस्येयं समीहाऽऽसीद् यदह तादृश बौद्धमन्दिर कारयेय यत् ससारे सर्वेभ्यो महद् भवेत्। विशति वर्षाणि तेन तत्र श्रमो धनव्ययश्च कृतः, दौर्भाग्यवशात् तत् पूर्ण नाभूत्, पर तस्य ध्वसावशेषोऽद्यापि बोदोमहोदयस्य बुद्धभक्तेर्देदीप्यमान प्रमाण समुपस्थापयति। अस्य बौद्धमन्दिरस्य निर्माण निरीक्षितु स स्वय राजप्रासादाद् निर्गत्य मिंगुनाख्ये स्थाने न्यवात्सीत्। अन्तिमे काले तस्याय गर्वो जातो यदह बुद्धोऽस्मि। थेरैस्तस्येय प्रतिज्ञा न स्वीकृता। निस्सशय तेषां थेराणा नैतिकं साहस श्लाघनीयं विद्यते, यैस्तादृशस्य क्रूरस्य मदान्धस्य च नृपतेरिच्छाया विरोधः कृतः।

बोदो पा-यासमये सङ्घोऽत्यधिकः फलितः पुष्पितश्च। अराकानप्रदेशाद् महामुनेर्मूर्तिः सस्कृतपुस्तकालयश्च आवाराज्ये आनीतौ। लङ्कायाममरपुरस्य ( मण्डले ) बर्मीयभिक्षवो गताः पालिग्रन्थाश्चानयन्। पूर्वं त्रिपिटक लङ्कात आनायितम्, अद्यत्वे तत्र प्रहीयते स्म। सङ्घविषये राज्ञोऽस्य कार्यद्वयमुल्लेखनीय विद्यते। प्रथमं कार्य चिरकालतो वर्तमानस्यैकस्य जटिलस्य विवादस्य निर्णयः, द्वितीयञ्च सङ्घटनम्।

अष्टादशस्य शतकस्य प्रारम्भतः सङ्घेऽय विवादः प्रचलति स यद् भिक्षुभिरुत्तरीय केन प्रकारेण धारणीयम्। अत्र पक्षद्वयमासीत्—पारुपनेति (पूर्णरूपेण वस्त्रावेष्टिनम्) एकासिकञ्च। बर्मादेशस्य प्राचीनपद्धतिरियमासीद् यदुत्तरीय पृष्ठतो वामस्कन्धे प्रक्षिप्य, तेन वक्षःस्थलमाच्छाद्य दक्षिणस्कन्धात् तत् पृष्ठे प्रक्षिप्यते स। तेन स्कन्धद्वयमाच्छाद्यमानं भवति स, इयं च पारुपनपद्धतिरुच्यते। १६९८ तमखीष्टीयाब्दाद् वामस्कन्धादग्रे आनीत वस्त्र तत्रैव त्यज्यते स। तेन वामस्कन्धोऽनावृतो भवति स, इय चैकासिकपद्धतिरुच्यते। प्राचीना ग्रन्थाः पारुपनपक्षे आसन्[1], किन्तु लङ्कायाः पद्धतिरेकासिकी आसीत्। बर्मादेशे द्वयोरपि पक्षयोरुग्रो विवादः प्रचलितः। १७१२ तमे खीष्टीयाब्दे १७३२ तमे खीष्टीयाब्दे च विंशतिर्जनाः समवेताः, किन्तु कश्चन निर्णयो नाभूत्। अलोम्प्राकाले तस्य पुरोहितोऽतुल एकासिकपक्षपात्यासीत्, किन्तु त प्रश्न निर्णेतु राज्ञाऽवसरो नालम्भि। बोदो-पा इत्याख्यस्य पुरोऽय प्रश्नः समागतः, तस्मिन् पारुपनपक्षस्य समर्थकस्य जनाभिवशस्याधिकः प्रभाव आसीत्। द्वयोः पक्षयोः शास्त्रार्थं श्रुत्वा राज्ञा पारुपनपक्षो विजयेन सम्मानितः। १७८४ तमे खीष्टीयाब्दे भिक्षूणा कृते तदनिवार्य कृतम्।

अनेन विवरणेनेद स्पष्ट भवति यद् यद्यपि राज्ञो धर्मगुरुवद् धार्मिकविषयेषु निर्णय कर्तुमधिकारो नासीत्, किन्तु सङ्घो विवादग्रस्तप्रश्नाना निर्णयाय राजानमेवावलम्बते स। राज्ञो निर्णयो धर्मशास्त्रानुकूल एव मन्यते स। सर्वेषु भिक्षुषु स्वनिर्णय समारोपयितुमधिकारो नासीत्, किन्तु तथापि सङ्घस्य वास्तविकोऽग्रणीः स एवासीत्। स य जन स्व पुरोहित मन्यते स स एव सङ्घस्याध्यक्षो भवति स। इदमावश्यकं नासीद् यदतीतस्य राज्ञः पुरोहितस्तच्छिष्यो वा नवस्य राज्ञो गुरुर्भवेत्। बोदा-पा इत्याख्येन स्वगुरोर्ज्ञानस्याध्यक्षये चतुरो विख्यातान् थेरान् सङ्घराजान् विधायेद स्पष्ट कृत यत् सङ्घस्य वस्तुतो नियामकः सम्राडेवास्ति।

१८१९-१८५२ तमखीष्टीयाब्दपर्यन्त बग्मीदा (१८१९-१८३७ थरावड्डी १८३७-१८४५) पगानमिन (१८४५-१८५२) नामानो राजानो राजासिंहासनमारुढाः। राजनीतिकदृष्ट्या बर्मादेशस्याशुभानि दिनानि समागतानि। तस्य प्रदेशाः शनैः शनैः 'ईस्ट इण्डिया कम्पनी' इत्याख्यस्य भारतीयसाम्राज्यस्य ग्रासा भवन्ति स। प्रथमस्य बर्मीययुद्धस्य (१८२४-२६) पश्चाद् आंग्लदेशीयैः अराकानेति तनासरिमेति च प्राप्तम्। मणिपुर-कचार खासाजयन्तियातो बर्मावासिभिः स्वाधिकारः परित्यक्तः। १८५२ तमे खीष्टीयाब्दे द्वितीयबर्मीययुद्धे आंग्लदेशीयैः पेगूप्रदेशो गृहीत। बर्मीयभूमिपालाना प्रभुतोदीच्यबर्मापर्यन्तमेवाशिष्यत, किन्तु तस्मिन् राजनीतिकापकर्षयुगे धार्मिकोत्सवे काचन बाधा नाभूत्। बग्मीदा इत्याख्येन राजवश (यजविन) नामकप्राचीनेतिहासस्य सङ्कलन कारितम्। तदानीमयं प्रश्न उदपद्यत यद् धर्मार्थं दत्त दान कियदवधि वैधं भवति। अस्य निर्णयः सङ्घस्य पक्ष एवाभूद् यत् तादृशं दान यावत् चन्द्रदिवाकरौ वर्तेते तावदस्तु। सङ्घस्य कृते इदमतीव लाभप्रदमासीत्। १८४५ तमे खीष्टीयाब्दे बर्मादेशे काम साहित्यस्य सृष्टिरजायत। दीर्घ-सयुक्त अङ्गुत्तरनिकायाना तट्टीकानाञ्च बर्मीयानुवादोऽभवत्।

---

१. महावग्ग १।२९।२, ४।३।३—एकंसमुत्तरासङ्गं करित्वा।

मिनडोमिन इत्याख्यो राजा ( १८५२-७७ खी० )—पञ्चविंशतिवर्षात्मके सुदीर्घे शासनकालेऽनेन बौद्धधर्मोऽतीव प्रोत्साहित. । बोदोपया इव किञ्चिन्निर्मातु तु तस्य महत्त्वाकाङ्क्षा नासीत्, किन्तु स पञ्चमीं बौद्धसभामाह्वातु गौरवमवश्यं प्राप्तुमिच्छति स्म । प्रथमशतकखीष्टीयाब्दे चतुर्थी बौद्धसभा कनिष्कः समायोजितवान् । तस्य १७०० वर्षानन्तरम् १८६८-७१ तमपर्यन्तमनेन २४०० भिक्षूणामेका सगीतिराहूता । तत्र त्रिपिटकस्य गानमभूत्, येन तस्यापपाठाना सशोधनेन मूलपाठस्य शुद्धिर्भवेत् । माडले इत्यत्र ४५० बौद्धमन्दिराणि एकञ्च केन्द्रीय स्तूप निर्माय सगीतेरस्याः स्मृतिममरा कर्तु चेष्टितम् । स्तूपेऽस्मिन् शतानि लघूनि पूजास्थानानि सन्ति । अत्र २२९ लम्बपट्टिकासु त्रिपिटकस्य करचानाश उत्कीर्णो विद्यते । मिनडोमिनेत्याख्यस्य गुरुणा प्रज्ञास्वमिना बर्मादेशस्य शासनवशनामकेतिहासो लिखितः । राज्ञा भिक्षुसङ्घे वर्धमाना शिथिलता निराकृता । सर्वत्र सङ्घस्य ख्यातिस्तथा विस्तृताऽभूद् यत् तदा लङ्काया भिक्षुभिर्मण्डलस्य सङ्घराजः कतिपयानां प्रश्नाना विषये व्यवस्था याचितः ।

१८७८ तमे खीष्टीयाब्दे थीवाख्यो नृपो बर्मादेशस्य राज्यासनमारूढः, अस्यैव नृपस्य काले आङ्लसेनया बर्मादेशो विजितः । १८८६ तमखीष्टीयाब्दस्य जनवरीमासस्य प्रथमे दिनाङ्के सकलो बर्मादेशो भारतस्यैकः प्रान्तोऽभूत् । तेन सहैव तस्य मध्ययुग समाप्तिमगात् ।

सांस्कृतिक इतिहासः—भारतीयसंस्कृतेर्बर्मादेशे कतिपये अशे यथा गभीरः प्रभावोऽभूत्, न तथा देशान्तरेषु । अत्र त्रयाणा क्षेत्राणा विशेषेण चर्चा भविष्यति—( १ ) काल्पनिकेतिहासो भूगोलश्च, ( २ ) साहित्यम्, ( ३ ) ललितकलाः ।

काल्पनिकेतिहासभूगोलाभ्यामस्माकमयमाशयो विद्यते यद् बर्मीयैतिहासैर्भगवता बुद्धेन बौद्धधर्मेण च सम्बद्धानि सर्वाणि स्थानानि बर्मादेशे आसन्निति साधयितु प्रयतितम् । तेषामितिहासानामनुसारेण बुद्धो बहुवार बर्मादेशमागच्छति, पगान-माण्डलेप्रभृतिनगरविषये भविष्यवाणीं करोति । अत्र कश्चन सन्देहो नास्ति यद् बर्मावासिभिरय विषयो लङ्काया महावंशदीपवशप्रभृतीतिहासेभ्योऽधीतः, किन्तु द्वयोर्देशयोरितिहासाना तुलया प्रतीयत इद यत् शिष्यो गुरोरतीवाग्रेऽभूत् । भगवान् बुद्धः शाक्यवश्य आसीत्, अतो बर्मादेशस्यानेकेषा प्राचीनाना राजवशाना मूल शाक्यकुल व्यपदिश्यते । अस्मिन् विषये तगौगस्यानुश्रुतेरुल्लेखः प्राक् कृतः । जातकेषु काशीराजस्य महती चर्चा विद्यते । अराकानेतिहासास्तस्यैकस्य पुत्रस्य स्वस्यादिनृपत्व प्रतिपादयन्ति ।

प्रवृत्तिरिय बौद्धसाहित्यस्य नामपर्यन्तमेव सीमिता नाभूत्; बर्मादेशस्य सकलाः प्राचीना भौगोलिकसज्ञा भारतीयाः सन्ति । ताभ्यो बर्मादेशे नवस्य भारतस्य सृष्टिराजयत । तेषु कतिपयानि नामानि नूपनिवेशकैः स्वमातृभूमेर्नगराणि नदीश्चाश्रित्य कृतानि, किन्त्वधिकानि बर्मावासिभिर्भारतात् प्रेरणा प्राप्य स्वय कृतानि । तैः स्वदेशे नवानामपरान्त-अवन्ती-चम्पानगर अन्यवती गन्धार काम्भोज—केलस( कैलास )-मिथिला - पुष्पकर-वाराणसी-द्वारावती-राजगृह-सकाश्य-उत्कल वैशाली-श्रीक्षेत्राणा निर्माण कृतम् । कानिचिन्नामानि अद्यत्वेऽपि जीवन्ति । बर्मादेशस्य सर्वतो महती नदी इरावदी इरावत्याः ( रावी ) एव रूपान्तर विद्यते । बुद्धस्य समयस्य श्रावस्त्याः

स्मरण थरावड्डी, थराना थाउत्तोरूपेण भवति[1]। कस्मिंश्चिदन्यस्मिन् भारतीये उपनिवेशे तादृशीं घटनां व्यापकतया व्याचक्षाणाना काल्पनिकानामितिहासाना भौगोलिकस्थानाना निर्देशकस्य कपोलकल्पितस्य भूगोलस्य च सृष्टिर्न कृता[2]। भवतु, तदसत्य मन्यते, किन्तु तथात्वेऽपि कारणं बर्मावासिना भारतभक्तिरेवासीत्।

बर्मादेशस्य द्वितीय वैशिष्ट्य संस्कृतस्य पालिसाहित्यस्य चाध्ययन विकासश्च स्तः। चीन-तिब्बतप्रभृतिदेशेषु भारतीयग्रन्थानामनुवादोऽभूत्, किन्तु बर्माऽगे तान् विषयानधिकृत्य स्वतन्त्र-साहित्यस्यापि निर्माणमभूत्। मध्ययुगेऽस्य वाङ्मयस्योन्नति· १४४२ तमखीष्टीयाब्दस्यैकेनाभि-लेखेन किञ्चिदनुमातु शक्यते। अस्मिन् तौंगद्विनस्य शासकेन तत्पत्न्या च बौद्धसङ्घायैकमुद्यान शालिक्षेत्राणि दासा ग्रन्थाश्चादायिषतेत्युल्लिखित विद्यते। अत्र २९५ ग्रन्थाः परिगणिता·। सूच्याऽनया ज्ञायते यद् मध्ययुगे तत्र सस्कृतसाहित्येषु बौद्धनैयायिकाना दार्शनिकग्रन्थाना तन्त्रशास्त्रस्य च विशेषेणाध्ययन भवति स्म। तेष्वाचार्यधर्मकीर्त्तेः (प्रायः ६३५–६५०) न्यायबिन्दुर्हेतुबिन्दुश्च तयोश्च टीकाः प्रधाना आसन्। तान्त्रिकग्रन्थेषु महाकालचक्र प्रधानमासीत्। मध्ययुगे तत्र संस्कृतस्य कामशास्त्रस्य ज्यौतिषस्य वैद्यकस्य चाप्यध्ययन भवति स्म। तानि वेदशास्त्राणि प्रोच्यन्ते स्म। तेषु प्रवीणेभ्यो बौद्धभिक्षुभ्यः 'वेदशास्त्रकोविद·' इत्युपाधिः प्रदीयते स्म।

तस्मिन् युगे मनुनारदयाज्ञवल्क्यप्रभृतिग्रन्थानाश्रित्य बर्मीय धर्मशास्त्रं निरमायि। तथा-विधं प्रथमं धर्मशास्त्र धर्मविलासस्यासीत् (१११७ खी०), द्वितीय मर्त्तबानप्रदेशस्य (दक्षिण-बर्मा) राज्ञो वगुरोः (१२८० खी०) चासीत्। अनयोर्द्वयोरिद प्रत्यपाद्यत, एते धर्मशास्त्रे मानवधर्मशास्त्राधारेण निर्मिते स्तः। तयोर्व्यवस्था मनुस्मृतिव्यवस्थया सवदन्ति, किन्तु हिन्दु-धर्मसम्बद्धा विषयः परित्यक्ताः सन्ति। कर्मवादसिद्धान्त पूर्णरूपेण मन्यमानेऽप्यस्मिन् दण्ड्याना कृते दण्डो न विहितो यतः कर्मफलं तु तेन प्राप्तव्य भवति। पीडितस्य जनस्य पीडानुसारेणापराधिनो धनग्रहणस्य व्यवस्था विद्यते। इलियट इत्याख्यविदुषः कल्पना विद्यते यद् भारतस्य पूर्वतटात् समागतनारदस्मृतिप्रभृतिमाश्रित्य ते ग्रन्था लिखिताः, यतस्तस्या स्मृतौ केवल विधानाना वर्णन विद्यते। षोडशे शतके एकेन तलैंगभिक्षुणा बुद्धघोषेण वगुरुधर्मशास्त्र पालिभाषयाऽनूदितम्। अस्याभिधान मनुसार आसीत्। पश्चात् तन्नाम्ना पूर्ण साहित्य विकसितम्, किन्तु तदुपरि बौद्धप्रभावोऽवर्धत। १८३२ तमे खीष्टीयाब्दे मोहविच्छेदिनी विरचिता। तत्र मनुनियमा भगवतो बुद्धस्य मुखात् प्रतिपादिताः। कतिपयासु परवर्तिस्मृतिषु मनुनाम तु वर्तते, किन्तु तासा विषया मनुविषयेणासम्बद्धाः सन्ति। १६४० तमे खीष्टीयाब्दे कैंगजानामकेन केनचन स्थानीया आचाराः संगृहीताः। स राज्ञा मनुराजोपाधिना भूषितः, तस्य च ग्रन्थेन साक बलाद्

---

१. बर्मादेशस्य भाषायां संस्कृतस्य पालेश्च शकारसकारौ थत्वं रेफो यत्वं तथा जत्वं च प्राप्नुवन्ति। उदाहरणम्—शक्रः=थग्यो, शासनम्=थाथनं, राजवशः=याजविनो। इत्थं श्रावस्ती थरावड्डी अभूत्।

२. बोड-पालिलिटरेचर आफ बर्मा, पृ० १०२-९, राथे बु, पृ० १९२–९५।

मनोर्नाम संयोजितम्। आलोम्पाराजस्य शासनकाले नव धर्मशास्त्रमलिख्यत। १७५३-१८८२ तमखीष्टीयाब्दपर्यन्तम् ३९ धर्मशास्त्राणि रचितानि। तैः साकं यद्यपि वृथैव मनुनाम सलग्न विद्यते, किन्तु ते इद सूचयितुं पर्याप्ताः सन्ति यद् भारतीयवद् बर्मावासिनामप्याद्यनियम-निर्माता मनुरेवासीत्।

थेरवादस्य मूलग्रन्थाः पालिभाषायामेव विद्यते, अतोऽस्मिन् पालिवाङ्मयस्यात्यधिको विकासोऽजायत। धर्मग्रन्था एव टीकाभिर्न विभूषिताः, किन्तु व्याकरणराजनीतीतिहासादिविषयका अपि ग्रन्था रचिताः। साहित्यमिद तथा विशालमासीद् यत् तस्येतिहासलेखनस्यावश्यकता प्रतीयते स्म। गन्धवशशासनवशौ च तथाविधावेवेतिहासावास्ताम्। एकादशशतकाद् बर्मादेशे पालिसाहित्य-पुस्तकान्यलिख्यन्त। १०६४ तमे खीष्टीयाब्दे धम्मसेनापतिना व्याकरणस्य कारिकानामिकया एकया स्वल्पपुस्तिकया उपक्रमः कृतः। ततोऽन्ये ग्रन्था लिखिताः। तेषु सर्वप्रसिद्धो ग्रन्थोऽग्गवशस्य ( ११५४ खी० ) 'सद्नीति.' विद्यते। त्रिपिटकस्य भाषाविवेचकः प्रामाणिकोऽय ग्रन्थो बर्मादेशे लङ्काद्वीपे च सामान्येन लोकप्रियोऽभूत्। १२३० तमे खीष्टीयाब्दे प्रायः पालिभाषाया अध्ययन-स्यानुरागस्तथाविधोऽभूद् यत् स्त्रियोऽपि जटिलस्य पालिव्याकरणस्य विदुष्यो भवितु प्रारभन्त। पगानराजस्य क्यास्वानामकस्य पुत्र्या पालिविभक्तीराश्रित्य विभत्त्यथ नामक पुस्तक लिखितम्। अभिधम्ममाश्रित्यानेके ग्रन्था अलिख्यन्त। एकोनविंशतितमे शतके मिन-दो मिन ( १२५२-७७ खी० ) इत्यस्य शासन बर्मीयपालिसाहित्यस्य स्वर्णयुगमुच्यते।

बर्मीयसाहित्ये पालिसाहित्यस्य गभीरः प्रभावो दृश्यते। यद्यपि बर्मीया भाषा तिब्बत-बर्मीयभाषापरिवारेण सम्बन्धमादधाति, किन्तु तस्या विकासस्य विस्तरस्य गाम्भीर्यस्य च गौरव भारतस्यैवास्ति। यदा चतुर्दशे शतके ता लोकभाषा साहित्यिकभाषा कर्तुं चेष्टाऽभूत्, तदा सा भारतीयशब्दकोषात् सहस्राणि शब्दान् गृहीत्वैव सफलीभूता।

**ललितकला :**—साहित्यवद् ललितकलास्वपि बर्मादेशे भारतस्यात्यधिकः प्रभावः स्वाभाविक आसीत्। चित्रमूर्तौ वास्तुकलायाञ्च तस्य स्पष्टः प्रभावो विद्यते। बर्मादेशस्य विभि-न्नाना प्रदेशानामावासका व्यापारिणो राजपुत्राः क्षत्रिया ब्राह्मणा धर्मप्रचारकाश्च ताः कला धर्मेण सह तत्र नयन्ति स्म। अन्यच्च बर्मीया अपि भारत गत्वा देशस्यास्य कला मातृभूमिं प्रवेशयन्ति स्म। एकस्य बर्मीयेतिहासस्यानुसारेणैको बर्मावासिसेनापतिर्भारताद् देवाना मूर्तिनयनव्यापार करोति स्म। गङ्गाप्रवाहेण भग्नेभ्यो वाराणसेयपुरातनमन्दिरेभ्यः प्राप्ता मूर्तीः क्रीत्वा स ताः पेगूराज्ये विक्रीणाति स्म। इत्थ भारतीया एव स्वकला बर्मादेश नयन्ति स्म। इत्येव न, किन्तु बर्मावासिनोऽपि तासा प्रसारे साहाय्य कुर्वन्ति स्म।

बर्मादेशस्य प्रारम्भिकी चित्रकला वङ्गनेपालयोः कलाया एव विकसित रूपमासीत्। पगानराज्यस्य मन्दिराणा भित्तिषु चित्रिता लोकनाथ-हयग्रीव-शक्ति-तारा-शिव-यमुना-विष्णु-बोधिसत्त्वप्रभृतिमूर्त्तयो मुखाकृतौ, मुद्रायम्, वस्त्रेऽलङ्करणे च वङ्गस्य नेपालस्य च पुस्तकेषु चित्रि-ताना लघुचित्राणा शैल्या तथा दृढ साम्यमादधाति यत्तयोः प्रदेशयोस्तस्य युगस्य बर्मीयचित्रकलाया आदिस्रोतस्त्वे कश्चन संशयो भवितुं नार्हति। मूर्तिकलाया बर्मादेशः षष्ठशतकाद् अष्टमशतक-पर्यन्तं मागधगुप्तकलायाः परम्परां स्थिरा व्यधात्। प्राचीनप्रोमराज्यात् प्राप्ता अवलोकितेश्वर-

मैत्रेयबुद्धानामनेका मूर्तयोऽस्य प्रबलानि प्रमाणानि सन्ति। नैतावदेव, वङ्गस्य विहारस्य च पालशैल्या अपि तत्र महान् प्रभावोऽजायत। पगानप्रदेशात् प्राप्ता एकादशद्वादशशतकयोः रासीना एका कास्यबुद्धमूर्तिर्बुद्धगयातः प्राप्ताभिर्मूर्तिभिः पूर्ण साम्यमादधाति।

वास्तोर्युगेऽस्मिन् सर्वोत्तममुदाहरण १०९० तमे खी० निर्मित पगानस्थानन्दमन्दिर विद्यते। पूर्वमिद प्रत्यपाद्यत यत् क्यजित्थमहोदयेन सर्वेषा भारतीयमन्दिराणा वर्णन श्रुत्वा तद् उदयगिरिपर्वतस्य ( उड़ीसा ) गुहामन्दिरपद्धत्या निर्मापितम्। तत्र शिखराद्वारभ्याधारपर्यन्त सर्व न केवलं भारतीयपद्धत्यनुकूलमस्ति पर भारतीयशिल्पिनां कृतिरपि विद्यते। इदं ५६४ वर्गफीटपरिमितविशालबाह्यशालाया मध्ये इष्टकानिर्मितं वर्गाकारं ( प्रत्येक भुजा १७५ फीट ) मन्दिर विद्यते। अभितः ५७ फीटमिता विशाला त्रिकोणपटला बाह्यशाला विद्यते। एतेन मन्दिरस्य सर्वा विशालता २९० फीटमिता सजाता। मन्दिराभ्यन्तरेऽष्टफीटमिते समुन्नतासने एकत्रिंशत् फीटमिता समुन्नता बुद्धस्यावस्थिता मूर्तिर्विद्यते। तत्र प्रस्तरोत्कीर्णान्युद्गतचित्राणि सन्ति। मृण्मयानि च रक्तानि मूर्तीना द्वाराणि सन्ति। मन्दिराभ्यन्तरेऽशीतिचित्रेषु बुद्धजीवनस्य जातकसम्बद्धघटनानाञ्च वर्णन विद्यते। इद पूर्व प्रत्यपाद्यत यद् मध्ययुगे क्यजित्थस्योत्तराधिकारिभिर्बौद्धमन्दिरनिर्माणे स्पर्द्धा कृता। अतः पगाननगर बौद्धमन्दिरैः सम्भृतमस्ति। हालमहोदयस्य कथनानुसारेणात्र पूर्वम् १३,००० बौद्धमन्दिराणि मठाश्चासन्, परन्त्वद्यत्वे पञ्चसहस्राणा मन्दिराणामवशेषाः सन्ति। एते इरावदीनद्यास्तटे दीर्घतया त्रिक्रोशपर्यन्तं विशालतयैकक्रोशपर्यन्तञ्च प्रसृताः सन्ति। प्रायः सर्वाणि मन्दिराणि त्रयोदशशतकान्तात् प्राक्तनानि सन्ति तेषु च किमपि वस्तु तादृग् नास्ति यत्र भारतीयः प्रभावः काममङ्कितो नाऽभूत्।

अस्मिन्नेव युगे बर्मादेशस्य श्वेदगोनबौद्धमन्दिरस्य ( फया ) रचनाऽभवत्। उच्यते यद् बोध्यनन्तर भगवतो बुद्धस्य सर्वप्रथमाभ्यामुपासकाभ्या ( गृहस्थशिष्याभ्याम् ) तपस्सु मल्लिकाभ्या व्यापारिभ्यामस्मिन् स्थाने भगवतो बुद्धादधिगताः कूर्चबालाः स्वर्णपिटके सुरक्षिताः। प्रारम्भे इदमेक सामान्य बौद्धमन्दिरमासीत्, किन्तु अलोम्प्रा इत्याख्येन राज्ञाष्टादशशतकस्य मध्ये तथा भव्यरूपेण निर्मापितम्। यङ्गून ( रगून ) स्य पार्श्वे इदं बर्मादेशस्य महत्तीर्थस्थानमस्ति। एक पर्वतकं विदीर्य परस्परोपरि निर्मितायामायताकारवेद्यां तन्निर्मित विद्यते। उपरितनी वेदिः पक्का ससोपानाऽस्ति। वेदिरियम् १६६ फीटमिता समुन्नता, ९०० फीटमिता दीर्घा, ६८५ फीटमिता विशाला च विद्यते। एतस्य मध्यभागात् १३५५ फीटवलयितोऽष्टपर्यायाधारे दृढेष्टकानामुपगोलाकारः स्तूपो विद्यते। मूले गोलाकारः, किन्त्वुपरि क्रमेण कृशो विद्यते। अय स्वर्णपत्रमण्डितो वर्तते। आकाशे ३२१ फीटसमुन्नतोऽस्ति। अत्र पूर्वमेक २६ फीटमित समुन्नत तथाऽधुना ४७ फीटमितं समुन्नतं रत्नजटित स्वर्णच्छत्र विद्यते। वर्तमानं छत्रमेकोनविंशे शतके मिन-दो मिनमहोदयेन संयोजितम्। तत्र क्षुद्राः स्वर्णघटिकाः सन्ति। वातेरितास्ताः शब्द कुर्वन्ति। अस्य बौद्धमन्दिरस्य सच्छत्रस्य समग्रमौन्नत्यं ३७० फीटमितमस्ति। मन्दिराभ्यन्तरे थरावड्डीराजेन प्रदत्ता ८११५ मणमिता घण्टा विद्यते। बौद्धमन्दिराधारमभितो वेद्याश्च चतुष्कोणेषु रुचिरप्रस्तरमूर्तयस्तथा सुवर्णसिन्दूरकाचैर्देदीप्यमाना ह्रस्वा देवालयाः सन्ति। यदा कश्चन जनः श्वेदगोनमन्दिरस्योन्नता वेदिमारोहति तदा तस्येद ज्ञान भवति यत् स मर्त्यलोकादमरपुरीं समागतोऽस्ति, तत्रत्येषु चापणेषु

भ्राम्यति। प्रातःकालिके आतपे रक्ते विद्युत्प्रकाशे प्रकाशमानस्यास्य बौद्धमन्दिरस्य शोभाऽवर्णनीया भवति। तद्दृष्ट्वैवानुभवितु शक्यते। विश्वे तादृश मनोहर दृश्यमतीवाल्प विद्यते। बर्मादेशस्य प्रथमस्य आङ्गलयात्रिणो राल्फफिचमहोदयस्य कथनेऽस्मिन् काप्यत्युक्तिर्नास्ति यद् मदीये विचारे इद संसारस्य सुन्दरतम स्थान वर्तते। भगवतो बुद्धस्य स्मृतिरेतादृशकमनीयतया केनापि देशेन रक्षितुं नापारि।

## वर्तमानं युगम् ( १८८६–१०४८ ख्री० )

**राजनीतिकेतिहासः**—१८८६ तमे आङ्ग्लदेशीयैर्विजितो बर्मादेशो भारतवर्षस्यैकः प्रदेशोऽभूत्। किन्तु १९३७ तमस्य प्रथम-अप्रैलमासतः सा भारतात् पृथक् कृता। पार्थक्ये जाते बर्मादेश आन्तरिकशासने स्वातन्त्र्यमवश्य प्राप्तम्, किन्तु रक्षाविदेशनीतिप्रभृतिदृष्ट्या आङ्ग्लसाम्राज्याधीन आसीत्। द्वितीयस्मिन् विश्वयुद्धे ( १९३९–४६ ख्री० ) १९४२ तमखीष्टीयाब्दस्य प्रारम्भे स जापानदेशेन विजितः। तदानीं सहस्राणि भारतीया बर्मादेशात् प्रायस्तैरेव स्थलमार्गैः प्रतिनिवृत्ताः, यैः शतेभ्यो वर्षेभ्यः पूर्व सत्रलैर्भारतीयैर्बर्मादेश आवासिनः। जापानदेशे पराजिते सति बर्मादेशः पुनराङ्ग्लदेशीयाना हस्ते समागतः, किन्तु तदन्तराले तत्र स्वतन्त्रतान्दोलनमुग्र जातम्। आङ्ग्लसाम्राज्य युद्धे विजेतृ भूत्वाऽपि तथा दुर्बल जात यत् तेन बर्मावासिना सद्भावना प्राप्तुं भारतपाकिस्तानलङ्कावत् तस्मै स्वातन्त्र्य प्रदातु निश्चितम्। १८८६ तमस्य प्रथमजनवरीमासे पराधीनो बर्मादेशः १९४८ तमस्य चतुर्थजनवरीमासे बर्मीयनैमित्तिकैर्निश्चिते मुहूर्ते षट्पञ्चाशन्निमेषाधिके एकादशवादने मध्याह्ने सम्पूर्ण स्वातन्त्र्य प्राप्तः।

**धार्मिकदशा**—१८८६ तमे ख्रीष्टीयाब्दे बर्मादेशे पराधीनता प्राप्ते आङ्ग्लदेशीयैर्धार्मिकक्षेत्रे हस्तक्षेपो न कर्तव्य इति नीतिरङ्गीकृता। तेन तस्मिन् क्षेत्रेऽराजकता प्रसृता। पूर्वं राजा सङ्घस्य नियामको भवति स्म, तेन नियुक्तः सङ्घराजः सर्व सङ्घ व्यवस्थापयति स्म। राजाभावे समस्येयमुदपद्यत यत् सघराजः केन नियोक्तव्यः। १९०१ तमे ख्रीष्टीयाब्दे लार्डकर्जनमहोदयो बर्मादेश गतः, प्राचीनेषु भिक्षुष्वन्यतममेव सङ्घराज निर्वक्तु प्रस्तुतवान्। १९०३ तमे ख्रीष्टीयाब्दे तादृश निर्वाचनमभूत्। किन्तु पुनरपि तेन सङ्घे पूर्ववदैक्यं नियन्त्रणमनुशासनञ्च नाभूत्। स्वातन्त्र्यप्राप्त्यनन्तर बर्मादेशे अपूर्वा जागराभूत्, बर्मादेशस्य प्रधानमन्त्रिणा थाकिन-ऊनू-महोदयेन देशस्य चतुर्मुखसमुन्नतेस्तत्साधन कृतम् तथा षष्ठ्या बौद्धमहासभाया अधिवेशन समायोजितम्।

बर्मादेशस्याधुनिकस्य बौद्धधर्मस्य कानिचन वैशिष्ट्यानि उल्लेखनीयानि सन्ति। इदं प्रागेव प्रत्यपाद्यत यल्लङ्कावद् बर्मादेशोऽपि थेरवादस्य प्रधान केन्द्रमस्ति, किन्तु लङ्काया हिन्दुधर्मस्य इस्लामधर्मस्य खीष्टानुयायिधर्मस्य चानुयायिनामपि सख्या पर्याप्ता विद्यते, पर बर्मादेशे तेषा सख्या त्वतीव न्यूनास्ति। द्वितीय महद् वैशिष्ट्यमिद वर्तते यद् बौद्धधर्मेण बर्मीयजीवने महान् प्रभावः स्थापितः। बर्मावासिनो नितान्तं धर्मनिष्ठाः सन्ति। पञ्चदशवर्षदेशीयः प्रत्येक बर्मावासी कञ्चन काल विहारेऽवश्यं तिष्ठति। आर्यजातौ यन्महत्त्वं यज्ञोपवीतसंस्कारस्यास्ति, तदेवात्र युवकानां विहारे (क्योग) प्रेषणस्य। इद मन्यते यद यो बालको विहारे न प्रेष्यते स पशु-

रेव भवति। बहुवार विहारेऽस्य निवासोऽल्पकालिको ( मासिकः साप्ताहिको वा ) भवति, किन्तु श्रद्धालुभिर्मातापितृभिः स्वापत्यानि चतुरो मासान् तत्रावश्य प्रेष्यन्ते। विहारे बालका धार्मिक-शिक्षाभिः सह लेखनपाठनादिशिक्षामपि गृह्णन्ति। इदमेव कारण विद्यते यद् बर्मादेशे साक्ष-रता विशेषरूपेण वर्तते। बर्मादेशे विहारबाहुल्यमपि बर्मावासिना बुद्धभक्तेर्निदर्शकमस्ति। इद परिगणित यत् प्रत्येक ग्राम नगरं वा प्रति विहारद्वयमवश्य विद्यते। तेषु विहारेषु लक्ष भिक्षवो वसन्ति। तेषा सकलोऽपि व्ययो ग्रामीणैर्नागरिकैश्च निरुह्यते, किन्त्विदमवश्य मन्तव्य यद् बर्मावासिनो बौद्धभिक्षवोऽस्य पात्राण्यपि विद्यन्ते। तेषा प्रत्येक विहाराः पाठशालास्थानीयाः सन्ति। अत्र निवासिनस्तथा बाह्या विद्यार्थिनो लेखनपाठननैतिकधार्मिकशिक्षा गृह्णन्ति। विहाराणा शिक्षा राजकीयविद्यालयशिक्षापेक्षयाऽधिकोत्तमा भवति।

बर्मादेशस्य बौद्धभिक्षवोऽन्याभिस्तिसृभिर्दृष्टिभिरप्युल्लेखनीयाः सन्ति। तैश्चीनजापान-कोरियादेशीयभिक्षुभिरिव राजनीतिपक्षाश्रयणमुचित नामानि। १८८६ तमे खीष्टीयाब्दे आग्ल-देशीयविजयानन्तर सङ्घराजेन स्पष्टतया निषिद्ध यद् भिक्षुभी राजनीतौ हस्तक्षेपो न कर्त्तव्यः। द्वितीयं वैशिष्ट्यमिद विद्यते यत् तैराचारो विशेषेण रक्ष्यते। तृतीयो गुणः साहित्यसर्जनमस्ति। भिक्षवोऽध्यापनेन समाजसेवा च कृत्वा सन्तुष्टा नाभूवन्, अपि तु तैः पालिबर्मीयभाषयोर्विशाल वाड्मय रचितम्। भारताद् बहिर्देशान्तरेषु तथाऽधिक साहित्यं नालिख्यत।

बर्मादेशे लक्षं भिक्षवः सन्ति ते च महागन्दी-श्वेलगन्दीशाखयोर्विभक्ताः सन्ति। प्रथमा शाखा विनयनियमपालेन किञ्चित् शिथिला विद्यते, किन्तु द्वितीया शाखा भिक्षुनियमान् सम्यक्तया पालयति। महागन्दीशाखा इव ते क्षौमवसनच्छत्रोपानत्प्रभृतीनि वस्तूनि न परिदधति।

बर्मावासिना धार्मिकताया एक प्रबल प्रमाण बर्मादेशस्यासख्याकानि बौद्धमन्दिराणि सन्ति। प्रत्येक बर्मावासिनो जीवनस्य सर्वाधिका महत्त्वाकाङ्क्षा इयमेव भवति यदेकस्य बौद्धमन्दिरस्य निर्माण कुर्यात्। ये धनिनः सन्ति ते तु कार्यमिद सुगमतया कर्तुं शक्नुवन्ति, किन्तु निर्धना इतस्ततो द्रव्य सगृह्याभिलाषममु पूरयन्ति। अस्य फल तैः परलोके प्राप्स्यते इति न, जीवनेऽस्मिन्नपि ते राज्ये मन्दिरनिर्माणस्य महतीं प्रतिष्ठां प्राप्नुवन्ति। बर्मावासिनः प्राचीनाना मन्दिराणा-मुद्धार न्यून कुर्वन्ति। इदमेव कारणमस्ति यत् सकलोऽपि बर्मादेशो बौद्धमन्दिरैः सम्भृतो विद्यते। बर्मादेशस्य पर्वतकेषु भूभागेषु च सर्वत्र तेषा देदीप्यमान शिखर दृश्यते। सगौगसदृशेषु कतिपयेषु स्थानेषु तु बौद्धमन्दिराणा सघनमरण्यमस्ति। इद स्मर्तव्य यद् बहूनि बर्मादेशस्य बौद्धमन्दिराणि ( जेदि=चैत्स फया वा ) भारतीयमन्दिरेभ्यः सर्वथा भिन्नानि सन्ति। तेषामाभ्यन्तरे कस्मिंश्चिद-पवरके कक्षे वा मूर्तिर्न भवति, किन्तु मन्दिराण्यभितो गवाक्षेषु मूर्त्तयः स्थाप्यन्ते।

बर्मावासिनोऽतीव कलानुरागवन्त उत्सवप्रियाश्च भवन्ति। कदाचित् कदाचित्तु एवं विचिन्त्याश्चर्यमुत्पद्यते यत् तादृशोत्सवप्रियप्रकृतयो बर्मावासिनो दुःखवाद बौद्धधर्म कथ स्वीकृत-वन्तः, किन्त्वत्र कश्चन् सन्देहो नास्ति यत् स्वकलाचातुर्येण तैर्बौद्धमन्दिराणि नितरा भव्यानि कर्तुं प्रयतितम्। माण्डलेनगरस्य रङ्गूननगरस्य च बौद्धमन्दिराणां स्वर्णजटितशिखराणि सिन्दूरस्य काचस्य च संयोजनेन तथा भव्यानि कृतानि यद् बहुवारमय भ्रमो भवति कदाचिद् वनेऽग्नि-ज्वालाभ्रमोत्पादकास्ते पलाशवृक्षास्तु न सन्ति। सर-इलियट-महोदयेन सत्यमेव लिखितं यद्

भारतीयानि मन्दिराणि स्वकीयेन विशालेनाकारेण स्वरहस्येन च दर्शकान् प्रभावयन्ति, किन्तु बर्मीयमन्दिराणि अप्सरोवत् स्वल्पेन मनोरमेण च मन्त्रेणोत्पादितपत्रशाखायुक्तरक्तपीतफलराशिवत् प्रतीयन्ते। जापानचीनवासिभिर्मन्दिराणि सज्जितु कानिचन विशिष्टानि स्थानानि निर्वाचितानि, किन्तु बर्मावासिनः स्वभावानुसारेण प्रत्येकं द्वाराणि स्तम्भाश्च स्वर्णरङ्गप्रभूतालङ्कारेण भूषितवन्तः।

**हिन्दुप्रभावः**—वर्तमानबर्मादेशे बौद्धधर्मवद् हिन्दुधर्मस्यापि महान् प्रभावो विद्यते। वस्तुतो बर्मादेशस्य बौद्धधर्मं आदिवासिना प्रकृतिपूजया हिन्दुधर्मेण च प्रभावितोऽस्ति। बर्मादेशीयेषु प्राकृतिकदेवाना नातपदवाच्याना वा पूजा भवति स्म। तेषु ३७ नातपदवाच्या विशिष्टं महत्त्वमादधति। ते हिन्दुधर्मस्य त्रयस्त्रिंशद्देवैः सवदन्ति। तेषामध्यक्षो थग्या इति, अथवा शक्रो विद्यते। अन्यच्च तेषु ब्रह्मा (व्यम्मा) मारश्च (मनः) देवावपि भवतः। यावद् बर्मादेशे राजानः शासन कुर्वन्ति स्म तावत् राजसभाया ब्राह्मणाना ज्योतिर्विदाञ्चासाधारणः प्रभाव आसीत्। राज्याभिषेकस्य पद्धतिः स्यामदेशवद् बहुष्वंशेषु भारतीयाऽऽसीत्। राजसिंहासनारोहणात् प्राग् राजा यथाविधि शिरः प्रक्षालयति, पुनरष्टौ हिन्दवो ज्योतिर्विदः पवित्राम्भसा तस्याभिषेक कुर्वन्ति। दैवज्ञैर्निश्चिते मङ्गलमुहूर्त्ते राजा अश्वत्थसिंहासनमधितिष्ठति, तदा च माङ्गलिकघण्टा नाद्यन्ते। राजा देवांश इति स पूज्यते स्म। बर्मादेशे गोमासभक्षणे प्रतिबन्ध आसीत्। गोमासभक्षकस्य गोघातकस्य च कशाभिघातो दण्डो व्यवस्थापितः। दैवज्ञा राजसभाया जन्मकुण्डलीनिर्माण भविष्यज्ञानं शुभाशुभमुहूर्तनिर्णय तथाऽनेकप्रकारक यन्त्रतन्त्रादिक कुर्वन्ति स्म। साधारणेषु जनेषु यन्त्रतन्त्रभूतप्रेतपूजानामन्धविश्वासस्य प्रचलनमासीत्। बर्मादेशीय ग्ये इत्त इति भारतीयप्रेतानामेव रूपान्तररमस्ति। दिवसाना शुभाशुभविचारोऽपि भारतीयो विद्यते, तथा बर्मावासिना दैनिकजीवने गभीर प्रभाव स्थापयति। यद्यपि हिन्दबर्माजातीयेषु हिन्दुसमाजस्य प्रमुखवैशिष्ट्यजात्यादिकस्य किमपि चिह्न नास्ति, किन्तु बर्मादेशे कतिपयेष्वंशेषु अस्पृश्यताविचारः प्रचलति। मन्दिराणा दासाः (पराग्यून) कुष्ठाः, विकलाङ्गाः, शववस्त्रनिर्मातारः, अन्त्येष्टिसंस्कारकारकाः, शवसमाधिखनकाः, राजभूमिकर्षकाः, अपराध सम्बद्धा राजपुरुषाः, कारागाराध्यक्षाः, शूलारोपकाः पूर्वमस्पृश्या गण्यन्ते स्म। तैः सह कोऽपि जनः सम्पर्कं स्थापयितु नेच्छति स्म। मृतास्ते नगरस्यावस्करैः सह प्रक्षिप्यन्ते स्म। शानराज्ये केङ्गतुङ्गनामके स्थाने नान्नतुङ्ग सरोवरदेवाय प्रतितृतीय वर्ष चतस्रः कुमार्यो बलिरूपेण प्रदीयन्ते। इद देवदासप्रथाया एव रूप मन्यते। भारते समार्ति गनाया नागपूजाया बर्मीयजीवनेऽधिक महत्त्वमस्ति। तत्र नागो नगाशब्देन व्यवह्रियते। यद्यपि अनिरुद्धेन ततो नागपूजासमापनस्य प्रयत्नः कृतः, पर तस्य मृत्योरनन्तरं पगानराज्ये निर्मिते श्वेजिगोनबौद्धमन्दिरे नागमूर्त्तय उपलभ्यन्ते। रिचर्डटैम्पल इत्याख्यस्य विदुषो मतानुसारेण बर्मादेशस्य नागपूजासम्बद्धासु किंवदन्तीसु यथा माण्डलेनगरस्य राजप्रासादे निर्मितासु नागमूर्तिषु भारतस्य नागपूजायाः प्रभावो विद्यते।

**बर्मादेशे बौद्धधर्मस्य ऋणम्**—बर्मादेशीयाना जीवनस्य सर्वेषु क्षेत्रेषु भारतीयसंस्कृतेः प्रभावो दृष्टिगोचरीभवति। बौद्धधर्मेण बर्मायै सभ्यत्व प्रादायि। तत्र पूर्वमनेका दुष्टपूजापद्धतयोऽन्धविश्वासाश्च प्रचलिता आसन्, थेरवादेन तत्स्थान गृहीतम्। अनिरुद्धस्य बौद्धधर्माङ्गीकारात् पूर्वं म्रम्मराष्ट्रमसभ्यावस्थायामासीत्, पर निम्नबर्मादेशस्य विजयेन थेरवादस्य सम्पर्केण

च पगानराज्ये धर्मस्य कलायाश्चासाधारण उत्कर्षोऽभूत् । तत एव कालाद् बर्मादेशः सभ्यराष्ट्रकोटौ समायातः । थेरवादेनोत्तरत आक्रमणकारिणो बर्मीयशानसदृशा आरण्यका क्रूराश्च सभ्यत्व प्रापिताः । तेऽस्य प्रभावेण दारुणकृत्यानि विहायोत्कटधार्मिकभावनासमन्विताः सुन्दराणि मन्दिराणि निर्मातु प्रारब्धवन्तः । अद्यत्वे बर्मीयाना जीवने समाजे पद्धतौ च यान्यपि सुन्दरवस्तूनि सन्ति तानि बौद्धधर्मेण सम्पर्कस्य परिणामोऽस्ति । अनेन धर्मेणोन्नतादर्शार्थं जीवितु ते शिक्षिताः, तथा जीवन प्रति नवीनो दृष्टिकोणः प्रदत्तः ।

बौद्धधर्मस्य द्वितीय महादान बर्मादेशस्य विविधाना जातीनामेकसूत्रेण ग्रन्थनम्, एकस्मिन् राष्ट्रे च सघटनमासीत् । अत्र परस्परं सघर्षं कुर्वता प्यू-मोन ( तलैङ्ग)—बर्मीय-शान-थाई-करेनप्रभृतीनां विविधजातीयाना बौद्धधर्मेण एकस्या वैजयन्त्यास्तले समवायः कृतः । जातिदृष्ट्या विविधवर्गेषु ऐक्यस्य किमपि तत्त्व नासीत्, बौद्धधर्मेण तत्तत्त्व प्रदत्तम् । अतो बुद्धस्तेषा सर्वेषा सामान्यो गुरुरभूत्, धर्मश्च तेषा सामान्यो ध्येयोऽजायत ।

बौद्धधर्मस्य महान्ति दानान्तराणि-बर्मादेशे साक्षरताप्रसारः, नवीनसाहित्यरचना, ललितकलानां विकासाश्चासन् । पूर्वमिद न्यवेद्यत यद् बर्मादेशे प्रत्येकं महता ग्रामेण साकमेको मठो विद्यालयश्चावश्य भवतः । सर्वेषा बालकाना कृते नियतकाल यावत् तत्र गत्वा शिक्षाग्रहण प्रायोऽनिवार्यं मन्यते । अनया पद्धत्या तत्र न केवलं साक्षरता वृद्धिं गता, परं जीवनं प्रति समाजञ्च प्रति एको विशिष्टो दृष्टिकोण उदपद्यत । बौद्धधर्मो बर्मादेशे नवीनं साहित्य स्रष्टु कियान् सफलीभूतः, अस्य कश्चन परिचयः पूर्वं प्रत्यपाद्यत ततोऽधिकं शान बोड इत्याख्येन विदुषा लिखिताद् बर्मादेशस्य पालिसाहित्येतिहासाद् लब्धु शक्यते । अनेन सहेदमपि स्मर्तव्य यत् पालिसस्कृताभ्या बर्माभाषायाः साहित्यस्य चातीव सवर्द्धन कृतम् । मूलतो बर्माभाषायामतिन्यूनाः शब्दा आसन्, बौद्धधर्मेण न केवल तस्याः शब्दकोषो वर्द्धितः, पर सूक्ष्मदार्शनिकतत्त्वाभिव्यक्तये तस्यै नूतनो वाक्प्रचारो दत्तः । तलैङ्गाभिलेखादिद स्पष्टं भवति यत्तैर्धर्मविषयका अनेके शब्दाः संस्कृताद् गृहीताः । ललितकलाना विषये पूर्वं प्रत्यपाद्यत यद् बर्मीयचित्रवास्तुमूर्तिकलाना प्रधानप्रेरणास्रोतो भारतमासीत् ।

**उपसंहारः**—बर्मादेशो जातिभाषादृष्टिभ्या चीनदेशेन साक प्रगाढं सम्बन्धमादधाति, किन्तु तस्य सास्कृतिकविजयस्तु भारतेन कृतः । हिन्दचीनप्रदेशस्य सर्वेषा देशानामियमेव दशा विद्यते, पर बर्मादेशस्येद वैशिष्ट्य वर्तते यदत्र थेरवादो विशुद्धरूपेण प्राप्यते । चम्पाया कम्बुजे जावायां सुमात्रायाञ्च थेरवादेन महायानस्य हिन्दुधर्मस्य च तुलाया महती सफलता न प्राप्ता । स्यामदेशे थेरवादस्य स्वरूपं तु अतिनिर्मल नासीत् । बर्मादेशे यद्यप्यनेन नातपूजाहिन्दुधर्ममहायानधर्मेभ्यः प्रतिस्पर्धा कृता, किन्त्वनेन ते आत्मसात्कृताः । कम्बुजस्य चम्पायाश्च भारतीयविजयोऽद्यत्वे प्रधानरूपेण स्वभव्यभवनरूपेणावशिष्यत, किन्तु बर्मादेशेऽयमद्यापि जीवति । प्रतिदिन भिक्षार्थं बौद्धमन्दिरेभ्यो निर्गच्छन्तो भिक्षवस्तथागतस्य वाणी बर्मादेशस्य गेह गेह नयन्ति, बर्मादेशीयाश्चोपासका प्रकृतिमनोरम स्वदेशं नवनवैर्बौद्धमन्दिरैरतोऽप्यधिकं मनोरम कृत्वा सघं प्रति स्वकीयामविचला श्रद्धा परिचाययन्ति ।



# चतुर्दशोऽध्यायः

## स्यामदेशः

सामान्यपरिचयः—दक्षिणपूर्व-एशियादेशे स्याम एवैकस्तादृशो देशो विद्यते योऽतीत-शतकद्वये साम्राज्यलोलुपाना पाश्चात्त्यशक्तीना दासतापाशे निगडितो नाभूत्। भारत-बर्मा-श्रीलङ्का-जावा-सुमात्रा-मलाया-कम्बोडिया-अनामप्रभृतिदेशेषु पराधीनता प्राप्तेषु तथा पूर्वस्या पश्चिमायाञ्च दिशि फ्रास आंग्लदेशयोः शक्तिशालिसाम्राज्याभ्या समावृत्तोऽपि स स्वां स्वतन्त्रता-मक्षुण्णां रक्षितवान्। अतो व्युत्पत्तिदृष्ट्या निभ्रान्तत्वेऽपि स्यामदेशवासिनो यदि स्वा मातृभूमिं स्वतन्त्रव्यक्तीना राज्य (मुआगथाई) कथयेयुस्तदा किमप्याश्चर्यं न भवेत्। स्यामदेशस्यैक वैशिष्ट्यमिदमपि वर्तते यत् स एशियामहाद्वीपस्य तरुणतमं राज्य वर्तते यस्य स्थापना त्रयोदश-शतकखीष्टीयाब्देऽभूत्, तथा १९३२ तमपर्यन्त तज्जगतोऽन्तिमं निरङ्कुशं राजतन्त्रमासीत्, पर तस्य सास्कृतिकवैशिष्ट्यमधिकमहत्त्वपूर्णमस्ति। श्रीलङ्काबर्मावत् तद् हीनयानस्य प्रबल केन्द्र विद्यते। अत्र १,४४,७४४ भिक्षवस्तथा १८,४१६ मठाः सन्ति, किन्तु तत्र बौद्धेषु सत्स्वपि हिन्दुप्रभावः पर्याप्तो विद्यते। राजसभाया ब्राह्मणाना प्रतिष्ठा भवति। अनेकेषा हिन्दुसस्काराणा तथा तत्पर्वणामनुष्ठानमद्य यावद् भवति। स्यामदेशेन स्ववर्णमालाकलासाहित्यानि भारताद् गृहीतानि। श्रीलङ्काबर्मादेशौ १९४८ तमपर्यन्त खीष्टीयधर्मावलम्बिनामाङ्गलदेशीयाना-माधीने आस्ताम्, पर स्यामदेशो वर्तमाने युगे एकस्तादृशो देश आसीद् यत्र बौद्धमत राजधर्म आसीत्। भारते या स्थितिः २२०० वर्षेभ्यः पूर्व सम्राजोऽशोकस्याथवा १८०० वर्षेभ्यः पूर्व सम्राजः कनिष्कस्य समये आसीत्, सा स्यामदेशेऽद्यापि वर्तते। लङ्कादेशे बौद्धाना संख्याः ६११०, बर्मादेशे ९०१०, स्यामदेशे च ९५१० सन्ति।

त्रयोदशशतके स्यामदेशे थाईपदवाच्याना जनानामागमनात् पूर्वमस्य देशस्य क्रमबद्ध इतिहासो नोपलभ्यते। हिन्दचीनदेशे प्रबला विभिन्नाः शक्तयः स्यामदेशस्य विविधान् प्रदेशानात्म-सादकुर्वन्। तृतीयशतकखीष्टीयाब्दात् षष्ठशतक यावत् तथा दशमशतकात् त्रयोदशशतक यावत् स्यामदेशस्यात्यधिको भागः कम्बुजदेशाधीनोऽभूत्। तदा च कम्बोडियादेशे हिन्दुधर्मस्य प्रभावोऽभूत्। शैलेन्द्रवशस्योत्कर्षकाले (अष्टमशतकाद् द्वादशशतकपर्यन्तम्) स्यामदेशस्य पर्याप्तः प्रदेशः शैलेन्द्रसाम्राज्यस्याङ्गमभवत्। अत्र पूर्व प्राक्थाईस्यामदेशस्य भारतीयोपनिवेशस्य प्रतिपादन विधास्यते, अनन्तरञ्च थाईकालिके स्यामदेशे भारतीयप्रभावस्य वर्णन करिष्यते।

### प्राक्थाईस्यामदेशः

प्राक्थाईस्यामदेशस्येतिहासस्य प्रधान स्रोतः पुरातत्त्वीयानुसन्धानेनोपलब्धाना मूर्तीना-मभिलेखाना मन्दिराणा स्तूपानामवशेषास्तथाऽन्ये प्राचीनाः स्मारका विद्यन्ते। एते अवशेषा प्रधानतया निम्नस्थानेभ्य उपालभ्यन्त—

**पोङ्गतुकेत्याख्यस्थानम्**—श्यामदेशे भारतीयसभ्यतायाः प्राचीनतमोऽवशेषः १९२७ तमे अगस्तमासे पोङ्गतुकग्रामादुपालभ्यत। स्थानमिद बङ्काकनगराद् दक्षिणाभिमुख यायिनो वाष्पशकटी (रेलगाड़ी) मार्गस्य बनपोङ्गविरतिस्थानात् (स्टेशन) कनबुरियायिनि राजमार्गे पञ्चक्रोशदूरेऽवस्थित विद्यते। अस्मात् स्थानाद् अशीतिफीटदीर्घस्य सप्तचत्वारिंशत्फीटविशालस्य मन्दिरस्याधार', यूनानरोमनकलाकलित एकः प्रदीपः, अमरावतीशैलीनिर्मिता एका लध्वी कांस्यबुद्धमूर्त्तिः षष्ठशतकपर्यन्तगुप्तशैलीनिर्मिताः काश्चन कांस्यमूर्त्तयः प्राप्यन्त। यूनानरोमप्रदीपोऽमरावतीशैलीबुद्धश्च द्वितीयशतकखीष्टीयाब्दस्य रचने स्त इति विदुषा मतम्। अमरावतीशैलीकाः काश्चनान्याः कांस्यमूर्त्तयः पूर्वोत्तरश्यामदेशे कोरतेत्याख्यस्थानात् तथा चम्पादेशे दोंगहुओंगेत्याख्यस्थानादपि उपालभ्यन्त, ता मूर्त्तयो भारतान्नीताः प्रतीयन्ते। यतस्तस्मात् स्थानात् काश्चनापि ख्मेरमूर्त्तयः स्याईमूर्त्तयश्चान्ये पदार्था वा नोपालभ्यन्त। अतोऽस्याय परिणामः प्रतीयते यत् पोङ्गतुकनामक स्थान खीष्टाब्दारम्भतः षष्ठशतकपर्यन्त बौद्धधर्मस्यैक केन्द्रमासीत्। अमरावतीशैलीकमूर्त्तिप्राप्त्या इद स्पष्ट विद्यते यत् तदावासितारो दक्षिणभारतीया आसन्। मेनाम्ना विदुषा तत् श्यामदेशेतिहासस्यामरावतीयुगमपि कथितम्। पोङ्गतुकस्थानादद्ययावत् कश्चन प्राचीनोऽभिलेखो नोपालभ्यत।

पोङ्गतुकाख्ये स्थाने समुपलब्धो मन्दिरस्याधारोऽनुराधपुरस्याधारेण सवदति। होकर्टनाम्नो विदुषः कथनानुसारेणानुराधपुरेऽप्यमरावत्याः प्रभाव आसीत्। अत इद स्पष्टमस्ति यत् पोङ्गतुकस्यानुराधपुरस्य च प्रेरणास्रोत एकमेवासीत्। १९३५ तमे स्थानस्यास्योत्खननेन केचनाऽन्येऽवशेषा अपि समुपालभ्यन्त। तैर्मेनाम्ना विदुषाऽय निष्कर्षः प्रत्यपाद्यत यत् श्यामदेशे भारतादागन्तार आवासका बहुकालात् पूर्व सम्भवतः खीष्टाब्दारम्भादपि पूर्वमागताः।

गुप्तशैलीकलायाः श्यामदेशे प्रवेशः पञ्चमशतकखीष्टीयाब्देऽजायत। तयाऽनुप्राणिता मोनकला दशमशतकपर्यन्तं ख्मेरागमनं यावदत्रात्यन्तं विकसितवती। तस्यावशेषाः प्रपथोमलावोप्रभृत्यनेकस्थानेभ्यः प्राप्यन्त। मोनजातीया बौद्धा आसन्, पर श्यामदेशस्य प्राचीनस्थानेभ्यो हिन्दुधर्मस्याप्यनेकेऽवशेषाः समुपालभ्यन्त, ते च तत्र हिन्दुप्रभाव सूचयन्ति। महत्त्वपूर्णावशेषयुक्तानि प्राचीनश्यामदेशीयस्थानानि निम्नानि सन्ति। चीनदेशीयग्रन्थेषु श्यामदेशेऽनेका भारतीयवसतयो निर्दिष्टाः सन्ति, किन्तु तासा भारतीयनामविषये भौगोलिकस्थितिविषये च विदुषा महान् मतभेदो विद्यते। अतोऽत्र तासा वसतीनामेव वर्णन भविष्यति, यतः प्राचीना हिन्दवशेषा आधिक्येनोपालभ्यन्त।

वर्तमान**चन्तवनेत्याख्यस्थानात्** (चन्दनपुरी) सार्द्धक्रोशपूर्व तन्नामकनद्यास्तटे प्राचीनहिन्दुवसतीना चिह्नानि प्राप्यन्त, प्रदेशोऽयमतीवोर्वरोऽस्ति। अत्र पद्मरागस्य नीलमणेश्च खनिर्विद्यते। अत्रत्याया मृत्तिकाया वर्णो रक्तो वर्तते, सम्भवतश्चीनदेशस्येद तचै-तो-प्रदेशः (रक्तमृत्तिकाप्रदेशः) विद्यते। अत्र संस्कृतस्य ख्मेरस्यानेके लेखा उपालभ्यन्त। सस्कृते देवताना धर्मसस्थापकानाञ्च स्तुतयः सन्ति, ख्मेरभाषायाञ्च साधारणजनाना कृते प्रसारिता आदेशाः सन्ति। दशमशतकखीष्टीयाब्दस्यैकस्मिन् संस्कृतलेखे रागुरुणा राज्यस्य नगराधिकारिणाञ्चोद्देशे नैकस्या राजाज्ञाया वर्णनं विद्यते।

चान्तवनेत्याख्यस्थानात् त्रिकिलोमीटरमिते पूर्वस्मिन्नेको ग्रामो बौफ्रानरै इति, अर्थाद् विष्णुग्राम उच्यते। अस्मात् स्थानादेकस्य प्राचीनमन्दिरस्य द्वारस्योर्ध्वभागस्य शिलाखण्ड उपापभ्यत, तत्रेद प्रदर्शित विद्यते यद् गरुडो विष्णु स्वस्कन्धेनोद्वहति, गरुडञ्चोभयतो विकृतमुखा मकरा निर्मिताः सन्ति। एतत्सर्व निश्चितरूपेणात्र काञ्चन हिन्दुवसतिं द्योतयति। वसतिरियं सम्भवतो नवमशतकखीष्टीयाब्दे कम्बुजराज्यस्याङ्गमभूत्।

लोबपुरी—मीनमनदीतटे मोनहिन्दुसंस्कृतेरेकं प्राचीन केन्द्रमासीत्। सूर्यवर्मणो राज्यारोहण (१००२ खी०) समयादिद ख्मेराणा मध्यस्यामदेशस्य राज्यपालस्य प्रधान स्थानमजायत। इतोऽनेकमूर्तयोऽभिलेखाः प्राचीनभवनानि चोपलब्धानि। वतमहाधातुनाममन्दिरात् पार्श्वतश्चानेका लम्बरूपा बुद्धमूर्त्तय उपाल्भ्यन्त। एता नीलवर्णसुधाप्रस्तरैर्निर्मित्वात् सम्भवतः ख्मेराणामत्रागमनात् पूर्ववर्तिन्य आसन्। तास्वेकस्या दक्षिणभारतस्य षष्ठसप्तमशतकखीष्टीयाब्दयोर्लिपौ सस्कृतेऽभय लेखो विद्यते।

तद्गुर्जनाधिपतिना शम्बूकेश्वरसूनुना।
नायकेनार्जवेनेयं स्थापिता प्रतिमा मुनेः॥

अर्थात् तद्गुरजनाना स्वामिना शम्बूकराजपुत्रेण नायकेनार्जवेनेय मुनेः प्रतिमा स्थापिता। यद्यप्यस्याभिलेखस्य तद्गुरजनाना सत्यमभिज्ञानमद्यावधि भवितुं नाशक्नोत्, किन्त्वस्य विशुद्ध सस्कृत नायकोपाधिश्चात्रत्य भारतीयप्रभावस्य प्राबल्य सूचयति।

**दक्षिणस्यामदेशस्य प्राचीना भारतीयावशेषाः**—दक्षिणस्यामदेशस्य सकुचिते दीर्घे खण्डेऽनेकस्थानेभ्यो बहवो महत्त्वपूर्णा अवशेषा उपाल्भ्यन्त, तथा वेल्जनाम्ना विदुषा एतदाश्रित्येदं कल्पित यद् बन्दोनाखातपार्श्वस्थप्रदेशेषु पूर्व भारतीयः प्रभावो गतः, स चास्मात् स्थानात् स्यामहिन्दचीनप्रभृतिदेशेषु व्याप्तः।

प्रदेशेऽस्मिन्नवस्थित पश्चिमतटे तकुआ-पा इत्याख्यस्थान टालमीमहोदयस्य मिलिन्दप्रश्नस्तथा टालमीलमहोदयवर्णिततक्कोलेति बुध्यते। अत्रानेकाः प्राचीना मूर्त्तयः १९०२ खीष्टीयाब्दस्यैकस्तामिलाभिलेखः प्राप्यन्त। अस्य पृष्ठवर्तिनि भागे वर्तमाना रङ्गस्य सुवर्णस्य च खनी सामग्र्यन्तराणि चेद सूचयन्ति यत् खीष्टीयाब्दस्य प्रारम्भिकशतकेषु स्वर्णभूम्या सह व्यापारमार्गे इदमेक प्रसिद्ध पोतनिरोधस्थानमासीत्। अत्र फ्रानो ए इत्याख्यपर्वतकादेका समीचीना मूर्त्तिः प्राप्यत, फ्रांसदेशीयविदुषो लेगोकीरमहोदयस्यानुसारेणेय शिवस्य प्रतिमा वर्तते।

तकुआ-पा इत्याख्यनद्या उपर्यभ्यन्तरे भागे एकस्मिन् स्तम्भे शिवस्य पार्वत्या नर्त्तक्याश्चाथवा विष्णोर्द्वयोस्तत्पत्न्योश्चोत्कीर्णास्तिस्रो मूर्त्तयो मन्यन्ते। वस्त्रैराभूषणैश्च ता द्रविणमूर्त्तयः प्रतीयन्ते। एतासां मूर्त्तीना पार्श्वे एवोपलब्धो नवमशतकस्यैकस्तामिलाभिलेखो नाङ्गूरस्य स्वामिना अवनीनारणनामक सरो निर्मितं तथा मणिग्रामसदस्याना सेनामुखनिवासिनाञ्च च संरक्षणे स्थापितम्। अद्यापि ज्ञातमिदं न विद्यते यद् नाङ्गूरस्य स्वामी दक्षिण-भारतात् समागतः कश्चन सेनापतिरासीत्, अथवा महान् व्यापारी, तस्यात्रागमनस्य किमुद्देश्यमासीत्, तकुआ-पा इत्याख्ये स्थाने किमर्थ सेनामुखं स्थापितम्। किमत्रत्या सेना लेखान्तरेषु वर्णितस्य मणिग्राम-

( वणिग्ग्राम )नामकव्यापारिसंघटनस्याधीनाऽऽसीत् । अनेनाभिलेखेनेदमवश्यं निश्चीयते यद् दक्षिणभारतस्यास्य प्रदेशस्य च मध्ये नवमशतकखीष्टीयाब्दे गाढः सम्बन्ध आसीत् ।

तकुआपा-क्षेत्रे पश्चिमतः पूर्वाभिमुख गमनाय अत्यधिकः सुगमो मार्गो विद्यते । अत्र पूर्वस्मिन् पश्चिमे च प्रवहन्त्यौ नद्यौ एकेन जलविभाजकेन विभज्येते, अनयोर्द्वयोश्च स्रोतसोः सार्द्धक्रोशद्वयव्यवधान विद्यते । तकुआ-पानद्या उपरि गच्छन् जनोऽतीव सुगमतया गिरिराष्ट्रे लूओंगनदीसिक्तोर्वरभूभागे बन्दोनाखाते च गच्छति । पूर्वतटे भारतीयावशेषान्वितमहत्त्वपूर्ण स्थान चैय्या इति नखोनश्रीधम्मराड् इति च वर्तते ।

चैय्येति जैय्येति वा स्थान बन्दोनाखातस्य दक्षिणे तटे विद्यते, तथानेकशतकानि यावत् श्रीविजयसाम्राज्यस्याङ्गमभूत् । अत्र वतप्राथतमन्दिरस्य रचना बोरोबुडुरस्य चित्रैरुत्कीर्ण-भवनाना रचनयाऽतीव सवदति, तथात्र भारतीयशिल्पशास्त्रस्य नियमा अनुसृताः । इत उपलब्धा लोकेश्वरस्य प्रतिमा नवमशतकस्य श्रीविजयकलाया अथवा भारतजावीयकलाया एकमुत्कृष्ट-मुदाहरण विद्यते । अत्र वतकेडस्य रचना जावादेशस्य चण्डीकलशेन सवदति । मन्दिरस्यास्य पूर्वतो द्वारवतीशैलीकाः काश्चन मूर्त्तयस्तथा धृतशङ्खचक्रगदा विष्णुमूर्तिरुपालभ्यन्त । एकस्मिन्नन्यस्मिन् वत-हुआवींग इत्याख्ये मन्दिरे एकस्य विहारस्य ध्वंसावशेषः, चद्रभानोरेकोऽभिलेखः १२८३ खीष्टीयाब्दतिथ्यङ्कितकास्यबुद्धमूर्त्तिश्चोपालभ्यत । वतसालातुङ्गस्य खण्डितदेवालयात् काश्चन हिन्दुमूर्त्तयो लोकेश्वरस्य पाषाणप्रतिमाश्चोपलब्धाः सन्ति । जैय्या इति स्थान बौद्धानामेकं प्रसिद्धं तीर्थमासीत् । अस्य मुख्य प्रमाणमस्मात् स्थानाल्लब्धानि भक्तैः कस्यापि संकल्पस्य पूर्तये समर्पितानि पक्वानि मृत्तिकाफलकानि सन्ति, एतानि वृत्ताकाराणि सन्ति, तेषु बुद्धाना बोधिसत्त्वाना वा मूर्त्तयो बौद्धमन्त्राश्चोत्कीर्णा विद्यन्ते । वसतिरिय सम्भवतः पूर्वं हिन्दूनामासीत् पश्चाच्च बौद्धानामजायत ।

जैय्या-लिगोरमध्ये अनेकासा प्राचीनवसतीनामवशेषा उपालभ्यन्त । तेषु खाओ-श्रीविजय-स्थानात् समुपलब्धा दण्डगोलाकारा शिरोभूषणभूषिता विष्णुमूर्तिर्विशेषत उल्लेखनीया वर्तते ।

लिगोरेति नगर-श्रीधर्मराजो वा ( नखोनाख्यिधम्मराट् ) प्रदेशस्यास्य सर्वेभ्यो महत्त्वपूर्ण स्थानमस्ति । इय श्रीविजयस्य वशे स्थितस्य राज्यस्य ताम्रलिङ्गस्य राजधान्यासीत् । मलायाद्वीप-कल्पस्य सम्पूर्णमध्यभागेऽस्य शासनमासीत् । अत्रैका बौद्धवसतिरासीत्, तया अत्रत्यो महान् स्तूपस्तथा प्रायः पञ्चाशन्मन्दिराणि निर्मितानि । लिगोरप्रदेशेऽद्यापि भारतीयब्राह्मणाना वसतिर्विद्यते, ते च कथयन्ति यद् वयं स्थलमार्गेणात्र समागच्छाम । लियाङ्ग-शू चतुर्थशतकस्यान्ते पनपनप्रदेशाद् गतेन द्वितीयकौण्डिन्येन फूनानराज्यस्य भारतीयकरण सपूर्णतया कृतम् । इद पनपनस्थान लिगोरप्रदेशस्य बन्दोनाखातस्य च पार्श्वस्थ. प्रदेश. प्रतीयते । पश्चिमतटे त्राग इत्यत्र पूर्वस्मिन् तटे लिगोर इत्यत्र च पाटलुङ्गयायिनोर्द्वयोर्मार्गयोः पर्वतगुहासु भक्तैः समर्पितानि मृत्फलकानि प्राचुर्येणोपालभ्यन्त । तेषु वर्तमाना बोधिसत्त्वाना मूर्त्तयो दशमशतकखीष्टीयाब्दस्य नागरीलेखश्च प्रतिपादयन्तीद यत् शैलेन्द्राणा समये ते मार्गा अत्यधिकमुपयुज्यन्ते स्म । लिगोरप्रदेशस्य च वसतिरतीव महत्त्वपूर्णाऽऽसीत् ।

लिगोरस्य वसतिर्यद्यपि प्रधानरूपेण बौद्धानामासीत्, परमत्र हिन्दुधर्मस्यानेकेऽवशेषा उपालभ्यन्त। नगरस्यास्य मन्दिरत्रये शिवलिङ्ग शिवस्य पार्वत्या गणेशस्य विष्णोश्च मूर्त्तय उपालभ्यन्त। गणेशस्य कास्यमूर्त्तेर्नीचैस्तामिललिपौ मझपि ( मजपहित ) देशो लिखितो विद्यते। अत्र महाधातु ( वतफ्राथत ) मन्दिरात् प्राप्तेष्वभिलेखेष्वेकः पञ्चमषष्ठशतकखीष्टीयाब्दयोर्दक्षिणभारतीयलिपौ संस्कृतलेखो वर्तते।

जैय्याप्रदेशस्य दक्षिणस्मिन् वींगस्रावसतितः प्राप्तेष्ववशेषेषु दण्डगोलाकारशिरोभूषणभूषिता पल्लवशैलीका विष्णुमूर्तिविशेषरूपेणोल्लेखनीया विद्यते।

स्यामदेशस्य थाईजनानामागनात् पूर्वं राजनीतिक इतिहासोऽतितरां जटिलो विद्यते। तदानीं द्वारवतीहरिपुञ्जयाख्ये द्वे राज्ये बभूवतुः। अत्र तयो राजनीतिकेतिहासमनुल्लिख्यात्रास्मिन् काले भारतीयसंस्कृतेः प्रभाव एवोल्लिखिष्यते।

**सांस्कृतिकं सिंहावलोकनम्**—खीष्टीयाब्दत्रयोदशशतकपर्यन्तं प्राक्थाईस्यामदेशो भारतीयसंस्कृतिरागेण रक्त आसीत्। तत्रार्यावर्तवाङ्मयधर्मयोर्महान् प्रभाव आसीत्। अनेकेषां प्राचीनानामभिलेखानां भाषा संस्कृतं पालिश्च विद्यते। लिपिश्च भारतीयशैलीकाऽस्ति।

अभिलेखापेक्षयाप्यधिकं महत्त्वपूर्णं साक्ष्यं मूर्त्तीनां विद्यते। रेजिनल्डमे इत्याख्येन विदुषा स्यामकलां विवृण्वता सा निम्नासु नवसु कलाशैलीषु विभक्ता—( १ ) शुद्धा भारतीया ( पञ्चमशतकं यावत् ), ( २ ) मोनभारतीयद्वारवतीगुप्तशैल्यानुप्राणिता मौनशैली ( पञ्चमशतकाद् दशमशतकं यावत् ), ( ३ ) भारतजावीया ( सप्तमतो द्वादशशतकं यावत् ), ( ४ ) मोनख्मेरीया अथवा ख्मेरयुगस्य स्यामशैली ( एकादशशतकतस्त्रयोदशशतकं यावत् ), (५) थाई-शैली-चीङ्गसेनेति ( एकादशशतकतश्चतुर्दशशतकं यावत् ), ( ६ ) सुखोथाई ( १३ शतकतः १४ शतकं यावत् ), ( ७ ) ख्मेरथाई-उथोंगशैली ( १३ तः १४ शतकं यावत् ), ( ८ ) थाई-लोपबुरी ( १५ तः १७ शतकं यावत् ), ( ९ ) अयोध्यायाः थाईशैली ( १४ तः १७ शतकं यावत् )। प्रथमासु चतसृषु कलाशैलीषु भारतीयप्रभावस्य पूर्वमुल्लेखोऽक्रियत, आगामिनीनां पञ्चानां शैलीनामग्रे यथास्थानं वर्णनं भविष्यति। अत्रास्मिन् विषये एतावत् कथनमेव पर्याप्तं विद्यते यत् प्रथमायां कलाशैल्यां गुप्तामरावतीशैल्योरनेकान्युदाहरणानि स्यामदेशे समुपलभ्यन्ते, तथाश्रितगुप्तशैलीकया द्वितीयया द्वारवतीशैल्या स्वपरवर्तिनीषु शैलीषु महान् प्रभावः पातितः। अस्याः कतिपयमूर्त्तयः सारनाथस्याजन्तागुहायाश्च बुद्धमूर्तिभिः सादृश्यमादधति। अनया शैल्या पश्चात् ख्मेराणां कला प्रभाव्य ख्मेरयुगस्य स्यामदेशीयकला समुत्पादिता। चीङ्गसीनशैल्यां बर्मामार्गेण पालकलायाः प्रभावोऽभूत्। सुखोदयस्य चीङ्गसेनाधारेण विकासोऽभूत्, तत्र सिंहलदेशस्यापि प्रभावोऽभूत्। एतासु कलासु स्थानीयः प्रभावोऽनिवार्य आसीत्। अत एवानेकाः पौराणिकमूर्त्तयो गुप्तकलया प्रभाविता अपि तस्य युगस्य भारतीयैरुदाहरणैः कामं न संवदन्ति। गुप्तकलयाऽऽरम्भिकख्मेरकलाया उपरि स्वप्रभावः स्थापितः। श्रीदेवस्य कतिपयमूर्त्तयो गुप्तमूलख्मेरकलयोः सेतुबन्धो विद्यते। दशमे एकादशे द्वादशे च शतकेषु कम्बुजदेशस्य हिन्दुप्रभावेण व्याप्तया कलया स्यामदेशे स्वप्रभावः स्थापितः। दक्षिणस्यामदेशस्य मलायाराज्यस्य सङ्कुचितखण्डोऽष्टमशतकाद् द्वादशशतकं यावत् श्रीविजयस्य शैलेन्द्राणाञ्च वशे आसीत्।

एतत्पूर्वं स्यामदेशः षष्ठशतकखीष्टीयाब्दं यावत् कम्बुजदेशस्याङ्गमासीत्। तेषां वंशानां काले पश्चिमतटे तकुआ-पाप्रदेशे पूर्वीयतटे च चम्पायां लिगोरे च पूर्वीयभारतादावासकानामेको नवीनः प्रवाह आगन्तुमारेभे। अनेन आत्मना सह महायानधर्मोऽप्यानीतः। तेभ्यः स्थानेभ्यः पाल्शैलीका महायानबौद्धमूर्त्तयः पल्लवपद्धत्या निर्मिता अनेकाः पौराणिकप्रतिमाः समुपालभ्यन्त।

प्राचीनवास्तूदाहरणान्यतीवोपालभ्यन्त, परं तानि सर्वाणि तस्मिन् क्षेत्रे भारतीय प्रभावं सूचयन्ति। १९०५ तमे खीष्टीयाब्दे श्रीदेवप्रदेशस्योत्खननेन प्राप्तस्यैकस्य मन्दिरस्य योजना मितरग्रामे (कानपुरजि) गुप्तकालिकेष्टकानिर्मितमन्दिरेण समाना विद्यते। श्रीदेवनगरस्य रचनापि प्राचीनभारतीयनगरसदृश्यासीत्। पोङ्गतुकस्योत्खननेनोपलब्धाः स्तूपा विहाराश्च भारतीय-पद्धत्या निर्मिताः सन्ति। हरिपुञ्जयस्य मोनभाषिण आवासका बौद्धा आसन्। तैरनेकस्तूप-बौद्धमन्दिराणि निर्मापितानि। सवनखलोकस्य त्रयोदशशतकस्यैकः प्रस्तरगवाक्षः साचीस्तूपेनात्यन्तं साम्यगादधाति। इदमेतत् सूचयति यत् स्यामदेशवासिनः प्राचीनभारतीयवास्तुकलायाः परम्परा दीर्घकालं यावत् सुरक्षितवन्तः। अस्या एकमुदाहरणं स्यामदेशस्य प्राङ्गनामकवर्गाकारमन्दिरेषु समुपलभ्यते। तेषां पटलं किञ्चिन्न्यूनोन्नतखण्डेषु तथा निर्मितं भवति यत् तद् वक्ररेखात्मक-शिखररूपं धारयति। इदं भारतस्योदीच्यशैल्या दक्षिणशैल्याश्च शिखराणां मनोहरं सामञ्जस्यं विद्यते।

## थाईजनानां राजनीतिक इतिहास

**थाईजनानां प्राचीने हिन्दुराज्ये—गन्धारो विदेहश्च—**त्रयोदशशतकात् स्यामदेशे थाईजनानां प्रबलः प्रवाहः समागतः। स्यामदेशस्तेषामागमनात् पूर्वमेव भारतीयरागेण रक्त आसीत्। अत्रागतानां थाईजनानां पूर्वतो वर्तमानाभ्यो जातिभ्यो भारतीयप्रभावग्रहणं स्वाभाविक-मासीत्, किन्तु स्यामदेशे आगमनात् पूर्वमपि थाईजना भारतीयसंस्कृतिं परिज्ञातवन्तः। पूर्वमिदं प्रतिपादितं विद्यते यदेतेषां मूलाभिजनो यङ्गसीक्याङ्गनद्या दक्षिणस्मिन् आसीत्। अत्र स्वजन्मभूमौ थाईजनैर्भारतीयसंस्कृतेः प्रथमः पाठोऽधीतः। प्रदेशस्यास्य स्थानीयानुश्रुतिभि-र्ज्ञायते यत् सप्तमशतकपर्यन्तं प्रदेशोऽयं भारतीयसंस्कृतेः प्रवाहेणाप्लावित आसीत्। गन्धाराऽ-लाविराष्ट्रसुवर्णग्रामोन्मार्गशीतप्रभृतीनि भारतीयप्रभावसंयुक्तान्यनेकानि राष्ट्राण्यत्र स्थापिता-न्यासन्। प्रदेशे प्राप्ता गुप्तशैलीकाभिः परवर्तिशैलीकाभिश्च मूर्तिभिरेताः प्राचीना अनुश्रुतयः समर्थ्यन्ते।

युन्नानेत्याख्यः प्रदेशः (क्षेत्रफलम्—१,४६,७०० व० मी० जनसंख्या १ कोटिः) दक्षिणचीनदेशस्यात्यधिकाभ्यन्तरः पर्वताख्यैरावृत्तो दुर्गमः प्रदेशो विद्यते यत्तत्र प्राप्तानि भारतीयानामुपरि अतीवाश्चर्यं भवति। परं चीनभारतयोः प्राचीनतमस्थलमार्गे वर्तमानः प्रारम्भिकखीष्टीयशतकाब्दैर्भारतीयं प्रभावं गृह्णाति स प्रदेशोऽयम्। मार्गस्योद्घाटनगौरवं धीराणां व्यापारिणां विद्यते। युन्नानेत्याख्यप्रदेशः सुवर्णखन्यर्थं प्राचीनकालतः प्रसिद्धोऽस्ति। मार्कोपोलोमहोदयस्य कथनानुसारेण त्रयोदशे शतकेऽत्रैतावदधिकं सुवर्णमासीद् यद्

देशेऽस्मिन् सुवर्णरजतयोर्मूल्यस्यानुपात एकः षट् चासन्। यद्यपि प्रदेशेऽस्मिन् सिंहशावकनिगारका ग्राहाः प्रचुरा आसन्, तथापि व्यापारिणोऽनेन पथा भारतेन सह व्यापार कुर्वन्ति स्म। द्वितीयशतकखीष्टीयाब्दपूर्वं बाख्त्रीनामकेष्वापणेषु चीनदेशीयकौशेय विक्रीयमाण दृष्ट्वा चीनदेशीयराजदूतश्चाङ्गकियेनो महाश्चर्याभिभूतोऽजायत। इद कौशेय तत्र युन्नानराज्यमार्गेण जेचुआनमार्गेग च गच्छति स्म। व्यापारिभिरुद्घाटितोऽय पन्था भारतीयधर्मदूतैरनुसृतः। इद प्रतिपाद्यते यत् चीनदेशे कश्यपमतङ्गो धर्मरक्षितश्च प्रथमौ बौद्धप्रचारकौ प्रथमशतकखीष्टीयाब्देऽनेनैव पथा चीनदेश प्राप्तौ। प्रारम्भिकेषु चतुर्षु शतकेषु मार्गेणानेनोदीच्यबर्माराज्यमतिक्राम्यन्तोऽनेके चीनयात्रिणो भारतमागताः। इत्सिगेन तृतीयचतुर्थशतकयोस्तादृशा विंशतेर्यात्रिणा वर्णन कृतम्। अष्टमशतकस्यान्ते किमातिनमहोदयेन मार्गस्यास्य भौगोलिक विवरण लिखितम्। ९६४ तमे खीष्टीयाब्दे चीनसम्राजा पथाऽनेन त्रीणि शतानि बौद्धभिक्षूणा प्रेषितानि। अतः स्पष्टमिद विद्यते यद् युन्नानराज्य भारताच्चीनयायिन्येकस्मिन् मार्गे आसीत्। अनेन वर्त्मना गामिभिर्भारतीयधर्मदूतैस्तत्र गभीरः प्रभावः स्थापितः। अष्टमशतकखीष्टीयाब्दात् प्रभावस्यास्य कश्चनास्पष्टः परिचयः प्राप्यते। अस्मिन् शतके अत्र थाईजनाना यद्राज्य स्थापितम्, चीनवासिनस्तद् ननचओ इति अभिदधति, किन्तु स्थानीयेष्वनुश्रुतिषु गन्धारपदेन तदुक्त विद्यते। तस्यैको भागो विदेहराज्यमुच्यते स्म। तस्य राजधानी मिथिलाऽऽसीत्। पूर्वमस्य राज्यस्य विषये किञ्चित् प्रतिपादित विद्यते। अत्रान्यदेव किञ्चिदुल्लिखित भविष्यति।

गन्धार इति अथवा नन-चओराज्य युन्नानप्रदेशेऽष्टमे शतके स्थापितमभूत्। अस्मिन् इरावदीनद्या उपरितनी द्रोण्यपि सम्मिलिताऽऽसीत्। तस्य राजधानी तालीफू इत्यासीत्। चीनदेशेनापमानितेन को-लो-फेङ्ग इत्याख्यराज्ञा तेन देशेन सह युद्ध प्रवर्तितम्। तेन त्रिवार चीनदेशस्य सैनिकाः पराजिताः, तिब्बतदेशेन साक मैत्रीं कृत्वा ७५४ तमे खीष्टीयाब्दे चीनदेशः पराजितः, किन्तु तस्य पौत्रेण इमोशुन इति नाम्ना प्रसिद्धेन ७७० तमे खीष्टीयाब्दे पराजितचीनदेशेन सन्धि विधाय तिब्बतदेश आक्रान्तः, किन्तु किञ्चित्कालान्तर चीनदेशेन सह पुनर्युद्ध प्रवृत्तम्। ८५० तमे खीष्टीयाब्दे गन्धारराज्ञः सम्राडुपाधिधारण चीनदेशेनासह्यमिव प्रतीतम्। द्वयोर्देशयोर्बहुकाल यावत् सघर्षः प्रचलितः। ताङ्गवश्या गन्धारराज्य स्ववशे स्थापयितु नाशक्नुवन्। पूर्वं सुङ्ग सम्राजं ( ९६०–९७६ ) यदा प्रधानसेनापतिर्मन्त्रिनवान् यद् गन्धारराज्य जयेत्, तदा स अतीतान् चीनपराजयान् स्मृत्वा त देशमाक्रमितु न स्वीचकार। १२५३ तमे खीष्टीयाब्दे कुबलैखान इत्यस्य मङ्गोलसेनया तस्य राज्यस्य समापन कृतम्।

गन्धारराज्यस्य प्रचीनानुश्रुत्यनुसारेणावलोकितेश्वरो भारतादिहागतस्तेन च प्रदेशोऽय बौद्धत्व नीतः। अष्टमस्य शतकस्यान्ते प्रदेशस्यास्य नृपतिश्चीनदेशीयसस्कृतेर्भक्तोऽभूत्। भारतस्य सप्तभिर्गुरुभिस्तदर्थं भर्त्सितः। नवमशतकस्य पूर्वार्द्धे चन्द्रगुप्ताभिध एको मागधो भारतीयो भिक्षुरत्र समागतः। स चमत्कृतिप्रदर्शने महान् पटुरासीत्। तेनात्र महत्साफल्यं समवापि। तस्मिन् काले बौद्धधर्मेण सम्बद्धानि बोधिवृक्षगृध्रकूटप्रभृत्यनेकपवित्रवस्तूनि स्थानानि च युन्नानदेशे मन्यन्ते स्म। दशमशतकखीष्टीयाब्दे प्रवृत्तिरियं परां काष्ठा प्राप्ता।

युन्नानवास्तव्यैस्तथा प्रतिज्ञातं यद् गौतमेन बुद्धत्व युन्नानदेशे तालीफू इत्याख्यस्थानस्य निकटे प्राप्तम्। एकादशशतकखीष्टीयाब्दस्य द्वयोर्बौद्धघण्टयोश्चीनदेशीयसंस्कृतलेखावङ्कितौ स्तः। तस्मिन् काले नन-चओराज्यस्य शासको महाराजाभिध आसीत्। अत्र भारतीयोद्भूता मवी वर्णमाला प्रयुज्यते स्म। त्रयोदशशतकस्यैकेन लेखकेन रशीद्दीननामकेन लिखित विद्यते यद् गन्धारस्य जनाश्चीनदेशाद् भारताच्चागत्यात्र न्युषितवन्तः। इमानि सर्वाणि तथ्यानि गन्धारस्य थाईजनाना भारतीयसंस्कृतौ रञ्जनस्य पर्याप्तानि पुष्टानि च प्रमाणानि सन्ति।

गन्धारराज्यं थाईजनाना प्रधानं शक्तिशालि च राज्यमासीत्, किन्तु तदतिरिक्तान्यपि तत्रात्मनो भारतीयत्व प्रकाशयन्तीना जातीना भारतादागतानामुपनिवेशकानाञ्च राज्यान्यासन्। मणिपुरस्य आसामस्य च पर्वतकाना पूर्वस्मिन् तत्सिन( तचिन )राज्यमासीत्। अन्यद् राज्यं ततः पञ्चसप्ततिक्रोशपूर्वं चिन्दविननद्याः पारे, इरावदीसालवीननद्योर्मध्ये कौशाम्ब्यासीत्। अद्यत्वे ततो दक्षिणस्मिन् थाईसम्बद्धानि शानराज्यानि विद्यन्ते। सम्भवतस्तदा एतान्युत्तरस्या दिशि आसन्। युन्नानस्य कम्बुजदेशपर्यन्त प्रसृतेषु लघुषु राज्येषूत्तरतो दक्षिणाभिमुख क्रमेण अलाविराष्ट्र-खमेरराष्ट्र सुवर्णग्राम-उन्मार्गशील-योनकराष्ट्र-हरिपुञ्जराज्यान्यासन्। मीकाङ्गनदी-दक्षिणतटवासी प्रथमथाईजातीयो राजकुमारो ब्रह्माऽऽसीत्, तेन चींगराई-जनपदे नवमस्य शतकस्योत्तरार्द्धे जयप्राकारनगर स्थापितम्। थाईजनाः शनैः शनैर्दक्षिणाभिमुख वर्द्धन्ते स्म। १२५३ तमे खीष्टीयाब्दे कुबलैखानद्वारा युन्नानराज्येऽस्य विजयेन थाईजनाना मातृभूमौ महान् कोलाहलोऽभूत्। ते दक्षिणाभिमुखं वर्द्धितु विवशा अभूवन्। केदेमहोदयस्य मतानुसारेण तेनैव साक कुबलैखानसङ्गोलाधिपतेः शौर्यपूर्णेनाभियानेन थाईजनाना देशान्तरेष्वभियानस्य नवा प्रेरणा उत्साहश्चाभूताम्। थाईजनाः पार्श्वस्थानि प्राचीनानि राज्यानि विजेतु प्रारब्धवन्तः।

१२८७ तमे खीष्टीयाब्दे पगानराज्यपतनेन तस्य बहवः प्रदेशाः थाईशासने समागता.। १२९२ तमे खीष्टीयाब्दे मेङ्गकाईनामकेन थाईग्रामपतिना हरिपुञ्जस्य ( लम्फून ) प्राचीन मोनराज्य समाप्तिं नीतम्। १२३९ तमे खीष्टीयाब्दे समुत्पन्नोऽयं थाईग्रामपतिर्विंशतिवर्षवयस्कः पितुः स्वर्गवासानन्तरमुदीच्यस्यामदेशे चींगसेनस्य राजाऽभूत्। सांस्कृतिकदृष्ट्या सत्यमिदमुल्लेखनीय विद्यते यत् १२९० तमे खीष्टीयाब्दे स पगानराज्य गतः, ततश्च स्वेन साक बहून् कलाविद. शिल्पिनश्च समानीतवान्। १२९२ तमे खीष्टीयाब्देऽनेन चींगमाईनाम्नी नवा राजधानी स्थापिता। तत् तस्मात् कालादुदीच्यस्यामदेशस्य सर्वतो महत्त्वपूर्णं नगरमभूत्। मेंगराईनामा धर्मान्धो बौद्ध आसीत्। पगानराज्यस्य यात्रानन्तर तेन चींगमानमाईनामके स्थाने बौद्धमन्दिर निर्मापितम्, तस्य भग्ना अंशा अद्याप्युपलभ्यन्ते। अन्यच्च तेन पगानराज्ये बुद्धगयाया मन्दिरानुकरणेन निर्मितमहाबोधिमन्दिराधारेण सप्तशिखर मन्दिर ( वतचेतपोत ) कारितम्। १३१७ तमे खीष्टीयाब्दे विद्युत्पातेन स दिवङ्गतः। उदीच्यस्यामदेशे तेन थाईसत्ता स्थापिता, १२५९–१२९२ तमखीष्टीयाब्दपर्यन्तमय चीङ्गसेनस्य तथा १२९२–१३१७ तमखीष्टीयाब्दपर्यन्त सकलस्योदीच्यस्यामदेशस्य शासकोऽभूत्।

यदा मेगराईनामा राजा उत्तरस्मिन् थाईसत्तामस्थापयत्, तदैवान्ये थाईग्रामपतयः सुखोथाईप्रदेशान् कम्बोडियावासिख्मेरेभ्य आहरन्ति स्म। पूर्वमिदं प्रत्यपाद्यत यत् १२३८ तमे खीष्टीयाब्दे मुअङ्गरत-मुअङ्गबङ्गयङ्गनामकाभ्यां द्वाभ्यां ग्रामपतिभ्यां ख्मेरसत्ताया विरोधं कृत्वा सुखोथाई प्रदेशस्य सेनापतिमन्यत्रापसार्य तत्र थाईशासनं स्थापितम्। मुअङ्गबङ्गयङ्ग इत्याख्य इन्द्रादित्यनाम्ना सुखोथाईराजसिंहासनमारुढः। अस्मात् कालात् स्यामदेशस्य शृङ्खला-बद्ध इतिहासो लभ्यते।

स्यामदेशे थाईजनानामितिहासः सुखोदयेन, अयोध्यया बङ्काकेन च त्रिधा विभक्तोऽस्ति। प्रत्येकं भागस्तस्य युगस्य राजधानीनाम्ना विद्यते। पूर्वमेषां राजनीतिकधार्मिकेतिहासयोर्विवेचनं भविष्यति, पश्चाच्च सांस्कृतिकेतिहासस्य।

## सुखोदय ( सुखो थई ) युगम् ( १२१८–१३७६ खी० )

त्रयोदशाच्छतकाद् बहुकालपूर्वं थाईजना अथवा लाओग्रामपतय उदीच्यस्यामदेशे स्वकीयं लघु लघु राज्यं स्थापयन्ति स्म। कम्बुजसाम्राज्येनोत्तरस्थानामवाञ्छितानामेतेषां नवागन्तुकानां नियन्त्रणं कर्तुं प्रयतितम्, बहुकालं यावत् तत्र साफल्यमपि प्राप्तम्, किन्तु त्रयोदशस्य शतकस्य प्रबलं प्रवाहं कम्बुजसैनिकबन्धैर्निरोद्धुं न पारितम्। इन्द्रादित्यनामकेन थईग्रामपतिना सुखोदयराज्यं स्थापितम्। अयं कम्बुजदेशं प्रति थाईविद्रोहस्य परिणाम आसीत्। ततः सुखोथई इति स्वां राजधानीं निर्मायेन्द्रादित्येन पार्श्वस्थान् ग्रामपतीन् पराजित्य स्वं राज्यं वर्द्धयितुं प्रारब्धम्। घट-नेयं त्रयोदशस्य शतकस्य मध्ये घटिता। १२८३ तमे खीष्टीयाब्दे अस्य वंशस्य तृतीयो राजा रामखमहेङ्गः ( बहादुररामः ) अथवा रामराजो राजसिंहासनमारूढः। अस्य प्रामाणिक इतिहासः १२९२ तमखीष्टीयाब्दस्यैकेनाभिलेखेन ज्ञायते।

रामराजः ( १२८३–१३१० खी० )—रामराजः स्यामदेशस्य राष्ट्रियो महापुरुष आसीत्। तस्य जनकेनेन्द्रादित्येन स्यामो जनितः, रामस्तस्य विस्तारम्, शक्त्युपचयम्, सुशासनं सभ्यत्वञ्च कृतवान्। विजयैस्तस्य राज्यं पूर्वस्मिन् मीकागनदीपर्यन्तम्, ततः परं मुओङ्गचवां ( लुअङ्ग-प्रबङ्ग ) पर्यन्तम्, दक्षिणस्मिन् समुद्रपर्यन्तं तथा श्रीधर्मराज( लिगोर )पर्यन्तम्, पश्चिमे हंसावती ( पेगू ) पर्यन्तं प्रसृतमासीत्। उत्तरस्मिन् काचन निश्चिता सीमा नासीत्। इदं नावगन्तव्यं यत् स्यामदेशस्तदा किमपि संघटितं राष्ट्रमासीत्। वस्तुतस्तदनेकलघुराज्ये विभक्त-मासीत्। उत्तरस्य योनकदेशे लन-ना-थाईनामकस्य तथा वीङ्गचने लल-नाचाङ्गनामकस्य शासनमासीत्। मध्ये सुखोदयराज्यस्य मीनमनदीनिम्नतटे लवपुर्याश्च शासनमासीत्। स्यामनाम उत्तरभागस्यैवासीत्। सुखोदयराज्येन सर्वेषु राज्यान्तरेषु स्वकीयः प्रभावः स्थापितः, पश्चाच्च सर्वोऽपि देशः स्यामपदेन व्यवह्रियते स्म।

रामस्य राजनीतिकविजयापेक्षयाऽधिकं महत्त्वपूर्णं कार्यमुत्तमं शासनमासीत्। रामेण वस्तुतो रामराज्यं स्थापितम्। स स्वयं विवादनिर्णेता भवति, प्रजानां सामान्योऽपि जनस्तेन साकं वार्तालापं कर्तुं प्रभवति स्म। तेनेयं प्रसारिताऽऽसीदाज्ञा यद् यदि कस्यापि जनस्य किमपि कष्टं

भवेत् तदा स राजप्रासादे लम्बमाना घण्टा नादयेत् । ध्वनिं श्रुत्वा राजा तमाकारयति, तस्य कष्टं निवारयति स्म ।

स्यामदेशे संस्कर्तुं रामराजस्य सर्वतोऽधिकं स्थायिकार्यं वर्णमालानिर्माणं बौद्धधर्मप्रचार-श्चासीत् । उपरि निर्दिष्टेष्वभिलेखेषु राजा स्पष्टमिदमलिखयत यत् तत्कालपर्यन्तं स्यामदेशीयजनानां काचन वर्णमाला नासीत्, किन्तु तेन साऽऽविष्कृता । वर्णमालेयं भारतीयवर्णमालामाश्रित्य विहिता कम्बुजलिप्या सन्नाहिताऽऽसीत् । पश्चात् तत्र मोनलिपेस्तलैङ्गलिपेर्वा प्रभावोऽभूत् । सा वर्तमान-स्यामदेशीयभाषायाः पूर्वजाऽऽसीत् । स्यामदेशीयभाषा चीनवद् ध्वनिप्रधाना विद्यते । तस्य वर्णैरभि-व्यञ्जनमतीव कठिनं विद्यते, किन्तु चीनदेशीयलिपिस्थाने भारतीयलिपेरङ्गीकारो भारतीय-प्रभावस्य स्यामदेशे प्राबल्यं सूचयति । लिपिनिर्माणानन्तरं भाषाया विकासः शीघ्रतयाऽभूत् । स्यामदेशीयभाषाया मूलथाईखमेरमलयशब्दातिरिक्तसंस्कृतपालिभाषयोः परिभाषा अगृह्यन्त ।

स्वाभिलेखे राजा धार्मिकदशापि प्रकाशिता । सुखोदयस्य राजसभासदस्या निवासिनश्च धर्मान्धा बौद्धा आसन् । ते वर्षावासनियमान् पालयन्ति स्म, 'कठिन'प्रभृतिबौद्धपर्वाणि मान-यन्ति स्म, धार्मिकग्रन्थान् पठन्ति स्म । नगरात् पश्चिमे एकस्मिन्नारण्यकविहारे श्रीधर्मराजतः समागतश्चैको महास्थविरो निवसति स्म । तेन सर्वं त्रिपिटकमधीतमासीत् । लेखेऽस्मिन् पौराणिक-धर्मस्य कश्चनोल्लेखो नास्ति, किन्तु राज्याभिवृद्धये देवतानां पूजा समर्थिता विद्यते ।

रामराज्यकाले स्यामदेशे हीनयानसम्प्रदायस्य बौद्धधर्मस्य प्रचलनमासीत् । अद्यत्वेऽपि च तत्र तस्यैव साम्राज्यं विद्यते । अत्राय प्रश्नो विचारणीयो विद्यते यत् स्यामदेशे स धर्मः कस्मात् स्रोतसो गृहीतः । यदा थाईजनाः खमेराणां प्रदेशं समागतास्तदा तत्र शैवधर्मो महायान-सम्प्रदायस्य बौद्धधर्मश्च प्रचलितावास्ताम् । अतः कम्बुजदेशस्तस्य मूलं भवितुं नार्हति । सम्भवतो हीनयानस्यागमनमनेकस्रोतसोऽभूत् । थाईजनाः स्वमूलदेशे युन्नाने बौद्धधर्मस्य ज्ञानं प्राप्तवन्तः । द्वितीयं स्रोतो दक्षिणबर्मादेशस्य मोनतलैङ्गजातीयाः सन्ति । यदा बर्मादेशे अनिरुद्धेन स राजधर्मरूपेण स्वीकृतस्तदायं शानराज्येऽपि गतः, ततश्च सुखोदयराज्य-निकटे आसीत् । पूर्वं मगराईद्वारा पगानराज्यात् शिल्पिनामानयनस्योल्लेखः कृतः । तृतीयं स्रोतो मलायाद्वीपकल्पमासीत् । अस्य प्राचीनकालात् पूर्वभारतेन श्रीलङ्कया च सम्बन्ध आसीत् । इत्सिंगस्य वर्णणेन ज्ञायते यत् श्रीधर्मराजः (लिगोर) हीनयानस्य केन्द्रमासीत् । दक्षिणसमुद्रस्य द्वीपेषु सप्तमशतकख्रीष्टीयाब्दस्यान्ते हीनयानस्य प्रचार आसीत् । उपर्युक्तलेखेषु लिगोरस्य महास्थविरस्य वर्णनेनात्र कश्चन सन्देहो न भवति यन्मलायादेशोऽपि स्यामदेशीय-बौद्धधर्मस्यैकं स्रोत आसीत् । प्रारम्भे श्रीलङ्कायाः स्यामदेशेन सह कश्चन सम्बन्धो न प्रतीयते, किन्तु पश्चात् तत्र सिंहलसङ्घस्य प्रतिष्ठा वृद्धिं गता । रामाखमहेगस्य कालोऽनया दृष्ट्यापि उल्लेखनीयो विद्यते यत्तदा स्यामदेशीयकलाया क्रान्त्या सुखोथईनामिका काचन नवा कलाशैली समुत्पन्ना । तत् चीङ्गसीनलङ्काशैल्योः सुन्दरं सम्मिश्रणमासीत् । तत एककालात् स्यामदेशस्य बुद्धानां शिरसि उष्णीषस्थाने केतुमाला—अर्थाद् ज्वालावच्चिह्नं निर्मातुं प्रारम्भि । श्रीलङ्काया-मुष्णीषस्थाने वीणावच्चिह्नं निर्मीयते स्म, केतुमाला तदीयं स्यामीयं रूपान्तरमासीत् । स्यामदेशे

तादृश एको बुद्धः फ्रासिहिङ्ग ( सिंहलबुद्ध )नाम्ना प्रसिद्धो विद्यते। तस्यैकेन सिंहलीयबुद्धेन तुलाया द्वयोः सादृश्यं स्पष्ट भविष्यति। सकेतुमाला अनेकाः कास्यबुद्धप्रतिमाः सुखोथईकलाशैल्या उत्कर्ष प्रकटयन्ति।

रामाखमहेगस्य पुत्रेण लोथाईनामकेन सम्भवतः १३१७–१४४७ तमपर्यन्त शासितम्। यद्यपि केषुचिल्लेखेषु स सुआथाई ( थाईजनाना व्याघ ) पदेन व्यवाह्रियत, किन्तु तस्य बुद्धपद प्राप्तुमिच्छाऽऽसीत्, स्वबुद्धभक्त्या स धर्मरक्षकपद प्राप्तवान्।

श्री सूर्यवशरामः ( १३४७–७० )—रामराजस्यानन्तर भावी उल्लेखनीयो राजा श्रीसूर्यवशरामोऽथवा लूथाईनामक आसीत्। अस्य राज्यारोहण १३५० तमे खीष्टीयाब्देऽभूत्। अय 'हृदयराज'-'श्रीधर्मराज'-'राजाधिराज' प्रभृत्यनेकोपाधिधारकः, त्रिपिटकस्य वेदशास्त्राणाञ्चाध्येता ज्यौतिषे प्रवीणश्चासीत्। १३६१ तमे खीष्टीयाब्दे लिखितेन तस्यैकेन ख्मेराभिलेखेन तदानीन्तन इतिहासः सुतरा प्रकाशितो भवति। धर्मे तस्यागाधा श्रद्धाऽऽसीत्। तेनानेकगुटीविहारचैत्याना निर्माणं कारितम्। विविधाना धातूना मेलनेनैका बुद्धप्रतिमा निर्मापिता। अय बुद्धस्योपदेशाना जनेषु प्रचार करोति स्म, तान् निर्वाणपथमारोढु प्रेरयति स्म, किन्तु तस्मिन् धार्मिकाग्रहो नासीत्। एकतस्तेन बुद्धप्रतिमाः कारिताः, अन्यतश्च महेश्वरस्य विष्णोश्च मूर्तयो निर्मापिताः, श्रमणा ब्राह्मणाश्च सम्मानिताः, त्रिपिटकेन सह वेदानामप्यध्ययनं कृतम्। १३६१ तमे खीष्टीयाब्दे राज्ञासूर्यवशेनैको दूतः श्रीलङ्कायां प्रेषितो यत् स तत एकं 'त्रिपिटकपण्डितम्' सङ्घराजमात्मना सहानयेत्। जिनकालमालिनीग्रन्थानुसारेणास्य नूतनस्य पण्डितस्य नाम सुमन इत्यासीत्। तस्य महता समारोहेण प्रत्युद्गमनमभूत्। सङ्घराजेन तत्र कश्चन नूतनो धर्मो न प्रवर्तितः। जना पूर्वत एव हीनयानधर्मेण परिचिता आसन्। तेषा समीहा तस्य प्रामाणिक भाष्य श्रोतुमासीत्। यदा सघराजः श्यामदेश प्राप्तस्तदा वर्षावासस्य पवित्रकालस्यारम्भ आसीत्। तस्य कालस्य समाप्त्यनन्तर राज्ञा बुद्धस्यैका सुवर्णमयी प्रतिमा नगरमध्ये स्थापिता स्वयञ्चोपसम्पदा गृहीता। भिक्षुत्वग्रहणकाले सुवर्णप्रतिमासम्मुखे बद्धाञ्जलिर्भूत्वा प्रोक्तवान्—'अतः परमह बुद्ध शरण गच्छामि। सम्प्रत्यह ब्रह्मत्व न कामये नेन्द्रत्व न चक्रवर्तित्वम्, अहन्तु केवल बुद्धत्व वाञ्छामि, यतो हि कामरूपारूपभवदुःखैः पीडितान् प्राणिनः ससारसागरं पारयितु शक्नुयाम्। अनेकैः कुलीनैर्जनैस्तदनुसृतम्, किन्तु किञ्चित्कालानन्तर प्रजाना प्रतिनिधिमण्डलेनैकेन राजा प्रार्थितो यत् स पुनः शासन स्वहस्ते कुर्यात्, ससारञ्चाङ्गीकुर्यात्। भिक्षुसघो वाञ्छति स्म यद् राजा तस्य गुरुर्भूत्वा तिष्ठेत्। प्रजाः कथयन्ति स्म यद्राज्ये सर्वत्राराजकतायाः प्रसारो विद्यते, अतः स राजदण्ड स्वहस्ते गृह्णीयात्। द्वयोः पक्षयोर्मनोरञ्जको विवादोऽजायत, अत्र सङ्घराजो निर्णायकोऽभूत्। तेन निर्णीत यद्राजा राजकार्य कुर्यात्। आश्रमपरिवर्तनकाले तेन किमपि काठिन्य नानुभूतम्। कषायवस्त्रपरिवर्तनसमकालमेव स लुअगप्रवङ्गप्रदेशस्य विद्रोहिणो जनान् दमयितु प्रस्थितः। अस्य कालस्य द्वाभ्यामन्याभिलेखाभ्यामिद ज्ञायते यत् श्रीलङ्कादेशाद् बोधिवृक्षस्यैका शाखा स्यामदेशमानीता। केषाञ्चित् पवित्राणा धातूना ( ये सम्भवतः पाटलिपुत्रात् समागताः ) प्रतिष्ठा यथाविधि कृता। तदैव सुखोथईराज्यस्य वत-सिञुमनामके मन्दिरे प्रस्तरेषु जातकशतस्य घटना उदकीर्यन्त।

श्रीसूर्यवंशानन्तरं सुखोदयराज्यस्य शासकानामितिहासोऽस्पष्टो विद्यते। इत्थं प्रतीयते यदस्य वंशस्यान्तकारका उथोङ्गोऽथवा सुपानबुरी-राज्यस्य शासका आसन्। एतैः सूर्यवंशरामस्य निर्बलोत्तराधिकारिभ्यः १३१७,१३४७ तमखीष्टीयाब्दयोरन्तराले सुखोथाईराज्यस्याधिकांशा विजिताः। तेनैव सह लोपबुरीचन्तनयोस्तस्याधिकारोऽभूत्। अयं थाईवंशः सम्भवतो मेंगराई—इत्याख्येन कमपि सम्बन्धमादधाति। आरम्भेऽस्य राजधानी उथोङ्ग इति (स्वर्णभूमिः) आसीत्। किन्त्वत्र महामार्याः प्रसरणेन स्थानमिदं परित्यज्य १३५० तमे खीष्टीयाब्देऽत्रत्येन शासकेन रामाधिपतिना अयोध्या स्वीया राजधानी स्यामं शक्तिशालि राज्यञ्च कृतम्। अत्रोथोङ्ग-नामिकैका नूतना कलाशैली विकसिता, यत्र प्रबलं ख्मेरप्रभावं थाईकला रूपान्तरितमकरोत्। वर्गाकारस्याथवाऽऽयताकारस्य मानवमुखस्य स्थानमण्डाकारं तथादर्शमुखं गृह्णाति। १३५०-तमे खीष्टीयाब्दे रामाधिपतिनामकेन केनचन स्यामवास्तव्येनायोध्या (अयुथिया) स्थापिता। अयोध्या काचन नूतना वसतिर्नासीत्, द्वारवतीनाम्ना प्राचीनकालेऽपि सा प्रसिद्धाऽऽसीत्। ततस्तस्या उत्कर्षः सुखोदयस्यापकर्षश्च प्रारब्धौ। पञ्चदशे शतके सा स्यामदेशे सांस्कृतिकं राज-नीतिकञ्च केन्द्रं समजनि।

## अयोध्याराज्यम् (१३५०–१७६७ खी०)

अयोध्याया राजा सुखोदयो भूमिपालवद् भारतीयं धर्मं भारतीयां संस्कृतिञ्च प्रोत्साहित-वान्। प्रथमेन राज्ञा रामाधिपतिनाऽनेकानि विहारभवनचैत्यानि कारितानि। १३९४ तमे खीष्टीयाब्दे रामराजो राज्यासनमारूढः। तस्यैकस्मिन्नभिलेखे वर्णनमिदं विद्यते यदनेन बुद्धस्य पूजार्थमेकं मन्दिरं विशाला मूर्तिश्चाकारिषाताम्। मन्दिराय तस्मै राज्ञाऽनेके ग्रामा दत्ताः, सहैव स्वकीया स्वसाऽपि बुद्धस्य पूजायै मन्दिराय समर्पिता। राज्ञा सर्वमेतत्तदर्थं कृतं यत् स पुनर्जन्मनि बुद्धत्वं प्राप्नुयात्। वर्तमाने काले अयोध्याया भग्ना अंशा निविडैररण्यैरावृताः सन्ति। अत्र च 'वत सोमरो कोट' इत्यस्योपर्युक्ता विशाला बुद्धमूर्तिर्मन्ये निरपेक्षतयाऽभितो भग्नावशेषान् निरीक्षमाणाऽवस्थिता विद्यते। १५१० तमखीष्टीयाब्दस्यैकस्मिन्नभिलेखे बौद्धपौराणिकधर्मयोरभेदः प्रत्यपाद्यत, किन्तु जनानां प्रवृत्तिः पूर्वस्मिन् धर्मे आसीत्। १६०२ तमे खीष्टीयाब्दे स्यामदेशे बुद्धपादः (फ्राबत) आविरभूत्। श्रीलङ्कावदत्रापि तस्य पूजा प्रारब्धा।

अयोध्याराज्यस्यैका महत्त्वपूर्णा घटना बोरोमराजेन द्वितीयेन (१४२३–१४४८) १४३१ तमे खीष्टीयाब्दे सप्तमासावरोधानन्तरमङ्कोरस्य विजय आसीत्। पूर्वं स्यामदेशे कम्बोडिया-देशस्य शासनमासीत्। अधुना कम्बोडियादेशे स्यामदेशस्य शासनं स्थापितमभूत्। तदानीमत्र सुखोदयस्य कम्बोडियादेशस्य च कलाशैल्योश्च सम्मिश्रणेनायोध्याया नवायाः कलाशैल्या विकासोऽजायत। एददुदाहरणं सुवर्णजलसंस्कृतं कांस्यस्यैकं मनोहरं बुद्धशीर्षं विद्यते। मेकेमहोदयस्य कथनानुसारं तत्रादर्शपुरुषस्य स्यामादर्शः सम्यक् चित्रितोऽभूत्। तस्मिन्नेव काले एकेन स्थानीयेन थाईग्रामपतिना श्रीधर्माशोकराजेन १५१० तमे खीष्टीयाब्दे निर्मापिता शिवस्यैका कांस्यप्रतिमोल्लेखनीया विद्यते। इदमेतत् सूचयति यद् बौद्धधर्मस्य परमोत्कर्षकालेऽपि हिन्दुप्रतिमा निर्मीयन्ते स्म। १५४८ तमे खीष्टीयाब्दे वरधीराजोऽयोध्यायाः शासकोऽभूत्। तस्मिन् काले स्याम-

वासिभिर्बर्मा-( पेगू ) वास्तव्यानामुपरि आक्रमण कृतम्, किन्तु ते कामं पराजिताः सन्धिकृते विवशाश्चाभूवन्। स्यामवासिनश्च सन्धि विघटितवन्तः। अतस्तेषामुपरि पुनः पुनर्बर्मादेशस्याक्रमणमभूत्। तैराक्रमणैः पुनः पुनर्विध्वस्यमानाऽयोध्या १७६७ खीष्टीयाब्दपर्यन्त स्यामदेशस्य राजधानी आसीत्, किन्तु तस्मिन् वर्षे बर्मावास्तव्यानामाक्रमण तथा प्रबलमासीद् यत् स्वरक्षणार्थं स्यामवासिनो मीनम च-ओफयानदीमुखे देवनगर( क्रुङ्देव )-नामिका नूतना राजधानीं स्थापयितु विवशा अभूवन्। इदमेव नगर योरोपवासिनामुच्चारणानुसारेण बङ्काकेत्युच्यते।

सप्तदशशतकात् स्यामदेशे योरोपवासिव्यापारिणा पुरोहितानाञ्च प्रवेशः प्रारब्धः। तेषा स्यामदेशेन साक सम्बन्धः शान्तिपूर्णोऽभूत्। १६८२–८५ मध्ये फ्रासदेशीयस्य राज्ञो लुईनामकस्य चतुर्दशस्यैक दूतमण्डलमपि देशेऽस्मिन् समागतम्। दूतानामय विचार आसीद् यत् स्यामदेशस्य राजा प्रजाश्च खीष्टानुयायिधर्म स्वीकर्तुमुद्यताः सन्ति। यदा तैर्भूपालस्य पुरो धर्मपरिवर्तनस्य वार्ता कृता, तदा तेनोक्तं यद् आद्विसहस्रवर्षेभ्यः प्रजाभिः पालितस्य धर्मस्य परित्यागे किमपि कारणं न पश्यामि। अष्टादशस्य शतकस्य मध्ये श्रीलङ्काया बौद्धधर्मस्य दशाऽतीव शोचनीया संवृत्ता। पूर्व स्यामदेशेन श्रीलङ्कादेशाद् धर्मराज आनीतः, अधुना लङ्कादेशेन स्यामो याचितो भिक्षून्। स्यामराजेन धार्मिकेण १७५० तमे खीष्टीयाब्दे महास्थविरस्य उपालिनामकस्याध्यक्षतायामेक भिक्षुमण्डल ससौवर्णरौप्यबुद्धप्रतिम त्रिपिटकञ्च श्रीलङ्काया प्रेष्य श्रीसूर्यवशरामस्य चतुश्शतवार्षिक प्राचीनं सवृद्धि ऋणमपाकृतम्।

## बङ्काकराज्यम् ( १७६७–१६४४ खी० )

१७६७ तमे खीष्टीयाब्दे बर्मावासिभिः स्यामदेशस्येष्टका इष्टकाभिः प्रतियोधिताः। यद्यपि ते बौद्धा आसन्, तथापि बौद्धमूर्तीना बौद्धमन्दिराणाञ्च विध्वंसने न कामपि न्यूनता कृतवन्तः। स्यामदेशेऽराजकता समुत्पन्ना, किन्तु सा दीर्घकाल नातिष्ठत्। फयाताकासीननामकेन केनचिद् नेत्रा स्यामीयसैनिकान् सयोज्य बर्मावासिनः स्वदेशान्निष्कासयितुं प्रारब्धम्। स बर्मासीमातो दूरे देवनगरं (बङ्काक) स्यामदेशस्य नूतना राजधानीं कृतवान्, किन्तु १७८२ तमे खीष्टीयाब्दे अत्यधिकेन धर्मोत्साहेन राज्यासनात् समवतरीतु विवशोऽभूत्। अयोध्यायाः पतनानन्तर स्यामदेशस्य भिक्षुसङ्घे अनाचारोऽनियन्त्रणञ्च वृद्धिं गतम्। फयाताकसिननामकस्ता शोचनीया दुरवस्था त्वरितगत्या शोधयितुमिच्छति स्म। अधिका भिक्षवोऽस्य विरोधिन आसन्, ये च शोधनसमर्थका आसन् तेऽपि राज्ञे भिक्षूणा तावन्तमधिकार दातु नेच्छन्ति स्म। ताकसिनस्य पश्चात् चओफयाचक्करी इत्याख्यो राज्यासनमारूढः, तत्प्रवर्तितश्च वशोऽद्य यावत् स्यामदेशस्य शासको विद्यते।

राज्यमधिगतेन चक्करीनामकेन त्रिपिटकस्य सशोधनार्थमेका बौद्धपरिषदाहूता। परिषदा निर्धारितपाठ त्रिपिटकं सुरक्षितुमेक विशिष्ट भवनं कारितम्। द्वितीयः शासकः फ्राबुद्धलोतला राजा सन्नपि श्रेष्ठः कविरासीत्। अयं शातवाहनं राजान हालं भर्तृहरिं श्रीहर्षञ्च स्मारयति। अस्य पुत्रयोः पूर्वमधिकवयस्क. पुत्रः फ्रा-नङ्गा-क्लओनामा राज्यासनमारूढः। कनीयान् मौङ्कुत-

(१८५१-१८६८ ख्री०) नामा षड्विंशतिवर्षाणि भ्रातुः शासनकाले बौद्धभिक्षुरभवत्, सङ्घस्य नियमान् सावधानेनापालयत्। ज्यायसि भ्रातरि दिवङ्गते राज्यासनमयमारूढः, सप्तविंशति वर्षाणि शासक आसीत्। अय स्यामस्य योग्यतमेषु शासकेष्वन्यतमो गण्यते। शासकस्य चतुर्थांशादधिककालपर्यन्त भिक्षुत्व पालयत्यपि तस्मिन् धर्मान्धता निष्क्रियता च नागते। स्यामदेशस्य मध्ययुगाद् वर्तमानयुगे प्रवेशस्य गौरवमस्यैवास्ति। भिक्षुकाले नियमाना दृढतया पालनार्थैकः सम्प्रदायस्तेन प्रचालितः, किन्तु सहैव स धर्मप्रचारकसस्थाना सम्पर्के समागतः, तेन पाश्चात्त्यदेशीया नूतना विद्या गृहीता, राजा च भूत्वा स्यामदेश ता प्रसारितवान्। स तथा कुशलो गणितज्ञो ज्योतिर्विच्चासीद् यद् राहूपरागविषयकमपि गणित कर्तु शक्नोति स्म। तेनाग्लव्याकरणं तथा इतिहासपुस्तक लिखितम्, योरोपदेशै सह व्यापारमैत्री सन्धिश्च कृतः। अनेकासा प्राचीनानां रीतीना नाशः कृत.। पूर्व राज्ञि बहिर्निर्गते सति प्रजाः स्वगेहे पिहिता भवन्ति स्म। तेन सा पद्धतिरुन्मूलिता, अथ चोपोसथदिवसे समूहरूपेण जनाना वार्ता श्रोतु प्रारब्धम्। दासप्रथा, द्यूतक्रीडा, सुरासेवनम्, अहिफेनसेवनञ्च नियमेन प्रतिषिद्धम्। जना आदिष्टा यत्ते मठेषु यद्यनाचार पश्येयुस्तदा त धर्माधिकारिभ्यो निवेदयेयुः। तेन स्यामदेशीयेतिहासः प्रकाशित.। विद्याव्यसनमेव तस्य मृत्यो कारणमभूत्। एक पूर्णसूर्यग्रहण प्रेक्षितुं यात्रा कुर्वन् स ज्वरग्रस्तोऽभूत्, स च ज्वरस्तस्य प्राणान्तकारकोऽभूत्।

तस्य पुत्रश्चूडालङ्कारः (१८६८-१९११) पितृवद् उदारः शिक्षायुक्तः शासकश्चासीत्। तेन त्रिपिटकस्य प्रामाणिक संस्करण स्यामदेशीयलिप्या प्रकाशितम्, विद्वद्भ्यश्च वितीर्णम्। किन्तु तस्य चतुरशीतिः स्त्रियः, ३६२ पुत्रा आसन्निति हेतोस्तस्याधिका ख्यातिर्विद्यते। स्यामदेशस्य वर्तमाननिदर्शिकायाः ९$\frac{1}{2}$ पृष्ठेऽस्य वर्तमानसमये जीवितवशजाना सूची विद्यते। तस्मिन् काले फ्रासदेशेन स्यामदेशस्य केचन प्रदेशा हृता.। १९११-१९२६ तमख्रीष्टीयाब्द यावत् स्यामदेशस्य शासको वजीराबुद्ध आसीत्, तेन बहुविवाहपरिपाटी परित्यक्ता पितुश्चान्तःपुर समाप्तिं नीतम्। १९२५ तमे ख्रीष्टीयाब्दे भारतस्य तीर्थस्थानयात्रा विहिता। इत्थं यात्राकारकः प्रथमोऽय स्यामवास्यासीत्। १९२६ तमे ख्रीष्टीयाब्दे प्रजाधिपोकः शासकोऽभूत्। १९३२ तमख्रीष्टीयाब्दस्य क्रान्तेरनन्तरमनेन राज्यासन त्यक्तम्। बालक आनन्दो राजाऽजायत, एकया सरक्षकपरिषदा शासनं गृहीतम्। स्यामदेशः स्वरक्तपातरहितक्रान्तिकृते प्रसिद्धो विद्यते। १९४७ तमे ख्रीष्टीयाब्दे तत्र पुनस्तादृश्येका क्रान्तिरभूत्। अद्यत्वे रामनवमस्य शासन विद्यते शासनसत्ता च प्रधानमन्त्रिणो विपुलसंग्रामस्य (विबुलसोंग्राम) हस्ते विद्यते।

## सांस्कृतिक इतिहासः

स्यामदेशेन भारतीया संस्कृतिर्धर्म-भाषा-कला साहित्य शासनव्यवस्थारूपेण सुरक्षिता। पूर्वमकथ्यत यदधुना स्याम एवैको देशो वर्तते यत्र बौद्धमत राजधर्मोऽस्ति। राजाऽस्य सरक्षकः पोषकश्च विद्यते। स उपाधिमात्रं न दधाति, किन्तु वस्तुतस्तत्कार्यं करोति। अय

बर्मादेशवद् हीनयानानुयायी तथा थेरवादी विद्यते, किन्तु तत्र हिन्दुधर्मस्य प्रकृतिपूजायाश्च महत्त्वमपि वर्तते। बर्मापेक्षया हिन्दुधर्मस्य देशेऽस्मिन् महान् प्रभावोऽस्ति। अस्य कारणं कम्बुज-देशस्य हिन्दुधर्मो महायानश्च प्रतीयते।

**धर्मः**—बौद्धधर्मः, भिक्षुजीवनम्, बर्मावासिवत् स्यामवासिना धर्मभक्तिर्भिक्षूणामधिक-सङ्ख्यया महासम्मानेन च परिचीयते। स्यामदेशे भिक्षवः—फिक्खु ( भिक्खु ), फ्रा ( महान् ), चओथाई ( स्वामी ) इति शब्दैरुच्यते। एते लक्षाधिकाः सन्ति। एते विंशतिसहस्रविहारैः सम्बद्धाः सन्ति। भिक्षुभिः प्रतिमोक्षस्य ( पातिमोक्ख ) सप्तविंशतिर्नियमा पालनीया भवन्ति। एते बौद्धधर्मस्य सरक्षकस्य पोषकस्य च ( फ्रा-सत सन् ) राज्ञो द्वारा नियुक्तस्य सङ्घराज-स्यानुशासने तिष्ठन्ति। सङ्घस्य सर्वान् विवादान् सङ्घराजो राज्ञः परामर्शेन निर्णयति। सङ्घराज विहायान्यान् त्रीन् धर्माध्यक्षानपि राजैव नियुङ्क्ते। तैश्चतुर्भिः साकं भिक्षूणामूनविंशतेः सहतिः सङ्घस्य शासिका सभा भवति। तेषामाध्यक्ष्ये गुरूपाधिधारका भिक्षवो महता मठानामध्यक्षा भवन्ति। परीक्षणानन्तर केचन महाचार्या भवन्ति। स्यामदेशस्य सङ्घस्य व्यवस्था आग्लदेशस्य चर्चव्यवस्थया संवदति। स्यामदेशे चिकित्साविभाग इव धर्मविभागो राज्यस्याङ्ग विद्यते। वस्तुत इमे द्वे भूतप्रेताना निर्गमनाय द्वे भिन्ने पद्धती मन्येते।

बर्मादेशवत् स्यामदेशेऽपि विंशतिवर्षात्मके आयुषि प्रत्येकं जनेन विहारे कश्चन समयो व्यतियापनीयो भवति। तस्य न्यूनतमोऽवधिर्मासद्वयं भवति। केवलं वर्षावासकाल एव भिक्षवो भिक्षितु बहिर्गच्छन्ति। समयान्तरे बर्माश्रीलङ्कावद् अतीवन्यूना भिक्षवो मधुकरीं समानेतु बहिर्निगच्छन्ति। शिक्षाकार्यं तेषा हस्ते भवति। अन्यच्च मन्त्रादिना औषधादिकमपि कुर्वन्ति। लघुषु ग्रामेषु तु प्रायो भिक्षवः शिक्षादिलोकोपकारके कार्ये व्यापृता भवन्ति, किन्तु महत्सु मठेषु आनन्दमय जीवनं व्यत्येतु दण्डादात्मान रक्षितु वापि बहवो जना भिक्षुत्व स्वीकुर्वन्ति। पुनरपि स्यामदेशेऽनुशासनकार्यं कठोर विद्यते। कृतापराधो भिक्षुः सङ्घाद् बहिष्क्रियते, राजपुरुषा निर्दयं तं दण्डयन्ति।

**धार्मिकाणि पर्वाणि**—स्यामदेशे बौद्धपर्वाणि महता समारोहेण पाल्यन्ते। वर्षस्य षष्ठकृष्णपक्षस्य पञ्चदशे दिवसे भगवतो बुद्धस्य जन्मबुद्धत्वप्राप्तिनिर्वाणपर्व भवति। दिनत्रय धर्मग्रन्थाना श्रवण भवति दानञ्च दीयते। तदानीं स्यामवासिनः श्राद्धसदृशमेकं कर्मानुतिष्ठन्ति। तेषु दिवसेषु भिक्षवो मधुकरीमानेतुं बहिर्न गच्छन्ति, किन्तु विहाराद् बहिरेव स्वभिक्षापात्राण्ये-कस्यां पङ्क्तौ निदधति। श्रद्दधाना भक्तास्तेषु पात्रेष्वोदन सूप भोज्यान्तराणि च स्वय निक्षिपन्ति, ततश्च विहारे धर्मोपदेशं शृण्वन्ति। यदा भिक्षवो भोक्तु प्रवर्तन्ते तदा जना समीपस्था नदीं गत्वा जल प्रक्षिपन्तः प्रार्थयन्ते यदिद भोजनमस्माक दिवङ्गताना पितॄणा सम्बन्धिनाञ्च लाभाय भवतु[1]। दिवसस्य शेषे भागे शोभायात्रया रजन्या प्रकाशैश्च सम्मद विदधति। तस्मिन्

---

१. यथा वारिवहापूरा परिपूरेन्ति सागरम्।
एवमेव इतो दिन्नं पेतानं उपकप्पति॥

काले द्यूतं तत्सदृशीमन्या वा क्रीडा कुर्वन्ति, द्यूतविरोधिनो नियमा कश्चित्कालं यावत् स्थगिता भवन्ति। नूतनस्य संवत्सरस्य पर्व दिनत्रयमायोज्यते। प्रथमं दिनद्वयं भक्ता बुद्धस्य मूर्त्तिं पुष्पैरर्चन्ति, भिक्षुभ्योऽन्नवस्त्रादिकं ददति, धनिनस्तान् भोजयन्ति धर्मकथाश्च शृण्वन्ति, नक्तं भूतप्रेतानामपसारणाय भुशुण्डीः शब्दयन्ति। तृतीयस्मिन्नहनि भिक्षून् विहाय सर्वे जना अक्षैर्दीव्यन्ति। तृतीयस्मिन् पर्वणि सोंगक्रन इति स्थाने मूर्तयोऽभिषूयन्ते। वर्षर्तो पश्चात् कठिननामके पर्वणि भिक्षुभ्यो राजद्वारा चीवराणि वितीर्यन्ते। १२९२ तमख्रीष्टीयाब्दस्य रामश्वो-महोङ्कस्योपरि उद्धृतेऽभिलेखे कठिनपर्व मास यावत् प्रचलति स्म इति वर्णित विद्यते। अद्यावधि प्रतिवर्षम् अक्तूबरनवम्बरमासयो राजा तस्य कर्मचारिणो वा बौद्धमन्दिरेषु चीवर वितरीतु गच्छन्ति।

**हिन्दुप्रभावः**—स्यामदेशस्य ब्राह्मणाः (क्रम)।

बौद्धधर्मस्य प्रधान्येऽपि स्यामदेशे पौराणिकधर्मस्य यावानधिकः प्रभावोऽस्मिन् समये दरीदृश्यते तावान् बालिभिन्नेऽन्यस्मिन् स्थाने न। प्रभावोऽयं ब्राह्मणेषु राजसभाया विधिषु पर्वसु सस्कारेषु कलासाहित्यक्षेत्रयोश्च स्पष्टो विद्यते। स्यामदेशस्य ब्राह्मणाना पूजास्थानमन्दिरेषु (वतबोत-क्रम) केचन ब्राह्मणाः (क्रम) अद्यावधि तिष्ठन्ति। तानि मन्दिराणि स्याम-ब्राह्मणवद् जीर्णावस्थायां सन्ति, तेषु त्रिमूर्तेर्विशालाः प्रतिमाः सन्ति। ब्राह्मणाना मुख्यः 'महाराजगुरुवृद्धि' (क्रः महाराक्सारुबुविरिथ) इत्युच्यते। क्रमपदवाच्याः पञ्चमषष्ठ-शतकयोर्धार्मिकात्याचारेण पीडिता भूत्वा भारतात् पेगू-प्रदेशागताना ब्राह्मणाना वशजा वयमिति प्रतिपादयन्ति। ते पौराणिकदेवपूजकाः सन्ति। विशाला शिखा दधति। वर्षे सकृद् बङ्काकनगरे शोभायात्रा कुर्वन्ति। तेषा सस्कृतस्योत्तम ज्ञान नास्ति। ते सस्कारविधिषु पालिं प्रयुञ्जते। तेषा मुख्य कार्यं कम्बुजदेशस्य बकूवद् राजकीयोत्सवेषु भागग्रहण विद्यते। ते राजकुमाराणा नगराणा मन्दिराणा प्रासादाना हस्तिनाञ्च राजकीय सस्कृत नाम कुर्वन्ति। राजकीयविधिषु श्वेतवस्त्राणि शङ्खाकृत्युष्णीषान् परिदधति। उत्सवेषु हिन्दुमूर्तीर्हस्ते धृत्वोपस्थिता भवन्ति। राजसभाया तैर्बौद्धभिक्षुभिरिव महती प्रतिष्ठा प्राप्यते। राज्याभिषेकविधिस्तेषामाध्यक्ष्ये भवति। तेषु केचन ज्योतिर्विदो (होन, होरु = स० होरा) भवन्ति। तेभ्यो गणितफलितज्यौतिषकार्यं समर्प्यते। ते वर्षणावर्षणे शुभाशुभे मुहूर्ताश्च सूचयन्ति। ते जन्मकुण्डलीमपि कुर्वन्ति। इत्थ प्रतीयते यद् यदा स्यामदेशः कम्बुजदेशस्याङ्गमासीत् तदा भविष्यज्ञानस्य शकुनविचारस्य च केचन विषयो जनेषु बद्धमूला जाताः। बौद्धधर्मस्य नूतनोऽपि प्रवाहस्तस्योन्मूलन कर्तुं न पारितवान्। बौद्धभिक्षवस्तत्कर्म न कुर्वन्ति स्म यतस्तद् बुद्धेन निषिद्धम्, जनास्तदर्थं भिक्षुषु न विश्वसन्ति स्म। कारणं किमपि भवतु, तेषामावश्यकविधीना कृते स्यामदेशे ब्राह्मणानामावश्यक-तासीत्। काले काले लिगोरादिप्रदेशेभ्यो नूतना ब्राह्मणा आगच्छन्ति स्म, राजसभायाञ्च तेषा प्रभावोऽक्षुण्णोऽभूत्। ज्योतिर्विदोऽतिरिक्ताः केचन ब्राह्मणा मन्दिरेषु आचार्या अपि सन्ति।

**पर्वाणि**—स्यामदेशेन कानिचित् पर्वाणि हिन्दुभ्यो गृहीतानि। प्राचीनभारते कृषेरुत्सवा महता समारोहेणायोज्यन्ते स्म। गृह्यसूत्रे हलकर्षणविधेर्विस्तरेण वर्णनमस्ति। बौद्धग्रन्थेषु

राजा शुद्धोदनः सामात्यो महता समारोहेण हलकर्षणपर्व समायोजन् दृश्यते। स्यामदेशेऽस्य स्मारकं रेकना-या कर्षणपर्व विद्यते। तत्र कृषिमन्त्री राज्ञः प्रतिनिधिर्भवति। पूर्वं स तस्मिन् दिने समुद्घाटितेभ्यः सर्वेभ्य आपणेभ्यः स्वेच्छया कर गृह्णाति स्म, किन्त्वद्यत्वे एकया शोभा-यात्रया बङ्काकनगराद् बहिर्दुलित ( तुषित ) स्वर्गनामके राजोद्याने गच्छति। तत्र संयुक्तवृषभ-द्वयेन हलेन भूमिर्विदीर्यते।

दोलापर्व भारते वैदिककालतः प्रचलित विद्यते ( कीथ. ऐतरेय ब्राह्मण पृ० १७४–४८)। अद्यावधि तत्पर्व ग्रामेषु श्रावणे मासे हरितवर्णाया क्षितौ महता समारोहेणायोज्यते। स्यामदेशे तत् थिब चिंग-चा इति नाम्ना प्रसिद्ध विद्यते। तन्नितान्त समीचीनरीत्या समायोज्यते। एकस्य विशिष्टस्याधिकारिणोऽध्यक्षताया चत्वारो ब्राह्मणा उन्नतान् शङ्क्वाकारकानुष्णीषान् परिदधतः शतफीटपरिमितोन्नतस्थाने बद्धाया दोलायामुपविशन्ति। दोलायाः किञ्चिद् दूरे उन्नता रूप्यकपेशी लम्बते। दोलामारुढैः सा दन्तैर्गृह्यते। यदा त्रिश्चतुर्वा सा गृह्यते तदा दोलाया अधः पवित्र जल प्रक्षिप्य पर्वणः समाप्तिर्भवति।

सायंकाले भारते गङ्गायमुनयोस्तीरे प्रतिदिन दीपप्रवाहस्य समीचीनो विधिरद्यत्वे सम्पद्यते, सोऽविस्मरणियो भवति। स्यामदेशेऽस्य लोईकथैग ( =बेडा ) इत्युच्यते। तत्र लघुक्रीडनक-तुल्यनौकासु पोतेषु च दीपान् प्रज्वाल्य तै. सह धूपपुष्पमालादिक समर्प्य मीनमनद्या प्रवाहयन्ति।

**संस्कारः**—हिन्दुधर्मस्य षोडशसंस्कारेषु चूडाकर्णवेधसस्कारौ हिन्दचीनदेशे प्रचलितौ स्तः। कर्णवेधो बर्मादेशे लओसे चाधिक्येन भवति, किन्तु स्यामदेशे कम्बुजदेशे च कोनचुकस्य मुण्डनस्य वाऽधिक महत्त्व विद्यते। बालकानामेकादशवर्षपर्यन्त त्रयोदशवर्ष पर्यन्त वा केशा वर्द्धन्ते। ततो दैवज्ञनिर्दिष्टे मुहूर्ते स्यामवासिनो जीवनस्य सर्वाधिको महत्त्वपूर्णः सस्कारश्चूडाकर्तनमङ्गल निष्पाद्यते। तस्मिन्नवसरे बालकस्य सर्वे सम्बन्धिनः समवेता भवन्ति। भिक्षवो बालकस्य शिरोऽभिलक्ष्य मन्त्रान् पठन्ति। बालकस्य कश्चनात्मीयः केशान् कृन्तति, वाद्यानि च वाद्यन्ते। ततः सर्वे कुटुम्बिनो बालायोपहार समर्पयन्ति। राजकुमाराणा मुण्डनविधौ लक्षाधिकानि रूप्यकाणि प्राप्यन्ते। ततो बालकस्य सरक्षकाः सर्वानतिथीन् भोजयन्ति। अवसरेऽस्मिन् धनिनो बहुधनं वियन्ति। व्ययभारवहने असमर्थाना निर्धनाना राजद्वारा वर्षे सकृद् बङ्काकमन्दिरेषु मुण्डनविधिर्भवति। एको ब्राह्मणो राजकुमारस्य शिरः पवित्रेण जलेन सिञ्चति, केशान् त्रिधा विभजति। ते भागाः शिवस्य विष्णोर्ब्रह्मणश्चाशा मन्यन्ते। राजा स्वहस्तेन राजकुमार मुण्डयति। द्वौ ब्राह्मणौ शङ्खौ धमतः। ततो राजकुमार एक कृत्रिमं कैलास-पर्वतं नीयते। तत्र राजा शिवरूपेणोपविशति। उच्यते यत् शिवेन कैलाशपर्वते स्वपुत्रो गणेशो मुण्डितः। विधिरयं स्मारकोऽस्ति तस्य। मुण्डनानन्तरमेको ब्राह्मणः पुरोहितो राजकुमारस्य शिरसि श्वेत तूलनिर्मित मुकुट निदधाति। पर्वेद सप्त दिनानि प्रचलति। उत्सवानन्तरं राज-कुमारेण कञ्चित् काल विहारे निवसनीय भवति। स्यामदेशीयमुण्डनस्य विवरणेनेदं प्रतीयते यदय सस्कारो भारतीयोपनयनसस्कारेण तदा सम्पाद्यमानेन मुण्डनेनात्यन्तं सादृश्यं समादधाति।

कलाक्षेत्रेऽपि हिन्दुप्रभावो दृश्यते। बङ्ककनगरस्य राजमन्दिराणां मूर्तिषु रामायणस्य कथाश्चित्ररूपेणालङ्कृता विद्यन्ते। स्यामदेशस्य शिल्पिनो बौद्धसाहित्ये वर्णितानां यमराज-(योम्मरात)-मार(फयामन)-इन्द्र(फ्रा-इन)प्रभृति-हिन्दुदेवानां मूर्तीः कुर्वन्ति। अन्यच्च स्यामीयमन्दिरेषु वृषारूढस्य शिवस्य (एसु-एन) गरुडवाहनस्य नारायणस्य विष्णोर्वा (फ्रः नकै) गणेशस्य च मूर्तयो लभ्यन्ते। पूर्वं सूर्यवंशरामेण परमेश्वरस्य विष्णोश्च मूर्तीनां प्रतिष्ठापनस्योल्लेखो जातः। बङ्ककनगरस्य वत-फोप्रभृतिमन्दिरेषु लिङ्गपूजा भवति, तत् प्राचीने काले व्यापकशैवोपासनाया अवशेषमात्रमस्ति। स्यामदेशे एका किंवदन्ती प्रसिद्धा विद्यते यद् बुद्धशिवौ द्वावपि परस्परमदृश्यत्वं विधातुमवाञ्छिष्टाम्। अन्ते बुद्धः शिवस्य शिरसि समुपविष्टः, शिवस्तं द्रष्टुमसमर्थः स्व पराजयं स्वीकृतवान्। अस्याः कथाया उद्देश्य सम्भवतः शिवस्य शिरसि वर्तमानाया लघुमूर्तेर्व्याख्या विद्यते। मज्झिमनिकायेऽप्येनादृश्येव कथा वर्तते। पुराणानां सुमेरुपर्वतं स्यामदेशीयधर्मग्रन्थेषु चित्रेषु च विश्वस्य केन्द्रं मन्यते।

कला—कलाक्षेत्रेऽपि स्यामदेशेन भारतमनुकृतम्। स्यामदेशे यद्यपि कम्बुजदेशस्य हिन्दुख्मेरकलाया अपि प्रभावो वर्तते, किन्तु परिपक्वस्यामीयकलाया मुख्यं स्रोतो भारतमेवासीत्। तत्प्रभावो न केवलं स्यामदेशस्य शिल्पवास्तुकलयोर्दृश्यते, किन्तु रजतरङ्गतक्षणादिलघुकलास्वपि प्रत्यक्षो विद्यते। उत्खननेन प्राप्ताः प्राचीना मूर्तयो देवालया वर्तमाना वास्तवोऽपि तत्समर्थयन्ते। चतुर्दशशतकपर्यन्तं हिन्दुप्रभावेण सम्पृक्तस्य कम्बुजराज्यस्य पराधीनताया वर्तमानत्वेन स्यामदेशे हिन्दुमूर्तिमन्दिराणि पर्याप्तानि सन्ति। यथा यथा वर्तमानयुगाभिमुखमागम्यते तदा तदा बौद्ध-प्रभावस्य वर्द्धनेन साकं तेषां न्यूना सख्या दृश्यते।

मूर्तिकला—उत्खनने प्राप्ता गणेशस्य विष्णोर्लक्ष्म्याः शिवस्य च कांस्यमूर्तयो बङ्कक-नगरसंग्रहालये सन्ति। ता मूर्तयो द्विधा विभज्यन्ते। प्रथमा मूर्तयः स्यामदेशे निवासं कुर्वतां चतुराणां भारतीयशिल्पिनां करस्य शोभनाः कृतयः सन्ति, द्वितीयाश्च स्थानीयस्यामीयकला-काराणां रचनाः। पाश्चात्यमूर्तिषु पौरस्त्यप्रतिमावत् स्वच्छत्वं सौन्दर्यञ्च नास्ति। केचन शिवताण्डवमूर्तयो दक्षिणभारतस्य नटराजं शिवं स्मारयन्ति। एता दक्षिणभारतात् समागतैः शिल्पिभिर्निर्मिताः सन्ति, तासु च स्यामस्य कश्चन प्रभावो नास्ति। इत्थमेव गौतमबुद्धस्य भूमिस्पर्शमुद्रासीनप्रभृतयः काश्चन कांस्यमूर्तयो भारतीयप्रतिकृतिभिरतीव संवदन्ति। केषाञ्चित् पाश्चात्यानां स्यामदेशस्य कलाकाराणां रचनाः सन्ति।

लोपबुरीप्रदेशस्य ध्वंसावशेषैर्ज्ञायते यद् हिन्दुमन्दिराणि केन प्रकारेण बौद्धदेवालयैः परिणतानि भवन्ति। अत्रैकस्मिन् प्राचीने मन्दिरे समानौन्नत्यदैर्घ्यविशालतानि त्रीणि प्रकोष्ठानि सन्ति। तत्र प्रवेष्टुं न्यूनौन्नत्यं वर्गाकारं द्वारमस्ति। तत्र सम्भवतो ब्रह्मणे विष्णवे शिवाय च समर्पितानि त्रीणि शिखराणि सन्ति। इदं देवस्थानं कम्बुजदेशस्य हिन्दुमन्दिरैः संवदति। तत्र पूर्वं हिन्दुदेवतानां पूजा भवति स्म, परमद्यत्वे बुद्धस्य पुरुषप्रमाणा मूर्तयः, सन्ति तासाञ्च पश्चाद् विस्तृतफणो नागराजो विराजते। युआनसिंगस्य मन्दिरं दक्षिणभारतस्य गोपुरशैलीकमन्दिरा-ण्याश्रित्य निर्मितानि सन्ति। पेत्रबुरी मन्दिरमपि तादृशमेव विद्यते। पूर्वमिदं वैष्णवमन्दिर-

मासीत् । तत्र गरुडारूढस्य विष्णोर्मूर्तिर्द्वारपालश्च निर्मितौ स्तः । पश्चादत्र बौद्धमूर्तयोऽस्थाप्यन्त ।

वर्तमानसमये स्यामदेशे भारताद् गताना बौद्धवास्तूनामेवाधिकः प्रचारो विद्यते । अधुना स्यामदेशे धार्मिकस्थानानि वतशब्देन प्रतिपाद्यन्ते । शब्दोऽय संस्कृतवास्तुशब्दस्य (पालि-वत्थु) अपभ्रशोऽस्ति । महत्सूद्यानेषु निर्मितानि तानि वतसज्ञकानि लघुनगरतुल्यानि सन्ति । तेषु बौद्धमन्दिराणि भिक्षुनिवासस्थानानि धर्मशाला उपदेशभवनानि भवन्ति, किन्तु वास्तुदृष्ट्या फ्राचेदि फ्राप्राग इति विशेषरूपेणोल्लेखनीये स्तः । फ्राचेदि इति चैत्य भवति, सिंहलस्य दागोवत् तथा बर्माया जेदिवद् भारतीयशैल्या निर्मीयते, किन्तु स्तूपानां शिखर घण्टाकारक भवति । स्यामदेशीयचैत्यस्योपरितनो भागस्तथा कृशो लम्बश्च क्रियते यदय वैजयन्तीदण्ड इव प्रतीयते । फ्रः प्राङ्गस्य पूर्व निर्देशो जातः । एतानि बौद्धमन्दिराणि कम्बुज-देशस्य हिन्दुमन्दिराण्यनुकुर्वन्ति । तेषा शिखराणा वैलक्षण्यमेक विद्यते यत् चैत्याना शिखराग्रवत् तेषामग्राणि यथायथ सरलानि न भवन्ति, किन्तु तत्र शिवस्य त्रिशूलसूचकास्त्रयोऽर्द्धचन्द्रा भवन्ति ।

**भाषा साहित्यञ्च**—षष्ठशतकादारभ्याष्टमशतकपर्यन्त दक्षिणभारतलिप्याधारेण विहि-तया लिप्या स्यामीयवर्णमालाया निर्माणस्य प्रागुल्लेखो जातः । स्यामीयभाषाया यद्यपि भारतीय-भाषापरिवारेण कश्चन सम्बन्धो न वर्तते, पर सस्कृतपालिभाषयोस्तत्र महान् प्रभावो दृश्यते । अतीते काले तत्र शतानि शब्दाना भाषाभ्यामाभ्या गृहीतानि, अद्यत्वे चापि यदा स्यामवासिना टेलीफोन-टेलिग्राफ-प्रभृत्याधुनिकशब्दानामनुवादस्यावश्यकता भवति, तदा सस्कृतस्य स्रोतः शरणीक्रियते तैः । तदर्थञ्च ते दूरश्रवण-दूरलेखशब्दौ कल्पयन्ति । स्यामीयसाहित्ये भारतीयाना वाराणा मासानाञ्च प्रयोगो भवति । आदित्यवारस्तत्र वन-अथित इति, मङ्गलवारः—वन-अङ्गरवत इति (पालि—अङ्गारवरो), बुधवारः—वन फ्रा हुल इति च जाताः । अभिलेखेषु वैशाख-मृगशिरआषाढप्रभृतयः प्रयुज्यन्ते स्म ।

साहित्यक्षेत्रे बौद्धग्रन्थानामधिकः प्रभावः स्वाभाविको विद्यते । तेषा ग्रन्थाना टीकारूपेण कतिपयस्वतन्त्रग्रन्थरूपेण चापि तत्र पालिभाषाया नूतन साहित्यमलिख्यत । स्यामीय वाङ्मय बर्मावद् विशाल तु नास्ति, परमुल्लेखनीयमवश्य विद्यते । बर्मादेशीयेतिहासे 'सासनवस' नामके स्यामभिक्षुभिर्लिखितानाम् 'सख्या—प्रकाशम्' अस्य टीका उत्तरारामस्य 'विसुद्धिमागदीपनी' सिरीमङ्गलस्य 'मङ्गलदीपनी' तथाऽज्ञातलेखकस्य 'उप्पात—शान्तिः' इत्येतेषां पुस्तकाना वर्णन विद्यते । इमाः प्रायः षोडशशतकस्य रचनाः सन्ति । मध्ययुगे चींगमै इत्यस्य नवपुरविहारो वाङ्मयस्य निर्माणस्यैकं महाकेन्द्रमासीत् । व्याकरणस्येतिहासस्य कलायाश्चाप्यनेके ग्रन्था लिखिताः । बोधिरसिनामकेन भिक्षुणा १४६०–१५३० तमखीष्टीयाब्दपर्यन्य चामदेवीवसनामकः सिद्धिंगनी-दाननामकश्चेतिहासग्रन्थौ लिखितौ, किन्तु ततोऽधिकमहत्त्वपूर्णा रचना रतनपञ्ज(प्रज्ञ)स्य १५१६ तमे खीष्टीयाब्दे लिखिता जिनकालमालिनी विद्यते । तत्र बौद्धधर्मस्य जन्मनो महासभाया लङ्काया प्रचारस्य स्यामीयधार्मिकेतिहासस्य च पूर्णं विवरणमस्ति । मूर्तिकलाविषये बुद्धलक्षणनामको ग्रन्थो लिखितः ।

बौद्धसाहित्यातिरिक्तेन भारतीयवाङ्मयेनापि स्यामदेशः प्रभावितः। स्यामीयनियमाना पुस्तकानि धर्मशास्त्रं लक्ष्मगफ्रः-थम-सत, फ्रः-तम्र, फ्रतमनोन इत्याख्यानि सन्ति। बर्मादेशवत् तान्यपि मनोः (थनमन्नू) तथान्येषा भारतीयस्मृतिकाराणा धर्मशास्त्राण्याश्रित्यालिख्यन्त। स्यामीयचिकित्साशास्त्रस्यादिस्रोतो भारतमेव मन्यते। तेषां मतेऽस्य प्रवर्तको भगवतो बुद्धस्य शिष्यः कुमारभच्चनामा (कुमारभृत्यजीवनः) आसीत्। स्यामीयभाषायामस्यैकस्य ग्रन्थस्यानुवादो रोरव-निधान(रोग-निदान)नाम्ना कृतः। आयुर्वेदस्य ग्रन्थवत् तस्मिन् शरीरं पाञ्चभौतिकं मतम्।

स्यामीयसाहित्ये रामायणस्य महाभारतस्य चानेकाः कथा समुपलभ्यन्ते। 'रामकेउन' नामको ग्रन्थो रामायणस्य स्यामदेशीयरूपमस्ति। अत्र रामस्य (फ्रा-राम) तस्य भ्रातुर्लक्ष्मणस्य (फ्रालक) च कथा विद्यते। रामस्य पत्न्याः सीतायाः (नगसेदा) अपहारकस्य रावणस्य (सौतलकन या दशकन्ध = दशकण्ठ) रामस्य च सघर्षस्येतिहासो विद्यते। बालि-(फली)-सुग्रीव(सुकक्रिय)योर्वर्णनं 'फनान सननाग'-'क्रिया-फली-सुकरिय'नामकयोर्द्वयोः पुस्तकयोर्विद्यते। स्यामदेशस्य सर्वोत्कृष्ट नाटकम् 'उन्नारुत'नामक महाभारते वर्णितस्या निरुद्धस्य कथया सम्बद्धं विद्यते।

**शासनव्यवस्था**—स्यामदेशस्य शासनव्यवस्थायाः प्रत्येकमंशो भारतस्य राजनीतिक विचारैः शासनपद्धत्या च प्रभावितो विद्यते। राज्ञः स्वरूपम्, उपाधयः, राज्याभिषेकः, राजचिह्नम्, पदाधिकारिणः, न्यायप्रबन्धश्च प्रायः सर्वमेतद् भारतीयमस्ति। भारते इव तत्रापि राजा देवस्वरूपोऽनेकानुपाधीन् दधाति। ते उपाधयस्तथा विशाला भवन्ति यदनेकासु पङ्क्तिषु लिख्यन्ते तथा ते एकेन श्वासेन पठितु न शक्यन्ते। तेषु केषाञ्चित् पालिरूपाणीत्थं सन्ति प्रः बुद्ध, प्रः नारायण, प्रकरुणाप्रवाद, एक छात्र, ओरस ईश्वर, परम महाक्रसान (महाश्वत्रियः क्षत्रिय), चक्रक्रपहत (चक्रवर्ती) इति। स्यामराजस्याभिषेकविधौ हिन्दुधर्मस्य प्रभाव दर्श दर्श विस्मयो भवति। १९२६ तमे खीष्टीयाब्दे प्रजाधिमोकस्य यया रीत्या राज्याभिषेकोऽभूत् ता पठन् प्रत्येमि यदहं भारतस्य कस्यचन हिन्दुनरेशस्य राज्यारोहणस्य वृत्तान्तं पठामि। तदा स्यामदेशस्य सर्वाभ्यो महानदीभ्यः पवित्रं जलमाह्रियते। राजाष्टास्र सिंहासनमुपविशति। तस्य पार्श्वेऽष्टाना दिशां प्रमुखा ब्राह्मणा उपविशन्ति। प्रत्येक दिशाया ब्राह्मणस्तस्मै आशीर्वचन ददाति, तस्य चिरायुषो दशरथयशसः कामनां करोति, तस्या दिशश्च प्राणिना रक्षा प्रार्थयते। ततः स्वदिशाया मन्त्रपूतेन जलेन तमभिषिञ्चति। तदा राजा तस्या दिशः प्रजा बौद्धसङ्घञ्च रक्षितु प्रतिजानाति। अष्टासु दिशासु तस्मिन् विधौ पूर्ति गते राजा पुरोधसा प्रदत्त मुकुटं दधाति। भारतवत् स्यामदेशे श्वेतच्छत्रम्, चामरम्, खड्गः, राजमुकुटम्, राजपादुका इत्येतानि पञ्च राजचिह्नानि सन्ति।

राजा शासनममात्यानामेकस्याः परिषदः साहाय्येन करोति। परिषदः प्रधानमन्त्री, पुरोहितः, छत्रग्राहकः, खड्गग्राहकः, हस्त्यध्यक्षः, अश्वाध्यक्षः, देवी, राज्ञो नवरत्नरक्षकः, राजपर्यन्त प्रजाना प्रार्थनानेताऽधिकारी चेत्येते सदस्या भवन्ति। राज्ञः केचन मुख्याधिकारिणः

श्रीकैलासः, राजपुरुषाध्यक्षः, यमराजः, प्रधानो न्यायाधीशः, कोषाध्यक्षः, अमात्यः, नगरे न्यायप्रबन्धको नगरपालकश्च सन्ति। अपराध परीक्षितु प्राचीनभारतवत् तत्रापि वह्निजल-प्रभृतिदैवपरीक्षाः प्रचलन्ति स्म। स्यामीयनियमास्त्रिधा विभज्यन्ते—(१) अधिकारिणा कर्तव्यानि विशेषाधिकाराश्च, (२) प्राचीनस्यामीयनियमाः, (३) राजकीयाज्ञाना पुस्तकानि। स्यामदेशीयधर्मशास्त्र भारतीयधर्मशास्त्राधारेण विहित विद्यते। तत्र मनुस्मृतिवत् सर्वे व्यवहारनियमा अपराधनियमाश्चाष्टादशसु पादेषु विभक्ताः सन्ति। सप्तप्रकाराणा दासाना विभागोऽपि मनुवत् (८।४१५) विद्यते। भारतीयधर्मशास्त्राणा नियमोऽस्ति यद् वृद्धया मूलधनस्य द्विगुणाधिकया न भाव्यम्। स्यामीयन्यायालयेष्ववद्यत्वेऽपि नियमस्यास्य पालन भवति।

उपसंहारः—स्यामदेशस्य सस्कृतेर्मूल स्रोतो भारतवर्ष विद्यते। षोडशे शतके पाश्चात्याना प्रवेशात्पूर्व देशोऽय भारतीयप्रभावक्षेत्रे आसीत्। स्यामवासिनो जात्या भाषया च बर्मावासिवत् चीनदेशेन सम्बद्धा आसन्, चीनदेशेन स्यामदेशस्य सस्कृतौ कश्चन प्रभावोऽपि स्थापितः, पर तत्र महान् प्रभाव आर्यावर्तस्यैवाभूत्। स्यामदेशस्य प्रतिवेशिषु मलायाप्रभृति-देशेषु भारतीय प्रभावो लोप प्राप्तः, बर्माया कम्बोडियायाम्, अनामे च बौद्धधर्मस्यैव प्रभावोऽवशिष्टो विद्यते, किन्तु स्यामदेशे अल्पैर्ब्राह्मणैः शतानि वर्षाणि यावद् राजकीयसमारोहेषु पर्वसु च हिन्दुप्रभावोऽक्षुण्णो विहितः। स्यामदेशः स्वकीयं गुरुमद्यापि स्मरति। स्यामीयभूपालो राज्याभिषेककाले ब्राह्मणेभ्योऽभिषेकं शुभाशीर्वचनञ्च गृह्णाति। राजकुमाराणा चूडाकरणसमये शिवः कैलासश्च स्मर्यते। दीपप्रवाहः, कृष्युत्सवश्च भारतस्यातीतसास्कृतिकसम्बन्धमद्यापि जीवयतः। तस्य भाषा साहित्य धर्मः स्मारकाणि च भूतकालस्य तद्भव्य दृश्यं दर्शयन्ति यदा द्वावपि देशौ परस्पर सस्कृतेरेकस्याः स्नेहसूत्रेण सम्बद्धावास्ताम्।



# पञ्चदशोऽध्यायः

## पाश्चात्त्यदेशेषु धर्मेषु च भारतीयसंस्कृतेः प्रभावः

### पाश्चात्त्यजगति भारतीयसंस्कृतेः प्रभावः

### अवतरणिका

भारतीयसंस्कृतेर्धारा मुख्यतः स्वाभाविकरूपेणाग्नेयदिशि प्रावहत्। बहुवार सा काश्या गङ्गावदुत्तरवाहिन्यपि अभूत्। अतस्तया भारतस्य दक्षिणपूर्वा उदीच्याश्च देशा भारतीय-प्रभावेण समीचीनतयाऽऽप्लाविताः, किन्तु पश्चिमेऽपेक्षाकृतोऽस्याः संस्कृतेर्न्यून. प्रभावोऽभूत्।

पाश्चात्त्यैशियामहाद्वीपो योरोपमहाद्वीपश्च पूर्वदक्षिण एशियातोऽनेकधा भिन्नावास्ताम्। यश्च प्रदेशो भारतीयानामागमनात् पूर्वमज्ञानान्धकारे निमग्न आसीत्, तत्र सभ्यताज्योतिः प्रज्वलयितु वन्यजातीः सुसंस्कर्तु च गौरवमस्य देशस्यावासकाना विद्यते, किन्तु भारतात् पश्चिम-देशानामियमवस्था नासीत्। खीष्टीयाब्दस्य चतसृषु सहस्राब्दीषु नीलनद्यास्तटेषु मिश्रवासिभिः, दजलाफरातद्वारा सिच्यमानायां मेसोपोटामियाख्यस्य सस्यश्यामलाया द्रोण्या सुमेरी अक्कदी-अमोरीजातिभिः, असीरियावासिभिर्बाबुलवासिभिश्च, भूमध्यसागरवर्तिषु प्रदेशेषु फिनिशीया-वासिभिः क्रीटवासिभिश्च, फिलस्तीनदेशे यहूदीसंज्ञकैः, ग्रीसद्वीपेषु यूनानवासिभिर्विशिष्टाना संस्कृतीना विकासः कृतः। पूर्वदक्षिण-एशियाख्येन देशेन कश्चन महान् धर्मो नोत्पादितः, किन्तु पश्चिम-एशियादेशे ईसाईनामकस्य इस्लामनामकस्य च द्वयोर्विश्वधर्मयोराविर्भावोऽभूत्। भारतीयधर्मेण साकं भारतीयसंस्कृतिः कम्बुजदेशे चाम्पादेशे सुवर्णद्वीपे सिंहले स्यामे मध्य-एशियाया चीने जापाने च प्रसृता। पाश्चात्त्याना देशाना पार्श्वे खीष्टीयाब्दात् पर स्वकीयो निश्चितो व्यवस्थितश्च धर्म आसीत्। ततश्च पूर्वं विशिष्टाः संस्कृतय आसन्। सुसंस्कृतेषु राष्ट्रेष्वात्मगौरव भवति, तानि स्व जात्यन्तरापेक्षयोन्नतं सभ्यञ्च मन्यन्ते। जात्यन्तराणि तत्सम्बद्धानि सर्वाणि वस्तूनि तिरस्कुर्वन्ति। यहूदीसंज्ञका जात्यन्तराणि 'जैण्टाइल' शब्देनाक्षिपन्ति स्म, यूनानवासिनो बर्बरशब्देन भारतीयाश्च म्लेच्छशब्देनैतानवमन्यन्ते स्म। दशायामस्या जातयः परस्परं कामं पृथग् निवसन्ति, तासाञ्च परस्परं प्रभावोऽपि न्यून एव भवति। अन्यच्च पाश्चात्त्य-देशे एशियाधर्मान् प्रति विशिष्टमौदासीन्य विरोधिभावश्चावलोक्येते। खीष्टानुयायिधर्मस्य प्रादुर्भावोऽवश्यम् एशियामहाद्वीपेऽभूत्, किन्तु पाश्चात्त्यै रोमदेशे विकसितः खीष्टानुयायि धर्मः स्वीकृतः। इस्लामधर्मेण एशियामहाद्वीपदेशे महत् साफल्य प्राप्तम्, किन्तु यवनाना स्पेनदेशे पूर्वदक्षिणयोरोपे चाक्रमणानन्तरं बहुकाल शासनानन्तरमपि स्वल्पा एव जना मुहम्मदस्या-नुयायिनोऽभूवन्। यत्र तादृशीमनुकूला परिस्थितिं प्राप्यापि इस्लामधर्मोऽसफलोऽभूत् तत्र यदि भारतीयधर्मैरतीव न्यूनः प्रभावः स्थापितस्तदा तत्र कश्चन विस्मयो न कार्यः, किन्तु आश्चर्यन्तु तत्र भवति यत् तावानपि प्रभावो भारतेन कथ स्थापयितुमशक्यत।

उपर्युक्तायां प्रतिकूलपरिस्थितौ सत्यामपि पाश्चात्त्यदेशेषु भारतीयसंस्कृतेः कश्चन प्रभावोऽवश्यमभूत्। अयं द्वाभ्यां प्रकाराभ्यामभूत्, (क) उपनिवेशनद्वारा—(ख) व्यापारिसम्पर्कद्वारा। प्रथमस्य प्रभावस्य मुख्यमुदाहरणद्वयं लघु-एशिया ईरानदेशश्चास्ति। पूर्वमत्र स्थापितस्य भारतीयप्रभावस्य वर्णनं भविष्यति।

## लघु-एशिया

**स्थितिः**—अधुना यः प्रदेशस्तुर्कीपदेनोच्यते प्राचीनेतिहासे तस्य नाम लघु एशिया आसीत्। तुर्का अत्र पञ्चदशशतके खीष्टीयाब्दे समागतास्ततश्च तेषां प्राधान्येनायं देशस्तुर्कीपदेन व्यपदिष्टः। अस्य लघु-एशिया इत्यभिधानस्येदं कारणमासीद् यद् यूनानवासिभिरस्य प्रदेशस्य एशिया (उदयदेशः) इति संज्ञा कृता। पश्चाद् यदा सा सकलस्य एशियामहाद्वीपस्य कृते व्यवह्रियते स्म तदाऽस्य तदपेक्षया लघुत्वेन लघु एशिया इति पदेन व्यपदेशः समुचितोऽमानि।

लघु-एशिया प्रधानतया अनातोलिया इत्यस्य २५०० फी० समुन्नतोपत्यका विद्यते। तत उत्तरस्मिन् पोण्टिकनामा, दक्षिणस्मिन् टारसनामा, पूर्वस्मिन् आमीनियानामा च पर्वतोऽस्ति। टारसगिरिणा प्रदेशोऽयं शामादेशात् पृथक् क्रियते। अत्र च सिसिलियानामकोऽत्यन्त उर्वरः प्रदेशो विद्यते। लघु-एशियाख्यस्य देशस्योपत्यका प्राचीनकालतः पशुपालकजातीनामावासस्थानमासीत्। सरविलियमरेम्जेमहोदयस्य मतानुसारेण संसारेऽजाविवराहाः सर्वप्रथममत्रैव गृह्यकाः कृताः, किन्तु यदा कदाऽयनावृष्ट्या पशुपालकानां पशवः क्षुधा पिपासया च म्रियन्ते स्म तदा ते दक्षिणस्योर्वरतीरेषु शामदेशस्य इराकदेशस्य च सस्यश्यामलभूभागे चाक्राम्यन्ति स्म। अनातोलियात उत्तरस्मिन् हेलिसनद्याः पूर्वस्मिंश्चायस उत्तमखनिरासीत्। एतन्निर्मितैः शस्त्रैरत्रत्या एव विशालं साम्राज्यं स्थापयितुं सफला अभूवन्। एतद् हत्तीसाम्राज्यमुच्यते। हत्तजनाः २००–१२०० खीष्टीयाब्दपूर्वपर्यन्तं लघु-एशियायाः शामदेशस्य च शासका अभूवन्।

हत्तीजनानामितिहासस्यानेके पक्षा अद्यापि तिमिरावृताः सन्ति, किन्तु तेषां प्राचीनराजधानीहत्तशशप्रदेशात् (वर्तमान-बोगाजकुई-अंकारा) समुपलब्धैरभिलेखैरिदमसिध्यत यदस्य प्रदेशस्य मूलनिवासिनः खन्तीपदवाच्या आसन्। तेषु आर्यभाषाभाषिणो हत्तिपदाभिधानाः स्व प्रभुत्वं स्थापितवन्तः। १३८५ खीष्टीयाब्दपूर्वं हत्तीराजेन शुप्पिलुल्यूमशेन युद्धैर्मित्रत्वानुप्राणितैः सन्धिभिर्विवाहैश्चैकं विशालं हत्तीसाम्राज्यं स्थापितम्। पश्चिमायामेशियायामिदं प्रथमं शक्तिशालि सेनासम्भृतं राजनीतिकञ्च राज्यमासीत्।

खीष्टीयाब्दचतुर्दशशतकात् पूर्वमत्रत्येषु शासकेषु हत्तीजनानामतिरिक्तं भारतीयार्याणां किञ्चित्तत्त्वं समाविष्टमासीत्। तस्यानेकानि प्रमाणानि सन्ति—(१) हत्तीराजेन शुप्पिलुल्युमशेन (प्रायः १३८० ई०) प्रदेशस्यास्यैकेन मितन्नीराजेन मत्तिवजनामकेन साकं सन्धिः स्थापितः। सन्धावस्मिन् मितन्नीराजेन निम्नलिखिता देवाः साक्षिणः कृताः सन्तिः—(१) मित्रश्शिल इति, (२) असकाश्शिल इति, (३) इन्दर इति (४) न शत्तिजन्न इति च। पाश्चात्त्यानां विदुषां दृष्टौ क्रमेणेमे मित्रवरुणेन्द्रनासत्याभिधाना वैदिका देवाः सन्ति (इसा. ब्रिरा. ११।६०४)।

( २ ) बोगोजकुई-प्रदेशाद् अश्वरथधानसम्बद्धस्यैकस्य ग्रन्थस्य चत्वारि फलकानि प्राप्तानि सन्ति। ग्रन्थस्यास्य लेखको मितन्नीराज्यस्य किक्कुलीनामको जन आसीत्। अत्र रथ धावनस्य निम्नाना परिभाषाणा प्रयोगो विद्यते—एक परिवर्तनम् ( एक-वर्तन्न ), त्रीणी परिवर्तनानि ( तेर-वर्तन्न ), पञ्च परिवर्तनानि ( पञ्ज-वर्तन्न ), सप्त परिवर्तनानि ( शतवर्तन्न )। इमे शब्दा भारतीयपरिभाषाभिः सवदन्ति। संस्कृत वर्तनशब्देन साकमेकत्रिपञ्चसप्तशब्दाना समासोऽस्ति।

( ३ ) अभिलेखेष्वेषु मरि-अन्नि-नामकस्यैकस्य योद्धृवर्गस्योल्लेखो विद्यते। अनेन श्नम-देशे ( सीरिया ) खुर्रीमितन्नीराज्ये चानेकानि महत्त्वपूर्णानि कार्याणि कृतानि। मरिअन्निशब्दो वैदिकमर्य( वीरपुरुष )शब्दस्य रूपान्तरमस्ति।

( ४ ) बोगोजकुईप्रदेशस्य तैल-अल-अमनी इत्यस्य चाभिलेखेषु, फिलस्तीनस्य श्नमस्य इकारस्य च कतिपयाना राज्ञा तथा नामानि समुपलभ्यन्ते यानि भारतीयानि प्रतीयन्ते। यथा खुर्रीमितन्नीभूमिपालेषु ऋतात्मा ( अर्तम ), दशरथः ( तुशत्त ) इत्यादीनि दृश्यन्ते। फिलस्तीनस्यैकस्य राजकुमारस्य सुबन्धु( शुबन्दु )र्नामास्ति।

( ५ ) हत्तीजनाना देव एकः अक्निश इति अग्निश इति वा विद्यते। होजीमतानुसारेणेद भारतीयस्याग्निशब्दस्य रूपान्तरमस्ति ( इसा० ब्रिश० ११।६०४ )।

( ६ ) लघु—एशियायाः कसितनाम्नीमेकामन्या जातिमपि कतिपये विद्वास आर्यपदेन व्यवहृतवन्तः ( चाइल्ड-इण्डो आर्यन्स, पृ० १८ )। १७८० खीष्टीयाब्दपूर्वं तज्जातीयैर्बबुल राज्यं विजित्य तत्र ५७६ वर्षाणि राज्य कृतम्। पुनश्च बाबुलराज्यस्य सामीवशीयजनेष्वेव विलयः प्राप्तः। तेषा भाषाया अद्य यावत् चत्वारिंशदेव शब्दा मार्गिताः। अनेकेषा विदुषा मते तेषा शब्दानां संस्कृतेन सम्बन्धो विद्यते। यथा—सुरियन इति सूर्येण, मरुतस् इति मरुता, वगस् इति भगसा, शिमालय इति हिमालयेन सवादिताः सन्ति; किन्तु बहवो विद्वांसस्तेषा भारत-योरोपीयभाषाभिः कमपि सम्बन्ध न मन्यन्ते ( इसा० ब्रिरा० १३।२१३ ख )।

उपर्युक्तप्रमाणानामाधारेणाद्यत्वे सर्वैः पाश्चात्यैः पण्डितैरिद स्वीकृतमस्ति यत् तृतीय-द्वितीयसहस्राब्दीखीष्टीयाब्दपूर्वं भारतीयार्याणामेका शाखा पश्चिमदिशाया न्युषिता। खुर्री-मित्तन्नी( उत्तर-इराकस्य शामतरकस्य प्रदेशस्य )राज्य तेषां प्रधानं केन्द्रमासीत्। अथ विचारणीयः प्रश्नो विद्यते यद् भारतीया आर्या अत्र कथ समागताः? ये विद्वासस्तेषा मूल स्थान मध्ययोरोपं मध्य एशिया वा मन्यन्ते तेषां कथनमस्ति यद् भारत गच्छता शखैकाऽऽर्याणा कतिपयकालमत्र न्युषिता। ये आर्याणा मूल स्थान भारत मन्यन्ते, ते तान् भारतात् पश्चिम गता-मेका शाखा मन्यन्ते। उभयथाऽपि खीष्टीयाब्दपूर्वं लघु एशियाप्रदेशे उत्तरस्मिन् इराके शामे च भारतीयराज्यानां सत्ता निर्विवादा आसीत्।

## ईरानदेशः

पश्चिम एशियाप्रदेशे भारतीयैरार्यैरावासितो द्वितीयः प्रदेश ईरानसज्ञक आसीत्। प्राचीनेरानवासिनः स्वमार्य ( ऐर्य ) वदन्ति स्म। आर्याणा देशश्चापि आर्य ( ऐर्यान ) प्रति-

पादयन्ति स्म। अस्यैव विकृत रूपम् ईरानेत्यस्ति। १५ अगस्त १९४७ खीष्टीयाब्दात् पूर्वम् ईरानदेशोऽस्माकं पश्चिमः प्रतिवेश्यासीत्, अतीतसार्द्धसहस्रद्वयवर्षाणि तस्य सीमा भारतेन सम्बद्धा अभूवन्, भारतेन तत्र महान् प्रभावः स्थापितः। अस्यावसिका जातयो वैदिकार्याणामेव विविधाः शाखा आसन्।

पाश्चात्याना विदुषा विचारोऽयं विद्यते यत् १६००–१५०० खीष्टीयाब्दपूर्वमार्याः कृष्णसागरस्य कास्पियनसागरस्य चोत्तरतः पश्चिमाभिमुख गन्तु प्रारब्धवन्तः। मध्य–एशियात-स्तेषामेका शाखा भारत गता, द्वितीया च ईरानदेशे प्रसर्तु प्रारभत। तेषामेवैको भागो लधु–एशियाया शामे उत्तरेराके च गतः। तेषा मूलस्थानविषये विदुषा मतभेदे सत्यपि निश्चितमिद-मस्ति यदार्या ईरानदेशं पूर्वाया दिशायाः प्रविष्टाः। जगति तुरङ्गाणा गृह्यकत्व युद्धोपयोगित्व च विधातुं गौरव तेभ्य एव प्रदीयते। एत एव तान् बेबीलोन मिश्र यूनान च नीतवन्तः। प्राचीने-रानवासिना बिश्तास्प-गुश्तास्प-हिश्तास्प प्रभृतीनि नामान्यश्वेन सम्बद्धानि सन्ति। बेबीलोन-वासिना यदाऽश्वपरिचयोऽभूत् तदा तैरयं स्वलिपौ यैः सकेतैः प्रकटितस्तेषामर्थः 'पौरस्त्यगर्धभः' आसीत्। अनेन ईरानवासिनां पूर्वत आगमने कश्चन सन्देहो नावशिष्यते। पाश्चात्या विद्वास-स्तान् मध्य–एशियात आगन्तॄन् वदन्ति, भारतीया भारतात्।

१००० खीष्टीयाब्द पूर्वात् ८०० खीष्टीयाब्दपूर्वस्य मध्ये ईरानवासिषु जरथुस्त्रनामको जर-दुश्तनामको वा कश्चन महान् अग्रणीः प्रादुरभूत्। तेनैको नवो धर्मः प्रवर्तितः। स फारसीधर्मः, जरथुस्त्री धर्मो वोच्यते। जरथुस्त्रमहोदयस्य शिक्षातस्तस्य धर्मस्य प्राचीनग्रन्थेभ्य इद प्रतीयते यद् ईरानवासिना वैदिकार्याणाञ्च भाषाधर्मकर्मकाण्डरीतिषु च नाम्नैव भेदो विद्यते।

## जन्दभाषा संस्कृतभाषा च

पारसीकाना धर्मग्रन्थाना भाषा जन्दपदेनोच्यते। जन्दभाषाया प्रतिशतं षष्टिः सप्ततिर्वा शब्दाः शुद्धसस्कृतस्य सन्ति। वेदाना संस्कृत जन्देति चैकस्या वाग्द्वयमस्ति। द्वयोर्घनस्य सम्बन्ध-स्येदं प्रमाणमस्ति यद् द्वयोर्भाषयोर्यत्र कस्यचन साधरणस्य नियमस्य व्यत्ययस्यापवादो विद्यते सोऽपि परस्पर सवदति। यथा संस्कृतश्वन्शब्दस्य द्वितीयाविभक्तेर्बहुवचने संप्रसारणे 'शुनः' इति रूप भवति, अविकलमिदमेव रूपं जन्दभाषायामुपलभ्यते। उच्चारणभेदेन शब्दानां रूपे किञ्चिद् वैकृत्यमागतं विद्यते, किन्तु वर्णव्यत्ययनियमाना ज्ञानानन्तरं द्वयोर्भाषयोर्मौलिकमेकत्वं स्पष्ट भवति। यथा सस्कृतस्य स-ह-श्व त्रशब्दाना जन्दभाषाया क्रमेण ह-ज-स्व-थ्ररूपेण परिणामो भवति। अतः असुर-हृदय-विश्व-मित्रशब्दास्तत्र अहुर-जर्दप-विस्व मिथ्रशब्दाना रूप परिदधति। पितृ-पशु-गो-नमस्ते-इष्टि-गाथा-अथर्वन्-रथशब्दा उभयत्र समानाः सन्ति। पारसीक धर्मग्रन्थेषु त्रिष्टुभः, अनुष्टुभः, गायत्र्याः, आसुरीपङ्क्तेः—वैदिकच्छन्दसा प्रयोगो विद्यते।

**अन्यसादृश्यानि**—उभयजातीया अपि स्वमार्य प्रतिपादयन्ति। भारतीयानां चातु-र्वर्ण्यव्यवस्था पारसीकानामप्यस्ति। आर्याणामुपनयनसस्कारवत् पारसीकबालकाना कुश्तीनामको विधिर्भवति। अत्र कर्मणि मेखलावत् पारसीकैः कुश्तीति धार्यते। द्वयोः कर्मकाण्डेऽतीव सादृश्यं

विद्यते । ज्योतिष्टोमदर्शपौर्णमासेष्टि चातुर्मास्येष्टिनामकवैदिकयज्ञाः कैश्चित् परिवर्तनैः साक पारसीकेषूपलभ्यन्ते । वैदिकधर्मे प्राचीनकाले सोमयागस्यासाधारणं महत्त्वमासीत् । पारसीकधर्मग्रन्थेषु होमयष्ट( सोमयज्ञ )विधिर्विद्यते । द्वयोर्धर्मयोर्देवाः शिवः, शर्वः, भवः, नासत्यः काम तुल्याः सन्ति ।

## पाश्चात्यदेशेषु व्यापारिकसम्पर्कस्य प्रभावः

एतत्पर्यन्तमुपनिवेशेन प्रादुर्भूतो भारतीय प्रभावो वर्णितोऽस्ति । अतः पर व्यापारिकसम्पर्केण प्रादुर्भूतः प्रभावः प्रतिपादयिष्यते । भारतीया यथा पूर्वस्या दिशि व्यापारप्रसङ्गेन दूर दूरदेशान् गच्छन्ति स्म, तथैव पश्चिमे दिग्विभागेऽपि धनाभिलाषस्तान् दूरदेशेषु यात्रा कर्तुं प्रेरयति स्म । पाश्चात्यदेशैः साक त्रिभिर्मार्गैर्व्यापारो भवति स्म ।

( १ ) ईरानाखातस्य पन्थाः—अय सम्भवतः सुगमतमः प्राचीनतमश्च पन्था आसीत् । सिन्धोर्नद्या मुख्यतः फरातमुखपर्यन्त नौभिर्व्यापारो भवति स्म । ततश्च व्यापारिकपण्यानि स्थलपथतः पूर्वभूमध्यसागरस्य पोतनिरोधस्थान यावद् नीयन्ते स्म ( रा इ० पृ० १–२ ) ।

( २ ) रक्तसागरपथः—ईरानतटेन साकं तथा अरबतटेन साक व्यापारिणः पूर्वम् अदन पुनस्ततोः रक्तसागरमतिक्राम्यन्त स्वेजस्य स्थलडमरुमध्य प्राप्नुवन्ति स्म । तस्मिन् समये स्वेजप्राणालिका न निर्मिताऽऽसीत्, प्रायो वस्तूनि मार्गद्वयेन भूमध्यसागरस्य पोतनिरोधस्थानपर्यन्त नीयन्ते स्म । कदाचिद् रक्तसागरस्य कस्मिंश्चित् पोतनिरोधस्थाने वस्तूनि अवतार्य नीलनदीं यावत् क्रमेलकैर्नीयन्ते स्म, ततश्च जलमार्गद्वारा मूलमध्यसागरम् । कदाचिच्च स्वेजतः साक्षादुत्तरस्मिन् सार्थेन पूर्वमध्यसागरस्य पोतनिरोधस्थानानि ( राइ० पृ० ९ ) ।

( ३ ) स्थलपथः—भारतस्य पश्चिमोत्तरगिरिद्वारात् तानि वस्तूनि पूर्वं बलख गच्छन्ति स्म, ततः वङ्क्षु ( आमू ) इत्यनेन साकं कास्पियनसागरम्, ततश्च कृष्णसमुद्र गच्छन्ति स्म, अथवा बलखप्रदेशतो हेकटोम पिलोस ( पार्थिया ) एक-बराना ( हमदान ) इत्याक्राम्यन्ति पूर्वभूमध्यसागरं गच्छन्ति स्म ।

उक्तेषु त्रिषु प्रथमो वणिक्पथः सर्वाधिक्येनोपयुज्यते स्म, तृतीयश्च सर्वतो न्यूनतया । प्रथमेन पथा भारतस्य सम्बन्ध इराकदेशेन साकमासीत्, द्वितीयेन च मिश्रदेशेन । एतद् द्वितयमपि प्राचीनकालस्य प्रसिद्धसभ्यताना केन्द्रमासीत् । ततः पश्चिम-एशियायाम् ईरानयूनानसभ्यतानामुत्कर्षोऽभूत्, पश्चाच्च खीष्टानुयायिधर्मस्य इस्लामधर्मस्य च । अत्र तेषु सक्रान्तस्य भारतीयप्रभावस्य संक्षेपेणोल्लेखो भविष्यति ।

## इराक( मेसोपोटामिया )देशस्य राज्यानि

ईरानाखातस्योपरि फारसपर्वतानाम् अरबमरुस्थलाना च मध्ये दजला फरातनामकस्य सस्यश्यामलस्य भूभागस्य पट्टः प्राचीनकाले मेसोपोटामिया( इराक )पदेन व्यवह्रियते स्म । अस्य यूनानशब्दस्यार्थोऽस्ति—द्वयोर्नद्योरन्तरालो देशः । दजलाफरातयोर्मध्ये वर्तमानत्वेनैतत् स्थान यूनानवासिभिरेतेन नाम्ना प्रसिद्धिं नीतम् । अस्मिन् स्थाने कानिचित् सहस्राणि वर्षाण्यनेकासा

समीचीनाना सभ्यतानामुत्थान पतनञ्चाभूत्। मेसोपोटामिया इत्यस्य तुलना तादृशेनैकेन महाकटाहेन कर्तुं शक्यते, यत्र विविधजातीना परिपाकोऽभवत्।

ईरानपर्वतेभ्योऽरबमरुस्थलेभ्यश्च समागता जातयः क्रमेणास्य नदीद्वयमध्यभागस्याधीश्वरत्वं प्राप्नुवन्त्योऽभूवन्। अभितश्च कस्याश्चित् प्राकृतिकबाधाभावेन शीघ्रमेव परवर्तिजातीनामाक्रमणैर्नश्यति स्म। सार्द्धत्रिसहस्रवर्षेषु मुख्यतयाऽत्र षड्राज्याना स्थापनाऽजायत—(१) सुमेरराज्यम् (४०००-२७५० खी०पू०), इराकस्य निम्नभागे सर्वप्रथमं न्युषितायाः सभ्यतासस्कृतिविकासिकाया जातेर्नाम सुमेर इत्यासीत्। इयम् ४००० खीष्टीयाब्दपूर्वम् एलमपथेनात्रागता। किश-उरप्रभृतीनि लघूनि नगराणि सस्थाप्य २००० खीष्टीयाब्दपूर्वपर्यन्तमत्र न्युषिता। तयाऽनेके नवा आविष्काराः कृताः, विश्वाय नूतनानि वस्तूनि प्रदत्तानि। ज्यौतिषक्षेत्रे मेषवृषप्रभृतिराशीनाश्रित्य वर्षस्य द्वादशमासैर्विभागः, मास्य सप्ताहेन दिनस्य घण्टाभिर्निमेषैश्च विभागः, आतप जलघटिकाश्च तज्जातीयाना विशिष्ट आविष्कार आसीत्। चक्राणा व्यापकप्रयोगस्य गोधूमकृषेर्भारमानयोर्वर्तमानायाः पद्धतेः, द्वादशाना वस्तूना समूहेन गणनारम्भस्य च गौरव तेभ्य एव दीयते। तैर्लेखनस्यैका नूतना पद्धतिराविष्कृता। लिखितार्द्रमृत्तिकाफलकानि पाच्यन्ते स्म। तादृशा फलकानां विशालाः पुस्तकालया निनेवाबेबीलोनस्थाने प्राप्यन्त। तादृशी लिपिः कीलकाक्षरलिपिरुच्यते। अय विषयो विवादग्रस्तोऽस्ति यत् सुमेरा मूलतः कस्य देशस्य कस्याश्च जातेरासन्।

(२) अक्कदराज्यम्—(२७५० खी० पू०) २७५० खीष्टीयाब्दपूर्वं सुमेरैः फरातनद्या मुखतोऽनीचोपरि वर्तमानस्य अक्कनामकस्य राज्यस्य राज्ञः सार्गोनस्याधीनत्वं स्वीकर्तुमापतितम्। सार्गोनाख्यः अरबाणा यहूदीना वशेन संबद्ध आसीत्, किन्तु तस्मिन् सर्वस्मिन् काले अक्कदवासिभिः सुमेराणा सभ्यतायाः संस्कृतेश्च कापि क्षतिर्न कृता।

(३) अमोरीराज्यम्—(२२६३ खी० पू०–१९२५ खी० पू०) अमोरीसज्ञकाः शाम(सीरिया)निवासिन आसन्। तैः २२६२ खीष्टीयाब्दपूर्वम् इराकदेशो विजितः। एतज्जातीयः सर्वतः प्रसिद्धो राजा हम्मूरबीनामा (२१२३ खीष्टीयाब्दपूर्वतः २०८० खीष्टीयाब्दपूर्वम्) अभूत्। अमोरीसज्ञका विजेतार आसन्, किन्तु ते विजिताना सस्कृत्या विजिता अभूवन्। सुमेराणामुपरि द्वितीयमिदमाक्रमणमासीत्, तदपि तैः कथञ्चित् सोढम्।

(४) हत्तीराज्यम्—(१९२५ खी० पूर्वतः १६०० खी० पूर्वम्) उपर्युक्ताक्रमणद्वयानन्तरमपि दौर्भाग्येन सुमेरा न परित्यक्ताः। १९२५ खीष्टीयाब्दपूर्वानन्तरं तेषु लघु-एशियादेशाद् हत्तीवासिभिः प्रबलमाक्रमणं कृतम्। सुमेराः पृथक् पृथग् नगरेषु निवसन्ति स्म, प्रत्येक नगरस्य देवता भिन्ना भिन्ना आसन्। तेषा देशश्च नदीपर्वतादिभिः परिवृतो नासीत्। प्राकृतिकबाधानामभावेन देशरक्षा दुश्शकाऽऽसीत्। तेषा राजनीतिकसङ्घटनमन्यदैक्य वा नासीत् अतस्ते प्रत्येकमाक्रमणकारिभिर्विनाऽऽयास विजीयन्ते स्म। प्रथमयोर्द्वयोराक्रमणयोस्तु ते आत्मानं कथञ्चिद् रक्षितवन्तः, किन्तु तृतीयस्मिन्नाक्रमणे सुमेराः समूल विनष्टाः।

(५) असीरियाराज्यम्—(१६०० खी० पू०–६०० खी० पू०)—इराकस्योत्तरस्मिन् भागे दजलातः सार्द्धशतद्वयक्रोशेषु उत्तरस्मिन्, ३००० खीष्टीयाब्दपूर्वं सुमेरैः सार्द्धमेकस्या

नवाया. शक्तेर्विकासो भवति स्म। तेषु सुमेरजातेः सर्वथा प्रतिकूलानि वैशिष्ट्यान्यासन्। तेषां सांस्कृतिकोन्नतिरतीव निम्नाऽऽसीत्, किन्तु राजनीतिकसंघटनं सैनिकबलञ्चाद्वितीयमासीत्। तेषां राजधानी अश्शुर (अस्सुर) इत्यासीत्। एतेऽरबसम्बद्धाः सामिवंशजातीया आसन्। अभितः शत्रूणां वर्तमानत्वेन शक्तिशालिहित्तीराज्यसंघर्षेण च तैः स्वसैनिकयोग्यता तथाऽधिकं वर्धिता यत् सहस्रं वर्षाणि यावद् ईरानाखाततो रक्तसागरपर्यन्तजातयस्तेषां प्रभुत्वं स्वीकृतवत्यः, तेषाञ्च भयेन नितरां कम्पन्ते स्म। तैरायसशस्त्रैर्धनुर्बाणैः रथैरश्वैर्द्वारभञ्जकैर्मण्डलकारकयन्त्रैश्च सर्वत्र साफल्यं प्राप्तम्। १२७५ खीष्टीयाब्दपूर्वं तेषां बेबीलोनिया इत्यस्योपरि अधिकारोऽभूत्। ७४५-६०६ खीष्टीयाब्दपूर्वं मध्ये तेषां साम्राज्यं समुत्कर्षस्य परां काष्ठां प्राप्तम्। सेन्नाचरिब (७०५ खी० पू०-६८१ खी० पू०) इत्यनेन स्वीया राजधानी निनेवानाम्नी स्थापिता। तेन तदुत्तराधिकारिभिश्च प्रजासु भयङ्करोऽत्याचारः कृतः। बेबीलोनवासिभिः पर्वतवासिमदैश्च विद्रोहः कृतः। ६०६ खीष्टीयाब्दपूर्वं निनेवापतनेन साकम् असीरियायाः शक्तिशालिराज्यं समाप्तिं गतम्। तत्कालं यावत् केषाञ्चिदन्यजातीयानां सैनिकसङ्घटनं तथोत्कृष्टं नासीत्।

(६) बाबुल (बेबीलोनिया) राज्यम्—(६०६ खी० पू०-५३८ खी० पू०) निनेवापतनानन्तरं बाबुल (बेबीलोनिया) इत्यस्योत्कर्षोऽभूत्। बाबुलाख्यः (बाबा-इलि भगवतो द्वारम्), अथवा बाबेरुसंज्ञको बगदादतः पञ्चत्रिंशत्क्रोशेषु दक्षिणस्मिन् आसीत्। अत्रत्याः प्राचीना. काल्दीमाखाल्पीजातीया उच्यन्ते। अस्य वंशस्य प्रसिद्धतमो राजा नेबुकदनजरसंज्ञक आसीत्। ५३८ खी० पू० इरानराजेन कुरुणा बेबीलोनियाराज्यं विजित्य तस्मिन् सकले प्रदेशे ईरानप्रभुत्वं स्थापितम्। सिकन्दरस्याक्रमण (३३० खी० पू०) पर्यन्तमयं प्रदेश ईरानाधीनोऽभूत्।

सुमेरभारते—उपर्युक्तेषु षट्सु राज्येषु कतिपयानां भारतेन साकं गाढः सम्बन्ध आसीत्। तेषु सर्वतः प्राचीनं सुमेरराज्यं विद्यते। इदमद्याप्यनिर्णीतमस्ति यत् सुमेराः कस्माद्देशादागता आसन् किंजातीयाश्च। 'मोहेञ्जोदड़ो' (जि० लारकाना, सिन्धप्रान्त) 'हड़प्पा' (जि० मिण्टगुमरी पञ्जाब) इत्यनयोरुत्खननैः प्राप्ता सिन्धुसंस्कृतिः सुमेरराज्यात् प्राक् सार्गोन-(४००१ खी० पूर्वतः २७५० खी० पू०) संस्कृत्या नितरां सम्बद्धा प्रतीयते। पाश्चात्त्या ऐतिहासिका अद्य यावद् भारतीयसंस्कृतेः प्रारम्भमधिकाद्धिकम् १५०० खीष्टीयाब्दपूर्वतो मन्यन्ते स्म, किन्तु मोहेञ्जोदड़ो इत्यस्योत्खननेन तैर्भारतस्य मिश्रवद् मेसोपोटामियावच्च प्राचीनत्वं स्वीकृतम्।

सुमेरमोहेञ्जोदड़ोसंस्कृत्योर्गाढः सम्बन्धः—मेसोपोटामिया मोहेञ्जोदड़ो इत्यनयोर्गाढस्य सम्बन्धस्यानेकानि प्रमाणानि समुपालभ्यन्त—(१) मेसोपोटामिया इत्यस्योत्खननेन पञ्च ता मुद्रा उपालभ्यन्त या मोहेञ्जोदड़ोमुद्राभिर्नितान्तं सादृश्यमादधति। तासु वृषभस्य कमनीया मूर्तिरङ्किता विद्यते। सा तासां भारतीयत्वे प्रबलं प्रमाणमस्ति। यतो हि तत्कालपर्यन्तं सुमेरचित्रेषु वृषभाङ्कनं क्वचनापि नोपलभ्यते। पुरातत्त्वज्ञानां विचारो विद्यते यदिमा मुद्रा व्यापारप्रसङ्गेन भारतात् सुमेरं प्राप्ताः।

( २ ) मोहेञ्जोदड़ो इत्यत्रोपलब्धाः केचन पदार्था अभिप्रायाश्च ( motifs[1] ) सुमेरसंस्कृत्या नितान्त सम्बन्धमादधति, अत्रत्यस्य गोमेदकस्य गुटिकाः किशस्य ( मेसोपोटामिया ) प्राक् सर्गोनीशवस्थानेषूपलब्धगुटिकाभिः संवदन्ति। जमशेदनसर ( मेसोपोटामिया ) मोहेञ्जोदड़ो इत्यनयोः समानमर्तबानसञ्ज्ञकपात्राणामनेकान्युदाहरणानि समुपालभ्यन्त। त्रिपत्रवस्तु द्वयोः स्थानयोः समानमस्ति। हड़प्पातस्तथा उर ( मेसोपोटामिया ) इत्यतः प्रथमवंश-सनाधिस्थानात् प्राप्ता. शृङ्गारसामग्र्य. सादृश्यमादधति। अल-उबैद ( मेसोपोटामिया ) इत्यत्र पुष्पाधारस्य प्रस्तरस्य केचन खण्डा उपलब्धाः सन्ति। श्रीहालमहोदयेन परीक्ष्येद निश्चितमस्ति यदिमानि पात्राणि भारतीयखडिकाभिर्निर्मितानि सन्ति।

( ३ ) मोहेञ्जोदड़ो इत्यत्र कतिपये तादृशा. पदार्था उपालभ्यन्त ये निश्चयेन मेसोपोटा-मियाराज्याद्त्रानीता.। मोहेञ्जोदड़ो इत्यत्र पात्रेषु कटस्य रचनायाः पद्धतिर्नासीत्, सुमेरे इदमेकं साधारणमलङ्करणमासीत्। सिन्धप्रदेशे रचनेय केवले एकस्मिन्नेव पात्रे प्राप्यत। सिन्धुतटस्योत्खननकर्तुः प्रसिद्धस्य पुरातत्त्वज्ञस्य श्रीमैकेमहोदयस्य मतं विद्यते यदयं प्रस्तर. पूर्वं मेसोपोटामियाराज्ये प्रेषितः, तत्र तस्मिन् रचना कृता, पुनः स भारत समानीत'। मोहेञ्जोदड़ो इत्यत्र कुठारप्रभृतीना दण्डा' फलकैः साकं चर्मप्रभृतीना प्रग्रहैर्बध्यन्ते स्म, तदा तत्र फलकाना छिद्रेषु पार्श्वेषु दण्डानवलम्ब्योपयोक्तुं परिपाटी नासीत्, किन्तु मेसोपोटामियाया तादृशा-धारवता साधनानामत्यधिकतयोपयोगो भवति, मोहेञ्जोदड़ो इत्यत्रैकस्यैव तादृशस्य कुदालस्य फलमुपालभ्यत; विद्वद्भिः कल्पित यत् तत् सुमेरादागत विद्यते। इत्थमेव वेधनीद्वारा उत्खातनिर्मिता रुचिरप्रस्तरस्य विपर्यस्तस्थितौ प्राणिनमुल्लिखन्ती मुद्रैकाऽपि सुमेरस्यास्ति। मोहेञ्जोदड़ो इत्यस्य सर्वा मुद्राः खडिकाभिः सम्पाद्यन्ते स्म। तत्र प्राणिना तथा चित्रणाय परिपाटी नासीत् ( मैके-फर्दर एक्सकैवेशन्स आफ् मोहेञ्जोदड़ो खण्ड १ अन्तिमोऽध्यायः[2] )।

उपर्युक्तैरुदाहरणैरिद स्पष्ट विद्यते यन्मोहेञ्जोदड़ो इत्यस्य वस्तूनि सुमेरे सुमेरस्य च सिन्धे समायान्ति स्म। द्वयोर्देशयोः संस्कृतौ नितान्त सादृश्यमासीत्। अस्मिन् प्रश्ने तु प्रायः सर्वे विद्वांसो निरस्तमतभेदाः सन्ति यत् सुमेरसभ्यताया. सिन्धुतटसभ्यतायाश्च निर्मातार एकजातीया

---

१. अयं मूर्तिचित्रकलयोः पारिभाषिकः शब्दोऽस्ति। किमपि चलमचलं बा सजीवं निर्जीवं प्राकृतिकं काल्पनिकं वा वस्तु यस्यालङ्कृता एवमतिरञ्जिताऽऽकृतिर्मुख्यतः सज्जनार्थं कस्याञ्चित् कलाकृतौ निर्मीयेत, यथा—मकरः, हस्ती, सिंहः।

२ सुमेरसंस्कृतेः कतिपयेष्वंशेषु भारतीयसंस्कृत्या महत् साम्य विद्यते। तेषां सुमेराणामुपास्य इन्दुरु ( वैदिक इन्द्र. ) आसीत्। द्वितीय उपास्य. सूर्य ( शमरु ) आसीत्। सूर्यं ते 'शु–खा' ( परदारमछली ) शब्देन बहुवारं च 'वि–इ–एश' ( बडी मछली ) शब्देन व्यवहरन्ति स्म। शब्दस्यास्य सङ्गस्य त्यागाभावेनायं महानरमत्स्यो भवति स्म। अस्यार्द्धं शरीरं मनुष्यस्यार्द्धञ्च मत्स्यस्य भवति स्म। केषाञ्चिदनुमानमस्ति यत् बि–इ–एशन इति विष्णोरेव रूपान्तरमस्ति। सूर्यस्यैकं नाम विष्णुरप्यस्ति, विष्णोश्च प्रथमोऽवतारो मत्स्य आसीत्—डा० सम्पूर्णानन्द जी, आर्यों का आदिदेश, पृ० २२०–२१।

आसन्, किन्तु ते कुत आयाताः, के चासन्? अत्रानेकानि मतानि सन्ति। अनेकेषां पाश्चात्यानां पौरस्त्यानाञ्च विदुषां मतमिदमेवास्ति यत् सुमेरा द्रविडाश्चैकजातीया आसन्। द्रविडाः पश्चिमदिशायामुपनिवेशनाय भारताद् बहिर्गताः, विलोचिस्ताने ब्राहुईनामकद्रविडभाषारूपेण तेषां प्राचीनवसतेः स्मृतिरद्याप्यवशिष्टा विद्यते। सुमेरे तैः सुमेरसभ्यता मोहेञ्जोदड़ो इत्यत्र सिन्धुतटस्य सभ्यता चोत्पादिता। श्रीरालिंसन श्रीथामस-श्रीराखालदासबैनर्जी--श्रीहिरासप्रभृतिभिर्विद्वद्भि-र्मतमिदं समर्थितम्। श्रीप्राणनाथविद्यालङ्कारप्रभृतिभिः कतिपयैः पण्डितैः सुमेरसंस्कृते-र्मिश्रसंस्कृतेश्च वैदिकार्यैः साकं प्रगाढः सम्बन्धो मन्यते। एते प्रश्ना मोहेञ्जोदड़ो इत्यस्य मुद्राणां समीचीनतया पठनेनान्ततो निर्णीता भविष्यन्ति। अद्ययावद् यद्यप्यनेके विद्वांसो लिपिं पठितुं प्रयतितवन्तः, किन्त्वद्यापि तैः पूर्णा सफलता न प्राप्ता। अस्मिन् विषयेऽधिकानुसन्धानस्या-वश्यकता वर्तते। सम्भवतः इमान्यनुसन्धानान्यद्ययावद् निर्गतानां परिणामानां पोषकाणि भवेयुः। तैरिदं ज्ञातं भविष्यति यत् सुमेरसभ्यताया जन्मदातारो भारतीया आसन्।

**असीरिया भारतञ्च**—सुमेरानन्तरम् असीरियाबेबीलोनियाराज्याभ्यां भारतस्य महान् सबन्ध आसीत्। असीरियाराजस्य अस्सुरबनीपालस्य (६६८ ई० पू० ६२६ पू०) प्राचीनपुस्त-कालये सिन्धुशब्दस्योल्लेखो विद्यते (राइ पृ० २)। प्रसिद्धस्य असीरियाविदः श्रीसेइसमहोदयस्य मतं विद्यते यच्छब्दस्यास्य प्रयोगो मलमलसंज्ञकवस्त्रस्य कृतेऽभूत्, सिन्धे तद् गच्छति स्म, अतस्तस्य 'सिन्धु' नामाभूत्। पूर्वं विद्वद्भिरस्य शब्दस्य व्याख्याया सशयितम्, किन्तु मोहेञ्जोदड़ो इत्यस्योत्खननेन निर्गतैः (मार्शल मोहेञ्जोदड़ो १९३–४) कार्पासवसनशकलैरयं संशयो निराकृतः। इदं स्मर्तव्यं यत् पाश्चात्यजगतः सकलस्य जगतो वा कार्पासज्ञानकारकं भारतवर्ष-मासीत्। पाश्चात्या जना ऊर्णावस्त्राणि क्षौमवस्त्राणि चैव ज्ञातवन्तः। यूनानवासिभिर्यदा प्रथमप्रथमं कार्पासवृक्षा दृष्टास्तदा तेषां महदाश्चर्यमभूत्। ते तान् ऊर्णाजनकान् वृक्षान् कथयन्ति स्म[1]। अस्सुरबनिपालेन भारतादनेके वृक्षा आनायिता असीरियायाञ्चारोपिताः। तेषूर्णाजनका अपि वृक्षा आसन्।

**अस्सुर इति असुर इति च शब्दः**—कतिपयैर्विद्वद्भिः असीरिया इत्यस्य राजधान्या अस्सुरस्य भारतीयासुरेण सम्बन्धः स्थापितः। असुरशब्दः संस्कृतसाहित्ये देवताविरोधित्वेन प्रयुक्तो विद्यते, भारतीया अनुश्रुतयश्चासुरान् देवानां ज्येष्ठान् भ्रातॄन् कथयन्ति। इदमुपरि वर्णितं विद्यते यद् लघु-एशियादेशे उत्तरस्मिन् इराके च (१५०० खी० पू०) खुर्रीमितन्नीराज्येषु आर्या

---

१. पश्चिमे इतिहासस्य पितृत्वेन प्रथितेन हिराडोटसमहोदयेन (३।१०६) ४४५ ई० पू० कार्पासविषये लिखितमासीद् यदिय भारते वर्षे वृक्षेषूद्भवन्ती ऊर्णाऽस्ति, मेषाणामूर्णा-पेक्षया कामं समीचीना भवति। मेसोपोटामियादेशस्य मिश्रस्य चोत्खननेषु कर्पास क्वापि नोपलब्धम्। अत्र सन्देहो नास्ति यद् भारतवर्षमेव जगतः कार्पासज्ञानजनको देश आसीत्। अन्यभाषायामस्य नामान्यप्येतत् पुष्णाति। प्राचीन-इबरानवासिनो यूनानवासिनो रोमवासिनश्च तत् क्रमेण कर्पस इति, कर्पसोस इति कर्बसस इति च कथयन्ति स्म। एतानि सर्वाणि कार्पासस्य रूपान्तराणि सन्ति।

न्युषितवन्तः, तेषां प्रतिवेशे असीरियाया अस्सुरराज्यमासीत्। इदमसम्भवं नास्ति यदिमौ द्वावपि वंशपरम्परातः परस्परं सम्बद्धौ भवेताम्। तेषां विरोधित्वेनासुरशब्दस्य विरोधिन्यर्थे प्रयोग आरब्धो भवेत्।

अस्सुराणामार्यावर्तेन साकं सम्पर्कस्यैकं मुख्यं प्रमाणं द्वयोर्देशयोर्ज्योतिषशास्त्रतुलया समुपलभ्यते। वेङ्कटेशबापूजीकेतकरमहोदयेनेदं साधितं यत् सूर्यसिद्धान्तनामा ज्योतिषो ग्रन्थः सम्भवतो भारते असीरियातः समागतः। सूर्यसिद्धान्तस्य प्रारम्भे इदं लिखितमस्ति यत् कृतयुगस्यान्तेऽतीव तपस्यते मयाय भगवता सूर्येणेदं ज्ञानं प्रदत्तम्। मयासुरविषये ब्रह्मसिद्धान्ते लिखितं विद्यते—

भूमिकक्षाद्द्वादशेऽब्दे लङ्कायाः प्राक् च शाल्मले।
मयाय प्रथमे प्रश्ने सूर्यवाक्यमिदं भवेत्॥ (१।१६८)।

अर्थाद् मयेन शाल्मलद्वीपे तपस्तप्तम्, यतो लङ्काया देशान्तररेखा भूमिपरिधेः १$\frac{1}{2}$ अर्थात् ३०° पूर्वास्ति। अद्यत्वे बाबुललङ्कयोर्भेदः ३१°१५ विद्यते, परम् अस्सुरजनानां प्राचीनकालमानानुसारेण स ३०° आसीत्। इत्थं केतकरेणेदं साधितं यत् शाल्मलद्वीपं बाबुलदेशस्य नामासीत्। ८५२ खी० पू० बाबुलं खाल्दीजनानां राज्ञा शाल्मनेसरेण विजित्य अस्सुरसाम्राज्यस्य मूलभित्तिः स्थापिता। शाल्मनेसरनाम्नैव सम्भवतो बाबुलेति शाल्मलपदेन व्यपदिश्यते स्म। मयासुरो बाबुलस्य (शाल्मल) एको महान् पुरुषः प्रतीयते। महाभारते पाण्डवानां राजधानी इन्द्रप्रस्थो मयासुरस्य कृतिः प्रतिपादिता विद्यते। अतः अस्सुरा न केवलं ज्यौतिषे, किन्तु वास्तुविद्यायामपि प्रवीणाः प्रतीयन्ते, सम्भवतो भारतेनात्र क्षेत्रद्वयेऽश्शुरेभ्यः किमपि शिक्षितम्। किन्तु भारतेनास्सुरेभ्योऽतीव शिक्षा प्रदत्ता। केतकरस्य मतानुसारेण खाल्दियाया मिश्रे च खीष्टीयाब्दपूर्वाष्टमशतकात् प्रचलितं नवोनस्मरपञ्चाङ्गं भारतीयार्यपञ्चाङ्गमेवासीत्। यूनानज्योतिर्विदा टाल्मीमहोदयेनेदमेव पञ्चाङ्गमनुसृतम्।

श्रीजायसवालमहोदयेन शतपथब्राह्मणं (३।२।१।२३–४) माश्रित्य असुरअस्सुरयोरभेदः साधितः। अत्रासुरा म्लेच्छशब्देन प्रतिपादिताः। संस्कृतवैयाकरणैरयं शब्दो म्लेच्छधातुना निष्पादितः, किन्तु जायसवालमहोदयो हिब्रूभाषाया मेलेखशब्दस्य संस्कृतरूपान्तरं मन्यते, मेलेखस्यार्थोऽस्ति राजा। शतपथे प्रत्यपाद्यत यद् म्लेच्छा हेलवो हेलवो इति वदन्ति, जायसवालस्तद् अश्शुरभाषाया एलोवा (परमात्मनः) रूपान्तरं मन्यते। इत्थम् असुरशब्द आरम्भे स्पष्टतः अश्शुरजनानां तथा म्लेच्छशब्दस्तेषां राज्ञो वाचक आसीत्। पश्चात् तत्प्रयोगो यवनशब्दवद् विस्तृतार्थे भवितुं प्रारब्धः (रूपरेखा पृ० ४८१-८२)।

**बेबीलोनिया भारतश्च**—बेबीलोनियाराज्येन भारतीयसम्पर्कस्यानेकानि प्रमाणानि समुपालभ्यन्त। मुगेरस्य (उर) चन्द्रदेवताया मन्दिरे नेबुक्रदनजरप्रासादे शाकस्य काष्ठस्य खण्डा उपालभ्यन्त। एतौ द्वावप्यवशेषौ खीष्टीयाब्दषष्ठशतकात् पूर्वौ स्तः। फरातस्यानूपमुखे सरुआ- (साइप्रस) जङ्गलं विहायान्यत् किमपि नोत्पद्यते। शाकस्य निकटतमं स्रोतो दक्षिणभारतमेवास्ति। परवर्तिषु युगेषु ततः शाकस्य चन्दनस्य शिंशपायाश्च निर्गमनस्य वर्णनं नैश्चित्येनोपलभ्यते। अत इदमसम्भवं नास्ति यद् बेबीलोनेन साकं शाकस्य व्यापारोऽतीव प्राचीनकालतोऽक्षुण्णो भवेत्। अन्यच्च, भारतीया व्यापारिणस्ततः पशून् पक्षिणश्च विदेशं नयन्ति स्म।

बावेरुजातके ( कावेल ३।८३ ) लिखितं विद्यते यत् प्रथम भारतीया यदा बावेरु इत्यत्र काक नीतवन्तस्तदा तत्रत्या आश्चर्यान्विता अभूवन्, काको महता मूल्येन विक्रीतः, पुनश्च द्वितीययात्राया व्यापारिणो मयूरान् नीतवन्तः । पक्षिणा व्यापारस्य पोषणम् असीरियायाः राज्ञः शालमेनसरस्य तृतीयस्य (८६० खी० पू०) एकेन सूच्याकारस्तम्भेनापि भवति । तत्र भारतीयाना वानराणा हस्तिना च चित्रण विद्यते ( राइ० पृ० ३ ) ।

**फिनीशियनपदवाच्या जना भारतीयव्यापारिणश्च**—बेबीलोनियायाः प्रकरणस्य समाप्तेः पूर्व फिनीशियनपदवाच्यजनाना काचन चर्चाऽऽवश्यकी प्रतीयते । एते १६०० खी० पू० बेबीलोनियाराज्याद् निर्गत्य भूमध्यसागरस्य पूर्वस्मिन् तटे न्युषितवन्त. । असीरियावासिवत् ते न योद्धार आसन्, न च बाबुलवासिन इव कृषीवला आसन् । तेषामाधिपत्ये यः समुद्रतीरवर्ती सकुचितपट्ट आसीत्, स तेषामावश्यकता पूरयितुं नालं भवति स्म । तेषामुपरि दक्षिणतो मिश्रवासिनाम्, उत्तरतो हत्तिजनाना पूर्वतश्च असीरियावासिनाञ्चाक्रमणानि भवन्ति स्म । अतस्तैः स्थलापेक्षया समुद्रमेव स्वकार्यक्षेत्रं निर्वाचितम् । ते व्यापारिणो नाविकाश्चाभूवन् । टायर-सिडोननामके पोतनिरोधस्थाने च तेषा प्रधाने केन्द्रे आस्ताम् । पश्चिमएशियायाः सकलो व्यापारस्तेषा हस्ते आसीत् । तै. पोतनिर्माणकला उन्नमिता, विनिमयस्य माध्यमस्य विकासः कृतः, भाराणा नावाञ्च संशोधन कृतम् । ग्लिटनीमहोदयस्य कथनानुसारेण पश्चिमे वर्णमालाया जन्मदातार एत एव मन्यन्ते । ततः पूर्वं मिश्रस्य चित्रलिपेरधिकः प्रचार आसीत् । ३३३ तमे खीष्टीयाब्दपूर्वे सिकन्दरेण डायर-सिडोनस्थाने विजित्य ध्वसिते, किन्तु तेषा सर्वनाशो रोमदेशेन ६१६ खी० पू० विहितः ।

फिनीशियनसंज्ञका जनाः प्रायः सामीकुलेन सम्बद्धा मन्यन्ते, किन्तु वैदिकसाहित्ये पणिनामकव्यापारिणामतीवोल्लेखो वर्तते । देवेभ्यो हविषो ब्राह्मणेभ्यो दक्षिणाया वितरणाभावेन वेदमन्त्रेषु तेषा तिरस्कारो वर्तते ( ऋ० १।३३।३, ४।२८।७ ई०, अथर्व ५।११।७; यजु. ३५।१ ) । एते कृपणत्वेन ( ऋ० १।१२४।१० ) वृकत्वेन च ( ६।५१।१४ ) प्रतिपादिताः सन्ति । कुसीदग्राहका निष्ठुरतया सवृद्धिस्वमूलराशिग्राहकाश्च न प्रशस्यन्ते । ते दासत्वेनापि व्यवाह्रियन्त ( ऋ० ५।३४।५०७ ) । प्रसिद्धेन जर्मनविदुषा लुडविगनामकेनेद कल्पित यत् ते सार्थेषु व्यापारकर्तारो भारतस्य मूलनिवासिन आसन्, तै साकमार्याणा सङ्घर्ष आसीत्, ते तानाक्राम्यन्ति स्म । अन्येषा विदुषा मतमिदमस्ति यत् पणिपदवाच्या एव प्राचीना. फिनीशियनसंज्ञका आसन् । अन्यच्च पशुचौर्यं मनुष्यविक्रयणञ्चापि तेषा कर्माऽऽसीत् । आर्यैस्ते दमिता । तै. पराजितास्ते पश्चिमा दिश गताः, भूमध्यसागरस्य पूर्वतटे न्युषिताः ( सम्पूर्णानन्द—आर्यों का आदि देश, पृ० २३४ प्र० ) । अस्याः कल्पनायाः समर्थनाय अद्यापि यावत् किमपि प्रबल प्रमाण नोपलब्धम् । सम्भवतो मोहेञ्जोदड़ो इत्यस्य मुद्राः प्रश्नममु किञ्चित् प्रकाशयेयुः ।

**व्यापारिकसम्पर्कस्य प्रभावः**—खीष्टीयाब्दपूर्वे षष्ठशतकपर्यन्त पश्चिमदेशैः साक भारतस्य व्यापारिकः सम्बन्ध आसीत् । तेन तेषा सस्कृतौ कश्चन गभीरः प्रभावो नाभूत्, किन्तु पुनरपि ते प्रदेशा भारतीयप्रभावेणास्पृष्टा नाभूवन् । बेबीलोनियाया प्राचीनकथासु बाइबले च जलप्रलयस्य वर्णन विद्यते । इद वर्णन शतपथब्राह्मणस्य जलप्रलयेन सवदति । श्रीबालगङ्गाधर-

लोकमान्यतिलकेनेदं साधितं यद् बाबुरस्य खाल्दीसंज्ञकैर्मन्त्रतन्त्रादिकं महतांशेनाथर्ववेदतो गृहीतम्। अथर्ववेदस्य (५।१३।६,७,८,१०) तैमात-उरुगूला-आलिगी-विलिगी-ताबुवमशब्दानां कोऽपि वैदिको विद्वान् याथार्थ्येन व्याख्यां कर्तुं नापारयत्। खाल्दीलेखानामाधारेण श्रीतिलकेन तेषां समीचीनार्थकरणाय प्रयतितम्। बाइबलस्य प्राचीने प्रतिज्ञापत्रे भगवत एकं नाम 'जिहोवा' इत्यस्ति। अस्य शुद्धं रूपम् 'यह' इत्यस्ति। अयं खाल्दी-शब्दोऽस्ति। निरुक्ते (८।८) अस्यार्थो महानस्ति। ऋग्वेदे (१०।११०।३) अस्य प्रयोगोऽस्ति। इदं मन्यते यदयं शब्दः खाल्दीसंज्ञकैर्भारताद् गृहीतः। वैदिकसाहित्यस्य इन्द्रवृत्रयोर्युद्धं बेबीलोनियादेशेऽप्युपलभ्यते। वृत्रार्थं तत्र अब्जुशब्दः प्रयुज्यते, अयं वैदिकः 'अम्बु' एवास्ति। वैदिकं ऋतुशब्दः खाल्दी इतुरूपो बभूव। इत्थमेव ऋग्वेदस्य (८।७८।२) 'मना' शब्दस्यापि बाबुलेन सम्बन्धः स्थापितः। खाल्दीसंज्ञकानां जनानां महान्तो देवाः—अन, बल, अनु इत्येते आसन्। अन इति 'अहिहन्' (इन्द्र) इत्यस्यापभ्रष्टरूपं मन्यते। बलासुरस्य वैदिकसाहित्येऽत्यन्तं वर्णनमस्ति। 'अनु' इति अग्निर्बुध्यते। एतेषामेकोऽपरस्य विननामको देव आसीत्। ऋग्वेदस्य दशमे मण्डले वेननामकस्य देवस्य वर्णनं विद्यते। वायोरधिष्ठातारं देवं ते मतु इति मर्तु इति वा कथयन्ति स्म। इदं मरुत एव रूपान्तरं प्रतीयते। सूर्यस्य कृते तेषां दिअनिसु इति नाम दिनेशस्य रूपान्तरमस्ति। सृष्टेः प्रारम्भे ते अब्जु इति तथा तैमात इति नामानौ देवौ मन्यन्ते। अयम् ऋग्वेदस्य नासदीयसूक्तस्य तस्य सृष्टिक्रमस्याक्षरशोऽनुवादो विद्यते, यदनुसारेण प्रारम्भे आपस्तमश्चैवासन् (सम्पूर्णानन्द–आर्यों का आदिदेश)।

भारतस्य देशान्तरैः साकं व्यापारिकसम्पर्कस्यैको मूकं साक्षि भाषाविज्ञानं विद्यते। भारताद् गच्छतां वस्तूनां नामानि भाषान्तरेषु प्रायो भारतीयान्येवोपलभ्यन्ते। अधिको व्यापारो द्रविडदेशस्य पोतनिरोधस्थानत एव भवति स्म। अतोऽधिकांशाः शब्दा द्रविडभाषायाः सन्ति। अगरुशब्दस्तामिलभाषायाम् अगिल इत्युच्यते स्म, इबरानीभाषायाञ्च अहलेति। तमिलभाषायां तण्डुलाः अरिसीशब्देनोच्यन्ते स्म, अरबीभाषायाञ्च अरुज इति। पश्चाच्च यूनानभाषायाम् अन्ययोरोपभाषासु च राइस (Rice) इति। वानरस्य कृते मिश्रभाषायां कफू इति, इबरानीभाषायाञ्च कोफशब्द आसीत्' (रालिन्सन–इण्टरकोर्स पृ० १३–१४)। एतद् द्वयमपि कपिशब्दस्य रूपान्तरमस्ति।

भारतीयसंस्कृतेः पश्चिमाभिमुखप्रसारे केवलं व्यापारिभिरेव भागो गृहीत इति नास्ति। उपरि खाल्दीधार्मिकविश्वासैः साकं वैदिकविचाराणां यद् गभीरं सादृश्यं प्रदर्शितं विद्यते तत् भारतात् प्रवासं कुर्वद्भिर्जनैरेव सम्भाव्यते। श्रीसम्पूर्णानन्दप्रभृतिविदुषां मतेन पश्चिमेऽस्याः संस्कृतेर्नेतारो दासाः पणिसंज्ञकाश्चासन्। दासा दस्यवो वा अस्यैव देशस्यार्द्धसभ्याः प्राचीना

1—अत्र कतिपये यूनानशब्दा अपि ध्यातव्याः सन्ति। तामिलभाषायां कृचीवर (शुण्ठी)-शब्दः, कारप्पू (दारुगन्धः=दालचीनी) शब्दश्च यूनानयवनभाषायां तथात्वेनैव गृहीतौ। संस्कृतपिप्पलीशब्द एव पाइपर इत्यस्य पैप्पर इत्यस्य च मूलमभूत्। यवनभाषायां बेरिल इति शब्दः संस्कृतवैदूर्यस्य रूपान्तरं विद्यते।

निवासिन आसन्। आर्यैरुत्पीडितास्ते पश्चिमं गताः। आर्याणां सम्पर्केण ते तेषां रीतिं धार्मिकविश्वासं च गृहीतवन्तः। पाश्चात्त्यदेशेषु ते तत्रत्यैर्मूलनिवासिभिः सम्पर्कं कृत्वा सङ्करसंस्कृतीं निर्मितवन्त, यत्र महान् भारतीयो भाग आसीत्, किन्तु यथा यथा ते भारताद् दूरं गता, स्वीयां प्राचीनां परम्परां संस्कृतीश्च विस्मृतवन्तः भारतस्य सम्पर्को न्यूनतां गतः, भारतीयसंस्कृत्या भेदो वृद्धिं गतः (सम्पूर्णानन्द–आर्यों का आदि देश, पृ० २४४)। कल्पनयाऽनया सुमेरसिन्धुसभ्यतयोः सादृश्यस्य भेदस्य च समीचीना व्याख्या भवति। दासातिरिक्तैर्भारतीयसंस्कृतिपश्चिमप्रसारकार्यं पणिभिरपि कृतम्।

## ५—मिश्रदेशो भारतश्च

**सम्पर्कस्य प्रमाणानि महर्षिकण्वस्य मिश्रयात्रा**—मिश्रेण साकं भारतीयसम्पर्कस्यानेकानि पौराणिकानि वाणिज्यसम्बन्धीनि च प्रमाणान्युपस्थापितानि सन्ति। भविष्यपुराणे प्रतिपादितमस्ति यद् महर्षिकण्वः सरस्वत्या आज्ञया मिश्रं गतः (सरस्वत्याज्ञया कण्वो मिश्रदेशमुपाययौ—खण्ड ४।२१।१६)। किन्तु इदमतीवाधुनिकं पुराणमस्ति। वाणिज्यसम्बन्धिनः साक्षिणोऽधिकमहत्त्वपूर्णाः सन्ति। इदं निश्चितं विद्यते यद् भारतीया व्यापारिणः सुवर्णं सुगन्धिद्रव्यञ्च समानेतुम् अफ्रीकापश्चिमतटपर्यन्तम् एबीसीनियापर्यन्तं च गच्छन्ति स्म। भारतीयसाहित्येऽस्य केचन स्पष्टाः सङ्केताः सन्ति। सुप्पारकजातके (४।१३८-४२) भरुकच्छस्य (भरुच) पोतनिरोधस्थानतोऽन्धस्याथाप्यतिकुशलस्य नाविकस्याध्यक्षत्वे यात्रिणां व्यापारिणां कथा विद्यते। ते क्रमेण खुरमाल-अग्निमाल-दधिमाल-नीलकुसमाली नलमाल-वलभामुखनामकेभ्यः स्थानेभ्यो गच्छन्ति। श्रीजायसवालमहोदयेन तेषां क्रमेण निम्नलिखितः परिचयो विहितः—(१) ईरानस्याखातस्य कश्चन भागः, सम्भवतः अरबद्वीपकल्पस्य दक्षिणपूर्वतटः, (२) अदनस्य निकटे अरबतटस्याथवा सुमालीलैण्डस्य कश्चन भागः, (३) रक्तसागरः, (४) नूबियाअफ्रीकायाः पूर्वोत्तरतटः, सम्भवतः प्राचीनं कुशद्वीपम्, (५) रक्तसागरं भूमध्यसागरञ्च सन्धाना प्रणालिका, (६) भूमध्यसागरस्य स भागो यत्र ज्वालामुखपर्वता ज्वालामुद्गिरन्ति (जयचन्द्र विद्यालङ्कार–भारतीय इतिहास की रूपरेखा, ख० ३, पृ० ४८४–६) अ० १५। पृ० १९ यदीमान्यखिलानि सत्यानि भवेयुस्तदा भारतीयपोतानाम् अरबसागरतो रक्तसागरं समतिक्रम्य भूमध्यसागरपर्यन्तं गमनं सर्वथा सम्भवति।

**नीलनद्या उद्गमः पुराणानि च**—अफ्रीकाया भारतीयव्यापारस्य पुराणैरतीवविचित्रपद्धत्या समर्थनं भवति। तेषु नीलनद्या उद्गमस्थानममरदेशोऽकथ्यत। अत्र यावद् अफ्रीकाया विक्टोरियासरसः पार्श्वे न्याजाया उदीच्यप्रदेशं तत्रत्यास्तन्नाम्नैव व्यपदिशन्ति। अत्र विषये इदं ध्यातव्यं यद् लेफ्टीनैण्ट स्पेकेमहोदयेन यदा नीलनद्या उद्गमान्वेषणाय योजना कृता तदा तेन सर्वतोऽधिकं साहाय्यं पुराणान्याश्रित्य निर्मिताद् मानचित्रात् प्राप्तम्। तत्र महाकृष्णा चन्द्रस्थानस्यैकस्माद् महतः सरसो निर्गत्य कुशद्वीपे प्रवहन्ती प्रदर्शिता। जञ्जीवारद्वीपान्ययद्यावद् नाम्नोऽस्यैव द्योतकेन उन्यमुराजीनामकशब्देन व्यपदिश्यन्ते। श्रीस्पेकेमहोदयेन लिखितं यद् एबीसीनियावासिभिः साकं हिन्दूनां व्यापारो इदाधारे प्रतिष्ठित आसीत्।

दिन्दुभिस्तेषां प्रदेशानां सर्वप्रथमं भौगोलिकं ज्ञानं प्राप्तम्, तच्च नीलनद्याः पुरोहितेभ्यः प्रदत्तम् ( पेरिप्लस पृ० २३० । ८७-८८ )।

**सुखाधार(सोकोतरा)द्वीपम्**—भारतीयानां तैः प्रदेशैर्व्यापारसम्बन्धः परवर्तिभिः साक्षिभिरपि समर्थितो भवति। प्रथमे शतके खीष्टीयाब्दे तेषां प्रदेशानां यात्राकारी पेरिप्लस-महोदयः एरियाकाप्रदेशस्थान् ( खम्भातस्याखातस्य पार्श्वप्रदेशाः कच्छः, सौराष्ट्रम्, गूर्जरश्च ) पोतान् पूर्व-अफ्रीकातटे व्यापारव्यापृतानपश्यत्। ततो भारतीयैर्व्यापारिभिर्मैडागास्कर सोकोतरा-प्रभृतिद्वीपानामुपनिवेशनं कृतम्। यूनानवासिनः सोकोतरा डियोस्कोरीडा इति कथयन्ति स्म। अयं शब्दः सुखाधारद्वीपस्यापभ्रंशो मन्यते ( पेरिप्लस आफ एरिथ्रियनसी, पृ० १३४ )।

मिश्रस्य प्राचीनायां राजधान्यां मेम्फिसस्य पार्श्वे काश्चन भारतीयाः प्रतिमा अङ्किताः सन्ति। श्रीफ्लिण्डर्सपिट्रीमहोदयेन ता आधृत्यायं परिणामो निष्कासितो यदस्मिन् नगरे भारतीया निवसन्ति स्म ( मैन १९०८, पृ० १२९ )। टालमीयूमीनशवनिखातस्थानस्यैकस्मिन् प्रस्तरे चक्रं त्रिशूलश्चोत्कीर्णे स्तः, किन्तु तानि सर्वाणि प्रमाणानि परवर्तियुगानां सन्ति। मिश्रदेशीयेतिहासस्य प्रारम्भिके युगे भारतस्य प्रभावं प्रदर्शयितुमस्माभिः खीष्टीयाब्दस्य चतुर्थीषु तृतीयासु च सहस्राब्दीषु द्वयोर्देशयोः सम्पर्कः साधनीयः।

कैश्चिद् विद्वद्भिर्मिश्रस्याक्रमणकारिका हिक्लासजातिरार्यत्वेन स्वीकृता, तद्द्वारा च एखनाटनेत्याख्यो मिश्रराज एकेश्वरवादी जात इत्यप्युल्लिखितम् ( भारतीयसंस्कृतिः, पृ० ४१०–११ )। अनेन मिश्रे प्राचीने काल एवार्यप्रभावस्य गमनस्य मार्गोऽतीव स्पष्टो भवति।

किं विलक्षणसभ्यातायामस्यां भारतस्य कश्चन प्रभाव आसीत्? कैश्चन विद्वद्भिर्मिश्रस्य भारतस्य च धर्मग्रन्थेषु सृष्टेरात्मनोऽमरत्वस्य देवानां नाम्नां सामाजिकव्यवस्थायाश्चानेकानि सादृश्यान्यन्विष्टानि। मिश्रस्यादिमो राजा मेनसनामा मनुना संवादितः, किन्तु इदमावश्यकं नास्ति यत् सर्वं सादृश्यं सम्पर्कस्य परिणामो भवेत्। तत् स्वातन्त्र्येण विकासस्य परिणामोऽपि भवितुमर्हति। बहुवारं द्वौ दूरस्थितौ विचारकौ कवी वा समानपरिस्थित्या प्रेरितौ भूत्वा समानरचनां विदधतः। अस्यां दशायां सादृश्यं घुणाक्षरं भवति। गभीरस्य वास्तविकस्य सादृश्यस्य कृते द्वयोर्देशयोः सम्पर्कस्य पथः कालस्य पौर्वापर्यस्य च ज्ञानमावश्यकं विद्यते।

**मोहेञ्जोदड़ोसभ्यताया मिश्रस्य च सभ्यतायाः सादृश्यानि**—मोहेञ्जोदड़ो इत्यस्योत्खननैरनेकानि तथाभूतानि वस्तूनि समुपालभ्यन्त, येषां मिश्रस्योत्खननैः प्राप्तैः पदार्थैः साकं कामं सादृश्यं विद्यते। श्रीमैकेमहोदयेन ( फर्दर एक्स कैवेशन्स एट् मोहेञ्जोदड़ो दिल्ली १९३८, पृ० ६४१–६४३ ) एतादृशान्यनेकान्युदाहरणानि प्रदत्तानि सन्ति। मिश्रस्य त्रयोदशस्य सप्तदशस्य च वंशयोर्मुद्राणां चित्रणं मोहेञ्जोदड़ो इत्यस्य ताम्रपट्टिकायामङ्कनेनात्यन्तं संवदति। उभयत्रापि शय्यायाः पार्श्वेन शयानायां नार्यां लघुमूर्तय उपालभ्यन्त। इमाः पार्श्वशयमूर्तय उपपत्नीनां रक्षितानां वा प्रतिनिधयो मताः। मिश्रे ता मृतैः साकं गर्ते निक्षिप्यन्ते स्म, यतः परत्र मृतस्य तत्र विषये किञ्चिदसौविध्यं न भवेत्। मोहेञ्जोदड़ो इत्यस्य तादृशीनां मूर्तीनां सम्बन्धे इदं निश्चितं नाभूद् यत् ताः शवनिखातस्थाने निक्षिप्यन्ते स्म, मिश्रमूर्तिषु जनान्तरस्य कृते शय्यायां पर्याप्तं स्थानमस्ति। मोहेञ्जोदड़ो इत्यस्य दृष्टान्तेषु तथा नास्ति।

द्वयोर्देशयोर्बालकैः स्तन्यपान कारयन्तीना जननीना प्रतिमा अप्युपालभ्यन्त । इमा विशेषतो देवप्रसादेन सन्तानप्रापकाना भक्तानां कृतज्ञताज्ञापकानि उपायनानि बुध्यन्ते । सिन्धस्य मिश्रस्य च तृतीय सादृश्य चतुष्पादिकाः सन्ति । यासां पादाः वृषभवद् निर्मिताः सन्ति । उभयत्रापि वृषभः शक्तेः सत्तायाश्च चिह्नमवबुध्यते स्म । अत इदमसम्भव नास्ति यद् राज्ञा ग्रामपतीना-ञ्चासने तेन स्थानं प्राप्त भवेत् । कतिपयेऽर्द्धगोलाकाराः कण्ठहारा अपि द्वयोर्देशयोः समानाः सन्ति ।

एतैः सादृश्यैर्द्वयोर्देशयोः सम्बन्धोऽवश्यं प्रतीयते, किन्तु तदतीव गभीरं नास्ति । श्रीमैकोप्रभृतयो विद्वासो द्वयोर्देशयोरन्यमध्यवर्तिदेशद्वारा परोक्षसम्बन्धमेव स्वीकुर्वन्ति । यावत् प्रत्यक्षसम्बन्धस्य प्रबलानि प्रमाणानि नोपलभ्यन्तेऽस्माभिरिदमेव मन्तव्य यत् प्राचीने मिश्रे भारतस्य कश्चन विशेषः प्रभावो नासीत् । चतुर्थशतकखीष्टीयाब्दस्योत्तरार्द्धे स सिकन्देरेण विजितः । तस्य मृत्योरनन्तरमागामिशतत्रयवर्षपर्यन्तमय देशः सिकन्दरस्यैकस्य सेनापतेः टालमीनामकस्य वशजाना हस्तेऽभूत्, अस्य सिकन्दरियानामिका राजधानी टालमीयुगेऽग्रे च रोमनयुगे यूनान-सस्कृतेरेक प्रधान केन्द्रमभूत् । तदा भारतेन साक सपर्के वृद्धि गते, अत्र यो भारतीयः प्रभावोऽभूत् तस्य यूनानप्रकरणे वर्णन भविष्यति ।

ईरानदेशे सप्तमशतकपर्यन्त पुरा पारसीकाना जरथुस्त्रमतावलम्बिना प्राबल्यमासीत्, तथापि बौद्धहिन्दुधर्मयोः कश्चन प्रसारोऽभूत् । अल्बेरूनीमहोदयेन लिखित यत् प्राचीने काले खुरासान-ईरान इराक मोसुल शामसीमापर्यन्त सर्वे देशा बौद्धा आसन् । अशोकस्य शिलालेखैरपीयमेव स्थितिः सूच्यते, किन्तु बौद्धधर्मेण साक हिन्दुधर्मोऽपि प्रसृतः । जेनोबनामकेन शामलेखकेन लिखितं यद् द्वाभ्या भारतीयाभ्या ग्रामपतिभ्या राज्ञो विद्रोहः कृतः, तौ तत्र सफलौ नाभूताम्, अतः स्वजातीयैः साकं पश्चिमं गतौ । आर्मीनियायाः प्रथमस्य अर्सकस्य राज्ञो वलरसेसस्य (१४९–१२७ खी० पू०) शरणं स्वीकृतवन्तौ । वलरसेसेन ताभ्या वानसरसः पश्चिमे फरातस्योपरितन्या द्रोण्या तरोनप्रदेशः प्रदत्तः । तौ तत्र न्युषितवन्तौ तथा तेषा देवाना प्रतिकृती-र्निर्मातु प्रारब्धवन्तौ, यान् भारते पूजयतः स्म । द्वादशवर्षानन्तरं भारतीयौ ग्रामपती तु अर्मीनियाराजेन हतौ, किन्तु तरोनप्रदेशे तयोः पुत्राणामेव शासनमभूत् । तैः गियस्नोदेमेत्र-नामकयोः स्वदेवयोर्मन्दिरे निर्मापिते । ते शीघ्रमेव महातीर्थेऽभूताम् । ३०४ तमे खीष्टीयाब्दे आर्मिनियाया मूर्तीना विध्वंस कुर्वन् सैण्टग्रेगोरी अत्र समागतः । प्रारम्भे तेन साफल्य न प्राप्तम्, किन्तु शीघ्रमेव तेन नूतन साहाय्य प्राप्तम् । भारतीया महता बलेन युद्धवन्तः, तैरिदमपि प्रार्थित यद् मूर्तयो न विध्वसनीयाः । षट् पुरोहिता मन्दिरस्य द्वारि युध्यमाना हताः । विजयप्राप्त्यनन्तर खीष्टानुयायिभिर्द्वादशहस्तसमुन्नताः पञ्चदशहस्तसमुन्नताश्च ताम्रमूर्तयो भञ्जिताः, मन्दिराणि भूमिसात् कृतानि, देमेत्रमन्दिरस्य स्थाने सैण्टगोरीनामकेन नूतन चर्चपद-वाच्य वस्तु कारितम् । गियस्तेमूर्तिस्थाने काष्ठस्य कोणाकोणि स्थापितम् । ५००० मूर्तिपूजकैर्जल-मज्जन कृतम्, ४३८ जनाः स्वधर्मे स्थिरा आसन्, ते पुरोहितानां मन्दिरसेवकानाञ्चैवानुचरा आसन्, तेषा शिरासि मुण्डयित्वा कास्पियनसागरस्य तटपार्श्वे फैतकरननामकस्थाने निर्वासन कृतम् ( जर्नल आफ् रायल एशियाटिक सोसायटी १९०४, पृ० ३०९ ) ।

उपर्युक्तयोर्द्वयोर्देवयोः गियस्ने इति कृष्णस्य विकृतं रूप मन्यते । अत इद स्पष्टं विद्यते यत् कृष्णोपासकानां भारतीयानामेका वसतिः आर्मीनियायां खीष्टीयाब्दात् १५० वर्षपूर्व स्थापिताऽऽसीत् । आगामिसार्द्धचतुश्शतवर्षाणीयं तत्रासीत् ।

सम्भवतस्तदेव वसतेः केचन जना बाकूनाम्नि रूसप्रदेशान्तर्वर्तिनि स्थाने कैस्पियन-सागरस्य पश्चिमे तटे ज्वालामुखमन्दिरं स्थापितवन्तः ।

**ईरानेदेशे भारतस्य साहित्यिकः प्रभावः**—ईराने यद्यपि भारतीयधर्मस्त्वाधिक्येन न प्रसृत', किन्तु भारतस्य साहित्यस्य प्रभावं ग्रहीतुमीरानवासिभिः काचनाप्यसहिष्णुता न प्रदर्शिता । अर्दशीरस्य पुत्रः शापुरः प्रथमः ( २४१ २७२ ई० ) अतीवोदारचेताः शासक आसीत् । तेन चिकित्सा-ज्योतिष-दर्शनप्रभृतिविषयका ग्रन्थाः सग्राहिताः । खुसरोप्रथमस्य ( नौशीखा ५३१ ५७९ खी० ) समये भारतीयग्रन्थाः पहलवभाषायामनूद्यमाना अभूवन् । अत्र पञ्चतन्त्रस्यानुवादो विशेषरूपेणोल्लेखनीयो विद्यते । खुसरोसमये बुरजोयेनामकेन वैद्येन भारतस्य यात्रा कृता ५५० खी० ) ईरान प्रति निवर्तमानेन भारतीयपण्डिताना साहाय्येनानूदिता भारतीयाः कथा ईरानदेश नीताः । तत्र प्रथमो महाश्च भागः पञ्चतन्त्रस्यासीत् । बुरजोयेनाम्ना यस्य पञ्चतन्त्रस्य पहलवभाषयाऽनुवादः कृतः, तस्मिन् वर्तमानग्रन्थापेक्षया काश्चन भिन्नाः कथा आसन् । अस्यान्ते तेन महाभारतस्य काश्चन कथाः पृथक् सयोजिताः । मूलपुस्तकेन साक तेषा कश्चन सम्बन्धो नासीत् । इद समग्रं पुस्तकं तेन मित्रभेदस्य प्रमुख पात्रद्वयमुपजीव्य करटकदमनक-नाम्ना प्रसिद्धिं नीतम् । पश्चिमे पुस्तकमिद नितान्तं लोकप्रियमभूत् । नौशीखासमये ईरानेन भारतात् शतरञ्जनामकक्रीडा शिक्षिता ( इंसा० ब्रिटा० १७।५८३ ) ।

**पञ्चतन्त्रस्य विदेशयात्रा**—प्रसङ्गेऽस्मिन् पञ्चतन्त्रस्य विदेशयात्रायाः सक्षिप्त इतिहासोऽप्रासङ्गिको न भविष्यति । विश्वसाहित्येऽतीवन्यूनैर्ग्रन्थैस्ताद्दशीभूमण्डलव्यापिनी लोकप्रियता प्राप्ता । योरोपस्य पूर्व-दक्षिण-पश्चिम-एशियाना सर्वत्र साहित्ये तेन स्थान प्राप्तम् । अस्य द्वे शते अनुवादा रूपान्तराणि चाभूवन् । पूर्वदक्षिणयोर्जावातः उत्तरपश्चिमयोः आईसलैण्ड यावत् षष्ट्या विविधाभिर्भाषाभिर्वाग्भिश्चास्यानुवादोऽभूत् । सर्वप्रथमम् ५५० ईसवीयेऽस्य पहलवीभाषायामनुवादोऽभूत् । ई० षष्ठे शतके एव पञ्चतन्त्रस्य पहलवीतः शामभाषयाऽनुवादोऽभूत् । अष्टमे शतके ई० अब्दुल्ला-इब्न अल्टमोकफ्फामहोदयेन कलिलः वदिमनः ( करटक दमनक ) नाम्नाऽस्य अरबभाषयाऽनुवादः कृतः, तत्र च स्वकीयाः काश्चन नूतनाः कथाः संयोजिताः । ततः पश्चिम-जगतो भाषासु जातानामनुवादाना मूलमिदमेवासीत् । एकादशे शतके खीष्टीयाब्दे सिमियाने-सेथेनास्य यूनानभाषयानुवादः कृतः, तेनानुवाकदेन पञ्चतन्त्राख्यग्रन्थः पूर्वयोरोप रुसञ्च प्राप्तः । पूर्वयोरोपस्य स्लावभाषासु तस्यानुवादोऽभूत् । १२५१ तमे खष्टीयाब्दे तस्य स्पेनिशभाषान्तर-मभूत् । प्रायः १२६० तमे खीष्टीयाब्दे पूआ ( दक्षिण-इटली ) वासिना जानमहोदयेन पञ्च-तन्त्रस्य प्राचीनत इब्रानरूपान्तरतो लैटिनभाषायामनुवादः कृतः । लैटिनानुवादमाश्रित्य विहित एको जर्मन-अनुवादः १४८० तमे खीष्टीयाब्दे प्रकाशितोऽभूत् । स तथा लोकप्रियोऽभूत् यद् मुद्रणकलायाः प्रारम्भिके युगे पञ्चाशद्वर्षेषु तस्य विंशतिः सस्करणान्यभूवन् । तस्य डेन-

डच-आइसलैण्डिक-उदीच्य-योरोपयहूदिपिडिशवाणीषु अनुवादोऽभूत्। जानकी पुस्तकस्पेनिशजेक इति इतालवी इति चानुवादानामाधारौ अभूताम्। इतलवतीत एवास्य प्रथम आङ्ग्लानुवादोऽभूत्, यः १५७० तमे खीष्टीयाब्दे प्रकाशितोऽभूत्। इत्थ शेक्सपीयरकाले सस्कृत-पह्लवी-अरबी-इब्रानी-लैटिन-इटालियन इत्येतेषा षट्सु परम्परासु पुरस्सरन् आङ्ग्लानुवाद आङ्ग्लजनाना मनोविनोद कृतवान्।

कलिलः वदिम्नः इत्यस्यरबीरुपेण द्वादशे शतके खीष्टीयाब्दे नसरुल्लामहोदयेन पारसीभाषायामनुवादः कृतः। पश्चात् तस्य अनवरीरुहेलीनाम्ना पञ्चदशे शतके खीष्टीयाब्दे एक नव रूपं प्रदत्तम्। तस्य तुर्की-पश्चिमी-मध्य-एशियाभाषाभिः फ्रेञ्चभाषायाम् १५४४ तमे खीष्टीयाब्दे पिल्वे इत्यस्य कथानामभिरनुवादोऽभूत्। एकोऽन्यः फ्रेञ्चानुवादस्तुर्कीतोऽभूत्। अनयोर्द्वयोः आग्ल जर्मन-स्वीड-डच-पोलिश-हगेरियन-यूनानीभाषास्वनुवादोऽभूत्, तथा पिल्पे इत्यस्य विदपई इत्यस्य च नाम यूरोपस्य प्रतिगृह गतम्। अथ ताभ्या ग्रन्थाभ्या कथाश्रावकः पण्डितो विद्यते, विद्यापतेश्चापभ्रशो मन्यते। विष्णुशर्मणः स्थाने सम्भवतः कस्यचन प्राचीनस्य सस्कृतस्य प्राचीने पुस्तके इदमेव नाम प्रयुक्त भवेत्।

ईराने बौद्धप्रभावस्यैको मनोरञ्जकः साक्षी मध्य-एशियात उपालभ्यत। अत्र दन्दान उइलिकतः कृष्णश्मश्रुवज्रधरस्य बोधिसत्त्वस्यैक चित्रम् ईरानाकृतिवेशभूषासूपालभ्यत। इय स्पष्टत ईराने विकसिताया बौद्धकलायाः कृतिरस्ति, ततश्च मध्य-एशिया गता। चित्रस्यास्य कालोऽष्टम शतकमुच्यते। एतेनेद स्पष्टमस्ति यत् षष्ठसप्तमशतकपर्यन्तम् ईराने बौद्धधर्मस्य प्रभाव आसीत् (मजूमदार—क्लासिकल एज, पृ० ६३०)।

युआनच्वागेन ईरानाधीनस्य तथा भारतस्य पश्चिमे लङ्की-लोनामकस्य राज्यस्य विषये लिखित यदत्र १०० मठाः ६००० भिक्षवः पाशुपतसम्प्रदायस्यानेकशतानि मन्दिराण्यासन्। ईराने द्वित्रा बौद्धमठा अनेके देवालयाश्चासन् (बील २। २७६-७७)।

चतुर्थे शतके रोमसाम्राज्यस्य पतनमभूत, किन्तु पूर्वरोमनसाम्राज्यम् १४५३ खीष्टीयाब्दपर्यन्तमभूत्। रोमसाम्राज्यं यूनानस्योत्तराधिकार्यासीत्। विजेतृभिः सद्भिरपि तै रोमवासिभिर्विजिताना यूनानवासिना सस्कृतिः पूर्णतया स्वीकृता, अतोऽत्र यूनाने रोमदेशे च भारतीयप्रभावस्य सहैव वर्णनमुचित प्रतीयते।

अत्र भारतीयप्रभावस्य प्रश्नोऽतीव जटिलो विद्यते, पाश्चात्यसंस्कृतिसभ्यतयोरादिस्रोतो यूनानदेशोऽस्ति, पाश्चात्यविदुषा तत्र महान् पक्षपातोऽनुरागश्च स्वाभाविकौ स्तः। तेषामयं प्रयत्नोऽभूद् यत् प्राचीनकाले दर्शनकलाविज्ञान-साहित्यक्षेत्रेषु या काचनाप्युन्नतिरभूत् सा यूनान-सभ्यतायाः प्रभावस्य परिणाम इति साधनीयम्। तादृशा विदुषा न्यूनता नास्ति ये भारतीयदर्शन-नाट्य-साहित्य-मूर्तिनिर्माणप्रभृतिललितकलानामादिस्रोतो यूनानं मन्यन्ते। अस्य प्रश्नस्य सम्यग् विवेचनार्थमिदमावश्यकं विद्यते यद् भारतस्य यूनानस्य रोमस्य च पारम्परिक-सम्बन्धानामितिहासो दृश्येत; यतः सम्बन्धे सत्येवैको देशोऽन्यं देश प्रभावयितु शक्नुयात्।

**भारतस्य यूनानस्य रोमस्य च पारस्परिकः सम्पर्कः—**सम्पर्कोऽयं स्थूलतया युगत्रये विभक्तु शक्यते (१) प्राक्सिकन्दरयुगम् (३२७ खीष्टीयाब्दपू० पर्यन्तम्)। अस्मिन् युगे द्वयोर्देशयोः साक्षात् सम्बन्धो नासीत्। (२) टालमीयुगम् (चतुर्थशतकखीष्टीयाब्दपूर्वतः प्रथमश० खीष्टीयाब्दम्) (३) रोमनयुगम् (प्रथमशतकखीष्टीयाब्दात् चतुर्थशतकखीष्टीयाब्दपर्यन्तम्) सिकन्दरस्य भारतप्रवेशात् (३२६ खीष्टीयाब्दपू०) पूर्व यावत् भारतस्य यूनानेन साकं कश्चन प्रत्यक्षः सम्बन्धो नासीत्, यूनानवासिना भारतस्य यज्ज्ञानमासीत् तद् ईरानद्वाराऽऽसीत्। अस्यैकं प्रबल प्रमाणमिद विद्यते यद् भारतस्य प्राचीनतमयूनानविवरणेपु सिन्धुः इन्दुस-(इण्डस) पदेन व्यवह्रियते स्म। पश्चाद् यदा परेक्लसप्रभृतयो यूनानवासिनः स्वयं भारतं समागता. तदा तेषामेतेन महदाश्चर्यमभूत् यत् सिन्धुः प्राचीनलेखकैः इन्दुत्वेन कथं लिखिता, वस्तुतस्तस्य कारणादिदमासीत् यद् यूनानवासिभिरिदं नाम साक्षाद् भारतान्न किन्तु ईरानवासिभ्यो गृहीतम्। ईरानभाषाया संस्कृत 'स' शब्दो हत्व प्राप्नोति। अतः सिन्धुशब्दाद् हिन्दुशब्दः प्रादुरभूत्। इओनी-यूनानवासिना भाषायाम् ऊष्मवर्णा नासन्, अतस्तै. हिन्दुरिति इन्दुरिति कृतम्। सिकन्दरतः पूर्वं हिकाटियस (५२० खीष्टीयाब्द) हिराडोटस (४५० खीष्टीयाब्द) तिसिया (३९८ खीष्टीयाब्दपूर्व) इत्याख्यैर्भारतस्य विवरण लिखितम्। इद सर्वम् ईरानसम्राजा सेवकाना स्काईबेवतिसियाप्रभृतीना यूनानाधिकारिणा तथा भारतीयप्रान्ते सिन्धे कार्यकारकाणाम् ईरानाधिकारिणा विवरणमाश्रितम्। तदा यूनाने यानि भारतीयानि वस्तूनि गच्छन्ति स्म, तान्यपि फिनीशियनव्यापारिणा द्वारैव। इत्थं भारतेनापि यूनानस्य कश्चन प्रत्यक्षपरिचयो न प्राप्तः।

**प्राक्सिकन्दरयुगस्य यूनाने भारतस्य प्रभावः—**इयमतीव विचित्रा वार्ता विद्यते यत् सिकन्दरात् पूर्ववर्तिनो यूनानस्य भारतस्य च पारस्परिकप्रभावसम्बन्धे विद्वासः सर्वथा विरोधिप्रमाणानि समाश्रयन्ते। सरविलियमजोन्स-श्रीमैकडानल-श्रीराधाकृष्णन्सदृशाः प्रकाण्डाः पण्डिता यूनानदर्शने भारतस्यात्यधिकं प्रभाव मन्यन्ते, अन्यतो बार्नेटसदृशाः पुरातत्त्वज्ञो भारत यूनानस्य ऋणदायक मन्यते। अनयोर्द्वयोर्मुख्य आधारो भारतस्य यूनानस्य च प्राचीनदार्शनिकविचारेष्वद्भुत सादृश्यमस्ति। अत्रेद प्रदर्श्येदं प्रदर्शयिष्यते यन्मतद्वय प्रबलं प्रमाणं नाश्रयते। उभयत्रापि सिकन्दरसमय यावद् दर्शनस्य स्वतन्त्रो विकासोऽभूत्।

**भारतस्य यूनानस्य च दार्शनिकविचाराणां सादृश्यम्—**भारतस्य यूनानस्य च दार्शनिकैः सृष्टौ विश्वस्वरूपे जन्मान्तरे च विषये प्रायः समानान्येव वस्तूनि प्रतिपादितानि। द्वयोर्देशयोः कानिचन विचारसादृश्यानि निम्नलिखितानि सन्ति—

(१) ऋगवेदस्य नासदीयसूक्ते (१०।१२९) परमेष्ठिना प्रजापतिना सृष्टेस्तत्त्वं 'गहन गम्भीरं सलिलम्' प्रतिपादितमस्ति (सलिल सर्वमा इदम्)। यूनानदर्शनस्य पितृत्वेन प्रसिद्धेन मिलेटसवासि-थेल्स (६२४ स्वी० पू०)नामकेन दार्शनिकेन विश्वस्य सर्ववस्तूनामुद्गमस्थान जलं स्वीकृतम् (बस आ-ए हिस्टरी आफ् बुद्धिस्ट फिलासफी, पृ० १२)।

(२) ऋग्वेदे (१०।७२) ब्रह्मणस्पतेरयं सिद्धान्तो विद्यते यदसतः सत उत्पत्तिरभूत् (असतः सदजायत)। अत्रास्यच्छब्दस्येदं तात्पर्यमस्ति यत् सृष्टेर्मूल तत्त्वमस्माकमनुभवा-

गम्य विद्यते। अत एवास्माकं दृष्ट्या तदसदस्ति। थेल्ससमकालिकेन ६ श० खी० पूर्वस्य यूनानदार्शनिकेन एनेक्सिमाण्डरेणापि (६११-५४७ खी० पू०) यूनाने एतादृशः सिद्धान्तः स्थापितः ( बरुआ—ए हिस्टरी आफ् दि बुद्धिस्ट फिलासफी पृ० १७ )।

( ३ ) ऐतरेयब्राह्मणस्य रचयितुर्महीदासस्य अरस्तोश्च ( ३८४—३८२ ई० पू० ) आत्मनो विचारोऽध्यात्मशास्त्रविषयकाश्चानेके विचाराः सदृशाः सन्ति ( बरुआ—पृ० ५२, ५६,६२,६६,८१ )।

( ४ ) कठोपनिषदो नचिकेतसस्तुला यूनानस्य दार्शनिकपरमैनिडीज ( बरुआ पृ० २६४ ५ ) इत्यनेन तथा प्लेटो ( अफलातून ) इत्यनेन कृता। परमैनिडीजनामा नचिकेता इव ब्रह्मवादी आत्मवादी वासीत् प्राणवादिना भूतवादिना वा विरोध्यासीत्। मोक्षमूलर-महोदयेन आत्मा रथी, देहो रथः, बुद्धिः सारथिः, मनः प्रग्रहः, इन्द्रियाणि अश्वा इति कठो-पनिषदो रूपकस्य प्लेटो इत्यस्य तादृश्योपमैव नितान्तं सादृश्य प्रदर्शितम्।

( ५ ) प्लेटोमहोदयस्य ( ४२७—३४७ ख्री० पू० ) प्रसिद्धयोः सिद्धान्तयोः—विचार-वादस्य ( थियरी आफ् आइडियाज ) अमरत्ववादस्य च मूलं गार्ग्यायणस्य कौषीतकि उपनिषत् प्रतिपाद्यते ( बरुआ पृ० १०३—५ )।

( ६ ) उद्दालकस्यारुणेः प्रकृतेरात्मनश्च विचार एनेक्सेगोरसेन (५००—४२८ ई० पू०) काम सादृश्यमादधाति। छान्दोग्योपनिषदि उद्दालकेन सर्वे पदार्थाः परस्पर तत्त्वतो भिन्नाः सन्ति इति स्वीकृतम्, तेषु चानन्तानि सूक्ष्मतत्त्वानि स्वीकृतानि। एनेक्सेगोरसेनापि तदेव मन्यते स्म। अस्या दशायामय प्रश्नो भवति यद्यन्नं शरीराद् भिन्नमस्ति तर्हि तद् मांसस्य मज्जायाश्च भागः कथ भवति? एतस्योत्तरमिदं भवति यत् तत्र प्रथमत एव मांसरुधिरमज्जास्थिसूक्ष्म-तत्त्वानि भवन्ति, तानि शरीराङ्गानि भवन्ति। यूनानदार्शनिकेन एनेक्सेगोरसेनापि ( ५००—४२८ खी० पू० ) सैवोपमा प्रदत्ता। अस्यैव तत्त्वस्य प्रतिपादनार्थमुद्दालकेन कथितम्—'दध्नः सो स मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति, तत् सर्पिर्भवति' ( छान्दोग्य उप० ६।६।१ )। अथ चोद्दालक इदमपि मन्यते स्म यदिदं जगत् तेजोजल-पृथिवीभिरावृत्त विद्यते, तेषाञ्च विविधानि रूपाणि सन्ति। सिद्धान्तोऽयं पाइथागोरसस्य ग्रन्थेषूपलभ्यते।

( ७ ) एम्पेडोक्लीज् ( प्रायः ४९५—४३५ ई० पू० ) इत्यस्याय सिद्धान्त आसीद् यत् किमपि वस्तु तथोत्पत्तु न शक्नोति यत् पूर्वं नासीत्, विद्यमानस्य च विनाशो न भवेत्। इदं साङ्ख्यस्य सत्कार्यवादस्य गीतायाः 'नासतो विद्यते भावो नाभावो विद्यते सतः' इत्यस्य च रूपान्तरमास्ति।

( ८ ) ५४० खी० पू० लूकानियायाः पश्चिमभागे कोकेइन्समहोदयेन एलियानामकं नगर स्थापितमासीत्। अत्र परमैनिडीजमहोदयेन ( जन्म ५१५ ई० पू० ) तदुत्तराधिकारिणा जेनो( जन्म ४८९ ई० पू० )महाशयेन चैको दार्शनिकः सम्प्रदायः स्थापितः। एलियाया विकासेन स एलियीयः ( Eliatic ) उच्यते। तस्य केचन मुख्याः सिद्धान्ता इमे सन्ति—ईश्वरो

जगच्च एकमेव वस्तु वर्तते, विविधरूपेण दृश्यमानाना पदार्थाना वास्तविकी सत्ता काऽपि नास्ति ।[1] एते विचारा उपनिषत्सु वेदान्तदर्शने चोपलभ्यन्ते ।

( ९ ) यूनाने पाइथागोरस ( ५८२–५०६ खी० पू० )-प्लेटो ( ४२७ खी० पू० ३४८ खी० पू० )–प्रभृतिभिरनेकैर्दार्शनिकैः पुनर्जन्मसिद्धान्तः प्रचारितः । उच्यते यत् पाइथागोरसः स्वकीयान्यनेकानि पुनर्जन्मानि स्मरति स्म । भारते पुनर्जन्मसिद्धान्तोऽतीव प्राचीनकालात् प्रचलित आसीत् ।

( १० ) पाइथागोरसेनैको दार्शनिकः सिद्धान्तः स्थापितः । अत्र तेन स्वानुयायिभ्यः पुनर्जन्म, पञ्चभूतेभ्यः सृष्टिनिर्माण तपस्या चोपदिश्यते स्म । तदनुयायिनैक्येन सघेन सघटिता आसन् । भक्ष्याभक्ष्यवस्तुविषयकान् नियमान् पालयन्तः सयमेन जीवन यापयन्ति स्म । मास-मदिरादिवस्तु निषिद्धम्, 'अहिंसा परमो धर्म.' मन्यते स्म[2] ।

( ११ ) यूनाने षष्ठश० खी० पू० आरफियन्सेन सम्बद्धः 'आरफिवादः' प्रचलितः, अत्र जन्मान्तरवादः शिक्ष्यते स्म, आत्मनो मुक्तिः समर्थ्यते स्म । स शरीरमात्मनो बन्धन कारावासञ्च मन्यते स्म[3] ।

( १२ ) एतेषा सर्वेषा सादृश्यानामुपसहारः सरविलियमजोन्समहोदयस्य शब्देषु इत्थ कर्तु शक्यते–दर्शनशास्त्राणा विषये इद पर्याप्त भविष्यति यद् न्यायपेरिपेटेटिकयोः, वैशेषिक आयोनिकयोः, वेदान्तप्लैटोनिकयोः, साख्य-इटेलिनयोः, योग-स्टोइकयोः समानता दृश्यते, येन गौतमस्य तुला अरस्तुना, कणादस्य थेल्सेन, जैमिनेः सुकरातेन व्यासस्य प्लेटो इत्यनेन कपिलस्य पाइथगोरसेन पतञ्जलेश्च जेनो इत्यनेन कर्तु शक्यते ।

**पाइथागोरसस्य भारतयात्रया यूनानवासिभिर्भारतीयदर्शनस्य सिद्धान्ता गृहीता इति मतप्रत्याख्यानम्**—एतेषा सादृश्याना समुपस्थापनान्तर यूनाने भारतस्य प्रभावस्य पक्ष-

---

१ परमेनीडीजमहोदयो यूनानस्य शङ्कराचार्यः कथयितुं शक्यते; यतो हि स शङ्कराचार्यवद् अद्वैतवाद्यासीत्, मायां व्यावहारिकीं पारमार्थिकी च सत्तां स्वीकरोति स्म । एतदर्थं तथोपरिलिखितदार्शनिकनां सिद्धान्तार्थञ्च द्र० डा० राधाकृष्णन् हिस्टरी आफ फिलासफी ईस्टर्न एण्ड वेस्टर्न खं० २, पृ० २६–७५ ।

२. राधाकृष्णन् यू० पु० खं० २, पृ० ३२–४ ।

३. तत्रैव खं० २, पृ० २७ अस्य मतस्य संस्थापकः थ्रेसस्य एकश्चारणः आरफिटियस आसीत् । आरफीवादे ( Orfhiccult ) आत्मनः शरीरबन्धनमुक्तिविचारो विशुद्धो भारतीयोऽस्ति, जेलरमहोदयः ( और लाइन आफ् दी हिस्टरी आफ् ग्रीक फिलासफी, पृ० ६ ) यद्यपि विचारस्यास्य मूलं स्रोतो भारतं मन्यते, किन्तु तस्येदं कथनमस्ति यद् यूनानवासिभिरयं विचार ईरानाद् गृहीत. । जरथुस्त्रस्योपदेशेषु तस्य विशेषेण महत्त्वाभावाद् अद्यत्वे विद्वांसो विचारोऽयं भारताद् यूनानं गत इत्येव पक्षं सत्यं मन्यन्ते (राधाकृष्णन् पू० यु० खं० १, पृ० २१–२ ) ।

पोषका विद्वासः प्रभावस्यास्य पक्षमपि निर्देशं कुर्वन्ति। यूनाने इयमेका प्राचीनाऽनुश्रुतिर्विद्यते यत् थेलस-एम्पीडोक्लीज एनेक्लेगोरस-डिमोक्रीटसप्रभृतयो दार्शनिका दर्शनमध्येतु पूर्वदेशान् गताः पाइथोगोरसविषये (५८२–५०६ खी० पू०) इयाम्ब्लिकसमहोदयेन लिखित यत् स द्वादश वर्षाणि बेबीलोनेऽवात्सीत्, तेन पारसीकपुरोहितेभ्यः (मैजाइ) ईश्वरोपासनायाः सकला रीतिः पठिता। अन्यैरपि लेखकैस्तस्य मिश्रगमनमपि निर्दिष्टम्। पाइथागोरसस्य इय यात्राऽतीव समर्थ्यते कथ्यते च यद् यदि स भारतं न गतस्तर्हि इराके तेन भारतीयाना सम्पर्केण पुनर्जन्म-सिद्धान्तो गृहीतः। पुनर्जन्मसिद्धान्तः पाइथागोरसात् पूर्व यूनानदर्शने नितान्तं नासीत, इद नूतनं वस्तु तेन भारतस्य दार्शनिकेभ्य एव प्राप्तम्।

उपरि प्रतिपादितानां सादृश्यानां बहूनि सादृश्यानि नितान्त काकतालीयानि सन्ति। अधिकं बलं पाइथागोरसस्य भारतगमने ततश्चैव पुनर्जन्मसिद्धान्तस्य पश्चिमे जगति नयने च स्थाप्यते। अत्र विशेषरूपेणैतद् द्वयमेव विचारयिष्यते। यूनाने भारतस्य प्रभावस्य मुख्य आधारोऽयमेवास्ति। अस्य खण्डनेन प्रधानमल्लनिर्बर्हणन्यायेन युक्त्यन्तराणि स्वयमेव प्रत्या-ख्यातानि मन्तव्यानि।

दौर्भाग्येन पाइथागोरसस्य मिश्रस्य बेबीलोनस्य पूर्वदेशानाञ्च यात्राया वर्णनकारिण्योऽनुश्रुतयोऽतीव अर्वाचीनाः सन्ति। तासु कापि द्वितीयशतकखीष्टीयाब्दात् प्राक्तनी न विद्यते। उपरि इयेम्ब्लिकसस्योल्लेखः कृतः। तस्य समयः ३३० खी० पू० अस्ति। पाइथागोरसस्य ७००–८०० वर्षानन्तरालिखितानामनुश्रुतीना प्रामाण्य सन्दिग्ध विद्यते। यदि वस्तुतस्तादृशी घटना घटिताऽभविष्यत्, पाइथागोरसे तस्या गहनः प्रभावोऽभविष्यत्, तदा इद नावबुध्यते यत् पूर्ववर्तिलेखकैस्तस्य वर्णन कथन्न कृतम्। युक्तिरिय सामान्यतः सकलेऽस्मिन् प्रश्ने प्रभवति। यूनानदार्शनिकैर्भारताद् यदि किञ्चित् गृहीतं तदा तस्योपकारप्रदर्शने कथ कार्पण्य कृतम्? भारतीयदर्शनस्य स्पष्टैः शब्दैश्चर्चा कथ न कृता? इद कथयितु शक्यते यत् तैः स्व चौर्यं गोपयितु स्वोत्कर्षं प्रतिपादयितु वा तथा कृतम्, किन्तु वय यूनानवासिना कामपि तादृशीं प्रवृत्तिं नोपलभामहे। प्लेटोमहोदयैर्ज्ञानदृष्ट्या मिश्रवासिना तुलाया यूनानवासिनो बालका गणिता (राइ० पृ० १५८)। यदि वस्तुतो तस्य भारतस्योन्नतदर्शनस्य ज्ञान भवेत् तदा स भारत-विषयेऽपि तादृशीमेव वार्ता लिखितु शक्नोति स्म। हिराडोटस (२।१२३) महोदयो लिखति यद् मिश्रवासिभिः सर्वप्रथममात्मनो मृत्योः पश्चादनेकयोनिषु भ्रमण भवतीति सिद्धान्तस्य प्रतिपादन कृतम्। यद्यय सिद्धान्तो भारताद् गतोऽभविष्यत् तदा हिराडोटसेनेदं तथ्य तिरोधातु कथं शक्यते। हिराडोटसस्य (पञ्चमश० खी० पू०) पाइथागोरस्य (५८२–५०६ खी० पू०) समये एकस्य शतकस्य व्यवधान विद्यते, तस्य वार्ता पाइथागोरसस्य मृत्योः ७००–८०० वर्षानन्तर लिखिताया इमम्ब्लिकसस्यानुश्रुत्या अधिका प्रामाणिकी विद्यते।

श्रीरालिन्सनस्य शब्दोऽयं वर्तते यत् ३८८ खी० पूर्व यूनानसाहित्ये एकोऽपि तथा सङ्केतो नास्ति येनेदं साधित भवेद् यद् यूनानवासिना भारतीयदर्शनस्य सत्तायाः किमपि ज्ञानमासीत् (राइ० पृ० १५८)। अतो यूनाने भारतीयदर्शनस्य प्रभावसाधकाना प्रमाणाना सर्वथाऽभावो

विद्यते। अत्र कश्चन सन्देहो नास्ति यद् देशद्वयस्य दार्शनिकविचारेष्वनेकानि सादृश्यानि सन्ति। परमस्माक पार्श्वे तादृशानि प्रमाणानि न सन्ति यैर्द्वयोर्देशयोः पारस्परिकः सम्बन्धः सूचितो भवेत्, तथेद ज्ञातु शक्येत यद् भारतेन कैः साधनैः कया भाषया च यूनानदर्शन प्रभावितम्। अस्यैकमात्राधारस्य पाइथागोरसस्य भारतयात्रारूपस्याप्रामाणिकतायाः प्रथममुल्लेखः कृतः।[१]

**यूनानभारतयोर्दार्शनिकविचाराणां साम्यस्या कारणानि**—यूनाने भारतस्य प्रभावविषये उपर्युक्तानेकसादृश्योपस्थापका इद कथयितु शक्नुवन्ति यत् तानि काकतालीयानीति तिरस्कर्तु न शक्यते। तानि तथा प्रचुरा सन्ति यद् भारतस्य प्रभावस्वीकारमन्तरा तेषा किमपि व्याख्यानान्तरं भवितु नार्हति। अत्रैतावदेव पर्याप्तमस्ति यद् यूनानभारतनिवासिन उभयेऽपि आर्यजातीया आसन्। यथा तेषा भाषाया समानता विद्यते तथैव दार्शनिकविचारेष्वपि मूल्त एकवशात् प्रादुर्भावेण सादृश्य सम्भवति। तस्य द्वितीय कारण लघु-एशियादेशे चतुर्दशशतक-खीष्टीयाब्दात् पूर्व न्युषिता भारतीया आर्या भवितुमर्हन्ति। इत्थ मिश्रे यदि पुनर्जन्मविचारस्य मूल भारतीय मन्तव्यं भवेत्, तदा स विचारः टिक्सोसजातेराक्रमणेन साक (१५०० ई० पू०) मिश्रे गत इति मन्तव्य भवेत्। मोहिञ्जोदड़ो इत्यस्याप्रत्यक्षसम्पर्केणापि स प्रभावो गन्तु शक्नोति। किन्तु मिश्रे आभ्या स्रोतोभ्यां पुनर्जन्मविचारगमनसिद्धान्ते महती आपत्तिरिय विद्यते यद् मिश्रस्य पुरातत्त्ववेत्तारः ५०० खीष्टीयाब्दपूर्वपर्यन्त मिश्रस्य लेखेषु पुनर्जन्मविचारस्य किमपि चिह्न नोपलभ्यते (इलि० ३। ४३४)।

पूर्वमिद प्रत्यपादितमस्ति यत् सिकन्दरात् पूर्व भारतयूनानयोः कश्चन साक्षात् सम्बन्धो नासीत्। द्वयोर्देशयोः अगाधाः समुद्राः, उत्तुङ्गाः पर्वताः, विशाला मरुभूमयः, विरोधीनि राज्यानि चालङ्घ्या बाधा आसन्। अतः सम्पर्को दुश्शक आसीत्। तेनेद न सम्भवति यद् यूनानस्य प्राक्सिकन्दरकालिकदर्शने भारतस्य कश्चन साक्षात् प्रभावो भवेत्।

यथा प्रारम्भिकयूनानदर्शने भारतस्य प्रभावस्य किमपि प्रबल प्रमाण नास्ति, तथैव पाश्चात्त्यविदुषामिद मतमपि निर्मूल प्रतीयते 'प्रत्येक वस्तु अस्माक पुरोऽमु परिणाम सकेतयति यद् भारतीयं दर्शन यूनानादागतम्' (बर्नेट—अर्लीग्रीक फिलासफी पृ० २१)। भारतीयाना यूनानवासिना विषयेऽतीव स्वल्पं ज्ञानमासीत्। यूनानवासिभिः साक सम्पर्कस्य प्रमाणं केवलस्य पाणिनेरेकस्मिन् सूत्रे यवनशब्दस्योल्लेखो विद्यते। सिकन्दरात् पूर्वमस्माक केवलयोर्द्वयोर्यूनान-वासिनोः स्काईलैक्स (५१२–१० खी० पू०)-यूडोक्सस (१४६–११७ खी० पू० मध्ये) इत्यनयोरेव भारतागमनस्य ज्ञान विद्यते। अत इदं न सम्भवति यद् भारतं दर्शनसम्बन्धे यूनानस्य ऋणधारकं भवेत्।

---

१. राधाकृष्णन्—हिस्टरी आफ फिलासफी ईस्टर्न एण्ड वेस्टर्न७ (लण्डन १९५२) खं० १, पृ० २३–२५ इत्यत्र। कथिततमस्ति यत् पाइथागोरसस्य भारतीयदर्शनस्य च सिद्धान्तानां सादृश्यदर्शनस्येतिहासस्याद्ययावदसमाहिता समस्या विद्यते। अत्र ईसवीयसंवत्सरस्या-रम्भतः प्राथमिकेषु दर्शनेषु भारतीयप्रभावस्य सम्भावनामात्र प्रकटितम्।

सिकन्दरकाल यावद् यूनानस्य भारतस्य च दर्शनं परस्परमृणधारकं नासीत्। द्वयोः सादृश्यस्य कारणद्वयमस्ति (१) स्वातन्त्र्येण विचारे क्रियमाणेऽपि एतद् द्वयमपि समान परिणामं प्राप्नोति। अथवा द्वाभ्यां मूलार्यजातेर्दायरूपेण समानो विचारः प्राप्तः। समानपरम्परया विकास प्राप्नुवतां दर्शनानां सादृश्यं स्वाभाविकमासीत्।

## भारतस्य यूनानस्य च संपर्कस्य द्वितीयं युगम् (चतुर्थ श० ख्री० पूर्वतः प्रथमशतकख्रीष्टीयाब्दं यावत्)

**यूनानभारतयोः पारस्परिकसम्बन्धेषु वृद्धिः**—सिकन्दरस्याक्रमणेन भारतयूनानयोः साक्षात् सम्बन्धः स्थापितः, पूर्वपश्चिमयोर्वैवाहिकः सम्बन्धः कारितः, किन्तु तस्य भारतेऽतीव न्यूनः प्रभावोऽभूत्। तस्य मृत्योः षड्वर्षानन्तरं पञ्चाम्बुप्रान्ते यूनानशासनस्यान्तोऽभूत्। ३०६ ख्री० पू० सिकन्दरस्यैकेन सेनापतिना सेल्यूकसेन सिकन्दरस्य नष्टान् भारतीयप्रदेशान् पुनर्जेतुं प्रयतितम्, किन्तु युद्धे चन्द्रगुप्तेन पराजितेन तेन स्वकन्या हिन्दुकुशपर्यन्त. प्रदेशश्च मौर्यसम्राजे समर्पितौ। ततो द्वयो. राज्ञो दूतसम्बन्धस्य स्थापनाऽजायत। चन्द्रगुप्तस्य राजसभायां यूनानराजदूतो मेगस्थनीजमहोदय. समागतः, तस्य पुत्रस्य बिन्दुसारसमये (२९८–२७२ ख्री० पू०) सीरियाया राज्ञा एंटियोकसेन मेगस्थनीजस्थाने डेईमेकसनामा यूनानदूतः प्रेषितः। तदैव मिश्रस्य राज्ञष्टाल्मीसञ्ज्ञकस्य डायोनीसियसनामा दूतः पाटलिपुत्र समागतः। बिन्दुसारस्य यूनानभूपालैः साकं पत्रव्यवहारो निरन्तरः सम्पर्कश्च आस्ताम्। तेनैकेन पत्रेण एण्टी-ओकस (२८०–२६२ ई० पू०) महोदयो निवेदितो यद् भवता यूनानसुरा द्राक्षा एको दार्शनिकश्च (सोफीस्ट) प्रेषणीयः। एण्टी ओकसेनोत्तरितं यद् मदिराद्राक्षाप्रेषणे तु मम चेतः प्रसीदति, किन्तु दार्शनिकः प्रेषयितुं न शक्यते, यतो हि यूनानवासिभिः स धर्मो न मन्यते (राइ० पृ० ३९)।

**अशोकस्य धर्मदूताः**—यदा यूनानभूपालाः स्वान् राजदूतान् भारते प्रेषयन्ति स्म, तदैव सम्राजाऽशोकेन तेषां राज्येषु स्वधर्मदूताः प्रेषिताः। तस्य शाहबाजगढस्याभिलेखे सीरियाया राज्ञोऽन्तियोकस्य (एण्टी-ओकस २६१–२४६ ई० पू०) राज्ये ततश्च परेषां निम्नलिखितानां चतुर्णां यवन (योने) राजानां पार्श्वे दूतप्रेषणस्योल्लेखो वर्तते—

(१) तुरमायः (मिश्रस्य टाल्मी द्वितीयः २८५ ख्री०, पू० २४७ ख्री० पू०)

(२) अन्तेकिनः (मकदूनियाया एण्टीगोनस २७७ ख्री० पू०, ३९३ ख्री० पू०)

(३) मकः (साईरीनिया उत्तर-अफ्रीकाशासकोमगसः २८२–२५८ ख्री० पू०)

(४) अलिकसुन्दरः (एपिरसस्य सिकन्दरः २७२ ख्री० पू०–२५५ ख्री० पू० अथवा कोरिन्थस्य सिकन्दरः २५२ ख्री० पू०, २४४ ख्री० पू०)

अयमभिलेखः २५० ख्रीष्टीयाब्दपूर्वस्य प्रायो मन्यते। यूनानसाहित्ये तेषां दूतानामागमनस्य कार्यस्य वा कश्चनोल्लेखो नास्ति, किन्तु अशोकस्य लेखोऽस्य प्रबलं प्रमाणमस्ति यद् भारतं तस्मिन् काले मिश्रस्य शामस्यान्येषां यूनानराजानां च सम्पर्के समागतम्, अशोकश्च तत्र धर्मविजयं कर्तुं वाञ्छति स्म। अत्र कश्चन् सन्देहो नास्ति यद् धर्मदूतानां पुरः मार्गो भाषा

चापारा बाधा भवेत्, किन्तु यथा मध्य-एशियाया पूर्वदक्षिण-एशियायाश्च सा तेषामुत्साहं मन्दी कर्तुं नापारयत् तथैव सा पश्चिम-एशियायामपि ।

**रक्तसागरस्य मार्गस्य विकासः परिष्कारश्च**—तेषु शतकेषु मिश्रस्य टालमीसञ्ज्ञके रक्तसागरस्य पन्थाः समुन्नमितः, सिकन्दरिया इत्यस्य भारतेन साकं व्यापारं वर्द्धयितुं प्रयतितम् । खीष्टीयाब्दस्य प्रथमयोर्द्वयोः शतकयोः शामस्याराजकतया ईराने च रोमस्य विरोधिनोऽर्सकस्य साम्राज्यस्य प्रभुत्वेन ईरानस्याखातमार्गः संकटपूर्णं आसीत् । शकानाम् ऋषिकाणां कुशाणानाञ्चाक्रमणैर्बलखमार्गोऽसुरक्षितः कृतः । अतो रक्तसागरस्य मार्गस्योपयोगस्तथैवाधिको भवति स्म । किन्तु तत्र महत् कष्टमिदमासीद् यत् स्वेजस्य स्थलडमरुमध्यस्य पार्श्वे वस्तूनि पोतेभ्योऽवातीर्य यात्रिसमूहं समारोप्यन्ते स्म । भीषणमरुभूमिः पारयितव्या भवति, भूमध्यसागरस्य तटं प्राप्य तानि वस्तूनि पुनः पोतमारोप्यन्ते स्म । रक्तभूमध्यसागरयोर्नालिकया सयोजनात् पूर्वमनेके प्रयत्ना अभूवन्, किन्तु स्वेजस्याखातो नौकानुकूलो नाभूत् । टालमीसंज्ञके रक्तसागरे बरनिके पोतनिरोधस्थानाद् नीलनदीं यावत् शाद्वलो वणिक्पथो निर्मितोऽभूत्, तेन स मार्गः सुगमोऽभूत्, भारतीयैः स मार्गोऽतीवोपयुज्यते स्म ।

**भारतीयनाविकानां सिकन्दरियातटे जर्मनीतटे च गमनम्**—द्वितीयशतकखीष्टीयाब्दपूर्वस्य मध्ये रक्तसागरस्य तटरक्षका एकस्य प्रणष्टस्य पोतस्य भारतीयान् नाविकान् सिकन्दरियां नीतवन्तः । रक्तसागरस्य तटे एडफू-बरनिके मध्ये एकस्मिन् देवस्थाने सुभानोः ( सोफन ) भारतीयव्यापारिण आगमनस्योल्लेखः प्राप्यत । श्रीदुल्शेन बङ्गलौरस्यापणे टालमीसोटरस्य एका मुद्रा प्राप्ता । प्रथमशतकखीष्टीयाब्दपूर्वं गालस्य ( फ्रांस ) रोमनशासकमार्कससेलेरस्य सम्मुखे जर्मनतटे गता केचन भारतीया उपस्थापिता आसन् ।

तदानीं भारतस्योत्तरपश्चिमसीमान्तेऽनेकानि यूनानराज्यान्यासन् । अतः खीष्टीयाब्दात् प्रथमेषु त्रिषु शतकेषु भारतस्य यूनानेन साकं महान् सम्पर्क आसीत् । अस्य द्विधा प्रभावोऽभूत्—( १ ) सीरियाफिलस्तीनसिकन्दरियासु वनेषु तपस्याकरणोपदेशकस्य वैराग्यसमाधिसमर्थकस्य च एसनीजथेरापूरनामकयोर्द्वयोः सम्प्रदाययोः जन्माऽभूत्, तथा भारतस्योत्तरपश्चिमसीमान्तत आक्रमणकारिभिर्यवनैरन्यैराक्रमणकारिभिश्च भारतीया सस्कृतिर्गृहीता ।

## एसेनीजसम्प्रदायः

ई० द्वितीयशतकपूर्वं फिलस्तीने शामे च एसेनीजसम्प्रदायस्य विकासोऽभूत् । अस्य ४००० साधका मृतसागरस्य तीरे एकं धार्मिकं सम्प्रदायं निर्माय वसन्ति स्म । अयमेकान्तवासिनां यतीनां सम्प्रदाय आसीत् । फिलो इत्यनेन जोसीफस इत्यनेन च यद् वर्णितं तेन प्रतीयते यदात्मदूषकान्नगरसम्पर्काद् दूरं ते वने निवसन्ति स्म । यहूदिसम्बद्धा अपि पशुबलिं न विदधति स्म, किन्तु अध्ययनेन स्वं मनः पवित्रं विधातुं प्रयतन्ते स्म । सुवर्णं रजतञ्च न सगृह्णन्ति स्म, युद्धविरोधिन आसन् । शरासिढालप्रभृतीनि शस्त्राणि न निर्मान्ति स्म । सप्तमे दिवसे उपासनार्थं समवयन्ति स्म, तेषु कस्यापि स्वकीयं गृहं सम्पत्तिर्वा नासीत्, तेषां सर्वमर्यर्जनमेकस्मिन् कोषे निधीयते स्म, सम्पत्तिः सर्वस्यापि भवति स्म । आत्मनः पवित्रत्वं विशेषतोऽ-

वधातव्य भवति स्म, शरीरस्य नश्वरत्वमात्मनश्चामरत्व मन्यते स्म, ते विवाह न कुर्वन्ति स्म; यतस्तेषा मते नार्यो मनुष्याणा नैतिक पतन कुर्वन्ति, यदि सन्ततिः समुत्पद्येत तदा मनुष्यः स्वार्थसाधको भवति। पत्नीप्रेम्णा बालकाना मोहेन च बद्धो जन. स्वतन्त्रो न भवति, किन्तु दासो भवति।

प्राचीने यहूदिधर्मेऽस्य सम्प्रदायस्य विचाराणा किमपि बीज नास्ति। ब्रह्मचर्यसिद्धान्तो यहूदिना कृतेऽतीव नवीनो विद्यते। वर्णनमिदं यहूदिपरम्परायाः कियद् विरोध्यस्ति, इदमेकया मनोरञ्जकघटनया स्पष्ट भविष्यति। श्रूयते यद् यदा डिकिन्सीमहोदयेन जोसीफसेन लिखितम्—एसेनीजसम्प्रदायस्य वर्णन प्रथम पठित तदाऽऽसन्दीं पृष्ठेन पश्चाद् नमयता तारस्वरेणोक्तम्—असत्यम्, कपटपूर्णम्, असत्यम्, द्वेषमूलकम्; असत्यम् (इंसा० टि० इ० ४। ३९९)। वस्तुत एसेनीजसम्प्रदायो यहूदिनामितिहासस्यैका प्रहेलिका विद्यते। तस्या उद्गमः कथमभूदित्यस्य निश्चयो न जातः। जेऊरप्रभृतिविद्वद्भिरस्या मूल पाइथागोरसेन प्रवर्तितः सम्प्रदायः प्रतिपादितः (इंसा० टि० ई० ४। ४०१), किन्तु एसेनीजसम्प्रदाये उक्तस्य सम्प्रदायस्य प्रधानविशेषद्वयम्—आत्मनो नानायोनिषु भ्रमण निरामिष भोजनञ्च नोपलभ्यते। लाइटफुटप्रभृतयो विद्वासस्तन्मूल पारसीकधर्मे मन्यन्ते, किन्तु तत्र वैराग्यस्य कापि प्रवृत्तिर्नोपलभ्यते। यूनानस्य मिश्रस्य च प्रभावैरपि तस्य समुचिता व्याख्या भवितु नार्हति। उपरीद प्रत्यपाद्यत यदशोकेन शामस्य सिकन्दरियायाः प्रदेशेषु स्वधर्मदूताः प्रेषिताः। इद प्रतीयते यद् बौद्धप्रचारकै. प्रेरितस्यास्य सम्प्रदायस्य तत्र विकासोऽभूत्। एसेनीजसम्प्रदायस्य सङ्घः, सामूहिकस्त्याग., ब्रह्मचर्यम्, तपस्यामय जीवन बौद्धधर्मस्य प्रेरणापरिणाम आसीत्। पशूना बलिदानाभावोऽपि सम्भवतस्तैर्भगवतो बुद्धस्य शिष्येभ्यः शिक्षित.[1]।

**थेराप्यूट-सम्प्रदायः**—द्वितीयः सम्प्रदायः थेराप्यूटनामास्ति। तत्सदस्याः सिकन्दरियापार्श्वे मरे-ओटिससरसः पार्श्वनिवासिन एकान्तसेविनो यतय आसन्। फिलोमहोदयेन ते प्रशसिताः। तेषा प्रथमो महाश्च सिद्धान्तः सम्पत्ते. पूर्णतया त्याग आसीत्। ते स्वेच्छया स्वसम्पत्तिं तिरस्कृत्य सम्बन्धिषु विभज्य च वने गच्छन्ति, स्वबालकान्, स्त्रियः, मातर पितर सम्बन्धिन मित्राणि च सकृदपि न पश्यन्ति स्म। ते मन्यन्ते स्म यद् द्रव्यार्जनस्य जीवनयापनचिन्तानाञ्च दूरीकरणे न केवलमधिकः समयो याप्यते, किन्तु तदर्थं पापान्यप्याचरणीयानि भवन्ति। सम्पत्तिर्मनुष्यान् परमार्थतो विमुखीकरोति। थेराप्यूटसम्प्रदायानुयायिनः सुख सम्पत्तिञ्च परित्यज्य अरण्ये कुटीं निर्माय वसन्ति, स्वाध्यायपरायणं जीवन यापयन्त ईश्वर साक्षात्कर्तु प्रयतन्ते। तेषा कुट्योऽतीव दूरे न भवन्ति स्म। प्रत्येक कुट्या एकस्मिन् भागे पवित्राः

१. एसेनीजस्यैकं वैशिष्ट्यं तत्र समाजस्य चतुर्विधो विभागोऽस्पृश्यताविचारश्चासीत्। स्वनिम्नजातीयस्पर्शेन वैदेशिकस्पर्शेन जनिताऽशुद्धिः प्रक्षालनेन निरस्यते स्म। इदं न सम्भवतीति यत् स भारतीयस्य चातुर्वर्ण्यस्य अस्पृश्यत्वस्य च प्रभावो भवेत् (इंसा०

धर्मग्रन्था भवन्ति। साधवः प्रातः प्रार्थना कृत्वा तेषामध्ययने प्रवृत्ता भवन्ति। सप्तमे दिवसे ते सर्वे एकस्मिन् स्थाने उपासनार्थं समवयन्त्येकत्र। वृद्धतमाः साधव उपदिशन्ति स्म, तत्र दशफीटमिता द्वादशफीटमिता वा समुन्नता भित्तिर्भवति स्म, यद्व्यवधानेन स्त्रिय उपदेशं शृण्वन्ति स्म। सप्तमो दिवसः साधूनां विश्रमाय भवति स्म। अनेके साधवस्त्रीणि षट् वा दिनानि उपोष्य तस्मिन् दिने क्षुधायास्तृषायाश्च निवृत्तिं कुर्वन्ति स्म। साधारणं जलं तेषां पेयमासीत्, सामान्या रोटिका मुख्यं भोजनञ्च। मदिरामांसौ निषिद्धावास्ताम्। ते विविधेषु तपस्या-साधना-स्वाध्यायेषु निरता भवन्ति। यद्यपि ते नगराद् बहिर्वसन्ति स्म, किन्तु फिलो इत्यनेन तेषां स्वर्गपुर्या नागरिकत्वं प्रतिपादितम्।

एसेनीजवत् थेराप्यूटस्यादिस्रोतो विवादास्पदमस्ति। केषाञ्चिद् विदुषामयं विचारो विद्यते यद् मिश्रस्य लोकधर्मभूमौ तथाभूतानां परिव्राजकसम्प्रदायानां बीजं निहितमासीत्, वैराग्यस्य तपस्यायाश्च समर्थकानां केषाञ्चित् साधूनां तत्र प्रथममेवाविर्भावो जातः, मिश्रस्य मरुस्थलान्येकान्तवासिनां साधूनां साधनाया विकासार्थं समीचीनं स्थलमासीत्, तत्रत्यानां प्राचीनानां तपस्विनामपि कानिचनोदाहरणान्युपस्थापितानि (इसा० टि० ई० १२। ३१८ ख)। खीष्टीयाब्दस्य प्रथमेषु शतकेषु मिश्रं ईसाईतपस्विनामेकं महत् केन्द्रमभूत्, किन्तु तानि सर्वाणि तथ्यान्यवगच्छद्भिरपि मैनसलप्रभृतिभिर्योरोपविद्वद्भिस्तस्य मूलं बौद्धधर्मः स्वीकृतः। इत्थं प्रतीयते यत् सिकन्दरियायां यहूदिधर्मस्य बौद्धश्रमणानां जीवनपद्धतेरुपदेशानाञ्च संगमेन थेराप्यूटानां प्रादुर्भावोऽभूत्। तस्य भिक्षुजीवने शारीरिकतपसि ध्यानसंलग्नतायाञ्च भारतीयरहस्यवादभिः साकं पर्याप्ता समानता दृश्यते। इमानि वचनानि द्वयोः समानं मूलं संकेतयन्ति[1]। मोफटेन भारतीयप्रभावोऽनेन कारणेन न स्वीकृतः (इंसा० टि० ई० १२।३१९)। यदा बौद्धधर्मस्य परवर्तिनि अधिज्ञानवादे (ग्नास्टीसिज्म) कश्चन वर्णनीयः प्रभावो नाभूत्, तदा ततः शतद्वयतः प्रथमे थेराप्यूटे तस्य प्रभावः कथं स्वीकर्तव्यः, किन्तु अग्रेऽधिज्ञानवादे भारतीयप्रभावस्य विस्तरेणोल्लेखो भविष्यति। अतः थेराप्यूटानामुपरि तस्य प्रभावस्य सम्बन्धे कश्चन सन्देहो नावशिष्यते। अनयोर्द्वयोः सम्प्रदाययोर्विषये इदमेकं वर्णनीयं तथ्यमस्ति यत् तेषां तत्र शीघ्रमेवान्तोऽभूत्। इदं प्रतीयते यद् वैराग्यप्रधानस्य सन्यासपरस्य निवृत्तिमूलकस्य बौद्धधर्मस्य कृते पश्चिमभूमिरूपरभूमिः सिद्धाऽभूत्, भारतीयधर्मदूतैरारोपिता वृक्षाः सांसारिकहिमेन शुष्कतां गताः।

## यवनप्रभृतिवैदेशिकानां भारतीयत्वसम्पादनम्

अनेकैः पथैर्गमनेन यदैकतो भूमध्यसागरस्य तटे भारतीयप्रभावस्य क्षीणः प्रकाशो गच्छति स्म, तदाऽपरतोऽस्य देशस्योत्तरपश्चिमसीम्नि तस्य सूर्यः प्रचण्डेन तापेन देदीप्यमानो भवति स्म। खीष्टात् पूर्वेषु तथा प्रथमेषु शतकेषु तद्दिग्वास्तव्या भारते आक्रमणकारिणो यवनाः, शकाः, ऋषिकाः, तुखाराः, कुशाणाः, पह्लवाश्च भारतीयां संस्कृतिं स्वीकृत्य भारतीयानुपतिष्ठन्ते

१. मैन्सल-ग्नास्टिकहेरेसीज लण्डन १८७५, पृ० ३१; मि० रावर्टसन-रिलीजन आफ दी सोमाइटस लण्डन १८९४, पृ० ३०२ प्र०।

स। मौर्यशासनस्य समाप्त्या भारतस्योत्तरपश्चिमप्रदेशेषु यूनानवासिना शकाना पह्लवाना कुशाणानाञ्च राज्यानि स्थापितान्यभूवन्। एतैः सर्वैस्तेषा देशाना संस्कृतिः सर्वतो भावेन स्वीकृता।

**बाख्त्रीप्रदेशस्य यवनराज्यम्**—तेषु राज्येषु बाख्त्रीप्रदेशस्य यवनराज्य तस्योत्तराधिकारिणो भारतीया विशेषेणोल्लेखनीयाः सन्ति। हिन्दुकुशपर्वतस्य पारः (बाख्त्री) (बल्ख)-प्रान्तः पूर्व पश्चिम-एशिया यूनानसम्राजो वशे आसीत्। २५० तमे खीष्टीयाब्दपूर्वेऽस्य स्वतन्त्रोऽभूत्, २३६ तमे खीष्टीयाब्दपूर्वं सम्राजोऽशोकस्य मृत्यौ मौर्यसाम्राज्ये सा शक्तिर्नाभूद् यत् तद् हिन्दुकुश यावत् स्वसीमामक्षुण्णा कर्तुं प्रभवेत्। प्रतिबन्धकशक्तेरभावे बाख्त्रीप्रदेशवास्तव्यैर्यवनैर्हिन्दुकुश समुत्तीर्य भारते साकेत यावत् समाक्रमितुं प्रारेभे। १९० १८० (खष्टीयाब्द पूर्वमन्ये) लिखित 'अरुणद् यवनः साकेतम्' इति भाष्य बाख्त्रीवास्तव्ययवनभूपालानामाक्रमणं मन्यते।

द्वितीयशतकखीष्टीयाब्दस्य मध्ये तेषामुपरि नवाऽऽपत् समापतिता, तत्काल यावत्ते भारतमाक्रामयन्ति स्म, पश्चात् ते शकैः, ईरानवासिभिः, ऋषिकैश्चाक्रम्यमाणा अभूवन्, स्वरक्षार्थं बाख्त्रीवास्तव्ययवनैर्हिन्दुकुशं समुल्लङ्घ्य कपिशाया (काफिरिस्तान) पुष्करावत्या तक्षशिलाया शाकले (स्यालकोट) च स्वं राज्य स्थापितम्। प्रथमेषु त्रिषु स्थानेषु एवुक्रतिदवशजाना शासनमासीत्, शाकले च दिमेत्रस्योत्तराधिकारिणाम्। पुष्करावत्या शिवस्य प्रजाऽतीव प्रसिद्धाऽऽसीत्, अत्रागत्य यवनाः शैवा अभूवन्। तेषा मुद्रासु नन्दिचिह्नं विद्यते।

**मिलिन्दस्य बौद्धत्वस्वीकारः**—शाकलस्य प्रसिद्धतमो राजा मेनन्द्रः (मिनण्डर) मिलिन्दो वासीत्। तदा १५५ खीष्टीयाब्दपूर्वं शाकलमुत्तरपश्चिमभारते सर्वतो महद् यवनराज्यमासीत्। स्थविरनागसेनाद् दीक्षा गृहीत्वा स बौद्धो जातः। मेनन्द्रस्य मुद्रासु बौद्धधर्मस्यैक प्रधान चिह्न धर्मचक्र भवति, मुद्रासु तेन 'बौद्धमेनन्द्रः' इत्यङ्क्यते। स तथा धार्मिको लोकप्रियश्च शासक आसीद् यद् मृत्योः पश्चात् तस्य भस्म ग्रहीतु विभिन्नाना नागरिकाणा तथैव सङ्घर्षोऽभूत्, यथा भगवतो बुद्धस्य निर्वाणानन्तर जातः।

**हेलिओदोरस्य वैष्णवधर्माङ्गीकारः**—तक्षशिलाया यवनराज्ये सम्भवतो वैष्णवधर्मस्य प्रचारोऽभूत्। अत्रत्येनैकेन राज्ञा अन्तिलिकितेन (अन्तिलिखितेन) शुङ्गराजस्य भागभद्रस्य पार्श्वे विदिशाया हेलिओदोरनामा दूतः प्रेषितः। तेन तत्र १४० खीष्टीयाब्दपूर्वतः १३० खी० पूर्वमध्ये भगवतो वासुदेवस्य (विष्णोः) एको गरुडध्वज (गरुडमूर्तिसनाथः स्तम्भः) कारितः। सम्प्रति तत्र गरुडमूर्तिस्तु नास्ति, किन्त्वभिलेखसहित स्तम्भो [1]भिलसापार्श्वेऽद्यापि सुरक्षितो विद्यते। तेन लेखेन ज्ञायते यद् यवना सर्वतो भावेन भारतीयाः सञ्जाताः, भारते च भागवतधर्म प्रबलो भवति स्म। यवनैः साकमेवोत्तरपश्चिमसीमातः समागान्तारः शकाः पह्लवा कुशाणा अपि भारतीयत्व स्वीचक्रुः।

---

१. **देवदेवस वासुदेवस गरुडध्वजे अय करिते इऊ-हेलिओदोरेण भागवतेन दियस पुत्रेण तखसिलाकेन न इतेन आगतेन मगधराजस अंतालिकितस उपंता सकासं रञो कासिपुत्रभागभद्रस त्रातरस वसेन च तुदसेण राजेन वधमानस।**

# शकपह्लवभूपालानां भारतीयत्वस्वीकारः

पश्चिमभारते खीष्टीयाब्दपूर्वस्य द्वितीयशतकस्यान्ते शकाना शासन स्थापितमभूत्। तेषु नह्याननामा महाक्षत्रप प्रायः (८२–७७ खी० पू०) अतीव प्रसिद्धो विद्यते। एकेनाभिलेखेन प्रतीयते यद् वैदेशिकोऽय शको राजा भारतीयरागेण काम रक्त आसीत्। नासिकेऽस्य जामात्रा उषवदातशकेनैकस्मिन्नभिलेखे स्वीयानि धार्मिककार्याणि इत्थ वर्णितानि—

'लक्षत्रयगोदात्रा, वार्णासा(नदी)तटे सुवर्णदात्रा, तत्र तीर्थ(घट्ट)निर्मात्रा, देवेभ्यो ब्राह्मणेभ्यश्च षोडशग्रामदात्रा, सकल वर्ष लक्षब्राह्मणभोजकेन, पुण्ये तीर्थे प्रभासे ब्राह्मणेभ्योऽष्टभार्यादात्रा (तेषा वैवाहिकभारवोढ्रा) भरुकच्छे, दशपुरे, गोवर्द्धने, शोर्पाणे, (सोपारा) चतुश्शालधर्मशाला-प्रतिश्रयारामतडागोद्याननिर्मात्रा धर्मात्मना उषवदातेन गोवर्द्धने (नासिके) त्रिरश्मिपर्वते गुहेयं निर्मापिता। प्रतिवर्षमेकलक्षब्राह्मणभोजन ब्राह्मणेभ्यो लक्षत्रयगोदान षोडशग्रामसुवर्णदान च उषवदातस्याभिलेखान्तरेष्वपि वर्णित विद्यते। अत्रैव तस्य कुटुम्बिन्या दक्षामित्रायाः कुटीरदानस्य लेखोऽप्युपालभ्यत। एतैः प्रामणैः शकस्य उषवदातस्य पौराणिकधर्मस्वीकारे कश्चन सन्देहो नावशिष्यते।

पश्चिमभारतात् शकाना प्रभुता मथुराभिमुखी बभूव (९८–५७ खी० पू०), माथुरैः शकक्षत्रपैर्बौद्धो धर्मोऽङ्गीकृतः। अत्र रजुल (९०–८५ खी पू०)शोडासनामकाभ्या द्वाभ्या क्षत्रपाभ्या बुद्धधर्मस्य सङ्घस्य च पूजार्थ कृतस्य दानस्याभिलेखः प्राप्यत। मथुरातः शकाः पञ्चाम्बुप्रदेशाभिमुखा अभूवन्। प्रदेशेऽस्मिन् ७०–४० खी० पू० पर्यन्त तेषा राज्यमासीत्। अत्र लेखे एकस्मिन् महाराजो मोगस्तक्षशिलानगरे शाक्यमुनेः शरीरधातुमेकं संघारामञ्च प्रतिष्ठापयन् दृश्यते।

प्रथमे शतके खीष्टीयाब्दपूर्वे ईरानस्य पह्लवानामैको राजवशः काबुले कन्धारे च स्थापितोऽभूत् (४५ खी०पू०, ३० खी०पू०)। वशस्यास्य राज्ञा मुद्रासु प्राकृतभाषा प्रयुज्यते स्म, राज्ञा विशेषण 'धार्मिक' (ध्रमिअ अथवा ध्रमिक) इत्यासीत्। मेनन्द्रेण (मिनण्डर) स्वमुद्रासु अयमेव शब्दः प्रयुक्तः। इत्थं प्रतीयते यत्ते बौद्धा आसन्। कुशाणराजाना विषये पूर्व बहूक्तमस्ति, तैश्च प्राधान्येन बौद्धधर्मः स्वीकृतः।

उपरि केवल यवन-शक-पह्लवराजानामेवोदाहरणानि प्रदत्तानि। नासिककार्लेगुहाया जुन्नरगुहायाञ्च (सू रे २। ७९९–८०१) साधारणैर्यवनैर्बौद्धसङ्घाय कृतानामनेकेषा दानानामुल्लेखो विद्यते। इद सर्वांशेन सत्य नास्ति यद् भारते प्रविश्यैव यवनाः शका. पह्लवाश्च भारतीयसस्कृत्या संस्कृता अभूवन्। पह्लवराज. कन्धारे एव बौद्धोऽभूत्, कुशाणैर्मध्य-एशियायामेव बौद्धधर्मसन्देशः प्राप्त', कालकाचार्य. सम्भवतो जैनधर्मप्रचाराय सीस्तानं गतः। अशोककाले देशान्तरेषु धर्मदूतप्रेषणस्य या पद्धतिः प्रारब्धा साऽधुना पूर्णतया विकसिता। भारतीया धर्मदूता प्रत्यन्तस्य यूनानराज्यं राज्यान्तरञ्च महता वेगेन भारतीयं कुर्वन्ति स्म।

## तृतीयं युगम् ( प्रथमशतकख्रीष्टीयाब्दात् पञ्चमशतकख्रीष्टीयाब्दं यावत् )

**व्यापारस्योत्कर्षः**—प्रथमशतकख्रीष्टीयाब्दाद् भारतस्य यूनानस्य रोमस्य च सम्पर्को वर्द्धितुमारेभे। तदानीं पश्चिमे रोमसाम्राज्यस्य चरममुत्कर्षं प्राप्तम्। प्रथमस्य शतकस्य मध्ये हिप्पलसाख्येन शेमनाविकेन वर्षाकालिकवायुमाहाय्येन भारतं प्राप्तुं नवीनो मार्गोऽन्विष्टः (४७ ख्री०)। पूर्वं भारतं यावत् समुद्रतटेन साकं साकं यात्रा भवति स्म, अधुना अदनतोऽरबसागरस्य वक्षस्थलं भिन्दन्तः पोताः साक्षाद् भारतस्य पश्चिमतटस्य पोतनिरोधस्थानेषु समागन्तुं प्रारब्धवन्तः। एतेन रोमभारतयोर्व्यापारे क्रान्तिरभूत्। अस्मादाविष्कारात् पूर्वं प्रतिवर्षं विंशतिः पोताः पूर्वदेशान् गच्छन्ति स्म, किन्तु सम्प्रति मिश्रपोतनिरोधस्थानेभ्यः प्रतिदिनमेकः पोतो गन्तुं प्रारेभे। युगे तस्मिन् रोमस्य वृद्धिशीलस्य व्यापारस्य सर्वतो महत् प्रमाणं दक्षिणभारते शतसङ्ख्यामिता उपलब्धा रोमसम्राजां सुवर्णमुद्राः सन्ति। तस्मिन् काले रोमदेशेन भारताद् मरीच्यादिव्यञ्जनकुटजटामसीप्रभृत्योषधयः, कौशेय-मलमलपदवाच्यादिमहामूल्यानि वस्त्राणि वैदूर्यादिमणयस्तथाधिकपरिमाणतया क्रीयन्ते स्म यत् तेन स्वकीयवस्तूनि दत्त्वापि तेषां मूल्यं दातुं न शक्यते स्म, तेषां मूल्यं निर्यातयितुं तेन प्रतिवर्षं सुवर्णरजतमुद्राश्च प्राचुर्येण भारताय पूर्वदेशान्तराय च दीयन्ते स्म। प्लिनीमहोदयेन गणितं यद् राशिरयं दशकोटिमेस्टर्ससमित आसीत्[1] ( १ मेस्टर्स = १ दुअन्नी ) तेन रोमस्य महान्तं तादृशमपव्ययमधिकृत्य रुदितम्, रोमसम्राड्भिस्तन्निरोद्धुं भारतस्य मलमलपदवाच्यवस्त्रस्य कौशेयस्य च व्यवहारं विधानेन निरोद्धुं प्रयतितम्। रोमेण साकं व्यापारवर्द्धनेन भारतीयाः सिकन्दरियायां रोमे चाधिकसङ्ख्यया गतवन्तः। तेन पश्चिमस्य भारतविषयकं ज्ञानं वर्द्धितुमारेभे।

प्रथमशतकख्रीष्टीयाब्दाद् अस्माभिः पश्चिमजगति भारतस्याधिकस्य प्रामाणिकस्य च परिचयस्य कारयितारो लेखका उपलभ्यन्ते। डायोक्रिसोस्तोम (मृ० ११७ ख्री०) महोदयेन सिकन्दरियापणेषु विविधजातीयानां समर्देषु भारतीया उल्लिखिताः (राइ पृ० १४०)। ते व्यापारं कर्तुमत्रागताः। क्रिसोस्तोमापेक्षया क्लीमेन्टस्य (मृ० २२० ख्री०) विवरणमाधिकं शुद्धमस्ति। तेन सुरामांसभक्षणविरता ब्राह्मणा उल्लिखिताः। 'ते शिवब्रह्मणोरुपासकाः सन्ति, जीवनमहत्त्वं मृत्युञ्चोपेक्षन्ते, यतो हि पुनर्जन्म मन्यन्ते। पिरामिडनामकं किमपि वस्तु पूजयन्ति, यत्र नीचैः कस्यचित् पूज्यस्य देवस्य मूर्तिर्भवति'। पश्चिमसाहित्ये स्तूपस्यायं प्रथम उल्लेखो विद्यते (राइ पृ० १४१)। अनेनैव सर्वप्रथमं पश्चिमे जगति श्रमणब्राह्मणयोर्भेदः प्रकाशितः। तत आर्कीलासेन ( २७८ ख्री० ) जेसेमेन (३४० ख्री०) च बुद्धस्योल्लेखः कृतः। बेबीलोनस्य वार्डेसेनीजमहोदयेन ( १५५–२३३ ) भारतीयसाधूनां[2] विषये एको ग्रन्थो लिखितः। मूलग्रन्थस्तु लोपं गतः, केवलं तस्योदाहरणद्वयमुप-

---

१ रोमनयुगे मुद्रायाः क्रयशक्तिः १९१४ अथवा १९३९ तमस्य मूल्यापेक्षया त्रिंशद्गुणाऽऽसीत्। एतेनायं राशिः ३७½ कोटिरूप्यकाणि भवन्ति।

२. यूनानवासिनो रोमवासिनश्च तदर्थं जिम्नो–सोफिस्ट ( gymnosophist ) शब्दं प्रयुञ्जन्ति स्म। अस्यार्थोऽस्ति—नग्नाः, अथवा कौपीनधारिणो दार्शनिकाः। अयं शब्दस्तेषां भारतीयानां तपस्विनां दार्शनिकानां कृते प्रयुज्यते स्म, येऽरण्येषु धृतकौपीनाः सांसारिकविषयान् तिरस्कृत्य समाधौ निरता भवन्ति स्म।

लभ्यते । तेन ज्ञायते यत् तस्य भारतस्यातीवोत्तम गभीरं प्रामाणिकञ्च ज्ञानमासीत् । तेन चैतत्सर्वं सैन्डेनीन( सुन्दर )नामकाद् भारतीयात् ज्ञातम् ( राइ पृ० १४३ )। अयम् २१८ तमे खीष्टीयाब्दे रामसम्राजः स्वागतार्थं समागतेन भारतीयदूतमण्डलेन साकं शामं समागतः। बार्डेसेनीजस्यैकस्मिन्नुद्धरणे बौद्धसंघस्य दैनिकजीवनस्य समीचीनं वर्णनं विद्यते, द्वितीयस्मिंश्च धारापुर्या• ( एलिफैण्टा ) मूर्तीनाम् ( राइ पृ० १४४–४६ ) ।

भारतीयाः साधवः सिकन्दरकालत एव पश्चिमजगतः कृते कुतुकी पदार्थो जात• । सम्प्रति तेषा विस्तृत प्राप्य परिचय पश्चिमसाधका भारतीयाया• साधनाया अनुकर्तुं प्रारब्धवन्तः । सिकन्दरिया तदानीं विविधधर्माणा विविधजातीनाञ्च केन्द्रमभूत् । अत्रानेकेषा धार्मिकविचाराणा विचित्रं सम्मिश्रण भवति स्म, नवाना पथा दार्शनिकसिद्धान्तानाञ्चोत्थान भवति स्म । तेष्वनेकेषु भरतीयः प्रभाव• स्पष्टो विद्यते । तेषु थेराप्यूरस , एसेनीज इति हर्मीवादः, अधिज्ञानवादः, नवप्लेटोवादश्च मुख्या सन्ति । प्रथम द्वयोर्वर्णन जातम् ।

हर्मीवादः—अफलातूनस्य विचारान् सिकन्दरियाया मिश्रगामिनो विकसितान् विधाय यद् विशाल मिश्रसाहित्य[1] सम्पादितवन्तः तद् हर्मीवादसाहित्यमुच्यते ( इलि० ३।४३३ )। अत्र साहित्ये भगवन्त प्रति 'अह त्वमस्मि, त्वमहमस्ति' इत्याकारकाः शब्दा• सन्ति । इद वाक्यम् 'अह ब्रह्मास्मि' 'तत्त्वमसि' इति वाक्याभ्या काम सादृश्यमादधाति । खीष्टीयाब्दस्य प्रारम्भिकशतकेषु रोमनजगत्यनेकास्तादृशा धार्मिका दार्शनिकाः समुत्पन्नाः सम्प्रदायाः प्राप्यन्ते, ये पुनर्जन्म आत्मनो मुक्तिं च समर्थयन्ते । हर्मीवाद•, अधिज्ञानवादः, नवप्लेटोवादश्च तादृशा एव सम्प्रदाया आसन् । तेषा सम्प्रदायाना सहसोत्कर्षस्यैक कारण भारतेन साक रोमजगतः सम्पर्कस्य गाढताऽऽसीत् । यत• प्राचीने यूनानधर्मे मिश्रधर्मे च तेषा सिद्धान्ताना किमपि बीज नासीत् । पाइथागोरसस्य मूलरचना नोपलभ्यन्ते, तस्योपलब्धाः सर्वे वृत्तान्ताः खीष्टीयाब्दस्य प्रथमेषु शतकेष्वलिख्यन्त । इदं सर्वथा सम्भवति यत् पुनर्जन्मप्रभृतिनवाना सिद्धान्तानामसाधारणगुरुत्वसमर्थनाय ते पाइथागोरसस्य प्रसिद्धेन नाम्ना साक सयोजिताः । प्रथमे शतके खीष्टीयाब्दे सिकन्दरियाया फिलो ( जन्म २० खी० पू० ) नामा प्रसिद्धो यहूदी दार्शनिकोऽभूत् । तस्य ग्रन्थेषु हर्मीवादसाहित्येषु प्रवृत्तिर्दृश्यते यत् ते यहूदिनो यूनानदेशीयप्रभृत्यनेकस्रोतोभ्यो विचारग्रहणे मनाक् सकोच न कुर्वन्ति । ईसाजन्मनः प्राक्तनेषु शतकेषु मिश्रोऽनेकेषा तादृशा धार्मिकविश्वासाना केन्द्र जात ये उपास्योपासकयोस्तादात्म्यसम्बन्ध स्वीकुर्वन्ति, व्यष्टिगतात्मना कृते सन्मार्ग सज्ज्ञान चोपदिशन्ति स्म । तत्र बौद्धसङ्घसदृशा नियमा एकेश्वरवादः, सर्वेश्वरवादो वेदान्तविचारो वोपलभ्यते स्म । ते व्यक्तिमोक्षदायका वैयक्तिकाः सम्प्रदाया आसन् , तै राष्ट्रियस्य विश्वव्यापिनो वा धर्मस्य कृते प्रयत्नो नाकारि । तत्र शब्दविचारः, दिव्यज्ञानविचार•, वैराग्य-

---

१ प्लेटो-स्टोइक्स-फिलो-कैथोलिक-ईसाइयत-अधिज्ञानवाद-नवप्लेटोवाद-नवपाइथागोरसवादानां विचाराणां यदि मिश्रणं भवेत् तत्र च प्राचीनस्य मिश्रस्य पूर्णतया गन्धो भवेत् , ततश्च सुरा निर्मियेत तदा हर्मीजहिसजिस्टससदृशं वस्तु निर्मितं भवेत् (ईसा० रिलि० ई० ६।६२६)।

विचारः, आत्मन इन्द्रियरागमोचनविचार', आत्मनोऽनेकजन्मधारणविचारश्चोपलभ्यन्ते । तेषु शब्दस्य भारतस्य ब्रह्मणा ऋग्वेदस्य वाचा वा तुला कृता । किन्तु अधिकाशा विद्वांसस्तद् गाढं सादृश्य न मन्यन्ते ( इलि० ३।४३३ ) वैराग्यस्य पुनर्जन्मनश्च विचारास्तादृशा अवश्यं सन्ति येषां मूल फिलस्तीने मिश्रे च नासीत् ।

यथा पक्षिण. समुद्रधाराश्चैकस्य देशस्य वनस्पतिबीज नव देश महाद्वीपञ्च नयन्ति तथैवा-शोकधर्मदूता उपर्युक्तान् विचारान् सिकन्दरिया यावन्नीतवन्तः । द्वितीयशतक खीष्टीयाब्दं यावद् भारतीयविचाराणा सिकन्दरियादार्शनिकैः स्वीकारस्य किमपि स्पष्ट प्रमाणं नोपालभ्यते, किन्तु तस्मिन् शतके बार्डेसेनीजेन ( १५५–२३३ खी० ) भारतधर्मविषये एक पुस्तक लिखितम् । उपरि तस्योल्लेखो जात. । अतः बार्डेसेनीजद्वारा भारताद् विचारग्रहणे कश्चन सन्देहो न भवति । इयमेव दशा सम्भवतः सिकन्दरियाया अन्येषामाचार्याणामासीत् । खीष्टीयाब्दस्य प्रारम्भिकेषु शतकेषु प्रादुर्भूतानामनेकविचारधारणामुपरि भारतीयप्रभावस्य प्रतिबिम्ब प्रारभ्यत । प्रसङ्गेऽस्मिन् अधिज्ञानवादस्य नवप्लेटोवादस्य च विशेषेणोल्लेख आवश्यकः प्रतीयते ।

( १ ) **अधिज्ञानवादः ( नास्टिसिज्म )** पश्चिमे प्रचलिताना विभिन्नाना धार्मिक-सिद्धान्ता समन्वयस्य विचारधारेय तृतीयशतकखीष्टीयाब्दस्योत्तरार्द्धे प्रबलाऽभूत । अधिज्ञानवादा एकेन विशिष्टेन गृहस्य रहस्यमयज्ञानेन ( अधिज्ञानेन ) मुक्तौ श्रद्धामादधते स्म । ज्ञानमिदम् इलहामात् खीष्टमहोदयेन प्राप्त शिष्यपरम्परया च अग्रे प्रचलति स्म । तन्मते समीचीनोऽसमी-चीनश्चाध्यात्मिको भौतिकश्च द्विविध. संसार आसीत् । तेषु ससारेषु सर्वोच्चसत्तातः प्रादुर्भूताना-मनेकेषा विवर्ताना कल्पना कृता । अधिज्ञानवादे प्रकृतिपुरुषयोर्द्वन्द्वविचार., आत्मनः प्रकाशेन साक तादात्म्यविचारश्च साङ्ख्यदर्शनाद् गृहीतौ स्त इत्युच्यते । साङ्ख्यस्य सत्त्वरजस्तमोगुणाना कल्पनाऽपि तत्रोपलभ्यते, यतस्ते मनुष्यान् न्यूमैटीकोई-साईकोई-हिलोकोई इति त्रिधा विभजन्ते । बार्डेसेनीजेन साख्यस्य लिङ्गशरीरवत् सूक्ष्ममेक शरीरं मन्यते । साम्प्रदायेऽस्मिन् अनेके स्वर्गाः कल्पिताः । अस्य मूल बौद्धधर्म उच्यते ( मैक० सं० लि० पृ० ४२४ ) ।

सम्प्रदायस्यास्य त्रयाणा महतामाचार्याणा कार्योक्रेटस-वैसिलिडिस-बार्डेसनेस (१५५-२३३ ई० ) महोदयानां कतिपये सिद्धान्ता ध्यातव्या' सन्ति । प्रथमाभ्या द्वाभ्यामाचार्याभ्याम् १२०-१३० खीष्टीयाब्दमध्ये सिकन्दरियाया स्वसिद्धान्तः प्रचारितः । तयोर्ग्रन्था लोप गताः, केवल विरोधिग्रन्थेन तयोः सिद्धान्ताः प्रकाशिता भवन्ति । कार्योक्रेटसस्य शिक्षाऽऽसीद् यदात्मा शरीर-पञ्जरे तावदेव बद्धोऽस्ति यावत् स सर्वप्रकारक सम्भव समीचीनमसमीचीनञ्च कर्म न करोति । पुनर्जन्मनः पाशान्मुक्तिरेव धर्मस्य लक्ष्यं विद्यते । तद्रक्षणार्थमेक एव मार्गोऽस्ति । मनुष्यैः शान्तेरुन्नता ( ब्राह्मी ) स्थितिं प्राप्य समीचीनमसमीचीनञ्च कर्म कर्तुं प्रयत्नो विधेयः । कर्मणा समीचीनत्वासमीचीनत्वनिर्णयस्तेषा स्वरूपेण नैव, किन्तु सङ्कल्पेन क्रियते । श्रद्धया प्रेम्णा च मनुष्यः परमानन्द प्राप्तु शक्नोति । कार्योक्रेटसस्याय विचार आपाततः काम व्यवस्थाशून्यो भायात्, किन्तु गीताया अनासक्तिवादेन स सम्यक् संवदति । भगवतः श्रीकृष्णस्य महती शिक्षेय विद्यते यन्निष्कामकर्मणि कश्चन दोषो नास्ति, यो जनोऽनासक्तः सन् कार्य करोति स पापेन

लिप्तो न भवति ("लिप्यते न स पापेन पद्मपत्रमिवाम्भसा" ५।१० मि० ५।१५) कौषी० ब्रा० (३।१) इत्यत्र कथित यदात्मनिष्ठाः पुण्यपापैरलिप्ता भवन्ति, अतस्तेषा मातृवधस्य पितृवधस्य च पापान्यपि न भवन्ति (मि० धर्म० २९४,२९५, मिलिन्दप्र० ४।५।७), श्रद्धाया महत्त्वन्तु "श्रद्धावान् लभते ज्ञानम्" (गी०) इति वाक्येन स्पष्ट भवति।

बेसिडिलसस्य ग्रन्थेषु पुनर्जन्मना साक कर्मफलसिद्धान्तोऽपि लभ्यते। स इदमपि मन्यते स्म यज्जीवनं दुःखमयमस्ति। आत्मा स्वेन साकं प्राक्तनानि कर्माणि समानयति। धर्मवेद्या बलिभूताना महात्मना जन्मन्यस्मिन् तु किमपि तादृश पाप नास्ति येन तैस्तादृग कष्ट सोढव्य भवेत्। पूर्वजन्मनि कृताना पापानामेव फलमात्मनाऽस्मिन् जन्मनि प्राप्यते। कर्मणा नाशो विपदा अथवा बलिभवनेन भवति। स आत्मानमखण्डमेक वस्तु अमत्वा विविधाना तत्त्वाना मिश्रण मन्यते स्म। तस्याय सिद्धान्तो बौद्धाना स्कन्धवादेन सवदति। तेन परमात्मा निर्गुण-ब्रह्मवत् कल्पितः। बार्डेसेनीजमहोदयेनानेकेषु पूर्वजन्मसु आत्मनो विद्यमानत्व कर्मफलञ्च समर्थितम्। पूर्वं प्रतिपादितमिद वर्तते यदयमाचार्यो भारतीयान् सिद्धान्तान् सम्यग् जानाति स्म। तेन स विचारो भारताद् गृहीतो भवेदित्यत्र किमप्याश्चर्यं नास्ति।

(२) **नवप्लेटोवादः**—अस्य सम्प्रदायस्य जन्म सिकन्दरियाया तृतीयशतकख्रीष्टीयाब्देऽभूत्। स प्लेटोमहोदयस्य रहस्यवादस्याध्यात्मवादस्य च शिक्षया नूतनपद्धत्या समर्थनेन तथा तस्य पुनरुज्जीवनेन नवप्लेटोवाद उच्यते। अस्य प्रधानाः प्रचारका. प्लोटिनस (जन्म २०५ खी०) पोरफिरी (२३३खी०–३०१ खी०) इयेम्ब्लिकस (३३० खी० पू०) इत्येते आसन्। तेषा मुख्यः सिद्धान्तो भौतिकजगज्जालात् पलायनमासीत्। ते दृश्यं जगद् मिथ्या मन्यन्ते। बुद्धया ज्ञातमाध्यात्मिक जगदेव वास्तविकमासीत्। प्लोटिनसेन संसारो मिथ्या प्रतीयते स्म, यतः स क्षणिकोपूर्वश्चास्ति। वेदान्तविचारेण साक तस्य विचारस्यातीव साम्यं विद्यते। ते नैतिक-मुपकारमनुपकारञ्चान्तिमा सत्ता न मन्यन्ते स्म। ब्रह्मवत् स्वमुच्चतमं तत्त्व समीचीनत्वासमीचीन-त्वातीतं मन्यन्ते स्म। तेषा मते उच्चतमा नैतिकता निष्क्रियताया अनासक्तेश्चाचरणमासीत्। उपवासादानन्दोपभोगाच्च पार्थक्यं ध्यानमग्नत्वञ्चोत्तम मन्यते स्म। परमानन्दः समाधौ परमात्मना साकं तादात्म्ये एव मन्यते स्म। मानवजीवने तादृश तादात्म्य स्थायि भवितुं नार्हत्, अतः जीवनेऽस्मिन् समाधिना प्राप्तं सुखं कष्टदायिन्या यात्राया उत्तमं विश्रमस्थल मन्यते स्म। मृत्योरनन्तर तत्तादात्म्य स्थायि भवति। मानवशरीरस्य दिव्यांशो विश्वव्यापिन्यंशे विलीनो भवति। नवप्लेटोवादिनस्तदर्थं विह्वला भवन्ति स्म। पोरफिरीमहोदयः कथयति—प्लोटिनसः स्वशरीरहेतुनाऽतीव लज्जते स्म। यतस्तत् स्थायिनस्तादात्म्यस्य बाधकमासीत्। तेषु विचारेषु भारतस्य योगवेदान्तयोः स्पष्टं प्रतिबिम्बं विद्यते। पोरफिरीमहोदयेन साङ्ख्यविचारो विशेषेण गृहीतः। तेन प्रकृतिपुरुषयोर्भेदः, प्रकृतिबन्धनान्मोक्षः, पुरुषस्य सर्वज्ञत्वम्, सृष्टेरनादित्वमधिकं समर्थितम्। बलिदानस्य खण्डनं कृतम्। पशुवधो निषिद्धः। प्लोटिनसो ज्ञानान्वेषणे भारताभिमुख गतः (इलि० ३।४४७)। यद्यपि स मध्यादेव प्रतिनिवर्तितु विवशोऽभूत्, किन्तु सिकन्दरियाया भारतीयव्यापारिभ्यो भारतीयसिद्धान्तान् गृहीतवान्। अनेके विद्वांसस्तस्य सिद्धान्तना मूल स्रोतः

प्लेटोविचारान् मन्यन्ते, किन्तु तस्य शिष्यस्य पोरफिरीमहोदयस्य भारतस्य प्रेरणाप्राप्तौ कश्चन सन्देहो नास्ति यद् बार्डेसेनीजस्योपर्युक्तो ग्रन्थस्तेन पूर्णतया प्रायुज्यत ( रालिन्सन पृ० १३४ ) ।

## खीष्टानुयायिधर्मो भारतश्च

खीष्टानुयायिधर्मे भारतस्य ऋणस्य प्रश्नोऽतीव जटिलो विवादग्रस्तश्च विद्यते । अत्र विद्वद्भिर्महानुहापोहः कृतः । द्वयोर्धर्मयोः किञ्चित् सादृश्य विद्यते । एतदाश्रित्य खीष्टानुयायिधर्मस्य केचन मन्तारः प्रतिपादितवन्तो यद् बौद्धधर्मेण खीष्टानुयायिधर्माद् बहु शिक्षितम्, अन्यतस्तादृशा विदुषां न्यूनता नास्ति ये बौद्धधर्मात् प्रादुर्भूत खीष्टानुयायिधर्मं मन्यन्ते । द्वयोः सत्यत्वं निर्विवाद द्वितीयस्मिन् पक्षे एव, किन्तु पक्षेणानेन ऋणमत्युक्तिपूर्णं प्रतिपादितम् ।

**खीष्टधर्मस्य बौद्धधर्मस्य च सादृश्यम्**—द्वयोः पक्षयोर्मुख्य आधारो द्वयोर्धर्मयोः सादृश्यानि सन्ति । श्री-आर्थरलिलीमहोदयेन द्वयोर्धर्मयोः पञ्चाशत् सादृश्यानि निर्दिष्टानि तानि साम्यानि बाहुल्येन खीष्टबुद्धयोर्जीवनस्य घटनाभिः, उपदेशैराख्यानैश्च सम्बद्धानि सन्ति । प्रथमप्रकारकेषु सादृश्येष्वेतानि मुख्यानि सन्ति—( १ ) बुद्धस्य जन्मान्तर तस्य भविष्यच्चक्रवर्तित्वञ्च आसितनामकेन ऋषिणा भासितम् । तादृश्येव घोषणा सिमियनेन खीष्टप्रादुर्भावपश्चात् कृता । ( २ ) मारेण बुद्धं खीष्टञ्च दुष्टेन ( शैतान ) प्रलोभयितु प्रयतितम् । ( ३ ) द्वाभ्या स्वमुख स्वशरीर च सूर्यसदृश देदीप्यमान कृतम्, शिष्यैश्च स्वविराड्रूप प्रदर्शितम् । ( ४ ) पूर्णश्रद्धाप्रभावेण द्वाभ्यां जले गमनचमत्कार. प्रदर्शितः । ( ५ ) द्वाभ्या स्वल्पेन भोजनेन विशाल जनसमुदायं सन्तर्पयितु चमत्कारः कृतः ।

उपदेशाना साम्यस्य निम्नलिखितान्युदाहरणानि पर्याप्तानि भविष्यन्ति—( १ ) भगवतो बुद्धस्योपदेश आसीद् यत् क्रोधः प्रेम्णा, अनुपकार उपकारेण च विजेतव्यः ( धम्मपद ५।२२३ मि० १९७ ) । ईसामसीहस्यादेश आसीत्—शत्रवः प्रेम्णा व्यवहर्तव्याः, घृणाकारक उपकर्तव्यः ( मैथ्यू ५।४४ ) ।

( २ ) द्वाभ्या बाह्याडम्बरस्य दम्भस्य च निन्दा कृता, पवित्रमाचरण समर्थितम् । जटिलान् कपटशीलान् च साधून् निन्दता बुद्धेन कथित यद् भो मूर्खाः ! आभिर्जटाभिर्मृगचर्मणा च किम् ! युस्माकमन्तःकरण मलिनमस्ति, पर बहि. स्वच्छताऽऽडम्बर विधत्थ ( धम्म० ३।९४ ) । खीष्टेनापि दम्भिना यहूदिना धर्मोपदेशकाना सुधाधवलितेन शवस्थानेन तुला कृता यद् बहिः सुन्दर दृश्यते, परन्त्वभ्यन्तरे मृतानामस्थिभिर्मलिनान्तरैश्च वस्तुभिः परिपूर्ण भवति ।

भगवान् बुद्धः खीष्टश्च स्वोपदेशाना हृदयङ्गमत्वाय श्रोतॄणा बहूना मनोहराणामाख्यानाना रूपकाणाञ्च दृष्टान्तानाञ्च प्रयोग कुरुतः स्म । तादृशेष्वनेकेष्वाख्यानेष्वपि समता प्रदर्श्यते, यथा—( १ ) खीष्टबुद्धौ द्वावपि धर्मकथाश्रवणकर्तॄन् जनान् अत्यन्तोर्वरसाधारणोर्वरोषर-

क्षेत्ररूपेण विभक्तवन्तौ स्तः। प्रथमप्रकारकेषु श्रोतृषु धर्मोपदेशबीजानि शीघ्रमेवाङ्कुरितानि भवन्ति, अन्तिमप्रकारकेषु तु कदापि न। (२) द्वावपि धर्मप्रवर्तकौ रोगिसेवा समर्थितवन्तौ स्तः। एकदा एको रुग्णो भिक्षुरन्येन भिक्षुणोपेक्षितस्तदा बुद्धेन प्रतिपादित यद् यो यदीया सेवा चिकीर्षति स रोगिण सेवेत (महावग्ग ८।२६), मैथ्यू (२५।४०।४५) पुस्तकेऽपि खीष्टमहोदयेनेदमेव कथितम्। इत्थमेव बाइबिलस्य (ल्यूक १५।११) अपव्ययकारकस्य पुत्रस्य कथा सद्धर्मपुण्डरीकस्य (अ० ४) तादृश्यैव कथयोपमिता।

यदि केवलमुपर्युक्त सादृश्यमेवोपस्थाप्येत तदेद साधयितु कठिनमासीद् यत् खीष्टानुयायिधर्मे बौद्धधर्मस्य ऋणमस्ति। जीवनस्य घटनासादृश्ये इद प्रतिपादयितु शक्यते यत् सर्वेषु देशेषु महात्मना सता साधूना च जीवनकथा भक्ताश्चमत्कारपूर्णाः कुर्वन्ति। एकेन सता यश्चमत्कारः कृतोऽन्यस्य महात्मनो जीवनकथायामपि तस्य समावेशः क्रियते। प्रायः सर्वेषा महात्मना प्रारम्भिकजीवने मानसिके देवासुरसंग्रामे प्रलोभने च विजयप्राप्तेर्वर्णन वर्तते। उपदेशेषु कथासु चेदमेव वक्तु शक्यते।

किन्तु खीष्टोपदेशेषु तत्कर्मकाण्डेषु च केचन तादृशा विषया सन्ति यत्र बौद्धधर्मस्य निर्विवादः प्रभावो विद्यते। खीष्टोऽय धर्ममुपदिष्टवान्, स निवृत्तिमूलको वैराग्यप्रधानश्चास्ति। स स्वशिष्यान् सासारिकबन्धनमुक्तये चिन्तारहित्याय कामक्रोधाभावाय चोपदिशति स्म। प्राचीनो यहूदिधर्मः कर्ममूलक आसीत्। तस्य मुख्यमनुष्ठानमिदमासीद् यन्मनुष्योऽग्नौ पशुमन्यद् वस्तु वा जुहुयात्, ईश्वरकृतान् नियमान् पालयेत्, परमात्मनः कृपया स्वस्य स्वजातेश्च कल्याणं कुर्यात्। यहूदिधर्मो यज्ञमयः कर्मकाण्डप्रधानश्चास्ति। किन्तु खीष्टः कर्मकाण्ड प्रत्याचष्टे संन्यासञ्च समर्थयते। तस्योपदेश आसीत्—मया (हिंसाकारकः) यज्ञो नापेक्ष्यते, अहमीश्वरस्य कृपामपेक्षे (मैथ्यू ९। १३)। येनामृतत्वमिष्यते तेन विहाय कुटुम्बिनो मम भक्तत्त्व स्वीकर्तव्यम् (मै० १९।२१)। स्वशिष्यान् धर्मप्रचाराय विदेशेषु प्रहिण्वता तेनापरिग्रहव्रतं समर्थितम् 'त्वया स्वपार्श्वे सुवर्ण रजत बहु वस्त्रमपि न सग्रहणीयम्' (मैथ्यू १०।९–१३)। खीष्टमहोदयस्येद वाक्य प्रसिद्धमेवास्ति यत् क्रमेलकस्य सूचीविवरप्रवेशापेक्षयाऽतीव सरल धनिना स्वर्गराज्यप्रवेशनम् (ल्यूक १८।२५)। खीष्टमहोदयेन सासारिककर्मत्यागः सन्यासस्वीकारश्च समर्थितौ। स सासारिकसपत्तिपरमेश्वरयोः शाश्वतिक विरोध मन्यते स्म (मैथ्यू ६।२४)। अतो मातर पितर गृह स्त्रिय पुत्र भ्रातर तथा स्वजीवन तिरस्कृत्य यो मनुष्यो मया साकं न निवसति स मदीयो भक्तो न कदापि भवितुमर्हति' (ल्यूक १४।२६–३३)। यथा शङ्कराचार्येण 'का ते कान्ता, कस्ते पुत्रः' इत्युक्त्वा बुद्धेन 'क्वाह मातुः सा मम' (बुद्धचरितम् ६।४५) इत्युदीर्य मातुः पितुश्च स्वकीयत्व न स्वीकृतम्, तथैव खीष्टमहोदयेनोक्तं मम जन्मदात्री माता कास्ति ? मम पार्श्वस्था ईश्वरभक्ता एव मदीयाः मातापितरौ बन्धवश्च सन्ति (मै० १२।४६।५०)। प्राचीनयहूदिसाहित्ये तादृशा वैराग्यपरकाणा सन्यासमूलकानाञ्च विचाराणामत्यन्ताभावो विद्यते। प्रवृत्तिप्रधानो यहूदिधर्माद् निवृत्तिमूलकखीष्टानुयायिधर्मः कथमुत्पन्नोऽभूत् ? संसारे कापि घटना विना कारण न भवति। खीष्टानुयायि धर्मस्यास्या नूतनायाः प्रवृत्तेः किं कारणं विद्यते ?

अधुना प्रायः सर्वैर्विद्वद्भिः स्वीकृतं यत् तस्य प्रधानं कारणं बौद्धधर्मो विद्यते। बौद्ध-धर्मस्य प्रभावः केन पथा जात इत्यत्र पर्याप्तो मतभेदोऽस्ति। बाइबल इत्यत्रेदं न प्रतिपादितं यत् खीष्टमहोदयो द्वादशात् त्रिंशवर्षपर्यन्तं किमकुर्वत्? कुत्र चावात्सीत्? इदं मन्यते यत् स समय-स्तेन ज्ञानार्जने धर्मचिन्तने प्रवासे च व्यतीतम्। इदं सम्भवति यदस्मिन् समये फिलस्तीन प्रान्ते-बौद्धभिक्षुभिः साकं तस्य सङ्गमो जातो भवेत्। अशोकसमयतोऽत्र धर्मदूता आगन्तु प्रारभन्ते स्म। प्लूटार्क (मारल्जकिङ्गकृतेऽनुवादे पृ० ९६–९७) महोदयेन लिखितं यत् खीष्टकाले भारतवर्षस्य धृतकषायवस्त्रः सन्यासी रक्तसागरस्य तटे सिकन्दरियापार्श्वस्थप्रदेशेष्वागच्छन्ति स्म।

२८ खी० पू० सम्राज आगस्टसस्य पार्श्वे प्रेषितेनैकेन दूतमण्डलेन साकमेकस्य श्रमणा-चार्यः ग्रामे आगतः। एतद्व्यतिसङ्गमातिरिक्तं द्वितीयं स्रोतो निवृत्तिपरकजीवनयापकौ एसनीज थेरा-प्यूट-सम्प्रदायौ भवितुमर्हतः। इदमसम्भवं नास्ति यत् खीष्टमहोदयस्य तस्य गुरोर्जानस्य तैः साधकैः साकं सम्पर्को जातो भवेत्। पूर्वं प्रत्यपाद्यत यदनयोर्धर्मयोर्भारतस्य प्रभाव आसीत्। अतोऽनेन स्रोतसा प्रेरितोऽपि खीष्टमहोदयोऽन्ततो भारतस्य ऋणयासीत्। तृतीयं स्रोत खीष्ट-भारतयात्रोच्यते। एतदाधारं एकेन रूसयात्रिणा निकोलसनोटोविमेन नेपालस्यैकस्माद् बौद्धमठात् प्राप्त एकः प्राचीनो ग्रन्थो विद्यते। तेन १८९४ तमे खीष्टीयाब्दे तस्य फ्रेञ्चभाषयाऽनुवादः प्रकाशितः। पश्चादनेकैर्विद्वद्भिस्तत् काल्पनिकं साधितम्? अस्य प्रमाणस्य त्यागेऽपि प्रथमं स्रोतोद्वयं खीष्टमहोदये भारतीयं प्रभावं साधयितुं पर्याप्तं विद्यते।

**खीष्टानुयायिधर्मे प्रभावः**—खीष्टजीवनशिक्षातिरिक्ते खीष्टानुयायिधर्मे बौद्धकर्म-काण्डस्य गम्भीरः प्रभावोऽभूत्। एब्बेह्यूनामको रोमनिवासी कैथोलिकधर्मगुरुस्तिब्बते बौद्धानां पूजापद्धतिं दृष्ट्वा चकितोऽभूत्। तेन लामापदवाच्यानां बौद्धानाञ्च निम्नसादृश्याना-मुल्लेखः कृतः—

लामापदवाच्याः खीष्टानुयायिधर्मगुरुवद् दण्डं मुकुटं शिथिलकञ्चुकञ्चोपयुञ्जन्ति। प्रार्थनासमये स्तुतिपाठकाश्चर्चवत् पङ्क्तिद्वये तिष्ठन्ति। भूतनिष्कासनाय मन्त्रप्रयोगः, लामानां ब्रह्मचारित्रतपालनं सतां सेवा, उपवासः शोभायात्रा मन्त्रजपः पवित्रपानीयव्यवहारश्चोभयत्र समाना एव। अथ चान्यान्यप्यनेकानि साम्यानि योजयितुं शक्यन्ते, यथा—पापस्वीकारः, शिरोमुण्डनम्, धातुपूजा, पूजास्थाने पुष्पप्रक्षेपः, प्रतिमाप्रयोगः, ईश्वरनाम्ना सम्पत्तिपञ्जीकरणम्। तेषु कानिचन साम्यानि अन्यस्रोतोभ्योऽथवा स्वतन्त्ररूपेण सम्भवन्ति। धूपदीपव्यवहारः शिरोमुण्डनञ्च मिश्र-यहूदिपुरोहितानामपि प्रचलितमासीत्। कानिचन साम्यानि अस्मादपि समुत्पन्नानि यत् खीष्टीयधर्मो बौद्धधर्मश्च पशुबलीनां नाशकावपि प्राचीनां पूजापद्धतिं यथापूर्वं रक्षितुं सन्नद्धावास्ताम्। तत्र पुष्पाणां दीपानां गानानां च प्रयोगो भवति स्म। प्राचीनकालेऽतीव व्यापिकाः पद्धतय आसन्। तिब्बतस्य जापानस्य च रोमनकैथोलिककर्मकाण्डस्य च समानताया एकं महत् कारणमिदमप्यस्ति, किन्तु बौद्धकर्मकाण्डस्य वैशिष्ट्यत्रयं खीष्टानुयायिधर्मेण निर्विवादं गृहीतम्। भिक्षूणां ब्रह्म-चर्यव्रतस्य धातोरथवा प्राचीनावशेषाणां पूजायाः पापस्वीकारस्य च बौद्धधर्मेऽतीव प्राचीनकालात् परम्परा आगच्छन्त्यः आसन्। तत्समानाः काश्चनापि प्रथा अद्यावधि प्राचीनयहूदीतिहासे

शामेतिहासे मिश्रेतिहासे च गवेषयितु नाशक्यन्त । यद्यपीद न ज्ञायते यत् तानि वैशिष्ट्यानि खीष्टानुयायिधर्मे केन पथा कदा केन च प्रकारेण गतानि, किन्तु तेषा बौद्धधर्मग्रहणे कश्चन सन्देहो न विद्यते ( इलि० ३।४४३ ) ।

खीष्टानुयायिधर्मो बौद्धधर्मात् पर्याप्त प्रभाव गृह्णाति स्म । तस्य सर्वोत्तम प्रमाण खीष्टानुयायिधर्मस्य प्रक्षिप्ता जीवनकथाः सन्ति । खीष्टमरणानन्तर तस्यानेकानि जीवनवृत्तानि लिखितानि । पश्चात् चर्चेन मैथ्यू-मार्थल्यूकजानाना पुस्तकानि प्रामाणिकानि मत्वा तानि धर्मशास्त्राङ्गानि कृतानि, शेषा ग्रन्थाः प्रक्षिप्ता इत्यप्रामाणिकत्वेन गृहीतानि । तेषु प्रक्षिप्तग्रन्थेषु बौद्धजातकसाहित्येऽनेकास्तादृश्यो घटनाः समुपलभ्यन्ते यासा भारतीयत्वे मनाक् सन्देहो न कर्तु शक्यते । ताः फिलस्तीनस्य मिश्रस्य वा केनापि निर्मलमस्तिष्केण कल्पयितु न शक्यन्ते स्म । ता भारतीयकथानामविकलमनुकरणमस्ति । तासु बालकस्य खीष्टाख्यस्य पुरः वृक्षा नमन्ति, नागास्त पूजयन्ति, पठितु पाठशाला गतेन तेन गुरावज्ञानकलङ्क आरोप्यते । यदा स मिश्रे किमपि मन्दिरं प्रविशति तदा मूर्तयस्त साष्टाङ्ग प्रणमन्ति । खीष्टजन्मकालात् पूर्व महामायावद् मेरी अपूर्वेण तेजसा देदीप्यते, विना कष्ट प्रसवो भवति । ललितविस्तर इव जेम्सस्य गास्पले ( खीष्टजीवनवृत्ते ) खीष्टजन्मकाले कश्चित् काल प्रकृतेः समस्तस्य व्यापारस्य स्तम्भनमभूदिति वर्णितम् । आश्चर्यचकिता वायवस्ताराश्चावरुद्धा भवन्ति, नदीना प्रवाहः क्षण स्थिरो भवति । बौद्धानुश्रुत्यनुसारेण गौतम उत्पन्न एव सप्त पदानि चलित आसीत्, जेम्सस्य पुस्तके मेरीविषये इत्थमेव वर्णित विद्यते ( इलि० ३ । ४४१-४२ ) ।

खीष्टप्रक्षिप्तजीवनवृत्तेषूपलब्धा भारतीया दन्तकथाः प्रदर्शयन्ति यत् खीष्टप्राथमिकशतकेषु फिलस्तीन-सिकन्दरियापर्यन्तं पर्याप्तो बौद्धप्रभावो गतः । चर्चेन पश्चात् त प्रभाव दूरीकर्तुं प्रयतितं यतो यदि सा प्रवृत्तिर्नावरुध्येत तदा खीष्टमहोदयस्य काम नूतनानि जीवनवृत्तानि लिखितानि भवेयुः । अतोऽनेके चत्कारा असम्भवघटनाश्च निष्कासिताः, किन्तु वैराग्यप्रभृतयो ये भारतीयविचारा खीष्टानुयायिधर्मेण स्वीकृता आसन् ते तथैव रक्षिताः ।

भारतेन प्रारम्भिकखीष्टानुयायिधर्मे स्वः प्रभावः स्थापितः, किन्तु रोमनसाम्राज्यस्य पतनानन्तर भारतपश्चिमयोः सम्पर्कस्य समाप्त्या मध्यकालिके खीष्टनुयायिधर्मे भारतस्यातीव स्वल्पः प्रभावोऽभूत् । सः प्रभावः कतिपयाना खीष्टानुयायिमहात्मना केवलकथापर्यन्तमेव विद्यते । मध्यकाले रोमनचर्चस्यैय परिपाट्यासीद् यद् येषा विषये इय प्रसिद्धिर्भवति स्म यत् तै स्वजीवने खीष्टानुयायिधर्मस्य चर्चस्य वा कृते महत्त्वपूर्ण कार्य कृतम्, तेषा कृते मृत्योः पश्चात् 'सन्' ( सन्त ) इति पद प्रदीयमान भवति स्म । अस्य पददानस्यायमर्थ आसीत्—तेषा पूजार्थं प्रतिवर्षमेको दिवसो निश्चीयते, तथा तस्य नाम्नः पुरः सेण्ट ( सन्त = सन् ) शब्दो योज्यते स्म । श्रीरीजडेविडस्मतानुसारेण निग्रोध-सुतसोमजातककथामध्यकालिकचर्चेन 'सैन्टप्लेसिडस इत्यनेन साकं तथा सैण्टक्रिस्टोफर इत्यनेन साक सयोजिताः[1] । किन्त्वत्र विषये सर्वतोऽधिका मनोहरा कथा

---

१—रीजडेविस्-बुद्धिस्ट बर्थ स्टोरीज १८८० ।

वर्लामस्य युवासफस्य च ( भगवतो बोधिसत्त्वस्य च ) विद्यते प्रदर्शयति च यत् कथं मध्ययुगे भगवान् बुद्धः खीष्टानुयायिचर्चेन पूज्यमान एकः सन् ( सन्त ) अभूत् ।

खीष्टानुयायिधर्मप्रचारकाः स्वधर्मप्रसाराय मध्ययुगेऽनेका विचित्राः कथाः कल्पयन्ति स्म । भारते खीष्टानुयायिधर्मप्रसारे दमिश्कवासिजानमहोदयेन सप्तमेऽष्टमे च शतकयो. कथेयं लिखिता । तस्याः कश्चनांशो भगवतो बुद्धस्य जीवनकथया सवदति । तदनुसारेण खीष्टमहोदय-स्यैकेनऽत्यन्तप्रियशिष्येण सैण्टथामसमहोदयेन भारते खीष्टानुयायिधर्मः प्रचारितः । अनेकैः खीष्टानुयायिधर्म. स्वीकृतः । तत्रत्या मूर्तिपूजकैर्हिन्दुभी राजभिः खीष्टनुयायिधर्मं दमयितु ते उद्वेजिताः । तेषु अवेन्नेरनामा एक. प्रतापसम्पन्नो भारतीयो राजाऽऽसीत् । स खीष्टानुयायि-भिक्षून् विशेषत उत्पीडयति स्म । तस्य युवासफ ( जोसाफत (ट) )[1] नामक एकः पुत्रोऽभूत् । एकेन दैवज्ञेन तमुद्दिश्येदं भाषितं यदयं खीष्टानुयायिधर्मावलम्बी भविष्यति । अतो राजा पुत्र एकस्मिन्नुद्याने मनोरमे बन्दीकृत , यत. स समारस्य दु ख न जानीयात् । पुत्र. कदाचित् सर्वाभिः सुरक्षाभिर्भ्रमितुमनुमत । भ्रमता तेनैक. पङ्गुरेकोऽन्ध., एको वृद्धश्च दृष्ट. । स प्रति-बोधितोऽयन्मृत्युरेव तेषां कष्टमोचक उपायो विद्यते । एतत्पर्यन्तन्तु कथेयं बुद्धस्य जीवनेन सवदति । ततः परिवर्तनं विद्यते । राजपुत्र बर्लामनामा गुरु. खीष्टानुयायिधर्मे दीक्षितवान् जरुसरकारपूर्वक खीष्टानुयायिधर्मं प्रवेशयति, किन्तु तस्य पिता मूर्तिपूजकाना खीष्टानुयायिना च शास्त्रार्थेन खीष्टानुयायिधर्मे प्रसार निरोद्धुं वाञ्छति । तत्रासफलेन तेनैकस्य तान्त्रिकस्य प्रयत्नेन पुत्रस्य धर्मं परिवर्तितुमिष्यते, किन्तु अन्ते निराशो भूत्वा राज्यं पुत्रेषु विभजते । पितुः स्वर्गारोहणानन्तर युवासफो राज्यं परित्यज्य बर्लामस्य गुरोरन्वेषणे निर्गच्छति । पथि शैतानस्य ( मार ) प्रलोभने सति वर्षद्वयानन्तर बर्लाम साक्षात् करोति । द्वावपि स्व शिष्ट जीवनमरण्येषु यापयतो मृत्योः पश्चाद् राजा तौ समारोहेण महता स्वनगर समानयति । रोमन-कैथोलिकचर्चे द्वौ सन्तौ कृतौ, तयोः पूजार्थं नवम्बरमासस्य सप्तविंशतितिथिः निश्चितोऽभूत् , किन्तु यूनानचर्चे युवासफस्य केवलस्य कृतेऽष्टाविंशोऽगस्तमासो निश्चितोऽभूत् । यूनाने सैण्ट-बर्लामनामक एको मठो विद्यते । एण्टवर्पस्य एकस्मिन् गिरिजागृहे सैण्टयुवासफस्यास्थिखण्डाः सुरक्षिताः सन्ति ।

उपर्युक्तकथाया मूलं बुद्धस्य जीवनकथाः सन्ति । तत्र खीष्टानुयायिभिः स्वको राग आरो-पितः खुसरोनौशीरवाँ (५३१—५७९ खी०) काले भगवतो बुद्धस्यैका संस्कृतभाषानिबद्धा जीवनकथा पहलवीभाषयाऽनूदिता । ततस्तस्याः क्रमेण पहलवीतः शामभाषाया ततश्च यूनानभाषायामनुवा-दोऽभूत् । पुनः किताबुल्नाम्ना तथा बुदासफनाम्ना त्रयोऽरबीभाषयाऽनुवादाः कृताः । नवमे शतके तस्या यूनानभाषातो लैटिनभाषाया त्रयोदशे शतके च इबरानभाषायामानुवादोऽभूत् । लैटिनानुवादतो योरोपस्य प्रधानभाषासु अनुवादोऽभूत् । योरोपस्य सम्भवतः कापि भाषा नास्ति

---

१ जोसफ जेकब्स-बर्लाम एण्ड जोसागट १८९१, मैक्समूलर-सिलेक्टेड एस्सेज १ । ५००, ईसा. रि. ई. ।

यस्यामनुवादो नाभूत् । बौद्धधर्मस्य काचनान्या कथा तथाधिकलोकप्रिया नाभूत्, तथा तात्रन्ति रूपान्तराणि न प्राप्ताभूत् । तस्या कथाया सर्वप्रकारकं परिवर्तनमभूत् । बौद्धधर्मस्य प्रवर्तकस्य कथया खीष्टानुयायिधर्मस्य प्रचारस्येयं कथा निर्मिता । बर्लामः साक्षाद् भगवानस्ति युवासफश्च बोधिसत्त्वः । पहलवीवर्णमालायास्तथा अरबीवर्णमालायास्तत्कायकल्पस्य गौरवमस्ति । पहलवी-वर्णमालाया ग-ल न-रवर्णाः सदृशा भवन्ति, तत्र परिवर्तन भवति, ततो भगवान् बर्लामोऽभूत्, अरबीवर्णमालाया ब यवर्णयोः कृते क्रमेणैको द्वौ च बिन्दू भवतः, तथा दवर्णस्य शिरःपरिवर्तनेन व भवति । अतो बोधिसत्त्वस्य अरबीरूप बुदासफ इति शीघ्रमेव युवासफ इत्यभूत् ।

**कब्बालासम्प्रदायः**—योरोपे भारतीयधर्मस्य प्रभावस्यान्तिम प्रतिबिम्ब कब्बालासम्प्रदाये दृश्यते । अयमेको यहूदिरहस्यवादी तान्त्रिकः समाज आसीत् । तत्र भगवतो विश्वस्य च सम्बन्धे स्वीक्रियमाणा. केचन गुह्याः सिद्धान्ताः प्रचलिता आसन् । तस्यारम्भिको विकासो मिश्रे बेबीलोने च भारतीयानामन्येषा च पौरस्त्याना प्रभावाणा च मध्येऽभूत् । योरोपेऽस्य प्रवेश' प्रायः ९०० खीष्टीयाब्देऽभूत्, किन्तु षोडशे शतके इसहाकलूरियामहोदयेनात्रानेकानि परिवर्तनानि परिवर्द्धनानि च कृतानि । अय यद्यपि फिलस्तीने निवसति स्म, किन्तु तस्य सिद्धान्ता योरोपयहूदिना मध्येऽपि प्रसृताः ।

कब्बालासम्प्रदायस्य निम्नलिखितानि वैशिष्ट्यानि प्रतीयन्ते—( १ ) वर्णेषु चमत्कारोत्पादिकाना शक्तीना स्वीकार. । ( २ ) मालाप्रयोग. । ( ३ ) विवर्तवादः । ( ४ ) पिण्डवद् ब्रह्माण्ड-विश्वासः । इद प्रतिपादयितु शक्यते यत् ते सिद्धान्ता भारताद् बहि' पूर्वीयदेशान्तरेष्वपि प्रसृताः, ते तेषा स्रोतासि कथ न मन्तव्यानि । किन्तु द्वौ सिद्धान्तौ तथाविधौ स्तो ययोर्भारतीयत्वे कश्चन सन्देहो भवितुं नार्हति । तौ पुनर्जन्मवेदान्तौ स्तः । प्राचीने यहूदिसाहित्ये तयोः किमपि बीज नोपलभ्यते, वस्तुतस्तौ अभिनिविष्टयहूदिभावनायाः सर्वथा प्रतिकूलौ स्त., तथापि लूरियामहोदयो निगदति स्म सिद्धान्त त यदात्मा पुनः पुनर्नव शरीर गृह्णाति । तस्य सम्प्रदाये गिलगूलिम-नाम्नाऽऽत्मनो विविधजन्मनः सूची निर्मीयते स्म । तेऽन्तिमा देवसत्तामनन्ता प्रतिपादयन्ति स्म । तस्याः स्वरूपमज्ञेयमासीत्, यतस्तद्गुणा वर्णयितुमशक्याः । अत्रास्माभिरुपनिषदा 'नेति' 'नेति' इति स्पष्टः, किन्तु क्षीणो ध्वनिः श्रूयते ( इलि० ३।४६१–६२ ) । अय मध्यकालिके योरोपे भारतीयधर्मस्यान्तिमो ध्वनिरस्ति ।

**इस्लामधर्मो भारतश्च**—खीष्टीयाब्दस्य सप्तमे शतके हजरतमुहम्मदमहोदयेनेस्लामधर्मोऽरबदेशे प्रवर्तितः, अरब्जनेष्वीदृशो धर्मोत्साह इत्यादितो यत्ते एकस्यामेव शताब्द्या स्पेनदेशात्-सिन्धुनदीपर्यन्तं विशाल मुस्लिमसाम्राज्यं निर्मापयामास ।

**इस्लामधर्मे न्यूनतमस्य भारतीयप्रभावस्य कारणम्**—इस्लामधर्मो हिन्दुधर्मस्य सर्वप्रकारकमूर्तिपूजाया विरोध्यस्ति । स भारतस्योत्तरपश्चिमदेशान् पराभवन् भारतं विजेतृत्वेन प्रविष्टः, किन्तु इस्लामे भारतस्य भारते इस्लामस्य चातीव न्यूनः प्रभावोऽभूत् । ततः सीमातो भारते पूर्वं यवनानां शकाना कुषणानाम् ऋषिकतुखाणा हूणानाञ्चाक्रमणमभूत् । इद प्रत्यपाद्यद् यद् भारतीयसभ्यतया ते स्वरागेण रञ्जिताः । ते हिन्दुसमाजस्याङ्गान्यभूवन् । मुस्लिमपदवाच्यैः

साकमेव कथन्नाभूत् ? अस्य मुख्य कारण मुसलमानानामेकेश्वरवादः, मूर्तिपूजातः प्रबला घृणा चासीत्। ततः प्राक्तनाना विजेतॄणा कश्चन स्वको विशिष्टो धर्मो नासीत्, किन्तु मुस्लिमा न केवलमेक सरल निश्चितञ्च धर्ममादाय समागता आसन्, तथापि ते तस्य प्रबलाः प्रचारका आसन्। हिन्दुसमाजेन ततः पूर्वमनेका जातयः स्वक्रोडीकृता आसन्, स्वसमन्वयवाद-नीत्या तमपि क्रोडीकर्तुं प्रयतितम्, तस्य तत्रापत्तिर्नासीद् यत् त्रयस्त्रिंशत्कोटिदेवेषु 'अल्लाह' इत्यपि समाविष्टो भवेत्, तेन अल्लोपनिषदपि रचिता, किन्तु अल्लाहे सोदारता नासीद् यत् स स्वप्रतिस्पर्द्धिहिन्दुदेवान् स्वीकुर्यात् तथा तदनुयायिहिन्दुधर्मस्य महासागरे विलय गन्तु सन्नद्ध आसीत्? इस्लामस्य दीक्षामन्त्रस्य (कलमा) प्रथमोऽशः—एकेश्वरातिरिक्तः कश्चनेश्वरो नास्ति (ला इलाह इल्ला अल्लाहे) हिन्दुधर्मस्य देवस्वीकारः कृतघ्नताकरणम् इस्लामस्य त्यागश्चासीत्। अस्यामवस्थाया द्वयोर्म्तैलजलबिन्दुवत् पार्थक्य स्वाभाविकमासीत्। आपाततो दर्शने इद न सम्भवति यद् भारतेन स्वसीमातो बहिः इस्लामे स्वक. प्रभाव. स्थापितो भवेत्। यदा इस्लामस्योत्थानमभूत् तदा भारतस्योन्नतिसूर्यो गुप्तयुगे सर्वेषु क्षेत्रेषूत्कर्षस्योन्नत-शिखरमारुह्य पतितुमारब्धवान्। जातीयजीवने मन्दता प्रारब्धा। हिन्दुसमाजस्य 'चरैवेति' भावना लुप्ताऽऽसीत्। अत इदं न सम्भवति स्म यद् भारतं स्वसीमाया बौद्धराज्यानि रक्षितु शक्नुयात्, अथवा तत्र इस्लामे स्वकीयं कमपि प्रभाव स्थापयेत्। पुनरपि तेन विज्ञाने ज्ञाने धर्मे च क्षेत्रे इस्लामे स्वप्रभावः स्थापितः। प्रथमे क्षेत्रेऽयं प्रभावो महानासीत्, किन्तु द्वितीय-स्मिन् क्षेत्रे तसव्वुफ (सूफीवाद) पर्यन्तमेवासीत्।

**अरबाणां सांस्कृतिक उत्कर्षः**—भारतस्य प्रभावश्च ७४९ तमे खीष्टीयाब्दे अबुल आब्बासेन बगदादे अब्बासवशस्य (७५०–११०० खी०) मूल स्थापितम्। अस्य वशस्य शासकै (खलीफा) विदुष. प्रोत्साह्य ज्ञानविज्ञानोन्नतौ महत् साहाय्यमाचरितम्। तैर्बगदादस्थान तदानीं संसारस्य सर्वतो महत् सास्कृतिक केन्द्रं कृतम्। अरबभाषाया प्राक् कुरानशरीफहदीसव्य-तिरेकेण किमपि प्राचीन साहित्य नासीत्। हजरतमुहम्मदस्यादेश आसीद् यद् ज्ञानप्राप्तये चीन-भित्तिपर्यन्त गन्तव्यम्। अरबैः स्वपार्श्वस्थेभ्यो देशेभ्यो धर्म विहाय सर्वप्रकारक ज्ञानं ग्रहीतुं प्रारब्धम्। यूनानशामभारतीयग्रन्थैः अरबसाहित्य समृद्ध कृतम्, तदाधारेणारबैर्ज्ञान विज्ञानं च वर्द्धयितुमारब्धम्, बसरा-कूफा-काहिरा-कार्डोनासु प्रारम्भिकपाठशालाभिर्विशालविश्वविद्यालय-स्वरूप धृतम्। मध्ययुगे विज्ञानस्य प्रायः प्रत्येक शाखासु गणित-ज्यौतिष-भूगोल-रसायन-चिकित्साशास्त्रप्रभृतिषु अरबैर्नूतना आविष्काराः कृताः। तदानीं योरोपदेशोऽज्ञानान्धकारे निमग्न आसीत्। तत्र सर्वप्रथम विविधविज्ञानाना प्रकाशप्रसारका अरबा विद्वांसोऽरबग्रन्था अरबविश्वविद्यालयाश्चैवासन्। अष्टमशतकतः पञ्चदशशतकपर्यन्त विश्वस्य ज्ञानविज्ञाननेतृत्वमरबाणां हस्ते आसीत्, ततो योरोपेणोन्नतिः प्रारब्धा।

**बरामवंशः**—अरबाणं सास्कृतिके उत्कर्षे भारतेन महत्साहाय्यमाचरितम्। अयं सहयोगो भारतीयग्रन्थानामनुवादरूप आसीत्। तेषामनुवादस्य गौरवं बगदादस्य बरामवश-स्यास्ति। तत्प्रेरणयैव भारतीयाः पण्डिता बगदादे आहूताः संस्कृतग्रन्थाश्चारबीभाषयाऽनूदिताः। वशोऽयं बलखस्य निवास्यासीत्, पूर्वमयमग्निपूजक ईरानवासी मन्यते स्म, किन्त्वाधुनिका-

न्वेषणैरिदं साधितमभूद् यत् तेषां सम्बन्धो भारतेनासीत्। बलखस्य सर्वतो महतः सङ्घारामस्य 'नवविहारस्य' अध्यक्षस्य प्रतिष्ठासूचक उपाधिः 'परमकः' इति भवति स्म। बरमक इति (बरामक इत्यस्य अरबीबहुवचनमस्ति) अस्यैवारबीरूपं प्रतीयते। प्राचीनेभ्योऽरबेतिहासेभ्यो ज्ञायते यदरबैर्विजिते बलखे बरमकः खलीफा राजसभायां गतः, मुसलमानश्चाभूत्। यदा स बलखं प्रतिनिवृत्तस्तदा तत्रत्यास्तस्य मुसलमानत्वेनासतुष्टा आसन्, तैस्तत्स्थाने तस्य पुत्रो नवविहाराध्यक्षः (परमकः) स्थापितः, तुर्कस्थानस्यैकेन प्रतिवेशिना सम्राजा प्राचीनो वरमकस्तस्याधिकाशपरिवारश्च हतः। पत्नी तस्य स्वकीयेनैकेन पुत्रेण साकं कश्मीरं गता, तत्र तया बालको भारतीया विद्या पाठितः[१]। एताभिर्घटनाभिर्बरमकाणां भारतेन सम्बन्धः पुष्टो भवति। अब्बासशत्रुत्वे पञ्चाशद् वर्षाणि यावत् (१३६ हि० से १८६ हि० ७५२ तः ८०३ खी०) बरामवश्या मन्त्रिपदमधितिष्ठन्तोऽभूवन्। अब्बासखिलाफतस्य कीर्त्तेः प्रसिद्धेः सुश्नसनस्य तान्येव मुख्यकारणान्यासन्। बगदादस्य विदुषां केन्द्रत्वं तेषामेव कार्यमासीत्। भारतस्य सम्बन्धेन तैर्भारतादनेके विद्वांस आहूता भारतीयग्रन्थाश्चानूदिताः[२]। अत्र तद्द्वारा इस्लामजगति गच्छतां विविधविज्ञानानामनूदितग्रन्थानाञ्च सक्षेपेण परिचयो दास्यते।

(१) आयुर्वेदः, चिकित्साशास्त्रञ्च—भारतीयायुर्वेदे मुसलमानानां ध्यानं महता विचित्रेण प्रकारेण पतितम्। कदाचित् खलीफाहारुअल्-रशीद (७५८–८०९ खी०) रुग्णोऽभूत्। बगदादस्य सर्वे चिकित्सकास्तस्य चिकित्सया निराशा अभूवन्। अन्ते कस्यचिदुपदेशेन भारतादेको वैद्य आहूतः। तस्य चिकित्सया खलीफामहोदयः स्वस्थोऽभूत्। तेन तस्मै पुष्कलः पुरस्कारः प्रदत्तः। पश्चाद् वैद्यो राज्यस्यानुवादविभागे संस्कृतपुस्तकानामनुवादं कर्तुं नियुक्तः। अरबी-

---

१. सुलेमान नदवी—अरबस्य भारतस्य च सम्बन्धः, पृ० ८४–१०२।

२. खलीफा अलमन्सूरस्य (७५४–७७५ इ०) हारूं अल् रशीदस्य (७८६–८०९) च समये भारतबगदादयोः साक्षात् सम्बन्धः स्थापितः। तदा सिन्धप्रान्तः खिलाफतस्य वशे आसीत्, भारताच्चानेकं दूतमण्डलमुपर्युक्तमल्लानां (खलीफा) राजसभायां गतम्। तेन साकं ज्यौतिषगणितप्रभृतिविद्याविशारदा गच्छन्ति स्म। अल्बेरूनी-महोदयेन लिखितमस्ति यद् अलफराजी-याकूब-इब्नतारिक इत्यनयोस्तारकवृक्षाणां मूलमेको हिन्दुरासीत्, यः १५४ हि० (७७१ ई०) काले सिन्धेन अलमन्सूरपार्श्वे प्रहितस्यैकस्य राजनीतिकदूतमण्डलस्य सदस्यत्वेन बगदादं प्राप्त आसीत् (सखौकृत अल्बेरुनीज इण्डिया २। १५) अस्यैव लेखकस्यानुसारेण ई० ७७८ तमे भारताद् दूतमण्डलान्तरेण सार्कं बगदादं समागतेन सुप्रसिद्धेन हिन्दुना विदुषा याकूब-इब्नतारिकस्ताराणां दविष्टत्वे हिन्दुपरम्परां प्रतिबोधित आसीत् (सखौ २। ६७)। अपरमपि भारतीयदूतमण्डलद्वयम् ई० ७५३ तमे ७७३ तमे च बगदादं प्राप्तमासीत् (सखौ २। ३१३)। सम्भवतस्तैर्दूतमण्डलैः साकं ब्रह्मगुप्तस्य ब्रह्मस्फुटसिद्धान्तनामा खण्डकखाद्यनामा च ज्यौतिषग्रन्थौ बगदादं प्राप्तौ, अलफजारीप्रभृतिपण्डितैरनूदितौ चाभूताम्। अरबैः टाल्मी इत्यस्य यूनानग्रन्थापेक्षया भारतीयज्यौतिषग्रन्थानां प्रथमं परिचयः प्राप्तः।

ग्रन्थेष्वस्य नाम मनक इत्यस्ति, इदं सम्भवतो माणिक्यस्य अरबीरूपमस्ति। तदानीन्तनस्य द्वितीयस्य भारतीयस्य वैद्यस्य बहलाख्यस्य पुत्रः सालेह आसीत्। कदाचिद् हारूरशीदस्य पितृव्यपुत्रो मूर्च्छितोऽपस्मारेण वाऽचेतनोऽभूत्। राज्यस्य प्रसिद्धेन यूनानचिकित्सकेन जिब्राईल-बख्तीशूमहोदयेनोक्तं यदयं प्रयत्नशतैरपि रक्षितो नैव भविष्यति, तदा जाफरबरमकिणा उक्तस्य भारतीयवैद्यस्यौषधं भवत्विति सन्दिष्टम्, रोगी च स्वस्थोऽभूत् (सुले० अ० १० ७ ८)। तादृशाभि-र्घटनाभिर्बगदादे भारतीयवैद्यानां प्रतिष्ठा परा काष्ठा प्राप्ता। ते भारतादाहूता भारतीय-काष्ठौषधिगवेषणायै जना भारते प्रेषिताः। जाहिजनामकस्य अरबैतिहासिकस्य कथनानुसारेण यह्यिाबिनखालिदबरमाकिणा भारताद् बहलाः, मनकाः, बाजीगराः, फलबरफलः, सिन्दबादश्च वैद्या आहूताः (सुले० १०६)। अन्यत्र इब्नदहनः (धन्यः, धननः मि० धन्वन्तरिः) उल्लिखितो विद्यते। सम्भवतस्तेष्वधिकाशा बौद्धा आसन्, अरबैस्तेषां नामानि तथा विकारं नीतानि यदद्यापि तेषां भारतीयरूपाणि निश्चेतुं न शक्तानि। इदं स्पष्टं विद्यते यत् तेषामाह्वाने बरामकाणां प्रेरणा प्रधानं कारणमासीत्। तैः स्वचिकित्सालयस्य प्रधानपदे एको भारतीयो वैद्यो नियुक्तो भारतीयकाष्ठौषधिमानेतुमेको जनो भारते प्रहितः। भारतीयानां वैद्यानां सम्पर्के स्थितैररबवैद्यैरनेका भारतीया औषधय उपयुज्यन्ते स्म। तासु त्रिफला आम्रजातं (आम्रमधुनिम्बुहरीतकीयोगः) च मुख्यमासीत् (सुले० पृ० १२४)। इत्थमेकोऽन्यः शब्दो बहत (भक्तम्?) इत्यस्ति, यत् रुजारिजमीमते दुग्धदधिभ्यां पाच्यमानं रुग्णानां भोजनमस्ति, इदं हिन्दुस्थानस्यौदनं विद्यते (सुले० पृ० १२४)। यह्यिाबिनखालिदेनैको वैद्यो राजकीयानुवादविभागेऽतो हेतोर्नियुक्तो यत् चिकित्साविषयका भारतीया ग्रन्था अरबीभाषयाऽ-नूद्येरन्। तेन माणिक्येन (मनका) सुश्रुतग्रन्थः (ससरो) अतोऽनुवादितो यत् तस्य चिकित्सालये तदनुसारिणी चिकित्सा भवेत्। चरकः पूर्वं फारसी-भाषया पुनररबी-भाषयाऽनूदितः। निदानसिद्धिस्थाननामकयोर्ग्रन्थयोररबीभाषया अनुवादोऽभूत्। स्त्रीरोगविषयकाः, काष्ठौषधि-विषयकाः, मादकवस्तुविषयकाः, चिकित्साविषयकाश्चानेके संस्कृतग्रन्था अनूदिताः (सुले० पृ० १२१–२२)। पशुचिकित्सा (शालिहोत्र) विषयकः शानिकस्य चाणक्यस्य वा विदुषः संस्कृत-ग्रन्थोऽरबीभाषायामनूदितः।

इदं ध्यातव्यं विद्यते यद् भारतीयायुर्वेदस्य बगदादे प्रवेशात् पूर्वमरबाणां यूनानचिकित्सा-शास्त्रेण साकं परिचयो जातः, किन्तु स तेषां सन्तोषाय नालं बभूव। अत एव तैर्भारते दृष्टि-र्निक्षिप्ता। अरबतिब्बाख्ये भारतीयवातपित्तकफवत् सौदा-सुफरा-सफलानामकानि त्रीणि तत्त्वानि मन्यन्ते, किन्त्वद्य यावदिदं निश्चितं नाभूद् यत् तैः स सिद्धान्तो भारतीयत्रिदोषसिद्धान्ताद् गृहीतोऽथवा यूनानस्य चिकित्साशास्त्रात्।

**अङ्कगणितम्**—अरबैरिदं स्वयं स्वीकृतं यदेकतो नवपर्यन्ताङ्कलेखनस्य रीतिस्तै-र्हिन्दुभ्यः शिक्षिता। अत एव एतेऽङ्कास्तैः 'हिन्दसा' प्रणालीयं 'हिसाबे हिन्दी' (भारतीयगणित-मित्युच्यते (सुले० पृ० १०८–९)। योरोपदेशीयैरियं प्रणाली अरबाद् गृहीता, अतस्तैस्तेऽङ्का 'अरबअङ्काः' (Arabic Numesls) इत्युच्यते। ततः पूर्वमरबैर्योरोपवास्तव्यैश्च सङ्ख्याऽ-

क्षरै' प्रकट्यते स्म। अरबीभाषायाम् 'अलिफ' शब्द एकस्य वाचकः, 'बे' शब्दश्च द्वयोर्वाचको भवति स्म। योरोप 'वी' (v) इति पञ्चाना तथा एक्स ( x ) इति च दशाना वाचक आसीत्। ते रोमनाङ्काः प्रतिपाद्यन्ते, घटिकायन्त्रेष्वद्यापि तेषा प्रयोगो भवति।

भारतीया अङ्काः सिन्धपण्डितैः १५६ तमे हि० खलीफामन्सूरस्य ( ७५४ खी० ७७५ खी० ) राजसभाया प्रापिताः। मामू ( ८१३–८३३ खी० ) इत्यस्य राजज्योतिर्विदा ख्वरिज्मीनामकेन तेषा समीचीन स्वरूप निश्चितम्। ततस्ते अन्दुलुस ( स्पेन ) मार्गेण योरोप गताः। योरोपे गणितस्यैका शाखा अलगोरिथ्म अलगोरिटेमस, अथवा अलगोरिज्म इति प्रोच्यते। इदम् अलख्वारिज्म इत्यस्य विकृत रूपमस्ति ( सुले० १०९ )।

**ज्यौतिषम्**—७७० तमे खीष्टीयाब्दे सिन्धस्यैकेन दूतमण्डलेन साकमेको हिन्दुः पण्डितो भारतीयगणितज्यौतिषस्य बृहस्पतिसिद्धान्तनामक पुस्तकमादाय बगदाद प्राप्तः। इदम् अरबी-भाषायाम् 'अस् सिंद हिंद' नाम्ना प्रसिद्धमभूत्। द्वितीय पुस्तकमार्यभट्टस्यासीत्। तस्यारबनाम 'अरजबन्द' इत्यस्ति। इद स्मर्तव्य यद् यूनानवासिभ्यः किञ्चिज्ज्यौतिष पठित्वाऽऽर्यभट्टब्रह्म-गुप्ताभ्यामधिक समुन्नत कृतम्। ब्रह्मगुप्तस्य वर्षगणनायामाधुनिकगणनायाञ्च ( ३६५ दिनानि ६ घण्टा ९ मिनट ९$\frac{२३}{२००}$ ) $\frac{२३}{२००}$ सेकण्डपदवाच्याना भेदो भवति। अरबेषु भारतीयज्यौतिष-ग्रन्था अतीव लोकप्रिया अभूवन्, किन्तु भारतीयवत्तैस्तत्र नवीनाः सिद्धान्ताः प्रक्षिप्ता प्राचीनाश्च त्रुटयो निष्कासिताः। ताराणा नवा सूची निर्मिता। पश्चिमे ज्यौतिषे 'कोमल हार' ( फमूल्हूत = मत्स्यमुखम् ), एल्डीवरन ( रोहिणी ) इत्यादीनि बहूनि नामान्यरबीतो गृहीतानि। सस्कृत-ज्यौतिषस्य क्रमज्या-जीवाप्रभृतयः पारिभाषिकाः शब्दाः 'फर्दजः' जैवप्रभृतिरूपेण अरबीभाषया

---

१. सप्तमस्य शतकस्य खीष्टीयाब्दस्य मध्ये फरातनदीतटे एकस्मिन् मठे निवसता सीरिया-पण्डितेन सेनरससेबोख्तमहोदयेन ज्यौतिषशास्त्रे भारतीयान्वेषणस्य प्रशसां कुर्वता कथितं यद् यूनानबेबीलोननिवासिनामन्वेषणापेक्षया भारतीयान्यन्वेषणानि बुद्धिमत्तापूर्णानि सन्ति। ततश्च तेन भारतीयानां वर्णनातीतां गणनापद्धतिमुल्लिखता कथितं यदित्थं नवभिश्चिह्नैः क्रियते। यदीमां वार्तां ते जना जानीयुः, ये यूनानभाषाप्रयोगेणैवेदं मन्यन्ते यत् ते विज्ञानस्यान्तिमां सीमां गताः, तदा तेषां निश्चयोऽस्य भविष्यति यदन्येऽपि तादृशा जना अपि सन्ति ये किमपि जानन्ति ( यूनील आसियातिक, खं० २, १९१० )। मैकडानलेनात्र विषये सत्यमेव लिखित यद् भारतीयैरधुना सकले जगति प्रयुज्यमानाः संख्या आविष्कृता.। तदङ्काश्रितदशांशगणनापद्धतेर्न केवले गणितशास्त्रे, किन्तु सामान्य-रूपेण सभ्यतायाः प्रगतौ जातस्य प्रभावस्य मूल्याङ्कनं महता काठिन्येन भवितुमर्हति। अष्टमनवमशतकयोर्भारतीयाङ्कगणितबीजगणिते चारबाणां तथा तद्द्वारा पश्चिमराष्ट्राणां गुरुत्वं प्राप्ते। अतो यद्यपि तेषामङ्कानामरबनाम प्रोच्यते, तथाप्यस्योपहारस्य कृते वयं भारतस्य अधमर्णाः स्मः ( हिस्टरी आफ संस्कृत लिटरेचर, पृ० ४२४ ) एतदर्थं द्र० हिट्टी हिस्टरी आफ दी अरबस, पृ० [illegible] ।

गृहीताः। संस्कृत उच्चशब्दोऽरबीभाषायाम् ओज इति अभूत्, अरबीभाषाया वजमामशब्दः संस्कृतादधिमासाद् निर्गतः ( सुले० पृ० १११–११७ )।

फलितज्यौतिषस्य कृते भारतं चिरकालात् प्रसिद्ध विद्यते। खलीफामन्सूरकाल यावत् ( ७५४ खी० ७७५ खी० ) विद्येय बगदाद प्राप्ता। बगदादनिर्माणकाले तस्य प्रत्येक वस्तु कुण्डलीनिर्माणपूर्वकं कारितम्। भारतीयपण्डिताना तद्विषयकाणामनेकेषा पुस्तकाना भाषान्तरमभूत्। फलितज्यौतिषस्य भारतीयपण्डिताना बगदादे कनका ( ककनायः कनकनाय ) सर्वतोऽधिकः प्रसिद्ध आसीत्।

**विज्ञानान्तरं साहित्यं च**—मन्त्रतन्त्रयो. सर्पविद्यायाञ्च भारतस्य प्राचीनकालतः ख्यातिरभूत्। मन्त्रतन्त्रविषयकाणि बहूनि भारतीयपुस्तकानि अरबीभाषायामनूदितानि। सर्पाणा विधाविषयक विषचिकित्साविषयकञ्च रायनामकपण्डितलिखित पुस्तकमरबीरूप प्राप्तम्। युद्ध राजनीतिं विज्ञानञ्चोद्दिश्य लिखित शानाकस्य ( चाणक्य ? ) बाग्वरस्य ( व्याघ्रस्य ) च पुस्तकद्वयस्यानुवादोऽभूत्। प्रथमस्य पुस्तकस्य विषयो युद्धव्यवस्था, राजनिर्वाचितव्यक्तिप्रकारः, भोजन विषञ्चासीत्। कौटिल्यार्थशास्त्रे तेषा विषयाणा समुल्लेखो वर्तते।

**कथासाहित्यम्**—अत्र पञ्चतन्त्रस्यानुवादकस्य लेलादमनस्य पूर्वं चर्चा विद्यते। अरबीभाषाया तस्यानेकेऽनुवादा अभूवन्। अब्बाननामकेन अरबीभाषाकविनाऽस्य पद्यानुवादो हारुअलरशीदस्य मन्त्रिणो जाफरबरमकीनाम्नः सेवाया समुपस्थाप्यैकलक्षदरहमसञ्ज्ञकमानमितं द्रव्यं ( १ दरहम = ३$\frac{1}{2}$ आणकाः, सुले० पृ० १६६ ) पुरस्काररूपेण प्राप्तम्। पुस्तकेऽस्मिन् अनुवादकैरनेकानि परिवर्तनानि कृतानि। अल्बेरुनीमहोदयस्येच्छाऽऽसीद् यत् तेन तस्य मूलपुस्तकस्यानुवादस्यावसरः प्राप्येत। खीष्टानुयायिधर्मस्य प्रकरणे बोधिसत्त्वस्य कथाया अरबीभाषानुवादस्योल्लेखो विद्यते।

## मनोरञ्जकमुपायनद्वयं शतरञ्ज-चौसराभिधम्

प्राचीने काले विश्वस्य ज्ञानभाण्डागारे अरबीभाषाद्वारा भारतस्यैतदन्तिममुपायनमासीद्, किन्तु विद्याविज्ञानयोस्तैरुपायनै साक भारतेन जगति मनोविनोदार्थ प्रसिद्ध क्रीडाद्वय शतरञ्ज-चौसरनामक प्रदत्तम्। अरबवास्तव्यैस्तद् विदेशेषु प्रसृतम्। ईरानप्रकरणे शतरञ्जस्य तस्मिन देशे प्रसार उल्लिखितोऽस्ति। ईरानवासिभिस्तस्य मुद्राणा नामानि सम्राट् ( शाह = मन्त्री ) ( फरजीन = वजीर ) पदाति. ( प्यादा ) इत्यादीनि नामानि कृत्वा तस्य ईरानदेशीयत्व व्यवस्थापितम्, किन्तु तत्र हस्तिनो रथस्य च चिह्ने तस्य भारतीयत्वे प्रमाणमस्ति। यूनान-चीन-ईरान-मिश्रप्रभृतिभिरनेकैर्देशैस्तस्याविष्कारका वयमिति उद्घोषितम्, किन्तु वर्तमानया गवेषणया भारतस्य पक्षः समर्थितः। भारतीयानुश्रुत्यनुसारेण रावणस्य पत्न्या मन्दोदर्या अयमाविष्कारोऽस्ति। रावणो युद्धेऽतीवानन्द प्राप्नोति स्म, मन्दोदर्या त रणाद् विरमयितुमयमाविष्कारः कृतः ( इसा. ब्रिटा. )। अत्रानुश्रुतौ काम काचिदत्युक्तिर्भवतु, किन्तु विदेशेषु तस्य भारताद्गमनस्य

प्रबल प्रमाण विद्यते। नौशीरवा-समये तदेकेन भारतीयेन राज्ञा ईराने प्रेषितम्[1]। ईरानविजया नन्तरमरबैरिय क्रीडा ईरानवासिभ्यो गृहीता। अरबीभाषाया शब्दाना प्रारम्भेऽन्ते 'च' 'ग' वर्णौ न भवतोऽतो भारतीय चतुरङ्ग ते शतरञ्ज कृतवन्तः, पश्चाद् ईरानवासिभिरिद नाम स्वीकृतम्, कथयितु च प्रवृत्त यत् शतरञ्जेति हस्तरञ्जस्य ( आठ ) अपभ्रंशोऽस्ति, किन्तु तस्य प्रसिद्धेन कविना फिरदौसीमहोदयेन शाहनामे इत्यत्र तस्य भारतादागमनमुल्लिखितम्।

अरबलेखकाना वर्णनात् त्वत्र कश्चन सन्देहो नावशिष्यते यत् शतरञ्जचौरसयोराविष्कारका भारतीया आसन्। याकूबीमहोदयेन लिखित यत् पूर्व भारतीयेन केनचन पण्डितेन चौसरं निर्माय राज्ञे समुपाहृतम्, तेन च भाग्यस्य प्राबल्य मनुष्यस्य च परवशत्व सिद्धान्तितम्। ततोऽन्येन विदुषा शतरञ्ज राज्ञे समुपाहृत येन सिद्ध भवति स्म यन्मनुष्यस्य हस्ते एव सर्वमस्ति, स सर्व कर्तु प्रभवति। चौसरस्य विस्तारे चिह्ने क्रीडायाञ्च आकाशस्य राशीनाम् ३६० दिनानाम् २४ घण्टाना दिनस्य १२ घण्टाना रात्रेश्च पूर्ण चित्रणमस्ति। एतदस्य प्रमाणमस्ति यन्मनुष्यः सर्वथा विवशो विद्यते, आकाशस्य नक्षत्राणा च चक्रेण सर्व कार्यते यदिष्यते, सर्वत्र भाग्यराज्य विद्यते, मनुष्यः स्वातन्त्र्येण किमपि कार्य कर्तु न पारयति। शतरञ्जस्य च ६४ कोष्ठकान्यस्य प्रमाणानि सन्ति यत् ससारे यत् किञ्चिद् भवति तन्मनुष्याणा प्रयत्नस्यैव फलमस्ति। तस्य जय पराजयश्च सफलता विफलता च तस्य बुद्धिं प्रयत्न चापेक्षन्ते ( सुले० १४९ ) भारतात् तौ खेलौ पठित्वा तथा तत्रानेकानि परिवर्तनानि कुर्वद्भिरबैरिद खेलन योरोप नीतम्। ततश्च तस्य सकले विश्वे प्रसारोऽभूत्।

## तसव्वुफ इति ( सूफीवादः )

धार्मिकक्षेत्रे भारताद् बहिर्देशेनानेन इस्लामधर्मस्तसव्वुफ ( सूफीवाद ) रूपे एव प्रभावित। तसव्वुफ इति रहस्यवादिना मुस्लिमसाधकाना सप्रदायो विद्यते। अस्य प्रधाना सिद्धान्ताः—अस्मिन् जगति भगवानेवाद्वितीया वास्तविकी सत्ता ( अल् हक् ) अस्ति, स नामातीतो गुणातीतश्चास्ति। स न केवला सत्तास्ति, किन्तु पूर्णः परोपकारः सौन्दर्यञ्चाप्यस्ति। सौन्दर्ये प्रकाशनस्य प्रकटीभवनस्य चेच्छा स्वाभाविकी विद्यते। भगवतः प्रकटीभवनस्य परिणामो दृश्यमान जगदस्ति। एकस्या प्रसिद्धाया सूफीसूक्त्या भगवतोक्तम् "अह गुप्तः कोश आसम्, मया

---

१. पहलवीभाषाया मादीगान-ए-शतरञ्जनामके पुस्तके कथित यद् दीवसारम् ( देवशर्मा ! ) नाम्ना भारतीयेन राज्ञा खुसरोनौशीरवां ( ५३१—५७९ खी० ) इत्यस्य सभाया विदुषां परीक्षणार्थ द्वात्रिंशन्मुद्रा शतरञ्जक्रीडा ईराने प्रेषिता। ( विजारिश्न-ए-शतरञ्ज जे. सी तारापुरद्वारा सम्पादितं मूलमाङ्गलानुवादश्च, पृ० १, १२, २३, प्रकाशक पारसी पञ्चायतफण्ड बम्बई १९३२ )। फिरदौसीमहोदयेनापि रायहिन्दी ( भारतीयराज )-द्वारा शतरञ्जक्रीडाया ईराने प्रेषणं लिखितम्। बाणसमयपर्यन्तमियं क्रीडा भारतेऽत्यन्ताय प्रसिद्धा जाता। तस्य कोष्ठकं कृष्णं श्वेतं च भवति स्म ( अन्धकारितललाटपट्टाष्टपदा, पृ० ९ तथा वासुदेवशरण-अग्रवाल हर्षचरितस्य सांस्कृतिकमध्ययनम्, पृ० १४ )।

कटितुमभिलषितम्, अत एव प्राणिनः सृष्टा यतोऽहं ज्ञातो भवेयम्। सत्तायाः पूर्णं ज्ञानमसत्तया व भवितुमर्हति, मनुष्यः स्व मुख दर्पणे प्रतिबिम्बितमेव सम्यग् द्रष्टु शक्नोति। जगदिदं गवतः प्रतिबिम्ब विद्यते, छायावत् तस्य वास्तविकी सत्ता नास्ति। साधकस्य परम लक्ष्यमिदं वेद्यते यत् स मनोविषयादहम्भावाच्च शून्य कृत्वा स्वं परमसत्ताया विलापयेत्। तामवस्था प्राप्तु ाधकेनानेकाऽवस्था समुल्लङ्घनीया भवति। साधकः ससाराद् विरक्तो भूत्वा जपादिविविधोपायैः माधिसुखं प्राप्तु प्रयतते। इस्लामे इत्थ साधकाना विरक्तानामनेके सम्प्रदायाः सन्ति। वैराग्य-भावना उपर्युक्ता अनेके सिद्धान्ता हजरतमुहम्मदमहोदयस्य शिक्षाप्रतिकूलाः सन्ति। पैगम्बर-महोदयस्य कथनमासीद् यदिस्लामधर्मे वैराग्यस्य किमपि स्थानं नास्ति (ला रहबानियतो फिल् इस्लामे)। पुनस्तत्राय कृतघ्नताविचारः कुतः समागतः! श्रीनिकल्सन-ब्रौनप्रभृतयस्तसव्वुफ स्यस्य गाम्भीर्येणानुशीलनकर्तारः पाश्चात्याः पण्डितास्तस्य मूलं नवप्लेटोवाददर्शनं मन्यन्ते[1]। ८००–८६० खी० मध्ये अरबीभाषाया यूनानानुवादस्य प्रवाहः समागतः। तत्र अरस्तूदर्शन-नाम्नाऽनेके नवप्लेटोवादिनो ग्रन्था (Neopletonic) आसन्, अथ च खीष्टानुयायिधर्म इस्लामस्य प्रतिवेश्यासीत्, अतो वैराग्यविचाराणाम् इस्लामे आगमन नासम्भव विद्यते। इस्लामस्य प्राचीनाना सूफीवादिना भारतेन कश्चन सम्बन्धोऽभूदिदमद्यत्व यावत् साधयितु-मशक्यत, किन्तु पुनरप्युपरि प्रतिपादिताना सिद्धान्ताना हिन्दुबौद्धविचारैः साक कामं सादृश्य विद्यते। सृष्टिनिर्माणे सूफीविचार उपनिषदः 'बहुस्या प्रजायेय' (बृह० उप०) इति विचारेण सवदति। दृश्यमानस्य जगतोऽवास्तवत्व वेदान्तस्य 'ब्रह्म सत्य जगन्मिथ्या' सिद्धान्तं स्मारयति। प्रतिबिम्बदृष्टान्तोऽप्युभयत्र समान एवास्ति। बलिविचारोऽवस्थाविचारश्च (मकामात) बौद्धनिर्वाणस्य बुद्धत्वप्राप्तेश्च स्रोतसा आपन्न-अर्हत्-प्रभृत्यवस्थाभिः सवदति। यदि इस्लाम-धर्मस्य पश्चिमः प्रतिवेशी खीष्टानुयायिधर्म आसीत्, तदा ततः पूर्वं मध्य-एशियाया सर्वत्र बौद्ध-धर्मस्य प्रसार आसीत्। अतः सम्प्रति इद मन्यते यत् सूफीवादस्य मूलं नवप्लेटोवादः सन्नपि ततः परवर्तिनि विकासे बौद्धहिन्दुधर्मयोर्गाढः प्रभावो विद्यते। मालोपयोगः, आत्मबलिः, साधना-वस्थाश्च बौद्धधर्मेभ्यो गृहीताः (इसा. ब्रिटा. २१।५२३ क)।

अथ च कतिपयसूफीवादिना भारतयात्राया भारतीयसंस्कृतेः प्रभावस्य च प्रबल प्रमाण विद्यते। ९२२ तमे खीष्टीयाब्दे एकः सूफीवादी हुल्लजनामा 'अह ब्रह्मास्मि' (अनलहक्क्य) इत्यस्योच्चारणेन हतो यतोऽय विश्वासघात आसीदिस्लामदृष्ट्या। अत्र विषये निरुच्यते यत् स तन्त्रं पठितु भारतमागत आसीत् (सुले० पृ० २०४)। सूफीवादिना फरीहुद्दीन-अत्तर-महा-शयेन भारतस्य तुर्कस्थानस्य च यात्रा कृता। तुर्कस्थान बौद्धधर्मस्य केन्द्रमासीत्। प्रसिद्धः सूफी-

---

१ इदमुच्यते यद् नवप्लेटोवादिभिः ५३२ तमे खी० नवशीरवां-राजसभायां शरणं गृहीतम्। फिहरिस्तमहोदयेन (प्रायः ९८८ खी०) योरफिरी इत्यस्य (२३२–३०४ खी०) प्लोटिनस इत्यस्य च (२०५–२७० खी०) निर्देशः कृतः (इलि० ३।४६०)। अत-स्तरसुफीवादो नवप्लेटोवादस्य ऋणी अवश्यमस्ति, किन्त्वत्रास्माभिरिदमपि स्मर्तव्यं यद् नवप्लेटोवादेऽपि भारतीयविचाराणां प्रभाव आसीत्।

वादी जलालुद्दीनमहोदयः सूमीबलखे समुत्पन्न आसीत्। अरबाणा विजय यावद् बलखस्थान-मद्वितीय बौद्धकेन्द्रमासीत्। इदमपि प्रसिद्धमस्ति यत् शेखसादिना बलखस्य गूर्जरस्य पञ्चाम्बु-प्रदेशस्य गजनी इत्यस्य च यात्रा कृता।

अथ चाष्टमे शतके अब्बासवशसमये बगदादनामक स्थानं सर्वेषा धर्माणा केन्द्रमासीत्। अब्बासस्य वीराणा ग्रामपतीना राजसभाया धार्मिकः शास्त्रार्थः प्रचलति स्म। खलीफामामू इत्यस्य अकबरवद् धार्मिको विवादोऽनीव प्रिय आसीत्। अरबदेशेतिहासे अब्बासस्य खलीफा-पदवाच्यानां राजसभाया तादृशयोर्वादविवादयोरनेकान्युदाहरणानि सन्ति, यत्र प्रत्येकं धर्माव-लम्बिना स्वपक्षो जनाना पुरः स्थाप्यते इस्लामधर्मश्चापाद्यते। खलीफामामूविषये तु (८१३–३३) कतिपयमुहम्मदीयाना संशयोऽय प्रादुर्भूत आसीद् यत् स मानीमतामुयायी जातः। अतः स व्यञ्जनया मुहम्मदीयाना सेनापतिस्थाने (अमीरुल मोमिनीन) अमीरुल्-काफिरीन (नास्ति-काना सेनापतिरिति)। तदा बगदादेऽनेके सस्कृतग्रन्था अनूदिताः। अत इलियटमहोदयेनाय निष्कर्षो निष्कासितो यद् हजरतमुहम्मदस्याविर्भावकालात् प्राक्तनेषु शतकेषु पश्चिम-एशियाया भारतीया विचारा अतीव विस्तृते क्षेत्रे प्रसृताः, तुर्कस्थाने अफगानस्थाने च ते प्रत्यक्षतो भारतात् समागताः परोक्षतश्च ते नवप्लेटोवादिनि दर्शने मानीमते चोपलभ्यन्ते स्म, इस्लामस्य प्रारम्भिक-विजयेषु तैरवश्यं पराजयः प्राप्तः, किन्तु पुनः सूफीयात्रिणा तुर्कस्थानस्य भारतस्य च यात्रया तेषा साहाय्यं प्राप्तम् (इलियट ३।४६१)। इत्थ प्राग्भाविनामाचार्याणामुपरि भारतस्य प्रभावोऽ-भूत्। अत्र टाइटस इत्यनेन सत्यमेव लिखित यत् सूफीवादे भारतस्य दान निम्नक्षेत्रेषु वर्तते—विचाराः, धार्मिकरूपकाणि, धार्मिकानुष्ठानानि—एतानि सर्वाणि [1]बौद्धवेदान्तविचारधाराभ्यः प्राप्तानि प्रतीयन्ते (इडियन इस्लाम, पृ० १४९)।

---

१. अत्रेदं स्मर्तव्यं यद् बौद्धानामरबसाहित्ये श्रमणशब्देन (समनियः) धृतरक्तवसनशब्देन (खिजारियः, या हसरिया तथा मुहम्मिरा) अनेकत्रोल्लेखो विद्यते (सुलेमान नदवी—अरब और भारत के सम्बन्ध, पृ० १७८–१८९)। अलदेसनीमहोदयेन लिखितं यत् खुरासानपर्सिस–इराक–मोरुल्ल–शामसीमापर्यन्तं सकलः प्रान्तो बौद्ध आसीत् (जखाऊ–अल्देरूनीज इण्डिया, पृ० १०)। इबनदीमहोदयेनाप्येतत् समर्थितम् (सुले० पृ० १७९, ८०, १८४)। बौद्धमतस्य खुरासानप्रभृतिषु व्यापकप्रचारेण बुद्धस्य च मूर्तीनां पूजया च फारसीभाषायां बुद्धशब्दस्यार्थ एव बुत इति मूर्तिर्वाऽभूत्। बुद्धाद् बुद इति, बुद इत्यस्माद् बुत इति अभूत् (सुले० पृ० १८९–९०)। प्रोच्यते यत् खलीफा अल्-मंसूर इत्यस्य तथा खलीफा हारुं अल्-रशीद इत्यस्य काले कतिपयानां बौद्धग्रन्थानामरबीभाषायामनुवादोऽभूत् (टी० जे० डी० बोअर—हिस्टरी आफ दी फिलासफी आफ इस्लाम, पृ० ९)। खलीफा मामूं इत्यस्य गुरौ तथा मोतजलीसम्प्रदायस्य प्रसिद्धे आचार्ये निजामेऽयं दोष आरोपितो यत् तेन कतिपये सिद्धान्ताः श्रमणेभ्य शिक्षिता (सुले० पृ० १८७)। एतैस्तथ्यैरिस्लामे बौद्धधर्मस्य कश्चन प्रभावः स्वाभाविक आसीत्। अथ च पहियावरमकी (१७०–१९० हि०)

अथ च इस्लामधर्मे भारतस्य तपस्विनां साधूनामपि कश्चन प्रभावोऽभूत्, तेन च सिद्धानाम् ( दरवेश ) अनेके सम्प्रदाया अभूवन्, तथा तपस्यायाः ( जुह्द ) प्रवृत्तिः प्रबलाऽभूत्। हिट्टी इत्यनेन लिखितम्—अगानी इत्यनेन बौद्धजीवनपद्धतेरेकमसन्दिग्ध चित्रमस्माक कृते सुरक्षितम्, तथा ( ९ शती ) अलजाहीजद्वारा वर्णितो जिन्दीकदरवेश इति भारतीयः साधुरासीत्, बौद्धभिक्षुर्वा तयोरनुकर्ता वा ( हिस्टरी आफ दी अरबस्, पृ० ४३५ )। टाइसस्य कथनानुसारेण अब्बासस्य विरोधकाले ( ७५०–११५० खी० ) परिव्राजकाना भारतीयाना साधूनामुपस्थितिः इस्लामधर्मानुयायिना कृतेऽतीव महत्त्वपूर्णाऽऽसीत् ( इंडियन इस्लाम–पृ० १४७ )।

एतैर्भारतीयैः साधुभिः कतिपयेऽरबदार्शनिका अपि प्रभाविता.। तेषु 'कविषु दार्शनिकः' 'दार्शनिकेषु कविः' प्रोच्यमानः अबुल-अला-अल्मार्री ( ९७३–१०५७ खी० ) महोदय उल्लेखनीयो विद्यते। अय भारतीयविचारैस्तथा प्रभावितोऽभूद् यत् स मास परित्यज्य शाकं विविक्तजीवनञ्च सेवितवान् ( हिस्ट्री पूर्वोक्त पुस्तक, पृ० ४५८–५९ )। मस्जिदनिर्माणे शिल्पिना वास्तुविषयकविचाराणाञ्च विषये मुहम्मदीयैः कतिचन विचारा भारताद् गृहीताः ( हिस्ट्री पूर्वोक्त पुस्तक, पृ० २६५, ४१७ )। आरम्भिकारबभौगोलिकैः ससारस्य केन्द्रविचारो भारताद् गृहीतः, एतत् ते अरीनशब्देन व्यपदिशन्ति स्म। इद भारते ज्यौतिषस्य प्रसिद्धस्य केन्द्रस्योजयिन्या विकृत रूपान्तरमस्ति ( हिस्ट्री पृ० ३८४ )। अरबीभाषाया संगीतशास्त्रस्यानेकपारिभाषिकशब्दाना मूलं भारतं प्रतीयते ( हिस्ट्री पृ० ४२८ )।

---

इत्यनेनैको जनो भारतस्य समाचारं ज्ञातुं प्रेषितः। इब्ननदीनामकेन, प्रसिद्धस्यारबदार्शनिकस्य योक-विन-इसहाक-किन्दी इत्यस्य हस्तेन लिखितस्यैकस्य लेखस्य वर्णनं कृतम्, यत्र सम्भवत उपर्युक्तव्यक्त्याधारेण भारतीयधर्माणां परिचयो विद्यते ( सुले० पृ० १६७–७३ )। एतेनेदं स्पष्टं भवति यद् अरबाणां हिन्दुधर्मस्य ज्ञानमासीत् तथा तत्र प्रभावोऽसम्भवो नासीत्।

—***—

# उपसंहारः

विश्वस्येतिहासे शक्तिशालीनि साम्राज्यानि स्थापयता प्रतापशालिना दिग्विजेतॄणा सम्राजा न्यूनता नास्ति । दारा-सिकन्दरजूलियससीजरसमुद्रगुप्त-शार्लमेगन-चङ्गेजखा तैमूर-बाबर-नेपोलियनमहोदयैर्विशाल साम्राज्य सस्थापितम् । ब्रिटिशजातेः प्रभुता भूमण्डलस्य चतुर्थांशे प्रायः २०० वर्षाणि यावत् प्रसृतासीत् । सांस्कृतिकसाम्राज्यदृष्ट्या यदि दृश्येत तदा इस्लामधर्मेण स्वाविर्भावस्य शतवर्षात्मके काल एव स्पेनदेशात् सिन्धप्रदेशपर्यन्ते भूभागे स्वसस्कृतेः प्रभावः स्थापितः । खीष्टानुयायिधर्मश्च सकल पाश्चात्त्यदेश तथा अमेरीकादेश स्वानुयायिनं विधातुं सफलता प्राप्तवान्, किन्तु पुनरपि विश्वेतिहासस्य परिशीलनकर्ता विद्यार्थी कथयितुमर्हति यद् विजयानन्तर भारतस्य सांस्कृतिकविजयादधिक शान्तिसम्पन्न स्थायि व्यापक लाभकरञ्च सिद्धं नाभूत् । अत्रास्य विजयस्य वैशिष्ट्यानि तस्य साफल्यस्य क्षीणतायाश्च कारणानि भविष्यञ्चाधिकृत्य केचन विचारा भविष्यन्ति ।

## भारतदेशस्य सांस्कृतिकदिग्विजयस्य वैशिष्ट्यानि

( क ) अहिंसा, रक्तपातः, हीनता च—भारतीयदिग्विजयस्य प्रथम वैशिष्ट्य हिंसाऽभावोऽस्ति । स राजनीतिकविजयो नासीत् , किन्तु धर्मविजयः । ससारस्यान्यानि सर्वाणि राजनीतिकानि धार्मिकाणि आर्थिकानि च साम्राज्यानि खड्गबलेन स्थापितानि, भारतीयो धर्मविजयः प्रेमाहिंसाबलेन सम्पादितोऽभूत् । अन्येषा साम्राज्याना सस्कृतीनाञ्च पोषण रुधिरेणाऽभूत् , किन्तु भारतेनान्येषा रक्तपातस्थाने तेभ्यः स्वरक्त प्रादायि । सर्वेषा विजेतॄणा हस्ता रुधिरेण रक्ताः सन्ति । ते यत्रैव गतास्तत्रैव सर्वनाशोऽभूत् , जना हताः, बालका अनाथा अभूवन् । स्वय विजेतॄणा हानिरभूत् । पराजिता मृतप्राया अभूवन् , विजेतारोऽपि तथैव । राजनीतिकसाम्राज्यानि दूरे तिष्ठन्तु, धार्मिकसाम्राज्यैर्भयङ्करे उत्पीडनेऽत्याचारे च काचन न्यूनता न कृता । शान्तिदेवस्य ईसामसीहस्यानुयायिनाम् इन्क्विजिशननामकसंस्थानेन मध्ययुगे सहस्राणि निर्दोषा जना हताः । धर्मनाम्ना एतादृशा भयङ्करा लोमहर्षकाश्चात्याचारा अतीव न्यूना जाताः । रोमनकैथोलिक-खीष्टानुयायिधर्मेण स्वासहिष्णुतया दक्षिण-अमेरीकाया मय-अजटकसभ्यता नाशिताः । कुरान-शरीफग्रन्थे विरोधिभिः साक युद्ध कर्तव्यमिति स्पष्टमादिष्ट विद्यते । इस्लामधर्मेण निम्नदेशस्य ईरानदेशस्य च प्राचीनसस्कृतयो नाशिताः, यूनानवासिना लघु-एशियावास्तव्या इस्लाम-धर्मानुयायिनो विहिताः, मध्य-एशियाप्रदेशाद् बौद्धो भारतीयश्च प्रभावो निश्शेषितः । प्रत्युत, भारतीया संस्कृतिर्यत्रापि गता तत्र विध्वसस्थाने ज्ञानस्य सभ्यतायाश्च स्निग्धमालोक प्रसारितवती । सा सहनशीला समन्वयवादिनी चासीत् । सिल्वैलेवीमहोदयस्य शब्देषु—भारतेन तादानी-माध्यात्मिक सांस्कृतिकञ्च साम्राज्य स्थापित यदा तु सकलः ससारो भयङ्करे कृत्ये निमग्न आसीत् ।

यद्यप्यद्यत्वे साम्राज्यानि ततोऽधिकानि विस्तृतानि सन्ति, परमौन्नत्यदृष्ट्या तानि इतोऽप्यतीव समुन्नतान्यासन्, यतस्तानि वर्तमानसाम्राज्यवद् भुशुण्डिभिः, शतघ्नीभिः, वायुयानैः, विषाक्तवातैश्च न स्थापितानि सन्ति, किन्तु सत्यैः श्रद्धाभिश्च स्थापितान्यासन्।

**( ख ) चिरस्थायिता अखण्डता च**—सांस्कृतिकदिग्विजयस्य द्वितीयं वैशिष्ट्यमस्य चिरस्थायिताऽखण्डता च वर्तते। चीनव्यतिरेकेण जगतः काऽपि जातिः संस्कृत्या भारतं नातिक्रमितुं शक्नोति। सुमेर-बाबुल-मिश्र-यूनान-रोमदेशाना गौरवपूर्णाः प्राचीनाः संस्कृतयोऽधुना ध्वंसावस्थाया विद्यन्ते। तासां नामग्रहीतारोऽपि न सन्ति। तत्प्राचीनभाषास्थापयितारो दैनिकव्यवहारे प्राचीनानां धार्मिकविधीनामनुष्ठातारः प्राचीनपरम्परारक्षका वंशजा निश्शेष गताः, किन्तु भारतीयसंस्कृतेः परम्परा कियतीः सहस्राब्दीरतीत्यापि स्वदेशे विदेशेऽपि अक्षुण्णा विद्यते, संस्कृतमद्यत्वेऽपि पण्डितमण्डल्यां २$\frac{1}{2}$—३ सहस्रवर्षपूर्ववत् पठ्यते, निगद्यते, लिख्यते च। वेदास्तद्वदेव कण्ठस्थाः क्रियन्ते, यथा सिकन्दरनृपतेराक्रमणात् पूर्वं क्रियन्ते स्म। ३००० वर्षपूर्वं विष्णुर्यथोपास्यते स्म तथैवाद्यापि। सामाजिकव्यवहारे विवाह एव पर्याप्तमुदाहरणमस्ति। आश्वालयनप्रभृतिगृह्यसूत्रेषु वर्णितो वैवाहिको विधिर्हिन्दूसमाजे अद्य यावत् तेनैव रूपेणानुष्ठीयते। संस्कृतेस्तावद्दीर्घकालिकत्वं विस्मयावह भवति। श्रीइकबालेनैतदेव लक्ष्य कृत्वा लिखितमस्ति—

"यूनान-मिश्र-रोमाः सर्वे गतास्तु लोकात्। किञ्चिद् यदस्ति तत्त्वं त्वस्माक नैव नश्यति"।
"यूनानमिस्रो रोमा सब मिट गये जहाँ से। कुछ बात है कि हस्ती मिटती नहीं हमारी"।

भारतस्य च सांस्कृतिकदीर्घजीवनस्य रहस्यं सम्भवतस्तस्य हिंसापूर्णे प्रसारे सहिष्णुत्वे च वर्तते। जीवनशास्त्रस्य पण्डिताः प्रतिपादयन्ति यज्जीवनसंघर्षे अहिंसकप्राणिनो हिंस्रपशूनामपेक्षया दीर्घजीविनो भवन्ति। सिंहस्य सर्वं कुलं वेगेन नश्यति, किन्तु गोरन्तस्य क्वापि सम्भावना नास्ति।

**( ग ) व्यापकता**—भारतीयदिग्विजयस्य तृतीयं वैशिष्ट्यं तस्य सार्वभौमता वर्तते। जगतः संस्कृत्यन्तरेण तावान् भूभागो न प्रभावितः। सिल्वैलेवीमहोदयस्य शब्देषु—ईरानदेशात् चीनदेशादिसमुद्रं यावत् साइबेरियाप्रदेशस्य तुषारावृतप्रदेशाद् जावा-बोर्नियोद्वीपपर्यन्तं प्रशान्तमहासागरस्य द्वीपतः सोकोत्तरापर्यन्तञ्च भारतेन स्वधार्मिकविश्वासाः प्रतिभाः कथासाहित्यसभ्यताश्च प्रसारिताः। तेन मनुष्यजातेः चतुर्थांशेऽनेकशक्तीना सुदीर्घकालं यावत् स्वकीयः शाश्वतः प्रभावः स्थापितः। सरजानमार्शलमहोदयेन लिखितमस्ति यद् भारते भारतीयकलाया ज्ञानं केवलमर्द्धज्ञानमस्ति, पूर्णरूपेण ता ज्ञातु बौद्धधर्मस्य पदपङ्क्तीराश्रित्यास्माभिर्मध्य-एशियाया चीने जापाने च साऽनुसर्तव्या, तिब्बते वर्मायां स्यामे प्रसरणकाले नव विग्रहं श्रयन्ती नवीनं सुन्दरं रूपञ्च विकासयन्ती द्रष्टव्या। जावाया कम्बोडियायाञ्च भारतीयकलायाः कृतीनामनुपमा भव्यता ससाध्वसमनिमेषञ्चावलोकनीया ( ग्रो० प्रोग्रे० )। प्रसिद्धस्य फ्रांसदेशीयस्य विदुषो रेने ग्रौस्सेमहोदयस्याग्रिमेषु वाक्येषु कामं सत्यत्वमस्ति। पूर्व-ईरानस्य उन्नते पठारसञ्ज्ञके प्रदेशे मध्य एशियायाः शाद्वलेषु तिब्बतस्य मङ्गोलियामञ्चूरियायाश्च गहनेषु कान्तारेषु चीन-जापानयोः सभ्येषु देशेषु

आदियमोन-ख्मेरहिन्दचीनानामन्यजातीना देशेषु हिन्देशिया मलायाञ्च भारतेन स्वकीयायाः समुन्नतायाः सस्कृतेः शाश्वतः प्रभावो न केवले धर्मे, किन्तु कलाया साहित्ये, किं बहुना, अध्यात्म-विषयके सर्वस्मिन्नुन्नते वस्तुनि स्थापितः ।[1] अत एवाधुना भारत पाश्चात्त्या अपि विद्वासो विश्वगुरु मन्यन्ते ।

( घ ) भारतीयसास्कृतिकसाम्राज्यस्य चतुर्थ वैशिष्ट्यमिदमस्ति यत् सा कस्यचनैकस्य जनस्य कृतिर्नासीत् , किन्तु एकस्य सकलस्य राष्ट्रस्य सामूहिकाना साधनाना प्रयत्नानाञ्च फलमासीत् । प्राचीनकाले दारा-सिकन्दर-चङ्गेजखाप्रभृतिभिर्विशालानि साम्राज्यानि स्थापितानि, किन्तु तानि तेषा मरणसमकालमेव समाप्यन्त, अथवा तेषा कतिपययोग्योत्तराधिकारिकाल यावत् स्थिराण्यभूवन् । तत्र व्यक्तितत्त्वस्य प्राधान्यमासीत् । विशिष्टा जना योजना निर्माय तासा निर्माण कुर्वन्ति स्म । योग्यव्यक्तीनामन्तेन साकं साम्राज्य छिन्न भिन्नं भवति, किन्तु भारतस्य सास्कृतिक साम्राज्ये न तु काचन पूर्वनिर्धारिता योजनाऽऽसीत् , न च तद्व्यक्तिविशेषमवलम्बते स्म । तत् सहस्राणि वर्षाणि यावत् व्यापारस्य धर्मप्रचारस्य सहस्रस्य भावनया सुसम्पृक्ताना जनाना विदेश-गमनस्य, परिणाम आसीत् । भारतात् सिकन्दरप्रभृतिवत् कश्चन राजा देशान्तरं विजेतु नागमत् , किन्तु इतो गन्तृभिर्विदेशेषु मातृभूमेः साहाय्यमन्तरा, स्वानि राज्यानि स्थापितानि तत्र च भारतीयाना धर्मकलासस्कृतीनाञ्च प्रचारः कृतः ।

**अन्यसंस्कृतिभिस्तुलना**—प्रसङ्गेऽस्मिन् भारतीयसंस्कृतेर्देशान्तराणा प्राचीनसस्कृतिभि-स्तुलाया आवश्यकता प्रतीयते । प्राचीनजगति सुमेर-बाबुल-मिश्र-यूनान-चीनाना सस्कृतयः प्रधाना आसन् । तत्र प्रथमाना चतसृणान्तु नामान्यपि नावशिष्यन्ते । मिश्रवासिभिस्तु प्राचीनकालेऽश्मना विशालानि पिरामिडाख्यानि कारितानि, तानि तु कालस्य क्रूरमाघात सहमानानि अद्यत्वेऽपि स्वानि शिरासि आकाशे उन्नमन्ति स्थितानि सन्ति, किन्तु तेषा निर्मातॄणा सस्कृतिर्वैदेशिकाना-माक्रमणस्याघात सोढुं न पारितवती । पूर्वं चतुर्थे तृतीयस्मिंश्च खीष्टीयाब्दपूर्वे शतकयोः मिश्रदेशेन यूनानसभ्यता स्वीकृता, पुनश्च सप्तमाष्टमशतकयोः इस्लामधर्मः स्वीकृतः, किन्तु भारतीया संस्कृतिस्तु कालस्य करोठान् प्रहारान् सहमाना अद्यापि जीवति । येन इस्लामधर्मेण मिश्रदेशे लघु-एशियायाम् उत्तर-अफ्रीकायाञ्च यूनानसंस्कृतेर्नाशोऽकारि, ईरानदेशीयः पारसीधर्म उन्मूलितः, स भारतेऽसफलोऽभूत् । पाश्चात्त्याना यूनानसस्कृतावभिमानोऽस्ति । सिकन्दरेण तामेशिया-महाद्वीपे प्रसारयितु प्रयतितम् , किन्तु विस्तारस्य प्रभावस्य च चिरस्थायितादृष्ट्या सा भारतीय-सस्कृतेः समतामाधातुं नार्हति । चीनदेशो यद्यपि चिरस्थायितादृष्ट्या भारतस्य साम्यं कर्तुमर्हति, किन्तु आश्चर्येणेदं दरीदृश्यते यत् स सभ्यः सुसस्कृतोऽपि सन् न केवल स्वय भारतस्य शिष्योऽभूत् किन्तु तस्य प्रतिवेशिषु अनामराज्ये बर्मादेशे तिब्बतदेशे चापि भारतस्य गम्भीरः प्रभावोऽभूत् । ते देशाः वंशदृष्ट्या चीनदेशेन संबद्धा आसन् , किन्तु सास्कृतिकदृष्ट्या भारतस्यानुयायिनोऽजायन्त ।

---

१. रेने ग्रोस्से—दी सिविलिजेशन्स आफ दी ईस्ट, ख २, पृ० ४७६ ।

पाश्चात्यजातीनामाधुनिकसाम्राज्यं प्राचीनस्य भारतस्य सांस्कृतिकसाम्राज्यात् कतिपयेष्वशेषु भिन्न विद्यते। विस्तारे किमपि साम्राज्य आंग्लसाम्राज्यस्य तुलनां कर्तुं न पारयति। कदाचित् तस्य कृते उक्तिरियं नितान्तं सत्याऽऽसीत् यत् तत्र कदापि सूर्यास्तो न भवति, किन्तु वर्तमानसमयस्य नवीनानामाविष्काराणा यातायातस्य साधनाना विलक्षणा समुन्नतिविचार्यते, तदा प्राचीनससारदृष्ट्या साइबेरियातः सिंहलं यावत् सोकोतरातः सेलीबीजपर्यन्तञ्च प्रसृत भारतस्य सास्कृतिकं साम्राज्य विश्वव्यापकमेव प्रतीयते। प्राचीनाना साम्राज्याना निर्माणस्य मूले दिग्विजेतॄणा महम्भावो यशोलोलुपता च भवति स्म। वर्तमानाना पाश्चात्यसाम्राज्यानां प्रधानानि कारणानि उपनिवेशाना जनतायाः शोषणं विद्यते। किन्तु भारतेन वैयक्तिकस्वार्थस्य कृते उपनिवेशा न स्थापिताः। वर्तमानयुगे खीष्टानुयायिधर्मप्रचारकसस्था व्यापारिणश्च स्वार्थपूर्णैरुद्देश्यै अफ्रीकाया महाद्वीपे एशियामहाद्वीपे च गताः शोषणप्रधानस्य साम्राज्यस्य च निर्माणे सहायका अभूवन्, किन्तु भारतस्य धर्मदूता यत्रापि गता बहुजनहिताय बहुजनसुखाय लोकानुग्रहाय चैव गताः। ये स्वार्थहीनाः प्रचारका मङ्गलमय्या मातृभूमेर्धर्मप्रचाराय निर्गतास्तेषा करेषु न तु रक्तपिपासवः खड्गा आसन्, न तु ते सभ्यतायाः प्रदर्शका ध्वजा एवासन्, येषामावरणे भयावहाः शतघ्नयोऽग्निं वमन्ति। तेषामेकस्मिन् भिक्षापात्रमासीत्, द्वितीयस्मिन् भगवतः कल्याणमयोपदेशानां पुस्तकम्। शरीरे पीतवस्त्रमासीत्, यत् सेवाकल्याणयोश्चिह्नमासीत्। पाश्चात्यसाम्राज्यैः सर्वदैवेद प्रयतित यदुपनिवेशवासिनो दीनावस्थाया तिष्ठन्तु। आङ्ग्लसाम्राज्येन भारतस्येन्धनदारकत्वस्य जलवाहकत्वस्य च कृते प्रयतितम्, किन्तु भारतीयैरावासकैरादिवासिनां बर्बरत्व निष्कासितं सभ्यत्वञ्च स्थापितम्। तेषा सभ्यताया अवशेषा अङ्कोरवत्-बरबुडुरयोर्भव्यस्मारकरूपेणावशिष्टाः सन्ति। हिन्देशियाराज्ये हालैण्डदेशवासिना साम्राज्य समाप्तिमगमत्। अधुना इक्षु-चाप-मर्दकानां विशालारामरूपेण प्राचीनावशेषाणा पुनरुद्धाररूपेण च तस्य स्मृतिरवशिष्टा विद्यते, किन्तु तन्न नूतनम् अङ्कोरवत् इति बरबुडुर इति च नास्ति। भाषाणा साहित्ये कलायाञ्च काचनोन्नतिर्नास्ति।

भारतीयपाश्चात्यसाम्राज्यवादेऽयमेव महान् भेदो वर्तते। प्रथमेन परार्थे संस्कृतिरुन्नायिता, द्वितीयस्य मुख्य लक्ष्य स्वर्णस्य कृते भौतिकसाधनाना विकास आसीत्।

**सफलतायाः कारणानि**—भारतस्य सास्कृतिक साम्राज्यं विस्तारदृष्ट्या चिरस्थायि कल्याणकारि प्रभावदृष्ट्या च विश्वेतिहासेऽनुपम विद्यते। तेनाऽस्मिन् क्षेत्रेऽद्भुतं साफल्यमधिगतम्। तस्य निम्नानि कारणान्यासन्। एतैर्भारतीये धर्मसस्कृती तादृशे विशाले भूखण्डे प्रासरताम्।

(१) **समन्वयवादः**—प्रथमं कारणम्-भारतीयसस्कृतौ समन्वयवाद आसीत्, हिन्दुधर्मः खीष्टानुयायिधर्मवद् इस्लामधर्मवच्चासहिष्णुर्नास्ति। तस्मिन् विविधोपासनाना स्वीकारस्य नवाना पद्धतीना पाचनस्य स्वस्य नवपरिस्थितियोग्यत्वस्य चासाधारणी क्षमताऽऽसीत्। जल विविधेषु पात्रेषु तत्तदाकारानुकूल रूपमादधाति। इयमेव दशा भारतीयधर्मस्य कलायाश्चासीत्। हिन्दुधर्मानुसारेणोपासनायाः सर्वप्रकाराः श्रेष्ठाः सन्ति, ते एकमेव—तत्त्वमासादयितुं विविधा

मार्गाः सन्ति। वैदिकयुगतो वर्तमानयुगपर्यन्त सकलं भारतीयसाहित्य सहिष्णुतासमन्वयवाद-विचारेण सुसंपृक्तं विद्यते। ऋग्वेदे प्रतिपादितम्—'एकं सद्विप्रा बहुधा वदन्ति' (ऋ० १।१६४।४६)। सम्राजाऽशोकेन स्वशिलालेखेषु सहिष्णुता समीचीना प्रतिपादयतोक्तम्—'समवाय एव साधुः।' गीतायामय विचारः परा काष्ठा प्राप्तः। भगवतः कृष्णस्यानेन कथनेनैव सन्तोषो नास्ति यत्—'ये यथा मा प्रपद्यन्ते तास्तथैव भजाम्यहम्।' (४।११), किन्तु तेन तदपि प्रतिपादितं विद्यते यत्—

येऽप्यन्ये देवताभक्ता यजन्ते श्रद्धयाऽन्विताः।
तेऽपि मामेव कौन्तेय यजन्ते विधिपूर्वकम्॥

पुष्पदन्तेन शिवामहिम्नःस्तोत्रे एतदेव तत्त्व शोभनोपमया प्रतिपादित विद्यते।

रुचीना वैचित्र्यादृजुकुटिलनानापथजुषाम्।
नृणामेको गम्यस्त्वमसि पयसामर्णव इव॥

वस्तुतो भगवान् एकोऽचिन्त्योऽव्यक्तः सर्वज्ञः सर्वशक्तिमानस्ति, विविधा उपासनास्त प्राप्तु मार्गाः सन्ति, यदा लक्ष्यमेक विद्यते तदा मार्गाणा कृते कथ विवादः कर्तव्यः। हिन्दुधर्मो बौद्धधर्मश्च यत्रापि गतौ स्वसिद्धान्तानुसारेण ताभ्या तत्रत्याना प्राचीनाना देवाना खण्डन न कृतम्, किन्तु ते स्वीकृता आत्मीयाश्च विहिताः। इस्लामधर्मो यत्र गतस्तेन मूर्तयः खण्डिताः, किन्तु भारतीयैर्धर्मैः स्थानीयदेवाना यथापूर्व पूजा प्रचालिता, न तु ते आत्मसात्कृताः। तिब्बतदेशे आचार्यपद्मसम्भवस्य गमनात् पूर्वमनेके भूतप्रेताश्च पूज्यन्ते स्म। तेषु यैर्भूतैस्तेषा वश्यता स्वीकृता पद्सम्भवेन तेषा पूजायाः कृते आश्वासनं प्रदत्तं तेषाञ्चोपासना पूर्ववत् प्रचलति स्म। जापाने बौद्धधर्मेण शिन्तोधर्मस्य प्राचीनाना देवाना बुद्धस्य तदधीनदेवानाञ्च रूपाणि कृत्वा तेषा पूजा प्रारब्धा। तेन तत्र बौद्धधर्मस्यातीव प्रचारोऽजायत। वर्मादेशे अनिरुद्धेन स्वकीयबौद्धमन्दिरे बौद्धमूर्तिभिः साकं वर्मादेशीयजनानामुपास्यदेवानामपि प्रतिमाः स्थापिताः। तस्य कथनमासीद् यद् बर्मादेशीया यदि नवान् देवान् द्रष्टु नागच्छन्ति तदा प्राचीनान् देवान् द्रष्टुन्तु अवश्यमागमिष्यन्ति। भारते यथा हिन्दुधर्मेण बुद्धमवतार मत्वा बौद्धधर्मस्ति-रोहितस्तथैव भारताद् बहिः पौराणिकेन बौद्धेन च धर्मेण प्राचीनस्थानीयविश्वासान् स्वेन साक सगम्य तेषामन्तो विहितः।

अनेन समन्वयेन हेतुना भारतीयसस्कृतौ निस्सीम मृदुत्वमाश्चर्यजनकञ्च वैविध्यमासीत्। तेन सा सर्वान् जनान् प्रसादयितुमर्हति स्म। भारतीया सस्कृतिर्विचित्रा मन्त्रस्य मञ्जूषासीत्। तत्रैकतो भूतप्रेतानामुपासकाना मन्त्रा आसन्, अन्यतश्च दार्शनिकाना कृते गूढा विचारा अपि। तिब्बतदेशे भारतीयधर्मस्य सफलताया एक महत् कारण मन्त्रा आसन्। चीनदेशे निम्ना वर्गा मन्त्रेण भारतीयधर्माभिमुखा अभूवन्। विद्वत्समुदाये च महायानस्य गम्भीरदर्शनस्य प्रभावोऽभूत्। भारतीया सस्कृतिः चिन्तामणिरथवा कल्पद्रुमोऽजायत। ततः सर्वेषा भक्तानामभीष्ट-फलरूपा प्राप्तिर्भवति स्म। तादृशस्य चिन्तामणे. सर्वत्र सफलता स्वाभाविक्यासीत्।

**भारतीयधर्मस्य सभ्यतायाः प्रतीकत्वम्**—द्वितीयं कारणमिदमासीद् यत् प्राचीन-काले भारतीयो धर्मः सर्वत्र सभ्यतायाः सस्कृतेश्च प्रतीकायते स्म। धर्मेण साकं कलासाहित्य-

प्रभृतीन्यन्यानि सभ्यविधायकानि वस्तूनि समस्तान्यामन्। धर्मस्य स्वीकृतिर्नाम बर्बरत्वं विहाय सभ्यत्वस्वीकृतिरासीत्। अफ्रीकामहाद्वीपेत्वारण्यका जनाः इस्लामधर्मम्, अथवा खीष्टानुयायि-धर्मं स्वीकुर्वन्ति, किन्तु ते मन्यन्ते यद् अरबत्वस्वीकरणं पाश्चात्यत्वस्वीकरणञ्च किमप्युत्तम वस्तु विद्यते। इस्लाम-खीष्टानुयायिधर्मौ सभ्यतायाः प्रसारकौ धर्मौ स्तः, तयोः संसर्गेण मनुष्य उन्नतो भवति। खीष्टीयाब्देषु प्रथमेषु शतकेषु पौराणिको बौद्धश्च धर्मौ मध्य-दक्षिण-पूर्व-उत्तर-एशियाप्रदेशेषु तथाऽऽरण्यकजातिषु सभ्यतालोकप्रकाशकौ मतौ। अत एव च तयोः सर्वत्र स्वागतमभूत्।

जापानदेशे प्राचीनो राष्ट्रियो धर्मो बौद्धधर्मस्य अत्यन्त विरोध्यासीत्, किन्तु तत्र बौद्धधर्मस्य समर्थकानां सर्वतो महती युक्तिरियमासीद् यज्जगतः सर्वे विशिष्टास्तं स्वीकृतवन्तः। जापानदेशोऽस्यानुयायी सन् सभ्यराष्ट्राणां श्रेणीषु समागमिष्यति, अन्यथा प्रगतिशून्यो देशो मस्यते। तिब्बतदेशेऽपि यदा सभ्यताया आलोकस्यावश्यकताऽनुभूता तदा भोटयुवका भारते प्रेषिताः, आचार्यशान्तरक्षितः, पद्मसम्भवः, अतीशश्च तिब्बतदेशे आमान्त्रिताः। यदा सिंहलदेशस्य राज्ञा देवानां प्रियतिस्समहोदयेन सांस्कृतिकपिपासा शमयितुं किमपि स्रोतोऽन्वेष्टुमभिलषितं तदा कुमारो महेन्द्रः कुमारी संघमित्रा च भगवतो बुद्धस्य सन्देशं श्रावयितुं श्रीलङ्कां गतौ। मध्य-दक्षिण-पूर्व-एशियाप्रदेशेषु शक युइची मोन-रूमेर प्रभृतय आरण्यकजातयो भारतीयं धर्मं स्वीकृत्य सभ्ये संसारे प्राविशन्।

**राज्याश्रयः**—तृतीयं कारणं राज्याश्रय आसीत्। सभ्यतायाः प्रतीकत्वेन स्त्रीणां प्रभावेण[1] वा प्रायः सर्वत्र राजानो भारतीयधर्ममङ्गीकुर्वन्तस्तस्य विस्तारार्थं सम्यग् यत्नं विदधतश्च दृश्यन्ते। श्रीलङ्काया राज्ञा तिस्सेन महेन्द्रस्य भक्तिस्वीकारानन्तरं बौद्धधर्मस्य संरक्षणे कोऽपि प्रयत्नो न परित्यक्तः। अनेकैश्च परवर्तिभिर्नृपैरत्र महाकायस्तूपानां चैत्यानाञ्च निर्माणेन सोऽनु-सृतः। चीनदेशे जापानदेशे बर्मादेशे च बौद्धधर्मस्य प्रसारस्य महत् कारणं राज्याश्रय आसीत्। स्यामदेशो जगतोऽद्यावधि एक एव तादृशो देशो विद्यते यत्र बौद्धमतं राज्यधर्मोऽस्ति। तिब्बतदेशे-स्रोंग-चन-गम्पो इत्यस्य समर्थनान्तरमेव मतस्यास्योत्कर्षोऽजायत। कम्बुज-जावा-सुमात्रादेशानां राजानो नवानि नवानि मन्दिराणि स्तूपान् मूर्तीश्च निर्मापयन्ति स्म। अङ्कोरवत्-बोरोबुदुरसदृश्यो विश्वविख्याताः कृतयो राज्ञामेव सन्ति।

**भारतीया वर्णमाला**—सांस्कृतिकसफलतायाश्चतुर्थं कारणं भारतीया वर्णमालाऽऽसीत्। ब्राह्मीलिपिः संसारस्य सर्वतः पूर्णो विज्ञानसम्मतश्चाविष्कारः (टेलर अल्फाबेट जि० १, पृ० ५०) प्रतिपाद्यते। संस्कृतेर्वाङ्मयस्य च प्रसारे वर्णमालाया महत्त्वं स्वतः सिद्धमस्ति।

---

१. तिब्बतजापानदेशौ चास्य मनोरमे उदाहरणे स्तः। पूर्वमिदं प्रतिपादितमस्माभिर्यत् तिब्बतराष्ट्रस्य जन्मदात्रा स्रोंग-चन-गम्पो इत्यनेन चीनस्य नेपालस्य च या कन्यका उद्वाहिताः, ता बौद्धधर्मस्यानुयायिन्य आसन्। तासाञ्च प्रभावेण राज्ञा बौद्धधर्मः प्रचारितः। जापाने स्रोगपरिवारेण सर्वप्रथमं बौद्धधर्मोऽङ्गीकृतः। अस्य परिवारस्य नार्यः प्रायो राज्ञ्यो भवन्ति स्म, अतो जापानसम्राडपि तासां प्रभावेण बौद्धोऽभूत्।

मिश्रस्य, बाबुलस्य सुमेरस्य चीनस्य च सस्कृत्यपेक्षया भारतस्येयमेका प्रधाना विशिष्टताऽऽसीत्। ताभिः सस्कृतिभिर्जटिलाश्चित्रलिपय आविष्कृता या ज्ञानस्य सस्कृतेश्च क्लिष्टानि साधनान्यासन्। तत्र देवनागरीवद् वरणा अक्षराणि च न भवन्ति, किन्तु प्रत्येकं शब्दस्य कृते पृथक् सकेता भवन्ति स्म। नागर्यास्त्रिपष्टिं वर्णानधीत्य तत्र कापि भाषा साहित्यञ्च लिखितु शक्यते, किन्तु उपर्युक्तासु लिपिषु अनेकसहस्रेषु संकेतेषु अधिकारप्राप्त्यनन्तर किमपि लिखितु पठितु च क्षमता प्राप्यते। यासा संस्कृतीना तादृश जटिलत्व स्यात् तासा प्रसारोऽतीव कठिनो भवति। मिश्र-बाबुल-सुमेराणा सस्कृतीना व्यापकत्वाभावस्य चिरस्थायित्वाभावस्य चेदमेक प्रधान कारण विद्यते। पूर्वमिद प्रत्यपाद्यत यत् चीनदेशः स्वप्रतिवेशिषु देशेषु चम्पा-कम्बुज-बर्मा-श्याम-मलायासु सस्कृतिप्रसारणे भारतवत् सफलो नाभूत्। स स्वजटिललिपिशृङ्खलाबद्ध एव देशान्तराणि सभ्यत्व नेतु भारतमतिक्रमितु न समर्थोऽजायत। भारतीयाना पार्श्वे सभ्यताया आलोकप्रसारणस्य प्रबलतम साधन परिष्कृता वर्णमाला लिपिश्चासीत्। ता प्रवासिनो भारतवासिन-सर्वत्र स्वेन साक नयन्ति स्म, तया चासभ्यजातिषु ज्योतिः प्रकटयन्ति स्म। ततश्चासभ्या जातयः पठन्ति स्म लिखन्ति स्म च। तासा वाणीषु वाङ्मयस्य विकासो भवति शनैश्शनैश्च ताः सभ्याः परिष्कृताश्च भाषा भवन्ति, तासा प्रयोक्तारः सभ्या मनुष्या भवन्ति (भारतीय इतिहास की रूपरेखा २।८०५)।

(५) **बौद्धधर्मः**—पञ्चम कारण बौद्धधर्म आसीत्। बौद्धधर्मो विश्वस्य प्रथमः सङ्घटितः प्रचारकश्च धर्मो विद्यते। खीष्टानुयायिधर्मस्ततः षट्शतवर्षाण्यतीत्य जातः, इस्लामधर्मश्च त्रयोदशवर्षशतवर्षाणि। भगवान् बुद्धः स्वमेवादर्शभूतः प्रबलश्च धर्मप्रचारक आसीत्। बोधिज्ञानप्राप्त्यनन्तर कतिपयकाल यावत् तस्यैय विचिकित्सावश्यमभूद् यदहमस्य प्रचार कुर्या न वा (बुद्धचर्या पृ. १९–२०), किन्तु शीघ्रमेव प्राणिमात्रस्योद्धारायोपकाराय च तेन धर्मप्रचारो निश्चितः पञ्चाशद् वर्षाणि यावद् मध्यदेशे धर्म प्रचारयता भ्रान्तम्। स्वशिष्येभ्योऽपि तेन स एवोपदेशो दत्तः, 'बहुजनहिताय बहुजनसुखाय चरत। सहैव द्वाभ्या न गन्तव्यम्', बौद्धधर्मस्य स्वाभाविकैराकर्षणैः सम्राजा सरक्षणैः प्रचारकाणा तत्परत्वेन च बौद्ध-धर्मेण साक भारतीया सस्कृतिरेशियाया एकस्मिन् महति भागे विस्तारिता। भगवतो बुद्धस्य शिक्षाया इद वैशिष्ट्यमासीद् यत् सा सर्वेषा कृते सुगमाऽभूत्। तस्य मतेन तूग्रायास्तपस्याया आवश्यकताऽऽसीत्, न च प्रकाण्डस्य पाण्डित्यस्य। तेन नैतिक आचार आत्मसयमश्च समर्थितः। सर्वेऽपि जना बुद्धत्व प्राप्तुं शक्नुवन्ति स्म, तत्र वर्णभेदस्यावसरो नासीत्। यत् तेनापाराणि कष्टानि सोढ्वापि प्राणिमात्रस्य कल्याणे तत्परा आदर्शाः प्रचारका भिक्षव उपलब्धा अभूवन्। विश्वस्येतिहासे कस्यापि महापुरुषस्य अनुयायिभिः स्वगुरोरादेशपालने तावानुत्साहः, तादृशी तत्परता तथा त्यागश्च न प्रदर्शिताः, यथा गौतमबुद्धस्य शिष्यैः।

बौद्धभिक्षवः सासारिकसुखानि तिरस्कृत्याजीवनं स्वसम्बन्धिना सुखान्यनवेक्ष्य कठिनं सेवाव्रत स्वीकृत्य, क्रोशान् यावत् समुन्नतानि तुहिनावृतानि च हिमालयपामीरशिखराणि चीवरभिक्षापात्रसाहाय्येनातिक्रम्य **प्राणिनां कल्याणस्य** सत्यभावनया प्रेरिता भूत्वा क्रोशपर्यन्त

निबिडारण्येषु निर्जनप्रदेशेषु च परिभ्राम्यन्तः, शिविररहितान् मार्गान् समुल्लङ्घ्य मध्य-एशियां चीनं जापान च गच्छन्ति स्म, स्वप्राणान् हस्ते निधाय सामुद्रिकोपद्रवान् अविगणय्य लघीयसीभिर्नौकाभिर्विशालस्य महासागरस्य तरलान् पर्वतोपमान् तरङ्गान् समतिक्रम्य चम्पा-कम्बुज-जावा-सुमात्रा-बोर्नियो-बालि-प्रभृतिप्रदेशानां यात्रां कृतवन्तः। पवित्रे सेवाव्रताध्वरे दीक्षितैरेतैर्धर्मदूतैर्जगतः किं दुःख न सोढम्, काऽत्यन्तभीषणविपत्तिः कण्ठेन नालिङ्गिता, सर्वस्यापि परिवारस्य प्रियात्प्रियस्य पदार्थस्य महतः स्वार्थस्य च परित्यागः कृतः। भारतस्य सांस्कृतिकप्रभावस्य सफलताया एकं महत् श्रेयस्तेषां तपस्विनां बौद्धप्रचारकाणा विद्यते। तेषां प्रयत्नैरुपर्युक्तकारणैश्च साइबेरियाप्रदेशात् सिंहलम्, सेलीबीजतः सोकोतरां यावद् भारतस्य सांस्कृतिकसाम्राज्यस्य विस्तारोऽभूत्। षष्ठशतकखीष्टीयाब्दानन्तरमस्य साम्राज्यस्य ह्रासः प्रारभ्यत।

**ह्रासस्य कारणानि**—अस्य विशालस्य साम्राज्यस्य क्षीणतायाः कानि कारणान्यासन्? अस्य सत्यमुत्तरं गवेषितुमस्माभिर्भारतवर्षस्य मध्यकालिकेतिहासे दृष्टिप्रक्षेपः कर्तव्यः। बृहत्तरं भारतमस्य देशस्यैव बृंहितं रूपमासीत्, तत्रत्यायाः सांस्कृतिकधाराया मूलं स्रोतो भारतमेवासीत्। मध्ये युगे स्रोत इदं शुष्कत्वं प्राप्तुं प्रारभत, भारतवर्षेऽग्रगामिनीना प्रवृत्तीनामभावोऽभूत्, सर्वेषु क्षेत्रेषु समुन्नतिरवरुद्धा, राजनीतिकदृष्ट्या तद् वैदेशिकाक्रमणकारिणामधीनमभूत्, सांस्कृतिकरूपेण तत्र सकीर्णता प्रविष्टा। गुप्तयुगं भारतीयेतिहासस्योज्ज्वलतमः कालो विद्यते। ततः षष्ठशतकखीष्टाब्दे भारतवर्षस्य सर्वतोमुखो ह्रासो भवति। इद बृहत्तरभारतस्य सांस्कृतिकप्रसारस्य क्षीणताया एक प्रधान कारणमासीत्। बृहत्तरभारते भारतस्य प्रत्येक महत्त्वपूर्णाः सांस्कृतिकघटनाः प्रभाव स्थापयन्ति स्म। गुप्तयुगे पौराणिकधर्मस्य य उत्कर्षोऽभूत् तस्य ध्वनिरस्माभि' कम्बुजदेशे चम्पादेशे च श्रूयते। ततः पालवशीयस्य तन्त्रयानस्य वज्रयानस्य च तिब्बत-बर्मा सुमात्रादेशेषु गमनमवलोक्यते, भारते पश्चाद् या हिन्दुबौद्धधर्मयोरेकीकरणप्रवृत्तिः प्रारब्धा सा सुदूरयोर्जावा-कम्बुजयोरपि दृश्यते, दक्षिणस्मिन् रामानुजाचार्येण प्रचालितस्य भक्तिमार्गीयवैष्णवधर्मस्य लहरिः कम्बुजदेश प्रभावयति। इत्थं द्वयोर्गाढः सम्बन्ध आसीत्। अतो बृहत्तरभारतस्य साम्राज्यस्य क्षीणतायाः कारणानि प्रायस्तान्येव सन्ति यानि गुप्तयुगानन्तर भारतीयसंस्कृतिसाम्राज्ययोर्ह्रासकारणान्यासन्।

विदेशेषु भारतीयायाः संस्कृतेः प्रसारे बौद्धहिन्दुधर्माभ्यां मुख्यो भागो गृहीतः। षष्ठ-सप्तमशताब्यनन्तरमनयोरान्तरं क्षीणत्वमागन्तुं प्रारभत, तथोत्तरपश्चिमसीमात इस्लामस्याक्रमणं प्रारब्धम्।

**बौद्धधर्मस्य क्षीणता**—प्रायो भारते बौद्धधर्मस्य क्षीणताकारणं तुर्काणामाक्रमण प्रतिपाद्यते, किन्तु तस्य वास्तविको ह्रास इस्लामस्याविर्भावात् पूर्वमेवाजायत। पञ्चमे शतके तथा सप्तमे शतके भारतस्य तीर्थयात्रिणः फाह्यानस्य युआन च्वाङ्गस्य च (६२९-६४५) यात्रा-विवरणस्य तुलनात्मकाध्ययनेन सम्यगिदं स्पष्टं भवति। गान्धारे तक्षशिलाया कश्मीरे च फाह्यानेन बौद्धधर्मोऽतीवोन्नतायामवस्थाया दृष्ट आसीत्। युआन-च्वाङ्गस्य कालेऽत्र तथागतस्योपासकाना सङ्ख्याऽतीव ह्रासोन्मुखाऽऽसीत्। उद्यान( पेशावरत उत्तरस्मिन् स्वातनदीतट )विषये फाह्यानेन

लिखितमासीद् यदत्र बौद्धधर्मोऽतीव समृद्धाया दशाया विद्यते, पञ्चशतानि हीनयानसङ्घारामाः सन्ति। पर युआनमहोदयेन प्रायः सपादशतद्वयवर्षानन्तर तस्यैव प्रदेशस्य विषये इदं लिखितं यन्नदीमुभयतः १४०० प्राचीनाः सङ्घारामाः सन्ति, ते सामान्येन भग्नावस्थायां सन्ति, पूर्वमत्र १८००० भिक्षवो वसन्ति स्म, ते क्रमेण न्यूना अभवन्, अद्यत्वेऽतीव न्यूनाः सन्ति (बील-पृ० १२०)। गान्धारमुद्दिश्य फाह्यानेन लिखितं यत् तस्य देशस्य जना हीनयानस्यानुयायिनः सन्ति। युआनकालं यावदत्र सद्धर्मे विश्वासकर्तारोऽतीव न्यूना अवशिष्टाः। अत्र प्रायः १००० बौद्धमठा भग्नावशेषा आरण्यकवनस्पतिसमाकीर्णा निर्जनाश्चासन् ( बी० पृ० ९८ )। युआनस्य वर्णनेनेदं प्रतीयते यत् केवलं वङ्गप्रदेशे उत्तरप्रदेशे चैव तदा बौद्धधर्मस्य दशा उत्तमाऽऽसीत्। तत्कारणञ्च सम्भवतो हर्षस्य वैयक्तिकः प्रभाव आसीत्। युआनानन्तर भारतस्य यात्रिणा इत्सिंगेनापि सप्तमशतकस्योत्तरार्द्धे सर्वत्र बौद्धधर्मो ह्रासोन्मुखो दृष्टः।

अस्य क्षीणताया अनेकानि कारणान्यासन्—मिहिरकुलसदृशैर्हूणराजैः स्तूपाः सङ्घारामाश्च विध्वंसिताः, गुप्तसम्राड्भिर्बौद्धधर्मस्थाने हिन्दुधर्मो विशेषेण सरक्षितः। तदा बौद्धधर्म भक्षयितुमन्तर्घुणवदनेकानि तत्त्वान्यजायन्त। वनिताभ्यः प्रव्रज्यादानस्यानुमतिकाले गौतम-बुद्धेन कथित यद् इक्षोर्व्रीहेश्च मूले सलग्ना कीटा इव ता बौद्धधर्ममल्पजीवित करिष्यन्ति ( बुद्धचर्या )। राजतरङ्गिणीग्रन्थादिद ( ३।१२ ) ज्ञायते यत् षष्ठशतके बौद्धा भिक्षवो विवाहं कर्तुं प्रारभन्त। अशोककनिष्कप्रभृतिभिः सम्राड्भिर्बौद्धसघाय कृत दान तत्पतनहेतु-रभूत्। भिक्षुभिर्भोगविलासपतितैरध्ययन नितान्तमुपेक्षितम्। अतस्ते च हिन्दुपण्डितैः पराभूता.। युआनच्वाङ्गेन पाटलिपुत्रस्य एकस्य स्तूपस्य विषये लिखितया कथया बौद्धभिक्षूणा बौद्धिकी अवनतिः सम्यक् स्पष्टा भविष्यति। अय स्तूपो घण्टावाद्यकः स्तूपः प्रतिपाद्यते स्म। पूर्व नगरेऽस्मिन् शत सङ्घारामास्तथा तत्र गभीरा विद्वास. सच्चरित्राः संन्यासिनश्च वसन्ति स्म। पश्चात्तेषामुत्तराधिकारिणस्तथा योग्या नाभूवन्। प्रतिस्पर्द्धिभिर्हिन्दुविद्वद्भिः काममध्ययनं कृतं तथा कदाचिद् बौद्धान् प्रतीद कथितं यत् स्वघण्टानादेन सर्वे विद्वांस आकारणीया वयं तैः साक शास्त्रार्थं करिष्यामः। राज्ञो मध्यस्थत्वे शास्त्रार्थोऽभूत्, बौद्धा अधिकसख्याका अपि पाण्डित्या-भावेन पराजिताः। विरोधिभिः प्रार्थितो राजा यत् 'वय विजेतारो भूताः, अतोऽद्यप्रभृति कस्मिन्नपि सङ्घारामे भिक्षूनाकारयितु घण्टा न नादनीया' ( वाटर्स २।१०० )। द्वादशवर्षाणि यावद् बौद्धेषु सङ्घारामेषु कापि घण्टा न नादिता। अन्ते दक्षिणत आगतेनैकेन विदुषा विरोधिन. पराजिताः। बौद्धसङ्घघण्टाश्च पुनः प्रतिनाद्यमाना अभूवन्।

चारित्रिक-बौद्धिकावनत्यतिरिक्तमधुना बौद्धधर्मेण हिन्दुधर्मप्रयुक्ता काचन सकटा-वस्थाऽनुभूता। तदा हिन्दूभिर्बौद्धधर्मस्य सकला अपि समीचीनाः प्रवृत्तयोऽङ्गीकृताः, बुद्धो विष्णोर्दशावतारेष्वन्यतमत्वेन गृहीतः, महायानस्य ध्यानी बुद्धो हिन्दूना महायानी शिवोऽभूत्, रथयात्राभक्तिवादप्रभृतीन्यनेकानि तत्त्वानि हिन्दुधर्मे गृहीतानि, बुद्धगयाप्रभृतैबौद्धविहारा हिन्दुमठा अभूवन्। महायानबौद्धमतावलम्बिना स्थान हिन्दुसन्यासिभिर्गृहीतम्। इत्थ शनैःशनैः

बौद्धधर्मो हिन्दुधर्मेणात्मनि विलापितः। बौद्धधर्मस्य पार्श्वे विदेशेषु भारतीयसंस्कृतेः प्रचारकाणां धर्मदूतानां प्रेषणसामर्थ्यं नाभूत्।

यद्यपि हिन्दुधर्मेण मध्ययुगे बौद्धधर्म आत्मसात्कृतः, किन्तु गुप्तयुगानन्तरं भारतीयसमाजे तादृश्यः प्रवृत्तयः प्रबला अजायन्त याभिरस्माकं समाजेऽग्रगामितायाः प्रगतिशीलतायाश्च स्थाने मन्दता जडता च प्रोत्साहिता, अतो बृहत्तरभारतस्य निर्मातृप्रवृत्तीनामन्तोऽजायत।

मुस्लिममतावलम्बिनामाक्रमणैर्भारतीयसंस्कृतिप्रसारे या बाधाऽभूत् सा मुहम्मदबिन-बख्तियार-खिल्जी इत्यस्य विहारवङ्गयोर्विजयेन स्पष्टा भविष्यति। पूर्वमिदं प्रत्यपाद्यत यद् नालन्दा-विक्रमशिला उदन्तपुरीस्थविद्यापीठैस्तिब्बते देशे सुवर्णद्वीपे च बौद्धधर्मस्य प्रसारे महान् सहयोगः प्रदत्तः। अधुना तुर्काणामसिना तदन्तः कृतः। तबकाते नासिरी इति ग्रन्थे ११९३ तमे खीष्टीयाब्दे उदन्तपुर्या (बिहार शरीफ) मुहम्मद-बिनबख्तियार खिल्जी इत्यस्याक्रमणस्य वर्णनावसरे लिखितमिदं विद्यते यत् तस्य सैनिकैस्तस्य प्राकारान् विजित्य बहूनि वस्तूनि लुण्ठितानि। अस्य स्थानस्य बहवो निवासिनो ब्राह्मणा आसन्, ते च मुण्डितकेशा आसन्; अर्थात्ते बौद्धभिक्षव आसन्, ते सर्वे हताः। तत्र पुस्तकानि बहुसंख्यायामासन्। तेषां परिज्ञानेनेदमज्ञायत यदिदमखिलं दुर्गं नगरञ्च कापि पाठशालाऽऽसीत्, हिन्दवश्च तद् विहारमाचक्षते स्म।

त्रयोदशस्य शतकस्यारम्भे तुर्काणामाक्रमणेनोत्तरभारतस्य बौद्धाः स्वपुस्तकैः सार्कं नेपालदेशे तिब्बतदेशे च पलायितुं विवशा अभूवन्, विदेशेषु च भारतीयसंस्कृतिप्रसारको बौद्धधर्मः स्वजन्मभूमौ लुप्तोऽभूत्। भारतीयसंस्कृतेर्विदेशगामिनि प्रवाहे उपर्युक्तैः कारणैर्मन्दतायाः समागतायामपि सा धाराऽत्यधिकमन्दगत्या चतुर्दशे पञ्चदशे च शतकं यावत् प्रचलिता, किन्तु शनैः शनैर्विरोधिन्यः शक्तयस्तत्र विजयशालिन्योऽभवन्। कदाचित् पूर्व-दक्षिण—एशियाया हिन्दपूर्वद्वीपसमूहे च पौराणिकस्य धर्मस्य प्राधान्यमासीत्, किन्तु ततस्तस्य स्थानम् इस्लामधर्मेण हीनयानेन च गृहीतम्। बृहत्तरभारते हिन्दुधर्मस्य क्षीणताया निम्नानि कारणान्यासन्—

(१) पौराणिको धर्मोऽत्र राजसंरक्षणेनैव पुष्पितः फलितश्च। यदा जावा-सुमात्रा-मलयादिदेशाना शासका यवना अभूवन्, तदा तत्र इस्लामधर्मो वेगेन वर्द्धितुमारेभे। वर्मावासिनः स्यामवासिनश्च राजानो हीनयानं रक्षितवन्तः। तेषु स्थानेषु पौराणिकधर्मः प्रतिद्वन्द्विनामभावेन प्रवृद्धः।

(२) भारतवद् बृहत्तरभारतस्य राज्येष्वपि राजा देवो मन्यते स्म। कम्बुजदेशस्य राजानो देवराजोपाधिं दधति स्म। अत्र राजानो मरणानन्तरं देवानां नाम दधति स्म, तथा तेषामाराधना भवति स्म। राजानो निरङ्कुशा आसन्, प्रजासु यथेच्छमाचरन्ति स्म। साधारणाना जनानामवस्थाऽतीव शोचनीयाऽऽसीत्। सर्वत्र दासप्रथा प्रचलिताऽऽसीत्। पञ्चत्रिंशत्ख्मेराभिलेखेषु ४००० दासाना नामानि लिखितानि सन्ति। यावत्तेषां दासानां कृते कश्चनान्यो मार्गो नोद्घाटित आसीत् तावत्ते हिन्दव आसन्, किन्तु समानताप्रचारकयोर् इस्लामबौद्धधर्मयोरागमनेन तेषां तस्यां दिश्याकर्षणं स्वाभाविकमासीत्।

( ३ ) चीनदेशीयलेखकानां वर्णनेन ज्ञायते यद् बृहत्तरे भारते जातेः पङ्क्तेश्च स्पृश्यास्पृश्ययोश्च दोषाः प्रचलिता आसन् । कम्बुजदेशस्थानेकै राजभिरिदं प्रतिज्ञातं यत्तैर्वर्णव्यवस्था सुचारुरूपेण प्रचालिता । भारतवद् बृहत्तरे भारतेऽपि हिन्दुधर्मस्य सकुचितमनोवृत्तयस्तस्य विकासे बाधिका अभूवन्, तस्य पतने सहायिकाश्चाजायन्त ।

( ४ ) हिन्दुधर्मोऽसघटितोऽसमन्वयवादी चासीत्, अतः स निश्चितसिद्धान्तस्य इस्लामधर्मस्य हीनयानस्य च पुरः स्थातुं नाशकत् ।

यद्यपि प्राग्भवावुभावपि धर्मौ वर्तमानखीष्टानुयायिधर्म इव सघटितौ नास्ताम्, किन्तु द्वावपि जनान् स्वानुयायिनो विधातुं प्रयतेते स्म । हिन्दुधर्मोऽत्रोपनिवेशकैर्व्यापारिभिश्चानीतः । तस्य च प्रभावोऽतीव गभीरो नासीत् । तस्य प्रभावो राजसु धनिकेषु चैवासीत्, जनसाधारणस्य तत्राकर्षण नासीत् । तदपेक्षया इस्लामे खीष्टानुयायिधर्मे चाधिकमाकर्षणमासीत् । समन्वयवादो हिन्दुधर्मस्य प्रसारे सहायकः सिद्धोऽभूत्, जावाया कम्बुजदेशे चासौ विचार. परा काष्ठा प्राप्तो दृश्यते । तत्र न केवलं त्रिमूर्त्यभेदोऽमानि, किन्तु शिवो बुद्धो ब्रह्मा विष्णुश्चैक एव मतः । राज्याभिषेके हिन्दुबौद्धपुरोहितौ चामन्त्र्येते स्म । अभेदोऽय प्रतिस्पर्द्धिनामभावपर्यन्तस्तु समीचीन आसीत्, किन्तु इस्लामधर्मसदृशस्यासहिष्णोर्धर्मस्यातिक्रमणेऽसमर्थ आसीत् । भारते हिन्दुधर्मो जनाना साधारणे जीवने पूर्णतया प्रविष्ट आसीत्, अतस्तत्र तु स इस्लामस्यातिक्रमण कर्तुमपारयत्, किन्तूपनिवेशेषु तेन तस्य पुरोऽभिभवः स्वीकृतः ।

( ५ ) पौराणिकस्य धर्मस्य पराजयस्यैक कारणमिदमप्यासीद् यदुपनिवेशेष्वय मुख्यतया बाह्याडम्बर कर्मकाण्ड च समर्थयाञ्चकार, किन्तु तेन जनहृदयपर्यन्त गमनस्य तेषा विचारेषु प्रभावस्थापनस्य कश्चनापि यत्नो नाकारि । कम्बुजदेशस्य बोरोबुडुरस्य च मन्दिरैस्तत्रत्येषु निवासिषु स्वमहत्त्वस्य प्रभावस्तु स्थापितः, किन्तु तेषा मनो नानुकूलितम् । आन्तरपवित्रतायामेकेश्वरवादे च बल स्थापयद्भ्या बौद्धमुस्लिमधर्माभ्या क्षेत्रेऽस्मिन् हिन्दुधर्मापेक्षयाऽधिक साफल्यमधिगतम् ।

( ६ ) जावाया सुमात्रायाञ्च हिन्दुधर्मस्य पतनस्यैक कारण तन्त्रवादोऽपि प्रतीयते । जावेश्वरकृतनगरेण त्रयोदशे शतके स्वस्य राज्यस्य महान् विस्तारः कृतः, किन्तु तान्त्रिकविधिषु तल्लीनतयाऽधिकमदिरासेवनेन च स स्वं राज्य नाशितवान् । सुमात्राराज्यस्यादित्यवर्माऽपि पञ्चाना मकाराणामुपासक आसीत् । वाममार्गोऽपि तस्य पतने सहायकः सिद्धोऽभूत् ।

**सांस्कृतिकदिग्विजयस्य भविष्यम्**—भारतस्य सास्कृतिकस्य दिग्विजयस्य भूतमत्युज्ज्वलमासीत्, त्रुटिभ्य आत्मान सरक्ष्य भविष्य ततोऽप्यधिकं गौरवपूर्णं कर्तुं शक्यते । १९४७ तमखीष्टीयाब्दस्य पञ्चदशागस्तमासे स्वतन्त्रतायाः प्राप्त्याः साकमस्मासुकत्तरदायित्व वृद्धिं प्राप्तम् । प्राचीने काले भारतेन प्रायः सकलायामेशियाया ज्ञानस्य प्रकाशः प्रसारितः, षष्ठशतकखीष्टीयाब्दपर्यन्त तेन विश्वस्य नेतृत्वं कृतम्, सर्वतः स्वधर्मकलासभ्यताना प्रसारः कृतः । तदनन्तर प्रगाढाया मोहनिद्राया पतितः । त्रयोदशशतक सुदीर्घसुषुप्त्यनन्तरमद्य ते पुनः प्रबुद्धाः सन्ति, किन्त्वेतदन्तराले जगत्यामामूल परिवर्तनमजायत । पूर्व भारतमुन्नतेर्ज्ञानस्य क्षेत्रे सर्वतोऽग्रे आसीत्, अधुना तदतीव पृष्ठे वर्तते । ज्ञानसूर्यः पश्चिमे समुज्जृम्भते, वैज्ञानिकाविष्कारेभ्यो

मानवजीवनस्य स्वरूपं परिवर्तितं विद्यते । विज्ञानेन मनुष्येभ्यस्तथा गुरुमन्त्रो दत्तो येन प्रकृतेर्गुप्तनिधीनां द्वारं विना परिश्रममुद्घाटितं भवति, देवशक्तयः सुगमतया प्राप्यन्ते । अद्यत्वे कामधेनुः कल्पवृक्षश्च काल्पनिको विषयो नास्ति, किन्त्वाधिक्येन सत्यो जातोऽस्ति ।

समुद्रमन्थनं देवानामसुराणाञ्च पौराणिकी कथैव न विद्यते, किन्तु अधुना जलपोतानां दैनिकं कार्यं सञ्जातम् । पूर्वं मनुष्यः प्रकृतेः क्रीडनकमासीत्, दुःखेन जीवनं भारभूतं मन्यमानो जन्ममरणबन्धनाद् विमुच्य तादृशं काल्पनिकं स्वर्गलोकं गन्तुमिच्छति स्म, यत्र कोऽप्यभावः सन्तापो वा मा भूत्, किन्त्वधुना यदि स वाञ्छेत् तदा विज्ञानद्वारा भूतल एव स्वर्गमवतारयेत् । अस्माकं देशस्य प्राचीना परिपाटीयं विद्यते यदहमन्येषां प्रत्येकं ज्ञानं सत्यत्वेन गृह्णीयाम्, तत्र च वृद्धिं कृत्वाऽन्येभ्यः प्रदद्याम् । यत्कार्यं भारतेन मध्ययुगे गणितज्योतिषक्षेत्रे कृतं तदद्य ज्ञानविज्ञानयोः प्रत्येकं क्षेत्रे कर्तव्यम् । अस्माकं परम्परा देशान्तराणि शस्त्रेण जेतुं रक्तं पातयितुञ्च नास्ति, किन्तु तानि ज्ञानालोकेन प्रकाशयितुम् । तस्य पालनमस्माकं कुलधर्मो वर्तते । पूर्वजैर्यत् कार्यं कृतं तदधिकया सुचारुतया सफलतया च सम्पन्नं कर्तुमस्माकं प्रधानं कर्तव्यं विद्यते । अस्य ऋणस्यापाकरणमन्तरा वयं तेषां सन्ततयः स्म इति कथयितुमधिकारिणो न भविष्यामः । तस्यापाकरणस्यैक एव मार्गोऽस्ति यद् वयं पाश्चात्यज्ञानविद्याः सम्यग् गृहीत्वा परिशील्य च शतगुणयित्वाऽन्येभ्यः प्रदद्याम । 'सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः' अस्य पालनं कुर्याम ।

अद्यास्माभिः पुनरपि शाक्वरीव्रतस्य दीक्षा ग्रहीतव्या, पाणिवादश्च स्वीकर्तव्यः । अस्माकं पुरः उत्तुङ्गहिमयुक्तशिखरातिक्रमणकारिणां भीषणमरुभूमिगामिनामुत्तालतरङ्गाणां महासागराणां वक्षःस्थलभेदकानां वीतरागाणां तपस्विनां भिक्षूणाञ्चोदाहरणानि प्रकाशमानज्योतिःस्तम्भवद् विद्यन्ते । आचार्यदीपङ्कर-श्रीज्ञानेनाष्टपञ्चाशद्वर्षवयसि हिमालयस्य दुर्गमपर्वतमालोल्लङ्घिताऽऽसीत् । आचार्यशान्तरक्षितेन पञ्चसप्ततिवर्षवयस्केन षोडशसहस्रसमुन्नतहिमालयशिखरं समुल्लङ्घितमासीत् । यत्कार्यं पूर्वजैः कृतमासीत् तदद्यापि भवितुमर्हति । अद्यास्मान् तिब्बतदेशस्य संस्कृतग्रन्थसम्भृतमठाः कम्बुजदेशस्य जावाद्वीपस्य बालिद्वीपस्य हिन्दुमन्दिराणाञ्च भग्नावशेषा आह्वयन्ति । किं वयं तेषां शब्दान् श्रोष्यामः ? अस्यैव प्रश्नस्योत्तरेऽस्माकं संस्कृतेर्भविष्यस्योज्ज्वलता निहिता विद्यते । ओजस्विनीभिर्भावनाभिः साकमग्रे गमनेऽतीतकालस्यापेक्षयाऽधिकगौरवपूर्णस्य भव्यस्य सांस्कृतिकसाम्राज्यस्य निर्माणं कर्तुं शक्यते ।



